मीश्वर इति, अन्तःकरणोपहितं कार्यरूपं जीव इति व्यपदिश्यत इति "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति वाक्यार्थ एव व्यवस्थापितो भवतीति कारणवाक्यानां परस्परविरोधपरिहारपादेऽत्र जीवोत्पत्तिवाक्यानां विचारोऽपि सार्थक एव ॥

(२३) श्रीभाष्यसम्मतजीवोत्पत्तिवादस्य सूत्रानारूढत्वम्, तन्नित्यत्वव्यवस्थापनस्यैव साफल्यं च।

अत एव जीवनित्यत्वव्यवस्थापनमपि सूत्रकाराणां सफलम्। श्रीभाष्यमते हि ब्रह्मवत् जीवस्यापि नित्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा भज्येत। सत्यं श्रीभाष्यकाराः—जीवस्य स्वरूपान्यथाभावलक्षणैवोत्पत्तिरत्र निषिद्धते, नतु ज्ञानसङ्कोचविकासलक्षणोत्पत्तिरिति भाष्ये प्रतिपादयन्ति। इदमेवात्रालोचनीयम्—यत् सूत्रकारा जीवस्य रूपान्तरेणोत्पत्तिमभिमन्यन्ते, वियदादिस्तु रूपान्तरेणेति प्रक्रियाविशेषं केन वा सूत्रेण सूचयन्तीति। वयं तु पश्यामः—नात्र कल्पनायां किमपि सूत्रं प्रमाणमस्तीति; अन्यथाऽऽकाशादीनामपि धर्मभूतशब्दादिकार्यतालक्षणैवोत्पत्तिः, नतु स्वरूपान्यथाभावलक्षणेति कथं न भवति? अतो ज्ञायते जीवनित्यत्वव्यवस्थापनमिदं स्वरूपतो जीवस्य ब्रह्मतो न भेद इति सूचनार्थमेवेति।

(२४) मतान्तरे "अंशो नानाव्यपदेशादि"त्यधिकरणानुत्थानम्।

एतेन—"ज्ञोऽत एव" "उत्क्रान्तिगत्यागतीनाम्" "कर्ता शास्त्रार्थवत्त्वात्" "अंशो नानाव्यपदेशादि"त्यधिकरणान्यपि व्याख्यातानि। सर्वेष्वेषु औपाधिकं ज्ञानाश्रयत्वमणुत्वं कर्तृत्वमंशत्वमिति बोधनद्वारा स्वरूपतः ज्ञानरूपत्वव्यापकत्वाकर्तृत्वानंशत्वादिबोधन एव तात्पर्यमुरीक्रियत इति सर्वत्र श्रुतिद्वयस्य विरुद्धस्य विषयव्यवस्थाऽपि साधितप्रायेति शाङ्करं विवरणमेवात्र सूत्रारूढम्; श्रीभाष्यमते तु—यत्र स्वरूपत एव ज्ञानरूपस्तदाश्रयश्चैवमणुः कर्ता चेत्यादि विवक्ष्यते, तत्राधुना जीवेन साकं ब्रह्मणोऽभेदशङ्काया एवाप्रसरात् तदाशङ्कानिरसनेन जीवस्य परमात्मशरीरत्व"मंशो नानाव्यपदेशादि"त्यनेन यत् साध्यते, तद्विफलमेव स्यात्। विदितमिदं श्रीभाष्यदर्शिनाम्—यत् "अंशो नानाव्यपदेशादि"त्यत्र किं जीवः परस्मादत्यन्तभिन्नः, उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम् अथ ब्रह्मांशो जीव इति संशयनिरासार्थमेवोक्ताधिकरणं श्रीभाष्यमते इति। इदमेवात्रालोचनीयम्—यत् नित्यत्वादिना साधिते जीवे कथं वोपाध्यवच्छिन्नब्रह्मरूपत्वसंशयः स्यात्। यद्युपाध्यवच्छिन्नम्, तर्हि तु न नित्यत्वम्। यदि

नित्यत्वम्, तर्हि तु नोपाध्यवच्छिन्नत्वमिति संशयस्यैवाप्रसरात्। तथाच द्वितीयाध्यायतृतीयपादोऽपि सम्यक् यदि विमृश्यते, तर्हि कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः, अनवच्छिन्नं नित्यशुद्धबुद्धमुक्तस्वभावं स्वरूपसज्ज्ञानादिरूपं ब्रह्मैव पारमार्थिकमिति सिद्धान्तमेव सूत्रारूढं गमयतीति सिद्ध्यति॥

(२५) "अंशो नानाव्यपदेशादि" अधिकरणसूत्राणामद्वैतमत एव स्वारस्यम्।

अयमाशयः—"अंशो नाना व्यपदेशादि"ति सूत्रे हि जीवस्यांशत्वमनंशत्वमुभयं च बोध्यते। अंशत्वे नानाव्यपदेशो हेतुः, अनंशत्वे तु अभेदश्रुतिरित्यद्वैतसंमतं विवरणम्। अत्र चैकस्यौपाधिकत्वमपरस्य पारमार्थिकत्वम्। तत्र च भेदो लोकसिद्ध इति अभेदश्च श्रौत इति व्यपदेशपदेनाधीयत इति पदेन चावगम्यते॥ अत्र च पक्षे—जीवः अंशो नानाव्यपदेशात्, जीवः अन्यथापि अनंशोऽपि यस्माद्दाशकितवादित्वमेके शाखिनोऽधीयते इति सूत्रयोजनप्रकारः। तत्र अंशत्वं किंरूपं किं शरीरत्वरूपम्, अथवा विशेषणमात्रत्वम्, उतोपहितं रूपान्तरमिति संशयो भवति। तत्र एकवस्त्वेकदेशत्वं ह्यंशत्वम्। यथाहि विशेषणं विशिष्टस्यांशः। यथा देहिनो देहोंऽश इति श्रीभाष्यकारा वदन्ति। एवं घटाकाशो महाकाशस्यांशः, अङ्गुल्याद्युपाध्युपहितप्रकाशः वियद्व्याप्यप्रभातसौरप्रकाशस्यांश इति व्यवहारात्। उपहितोऽपि शुद्धस्यांश इति लौकिका मन्यन्त एव। तत्र च जीवस्य विशेषणत्वरूपमंशत्वं यदि प्रतिपादनीयं सूत्रकृताम्, तर्हि जीवविशिष्टतया ब्रह्मनिर्देश एव हेतुतया निर्दिश्येत, नतु नानाव्यपदेशोऽभेदव्यपदेशश्च। न हि यत्र यत्र विशेषणत्वं तत्र तत्र भेदाभेदौ नियतौ। न हि दण्डस्य दण्डिविशेषणस्य तेन भेदाभेदौ। सत्यमपृथक्सिद्धिसम्बन्धेन विशेषणानां विशेष्येण वर्तेते भेदाभेदावुभावपि; तथापि तादृशस्यैव विशेषणविशेष्यभावस्यात्र विवक्षणे गोत्वधर्माणां गवि नैल्यादिगतधर्माणां घटादौ चाभावेन जीवधर्माणां ब्रह्मण्यपि प्रसङ्गाभावेन व्यर्थमिदं सूत्रम्—"प्रकाशादिवन्नैवं पर"इति समापद्येत, यतो जीवदोषाणां ब्रह्मणि प्रसक्तानां वारणं प्रकाशदृष्टान्तेन क्रियते। प्रभाप्रभावतोर्हि प्रभागताः परिच्छेदादय औपाधिका एव विशिष्टधर्माः प्रकाशकत्वादिकं प्रभाप्रभावदुभयधर्म एवेति साधारणधर्म एवेति प्रकाशदृष्टान्तेन सूत्रकाराः अंशगतानामौपाधिकानां धर्माणां

विशिष्टानामंशिनि न प्रसङ्ग इत्येव गमयन्ति; एवं सत्येव हि पूर्वपक्षोत्थानं संभवतीत्युपहितं रूपान्तरमेवात्र कल्पितमंशपदार्थः, न विशेषणम्। तदेव तस्योपहितं रूपान्तरं कल्पितम्, यत् खलु व्यवहारदृष्ट्या भिन्नम्, वस्तुगत्या त्वभिन्नम्। नानाव्यपदेशादिति व्यपदेशादिपदमपि पूर्वोक्तप्रकारेणाद्वैतानुकूलम्। अत एव—"प्रकाशादिवच्च नैवं परः" इत्यत्र परो नैवमित्येवोक्तम्, नतु परो विशिष्यमिति वांशीति वेति, नात्र शरीरशरीरिभावविवक्षायां सूत्राशयः; अन्यथा—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवदि"ति सूत्रेणैवोक्तशंकाया निराकृतत्वात् किमर्थं वा "प्रकाशादिवच्चैवं परः" इति सूत्रम्।

(२६) विधिनिषेधानधिकरादिशंकापरिहारस्याद्वैतमत एव स्वारस्यम्।

"अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवदि"ति सूत्रमपि सूत्रकाराणां श्रीभाष्यमते न तात्पर्यमिति गमयति। "अंशो नाना व्यपदेशादि"ति औपाधिके भेदे पारमार्थिकेऽभेदे च प्रतिपादिते हि शंकाद्वयं प्रसरति। यत् जीवब्रह्मणोरभेदे जीवरूपत्वाद् ब्रह्मणो ब्रह्मणोऽपि संसारित्वापत्तिः, एवं ब्रह्मसारूप्याज्जीवस्य विधिनिषेधानधिकारितेति। तत्र "प्रकाशादिवदि"ति सूत्रेण ब्रह्मणि संसारित्वे निरस्ते प्रकाशदृष्टान्तेनैव तेन जीवे विधिनिषेधाधिकारिताऽप्युपपादनीयेति कृत्वेवेदं सूत्रयन्ति सूत्रकारा इत्येव सुलग्नं प्रस्थानम्। श्रीभाष्यमते हि यत्र जीवस्य ब्रह्मांशत्वे ब्रह्मप्रवर्त्यत्वे ज्ञत्वे च सर्वेषां जीवानां समानत्वात् केषांचिद्वेदाद्यध्ययनानुज्ञा, केषांचन तत्परिहारः कथमिति शंकानिवर्तनमेवोक्तसूत्रसंमतं विवरणम्। अत्र हि सूत्रे देहसंबन्धेनानुज्ञापरिहारव्यवस्था योपपादिता, साऽप्यंशत्वेनाभिमतस्यैव जीवस्येति खलु श्रीभाष्यकारैरपि वक्तव्यम्। अत्रेदमवालोचनीयम्—यत् शरीरविशिष्टस्यैव जीवस्य किमंशत्वं साध्यते, उत केवलस्य जीवस्येति॥ तत्र यदि शरीरविशिष्टस्यैवांशत्वम्, तर्हि भगवतः सर्वस्थूलाचिद्विशिष्टत्वं बाधितम्। परंपरया शरीरत्वं तु नापृथक्सिद्धिनियामकम्, अन्यथा क्रियादीनामपि भगवच्छरीरत्वापत्त्या क्रियायामतिव्याप्तिवारणार्थं 'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना नियम्यमि'ति शरीरलक्षणे "नतु दृष्टान्तभावादि"ति सूत्रे द्रव्यपदप्रयोगो निरर्थकः; यदि तु केवलस्य, तर्हि शरीरसंबन्धस्यांशताव्यवहाराप्रयोजकत्वात् अंशतासाधने नास्योपयोगः। अद्वैतमते तु स्थूलसूक्ष्मशरीरसंबन्धप्रयुक्तमंशत्वमौपाधिकमिति तदादाया-

नुपपत्तिपरिहारोपपादनमिति, ब्रह्माभेदप्रयुक्तानुपपत्तिपरिहारासंभवनिराकरणपरमेवेदं सूत्रम्। अन्यथा—"परात्तु तच्छ्रुतेरि"त्यनन्तरमेवास्य सूत्रस्य प्रवृत्त्यापत्तिः॥

वस्तुतस्तु—"कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य" इति "परात्तु तच्छ्रुतेरि"ति सूत्रगुणसूत्रेणैव विहितप्रतिषिद्धावैयर्थ्यमुपपादितमेवेति श्रीभाष्यमते व्यर्थमिदं सूत्रम्। अद्वैतमते तु पूर्वं भेदस्य सिद्धवत्कारेण कृतप्रयत्नापेक्षत्वं यदुपपादितम्, तदिदं न संभवति; ब्रह्माभेदे ब्रह्मण इव प्रयत्नकरणस्यैवासंभवादिति शंकानिराकरणार्थमिदं सूत्रमपेक्षितमेव।

(२७) अद्वैतमतेऽपि सर्वव्यवहारोपपत्तिः।

अत्र देहशब्देन स्थूलदेहं गृहीत्वा विधिनिषेधाधिकारव्यवस्थायां साधितायामपि मरणानन्तरं स्थूलशरीरविगमात् फलसांकर्यमापद्येतेति शंकावारणार्थं "सन्ततेश्चाव्यतिकर" इति सूत्रम्। अनेन फलाव्यतिकरोपि फलानुभवयोग्यतायाः सूक्ष्मशरीराभिमानदशायामेव विद्यमानत्वात् फलानुभवकालेऽपि औपाधिकस्य परिच्छेदस्य विद्यमानत्वाच्च संभवतीति बोध्यते। तत्रश्चैवं संशयो भवत्येव—यत् सूक्ष्मशरीरविगमः कदाचन संभवति वा न वेति। तदर्थं च—आभास एवेति च सूत्रम्। तेन चांशत्वेनाभिमतस्य जीवस्याभासत्वव्यवस्थापनद्वारेणेदमेव सूच्यते—यत् सूक्ष्मशरीरसंबन्धविगमोऽपि भवत्येव, तदानीमेव जीवस्य सातत्यम्, व्यापकत्वम्, न तु ततः पूर्वं व्यापकत्वमिति यावदुपाधिसंबन्धमेव जीवस्यांशत्वानुपपत्तिपरिहारसंबन्धफलव्यवस्थादिकम्। तादृशीमवस्थामपेक्ष्यैव "कृतप्रयत्नापेक्षस्तु" इति सूत्रप्रवृत्तिरिति न सांकर्यलेशस्याप्यवसर इति, न वयमद्वैतिनोऽपि जीवस्य व्यापकत्वं जीवतादशायां स्वीकुर्म इति, जीवाणुत्वव्यवस्थापनादिकं व्यवहारदशायां सर्वसंमतमेवेति, जीवाणुत्वमतनिरसनं सूत्रकारैः यत्क्रियते, तदिदं परमार्थगत्यैव न व्यवहारगत्येति, यदि श्रीभाष्यकारा जीवव्यापकतां व्यवहारदृष्ट्या निरस्यां मन्यन्ते, तर्हि नात्र विप्रतिपत्तिलेशोऽपि वैदिकैः सार्कमिति, जीवाणुत्वसमर्थनं पाशुपतमतानुसारेण पाञ्चरात्रमतानुसारेण वा न सूत्रानुसारि। अतएव हि—एवं चात्माकात्र्स्न्यमिति जीवाणुत्वखण्डनं सूत्रकाराणामुपपद्यते। यद्यप्यत्र देहपरिमाणतावाद एव निरस्यते; तथाऽपि तदणुतावादस्याप्युपलक्षणमेव; न्यायसाम्यात्। सर्वशरीरव्यापिसुखाद्यननुभवापत्तिदूषणस्य समानत्वादणुतावादेऽपि। यथा धर्मभूतज्ञान-

संकोचविकासाभ्यां धर्मभूतज्ञानस्य तदभिन्नस्यात्मनश्चानित्यत्वापत्तिस्तथाऽन्यत्र विस्तृतम्। सर्वथा तु जीवाणुताज्ञानाश्रयत्वकर्तृत्वादिकं सर्वं व्यवहारदशायामद्वैतिनामपि संमतमेवेति न दोषलेशोऽपि। तथा च परमार्थगत्या जीवस्य ब्रह्माभिन्नत्वमेवमपि व्यवहारोपपत्तिरित्येवात्राशयः॥

(२८) "असन्ततेश्चाव्यतिकर" इत्यादिसूत्राणामद्वैतमतनिरासार्थतया श्रीभाष्यविवरणासामञ्जस्यम्।

यत्तु श्रीभाष्यकाराः—"असन्ततेश्चाव्यतिकरः," "आभास एव च," "अदृष्टानियमात्" इति सूत्रैः सूत्रकारा अद्वैतमतं निरस्यं मन्यन्त इति वदन्ति, तदिदं पूर्वोक्तप्रकारेणाद्वैतमतेऽपि औपाधिकस्य जीवपरिच्छिन्नत्वस्य स्वीकारात् आभासपदस्य प्रक्रान्तजीवेन विशेषणतयाऽन्वयस्यैव युक्तत्वेन हेतोरन्वयस्यायुक्तत्वेनाद्वैतमतानुसारिण पूर्वपक्षस्यानुत्थानेन चाद्वैतमतनिरासस्यात्राप्रासङ्गिकत्वात्, अद्वैतिभिरप्यदृष्टानियमदोषस्य व्यवहारदशायामपि जीवव्यापकतासिद्धान्ते व्यवस्थापनेन द्वितीयपादनिरस्यसांख्यादिविषयत्वस्यैव युक्तत्वेनाद्वैतमतविषयत्वस्यासांप्रतत्वाच्च चिन्त्योपपत्तिकमिति प्रतिभाति॥

अयमाशयः—द्वितीयाध्यायद्वितीयपादे हि प्रथमतो व्यवहारदशायां जीवव्यापकतासिद्धान्तः सांख्यवैशेषिकादीनाम्, व्यवहारदशायां जीवपरिच्छिन्नत्वस्य पारमार्थिकतादशायां तच्छून्यत्वस्य च सिद्धान्तः सौगतानाम्, पारमार्थिकतादशायामपि शरीरपरिमाणतासिद्धान्तो जैनानाम्, सर्वदा जीवाणुतासिद्धान्तः पाशुपतपाञ्चरात्राणां च सामान्यतो निरस्त एव; तथापि श्रुत्यन्तरोपष्टम्भनेन तदुत्थानमाशंक्यैव तत्तृतीयपादप्रवृत्तिरिति, "उत्क्रान्तिगत्यागतीनाम्" "स्वशब्दोन्मानाभ्यामि"त्यादिना जीवाणुत्वसिद्धान्ते पारमार्थिके खण्डिते व्यावहारिकजीवव्यापकतावादोऽपि खण्डनीयतयाऽवशिष्यत इति, अंशस्य सतो जीवस्य न व्यापकत्वम्; अन्यथाऽव्यवस्थापत्तिरित्यादिबोधनद्वाराऽदृष्टानियमादिति सूत्रमद्वैतमतमत्यन्तमेवोपबृंहयत् कथं वा श्रीभाष्योक्तरीत्याऽद्वैतमतनिरासार्थं स्यादिति सर्वे एव समालोचयन्तु।

(२९) द्वितीयाध्यायपादद्वयस्याद्वैतमत एव स्वारस्योपपादनम्।

तथाच—द्वितीयाध्यायप्रथमपादेन प्रथमाध्यायव्यवस्थापिताभिन्ननिमित्तोपादानत्वं यत् व्यवस्थापितम्, तस्य सांख्यस्मृतियुक्तिविरोधपरिहारार्थं प्रपञ्चनेन सूत्रकारैः केवलब्रह्मणः केवलजगतश्चैव कार्यकारणभावः, नतु विशिष्टयोर्ब्रह्मणो-

रिति सूचनात् विरोधिमतनिरासार्थेन द्वितीयपादेन सांख्यवैशेषिकादिसौगत-जैनपाशुपतपाञ्चरात्राणामेव समालोचनेनाद्वैतमतस्य कस्यापि भाष्यस्यानुसारेण तत्रानुल्लेखेन च पाञ्चरात्रादिप्रामाण्यावलम्बिनामेव सूत्रानारूढत्वं नत्वद्वैतमतस्येति सूचनात्, प्रथमाध्यायप्रतिपादितकारणस्वरूपे श्रुतिविरोधपरिहारार्थं तृतीयपादे जीवश्रुतीनां परस्परविरोधपरिहारस्य करणेन जीवस्य वस्तुसद्रूपं कारणस्य वस्तुसद्रूपं च परमार्थगत्यैकमेव, व्यवहारदृष्ट्यैव तयोर्भेदः, स चौपाधिक इति "चराचरव्यपाश्रयस्तु" इत्यादिना व्यवस्थापनाच्चेदमेव स्पष्टीक्रियते—यत् "अथातो ब्रह्मजिज्ञासे"त्यत्र जिज्ञास्यतया प्रतिज्ञातं ब्रह्मैवोपाधिविशेषेण कारणमुपाधि-विशेषेण जीवः, वस्तुगत्या तु विगलितोपाधिसम्बन्धं चैतन्यमेवात्र ब्रह्मपदार्थः, नतु सगुणकारणस्वरूपमेव पारमार्थिकम्; अन्यथा—अन्नमयादिशरीरेण "यतो वा इमानि भूतानि जायन्ते" इति ब्रह्मनिरूपणं तैत्तिरीयोपनिषदि, तस्यैव "जन्माद्यस्य यत" इति संग्रहणम्, नतु "यस्सर्वज्ञः सर्ववि"दि"ति कारणवाक्यादे-रित्यादिकमसंगतमेव स्यादिति, श्रुत्यन्तरेषु मायाद्युपहिततया तैत्तिरीय-श्रुतौ शरीराद्युपहिततया च प्रतिपादितं चैतन्यमेकमेवेति प्रत्यग्ब्रह्मैक्यमेव वेदान्तार्थ इति। श्रीभाष्यमते हि—यत्र जीवस्य ब्रह्मशरीरतासिद्धान्त एव शास्त्रार्थः, तत्र जीवस्य पराधीनकर्तृत्वव्यवस्थापनादिकम्, एवं तस्य ज्ञानाश्रयत्वं वा ज्ञानस्वरूपत्वं वाऽणुत्वं वा विभुत्वं वेत्यादिविचारः, सर्वोऽपि प्रथमाध्याय-प्रतिपादितसिद्धान्ताविरोधसमर्थनावसरे प्रासङ्गिक एव स्यात्, न स्वारसिकः॥

(२०) प्राणानित्यत्वस्थापनस्याद्वैतमत एवोपयोगः।

एतेन—प्राणादिनित्यत्वानित्यत्वविचारोऽपि—व्याख्यातः। द्वितीयाध्याय-तृतीयपादान्ते सूक्ष्मशरीरसंबन्धाज्जीवस्य कर्मफलाव्यतिकरे समर्थिते इयं शंकोदेति—यत्—स्थूलशरीरस्यान्नमयस्येव प्राणस्यापि कार्यत्वं विद्यते वेत नेति। यदि विद्यते, प्राणादिविशिष्टस्यापि जीवस्य जन्मान्तरासंबन्ध इति कर्मफल-व्यतिकरस्तदवस्थः। यदि तु नित्यत्वम्, तर्हि जीवस्य प्राणादिविशिष्टस्य कदाऽपि व्यापकत्वं ब्रह्माभेदो वा न संभवतीत्युभयतःपाशा रज्जुरिति। इयं च प्राणादीनां कार्यत्वेऽपि वियदादिवद्यावन्मुक्ति सत्त्वमिति व्यवस्थापनमन्तरा न परिहर्तुं शक्यत इति, प्राणानित्यत्वं वियदादीनामिवात्र साधनीयमिति, "तथा

प्राणाः" इति सूक्ष्मशरीरकार्यत्वादिव्यवस्थापनार्थं पादान्तरारम्भः। अनेन परमात्मनः कारणस्य कारणोपाधिरूपाधिभूताकाशानित्यत्ववत् कार्योपाधेर्जीवस्योपाधिभूतसूक्ष्मशरीरानित्यत्वसाधनेन हि पादद्वयप्रतिपादितमुपहितं स्वरूपमेकमेव, उपाधिरेव विनश्वरो भिन्न इति सूच्यते ; अन्यथा—प्राणादिनित्यत्वेऽपि प्राणादिविशिष्टस्यैव भगवच्छरीरत्वेऽपि च विशिष्टाद्वैतसिद्ध्या व्यर्थमेवेदं प्राणाद्यनित्यत्वव्यवस्थापनमापद्येत।

(२१) "तथा प्राणाः" इति सूत्रगतश्रीभाष्यस्य सूत्राशयानारूढत्वम्।
जीवब्रह्माभेदस्यैव सूत्रारूढत्वं च।

"तथा प्राणाः" इति हि सूत्रं प्राणाः वियत्तुल्या इत्यमुमर्थं गमयतीति भाष्यद्वयसम्मतमिदम्। इयान् विशेषः—यत् शांकरभाष्यमते—पूर्वपक्षे प्राणानां नित्यत्वं सिद्धान्ते कार्यत्वम्, श्रीभाष्यमते—प्राणादीनां कार्यत्वं जीववदिति पूर्वपक्षे सिद्धान्तो वियदादिवत्कार्यत्वमिति। इदमेवात्रालोचनीयम्—यत् जीवस्योत्पत्तिः कुत्र वा सूत्रकारैरुपक्षिप्यते, येन जीववदिन्द्रियाणां कार्यत्वं पूर्वपक्षयितुं शक्यते। श्रीभाष्यमतरीत्या हि जीवोत्पत्तिव्यवस्थापकं "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इत्येव सूत्रं वक्तव्यम्। तत्र हि सूत्रकाराः—जीवस्याकाशवदुत्पत्त्यभावं साधयन्तः कथं रूपेण केनचन तदुत्पत्तिमपि समर्थयन्तीति, नेदं सूत्रारूढम् नवाऽऽत्मकपोलकल्पनम्। नह्युत्पत्तिनिषेधमात्रेण वियत्पादे रूपान्तरेणोत्पत्तिसमर्थनमिति कल्पनं संभवति। अन्यथा—"असंभवस्तु सतोऽनुपपत्तेरि"ति ब्रह्मणोऽपि केनचन रूपेणोत्पत्तिरङ्गीकर्तव्या स्यात्॥ नचेष्टापत्तिः ; अत्र हि सूत्रे वियदादिविशिष्टब्रह्मण इव तत्कारणब्रह्मणोऽपि कार्यत्वमाशङ्क्य खलु तन्निषिध्यते। अत्र कारणस्यापि कार्यत्वे रूपान्तरेण तस्यापि कारणं तस्यापि कारणमित्यनवस्था समापद्येत॥ तथाच—जीवोत्पत्त्यभिप्रायं सूत्रमेकमपि नास्तीति कथं वा जीववत्कार्यत्वमिति पूर्वपक्षावसर इति वियदधिकरणपूर्वपक्ष एवात्रापि पूर्वपक्षः, स एव सिद्धान्तोऽत्रापीत्युत्पत्तिदेशसङ्गत्यैव वियत्पादेनास्य सङ्गतिः। अत एव—"गौण्यसंभवात्" इति तदधिकरणगतसूत्राकारस्यैव सूत्रस्यात्रापि सूत्रणमुपपद्यते। सर्वथा तु प्राणोत्पत्तिरियं भाष्यद्वयस्यापि संमतेति प्राणशब्दोपलक्षितसूक्ष्मशरीरानित्यताया अपि शास्त्रसंमतत्वात् प्रत्यगात्मस्वरूपमिदं विगलितान्तःकरणाद्युपाधिकं शुद्धचैतन्याभिधमिति

युक्तमेव। प्राणशब्दोऽयं सूक्ष्मशरीरवाच्येवेति "सप्तगतेर्विशेषितत्वात्" हस्तादयस्तु स्थितेऽतो नैवम्", इति सूत्राभ्यामेकादशेन्द्रियाणां प्राणशब्दार्थत्वविवेचनद्वारेण विशदीक्रियत इति—

"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥"

इति लक्षणलक्षितं सूक्ष्मशरीरं यद्यनित्यम्, तर्हि तन्मध्ये मनःशब्दगम्यस्याहंकारस्याप्यनित्यत्वमवगम्यत इति न स्वेन रूपेण जीवकार्यत्वम्, किन्तु नित्यत्वमित्येव सूत्राशयेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहार्थं जीवब्रह्माभेद एव स्वीकर्तव्यः, नतु तयोः शरीरशरीरिभावः।

(२२) श्रीभाष्यमते प्रकृतिनित्यत्वादेकविज्ञानेन सर्वविज्ञानानुपपत्तिः।

अन्यथा हि—प्रकृतेर्ब्रह्मकार्यत्वस्य केनापि सूत्रेणानिरूपणात् तन्नित्यत्वेऽवश्यस्वीकर्तव्ये कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानसंभवः श्रीभाष्यमते। अद्वैतमते तु मायाविद्यादिपदवाच्याया अस्याः कुत्रापि नित्यत्वस्याप्रतिपादनात्, "अतोन्यदार्तमिति" सामान्यवचने विरोधशंकैव नोदेतीति व्यर्थं तदनित्यत्वव्यवस्थापनम्। द्विविधं ह्यनित्यं वस्तु—सादि, अनादि च। "जन्माद्यस्य यत" इति सादिकार्यनिरूपितकारणत्वं ब्रह्मलक्षणतया विवक्षितमिति कारणवाक्याविरोधार्थमकार्यप्रकृत्यादिविचारो नापेक्षितः, अकृतेऽपि हि तस्मिन् विचारेऽनादिपदार्थस्य प्रकृतेर्नित्यत्वमुतानित्यत्वमिति विचारो हि नास्माकमिदानीमपेक्ष्यते।

(२३) अद्वैतमते प्रकृत्यनित्यत्वविचारानपेक्षणम्, श्रीभाष्यमते तन्नित्यत्वशरीरत्वादिसूत्राभावश्च।

यतो हि—अनेकजीववादे यावत्सर्वमुक्ति ईश्वरभाव एव मुक्तिः, न तु निर्गुणब्रह्मभाव इत्येव खल्वद्वैतिनां मतम्। व्यक्तं चैतत् सिद्धान्तलेशसंग्रहे मुक्तात्मस्वरूपनिरूपणप्रकरणेऽन्तिमे परिच्छेदे। सूत्रकारा भाष्यकारा वा प्रतिकर्मव्यवस्थापक्षपातिनः प्रकृतिनित्यत्वानित्यत्वविचारं हि नात्र कुर्वन्ति। अनेन हि ज्ञायते—सूत्रकाराः व्यक्तिशोऽप्रयोजनत्वमविद्याऽनित्यत्वविचारस्य मत्वा जीवमात्रस्यांशत्वानित्यत्वादि विचारयन्तश्च प्रकृतिविशिष्टतैकैव मुक्तिदशायां यावत्सर्वमुक्ति भवति, न जीवविशिष्टतेत्येव सिद्धान्तमभिप्रयन्तीति। अन्यथा

जीवस्येव प्रकृतेरपि अंशत्वबोधकं कथमेकमपि सूत्रं न सूत्रितमिति श्रीभाष्यमतानुयायिन एव वदन्तु। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणमिति सिद्धान्ते हि श्रीभाष्याभिमते कथं जीवस्येव ब्रह्मांशत्वसाधनं सूत्रकाराणाम्, न पुनः प्रकृतेरिति, कारणवाक्यानां परस्परविरोधपरिहारार्थं द्वितीयाध्याये कारणवाक्यानां ब्रह्मणि समन्वयनिरूपणपरे प्रथमाध्याये वा कुत्रापि ब्रह्मणः प्रकृतिजीवोभय-शरीरकत्वस्याजिज्ञासमनाद्विज्ञायते—यत् सूत्रकारा न सूक्ष्मचिदचिद्विशिष्ट-कारणतासिद्धान्तपराः—इति। अधिकं चात्र वक्तव्यं पूर्वमेवोपवर्णितम् ॥

(२४) प्राणादीनां स्वरूपतः कार्यत्वमेव सूत्रारूढम्, नतु प्राणविशिष्टब्रह्मणः।

अन्तर्यामिब्राह्मणं हि कदाचित् सर्वशरीरकत्वेन ब्रह्मोपासनविधानपर-मित्येवोरीकर्तव्यम्, नतु सर्वथा सर्वशरीरकमिति। अन्यथा—"यस्य पृथिवी शरीरमि"ति पृथिवीशरीरकत्वमपि सार्वदिकं स्यादिति सूक्ष्मचिदचिद्विशिष्टमेव सार्वदिकमिति सिद्धान्तो भज्येतेति विशिष्टाद्वैतमिदं न सूत्रारूढम्। अन्यथा "ज्योतिराद्यधिष्ठानमि"ति किमिति प्राणशब्देनाचेतनप्राणविवक्षां गृहीत्वा प्राणादीनामेव स्वस्मै स्वस्मै कार्याय प्रवर्तमानत्वं खण्ड्यते? अनेन हि स्पष्टमिदं ज्ञायते—यत् प्राणादीनां कार्यत्वं न प्राणविशिष्टब्रह्मरूपेण, किन्तु स्वरूपेणैव केवलेन। तथाच प्राणादीनामनित्यत्वेन तदुपलक्षितमाकाशादीनामनित्यत्वेन तदुपलक्षितं च चैतन्यमेकमित्येव सूत्रकाराशयः।

(२५) जीवब्रह्मभेदस्य औपाधिकत्वम्।

अत एव हि—"संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादि"ति सूत्रेण जीव-कर्तृकत्वं नामरूपव्याकरणस्याशङ्क्य जीवभावापन्नस्य परमात्मन एव कर्तृत्वमिति व्यवस्थापितमुपपद्यते। अनेन हि परमात्मनो जीवस्य च न स्वरूपतो भेदः, किन्तूपाधित इति सूचनादिदमेव सूच्यते—यत् यस्य प्रकृतित्वं निमित्तत्वं च "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति सूत्रितं प्रथमाध्यायान्ते, तस्यैव स्वरूपतो जीवत्वमिति "जन्माद्यस्य यतः" इति लक्षणलक्षितं ब्रह्म स्वरूपतो न जीवाद्भिन्नम्, किन्त्वभिन्नमेवेति, भगवद्रामानुजाचार्याणामद्वैतमतनिरसनतया सूत्राणां तत्र तत्र योजनं प्रौढिवादमात्रम्। यत्तु किल श्रीभाष्यकारैरद्वैतमतेऽज्ञाने सप्तानुपपत्त्यादिप्रदर्शनेन निर्विशेषाप्रामाणिकता तत्र तत्रोपवर्ण्यते, तत्र सर्वत्रावसरान्तरे वक्तव्यमुपपादयिष्यामः।

(२७) पाञ्चरात्राधिकरणस्य प्रक्रमादिभङ्गेन श्रीभाष्यसम्मतविवरणासांप्रतत्वम् ।

इदानीं हि बादरायणाचार्याणामुपपन्नेऽनुपपन्ने वाद्वैत एव तात्पर्यम्, नतु विशिष्टाद्वैतेऽनुपपन्न उपपन्ने वेत्येतावन्मात्रमुपपाद्यते । अत्र च विरुद्धमतनिरासप्रस्तावे बादरायणाचार्यैरद्वैतमतं नोल्लिखितम्, पाञ्चरात्रमतं तूल्लिखितमिति, बहुतरभाष्यकारसम्मतमिदं यत् श्रीभाष्यमतमिदं न बादरायणसम्मतम् । विरुद्धमतनिरासप्रसङ्गे हि स्वमतस्थापनं न केवलं सन्दर्भविरुद्धम्, किन्तु "विप्रतिषेधाच्चासमञ्जसम्" इत्यत्रोपक्रमे प्रयुक्तस्य विप्रतिषेधशब्दस्यैव "विप्रतिषेधाच्च" इत्युपसंहारेऽपि प्रयोगेणाधिकरणद्वयेऽप्याद्येऽन्तिमे च विरोधार्थस्यैव ग्रहणं योग्यमिति विपूर्वकस्य प्रतिषेधशब्दस्य केवलनिषेधपरत्वं श्रीभाष्यकारैराहृतमिति श्रीभाष्यकृतां पाञ्चरात्राधिकरणयोजनायां वाच्यार्थपरित्यागोऽपि समस्ति दोष इति सर्वविदितमिदम् ॥

भाष्यान्तरेऽप्यद्वैतमतनिरासः कृत इति तेषामपि यद्यपि पर्यालोचनमपेक्ष्यतेऽद्वैतमतस्यैव सौत्रत्वसमन्वयार्थम्; तथापि श्रीमध्वभाष्यस्य न सूत्रारूढत्वमित्यस्याद्वैतदीपिकायामस्मदीयायामुपपादितत्वान्मात्रया, श्रीवल्लभभाष्यादेरपि समालोचने महान् विस्तारः स्यादिति भीत्या श्रीभाष्यमात्रमिदानीं समालोच्यते । सर्वथा द्वितीयाध्यायः सम्यक् विमृश्यमानो न श्रीभाष्यसिद्धान्तस्योपष्टम्भकः, किन्त्वद्वैतभाष्यस्यैवेति सिद्धम् ॥

(२८) भाष्यद्वयविप्रतिपन्नकतिपयविषयसंग्रहः ।

इयमत्र व्यवस्था यथा—श्रीभाष्याद्वैतभाष्ययोः परस्परविरुद्धा विषया इमे एव । "(१) श्रीभाष्यमते प्रमाणसामान्यस्य सविशेषविषयत्वमेव, न तु निर्विशेषवस्तुविषयमेकमपि प्रमाणं वर्तते; अद्वैतमते तु निर्विशेषवस्तुविषयमपि प्रत्यक्षप्रमाणं भवितुमर्हति ॥ (२) प्रत्यक्षस्य जात्यादिविशिष्टविषयकत्वेनैव घटोऽस्तीति व्यवहारात् घटादिपारमार्थ्यावगाहिप्रत्यक्षविरोधात् आगमेन तन्मिथ्यात्वबोधनं न सम्भवति; घटोऽस्तीत्यादिप्रत्ययकाले घटाभावप्रतीतिः देशान्तरकालान्तरघटव्यावर्तमानत्वमेव गमयतीति घटादेरुक्तविधं व्यावर्तमानत्वं न मिथ्यात्वसाधनं भवति, रज्जुसर्पादौ तु तद्देशतत्कालावच्छेदेन व्यावर्तमानत्वस्यैव विद्यमानत्वात्तस्य मिथ्यात्वसाधनत्वाङ्गीकारेऽपि न क्षतिरिति श्रीभाष्यमतम्;

अद्वैतमते तु घटोऽस्तीत्यत्र सत्ता भेदश्च भासते। तत्रास्तित्वं भेदश्च नैकपदार्थं इति उभयोरपि व्यवहारयोरेकजातीयप्रत्यक्षविषयत्वमेकस्याधिष्ठानत्वं परस्यारोप्यत्वं शुक्तिरजतादेरिवोरीकृत्यैव निर्वहणीयम्। तथाच चाक्षुषप्रत्यक्षविषयत्वं शुक्त्यादेरिव सन्मात्रस्यैव, घटतद्भेदादेस्तु आविद्यकवृत्तिविषयत्वमिति, घटादिकं सर्वमपरमार्थम्; कल्पितत्वात्। यथा हि रज्जौ सर्पः कल्पितो मिथ्याभूतः एवमपि अयं सर्प इति व्यवहारः; एवं कल्पितं घटादिकमादायैव ज्ञानविशिष्टसर्वव्यवहारनिर्वाहः संभवत्येव।

(३८) घटादिमिथ्यात्वसमर्थनम्।

यथाहि—अबाधावस्थायामिदंतादात्म्येन प्रतीयमानो रजतादिर्बाधानन्तरप्रतीत्यनुसारेण तद्देशतत्कालावच्छेदेन व्यावर्तमानतामात्रेण मिथ्याभूतः, एवं घटतद्भेदादीनामपि ब्रह्मज्ञानसमनन्तरं तद्देशतत्कालावच्छेदेन व्यावर्तमानत्वमवगम्यमानं श्रुतिसिद्धमादाय मिथ्यात्वं साध्यते, न तु पटोऽस्तीत्यादौ घटादिप्रतीत्यभावमादाय। तथाच सर्पो यथा रज्ज्वनुविद्धसर्वप्रतीत्यविषयत्वात् मिथ्या, एवं घटादिकमपि सदनुविद्धसर्वप्रतीत्यविषयत्वात् मिथ्येति युक्तमेव। केवलसन्मात्रावगाह्यखण्डाकारवृत्तिरपि सत्प्रतीतिरेवेति न दोषः। पटोऽस्तीत्यादौ घटादेरप्रतीत्युपपादनमद्वैतिनामेतदर्थमेव—यत् रज्ज्वा वह्वत इत्यादौ सर्पस्याप्रतीयमानत्वाद्यथा व्यावर्तमानत्वेन वस्तुगत्या न रज्जुः सर्प इति निर्णीयते, एवं पटोऽस्तीत्यादौ सदनुविद्धप्रतीतिसामान्ये घटो न विषय इति घटस्य सद्विलक्षणत्वमिति। तथाच घटादयो मिथ्या व्यावर्तमानत्वादित्यत्र सदनुविद्धप्रतीत्यविषयत्वे सति प्रतीयमानत्वस्यैव व्यावर्तमानत्वपदेन सदसद्विलक्षणत्वस्यैव मिथ्यात्वपदेन च ग्रहणात् व्यावर्तमानत्वेन सदसद्विलक्षणत्वरूपमिथ्यात्वसाधने न कोऽपि दोषः॥ श्रीभाष्यकारैस्तु—स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वं 'व्यावर्तमानत्वसाध्यं न भवतीति खलु निरस्यते। यथा च बाधकालीनमेवाद्वितीयमिति वाक्यजन्यज्ञानमादाय श्रीभाष्योदाहृतरज्जुसर्पन्यायेन तदपि मिथ्यात्वं सुसाधं तथानुपदमेव विविचितम्॥

(४०) आगमबलीयस्त्वं न घटादिबाधः। प्रस्थानविशेषस्य प्रस्थानान्तरविरोधेन निरासायोगश्च।

वस्तुतस्तु—व्यावर्तमानत्वेन केवलेन सदसद्विलक्षणत्वघटितमिथ्यात्वस्यैव साधनात् न कोऽपि दोषः। एवं च प्रत्यक्षस्य सन्मात्रावगाहित्वमित्यस्य घटादौ-

नामाविद्यकवृत्तिविषयत्वमेवेति दृष्टिसृष्टिवादाभिप्रायेणैव प्रवृत्तिः, न तु प्रतिकर्म-व्यवस्थापचेण ; तत्पचे तु आगमबलीयस्त्वेनैव घटादिबाधः ॥ अत एव श्रीभाष्ये —"प्रत्यचादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्, सति च विरोधे बलीयस्त्वं वक्तव्यम्, विरोध एव न दृश्यते ; निर्विशेषसन्मात्रब्रह्मावगाहित्वात् प्रत्यच स्ये"ति श्रीशांकरमतावतारणं खण्डनार्थमुपन्यस्तमुपपद्यते । तथाचाद्वैतमत-निरूपणार्थं यावत्यः प्रक्रिया अद्वैतिभिराहृताः, तासां सर्वासां विषयविवेकम-ज्ञात्वा प्रक्रियान्तरानुसारेण पूर्वपचः प्रक्रियान्तरानुसारेण खण्डनं चात्र क्रियमाण-मप्रयोजकमेव ।

यस्तु—जात्यादिना भेदव्यवहारः, स जात्यादीनामपि कल्पितत्वेनाद्वैतमतरीत्या प्रत्यचविषयत्वासंभवात् स्वमतिमात्रविजृम्भित इति न दोषः । यथाच सन्मात्रं नीरूपमपि रूपमिवाद्रव्यत्वात् नियतेन्द्रियाग्राह्यत्वाच्चाक्षुषप्रत्यचविषयस्तथा-ऽस्मदीयव्याख्यायामत्र सम्यग्विवेचितमेव ॥

यथा च सदनुवर्तमानमेवं ज्ञानमप्यनुवर्तमानमेव वर्तत इति अनुभूति-रपि सतीति सिद्धम् । जानामीति प्रतीतिविषयत्वं सतो वर्तते चेदपि तत्र सतो वृत्तिविषत्वमेवोरीक्रियते, न वृत्त्यभिव्यक्तचैतन्यतादात्म्यम् । तथाहि— 'घटमनुभवामि' 'पटमनुभवामि' 'शुक्रत्वमनुमिनोमि' 'सर्वमिदं जानामी'ति व्यवहारेषु सर्वत्रैकरूपं ज्ञानं न विषयः ; एकस्य प्रत्यचत्वमेकस्य परोक्षत्वमित्यादि-वैलचण्यात् । अतः स्वसम्बन्धासम्बद्धवृत्त्यभिव्यक्तचैतन्यविषयत्वमेवानुभूतिज्ञान-विषयत्वमिति वक्तव्यम् । केवलवृत्तिविषयत्वे वृत्तीनां भेदादनुवर्तमानत्वा-योगः, चैतन्यमात्रसम्बन्ध उक्तविवेकायोग इति, अवश्यं वृत्त्यभिव्यक्तचैतन्यमाद-येवानुगतप्रतीतिनिर्वाहः कर्तव्य इति, तत्र चैतन्यांशस्यैवानुवर्तमानत्वात् सत्त्व-मद्वैतिनो मन्यन्त इति, वृत्तिविषयत्वरूपमनुभूतिविषयत्वं न केवलशुद्धचैतन्यरूपता विरोधीति सिद्धम् ॥

(४१) श्रीभाष्यापादितसंविस्वप्रकाशत्वानुपपत्तिनिरासः

इयं चानुभूतिः स्वव्यवहारे स्वव्यतिरिक्तसंविदपेचा नास्तीति स्वप्रकाशा, अत्र स्वव्यवहारे स्वातिरिक्तसंविदपेचैव निरस्यते, न वृत्त्यपेचेति परकीयानुभवः परकीयव्यवहारार्थं वृत्तिमपेचते चेदपि नानुपपन्नम् । श्रीभाष्यकारा हि— स्वसत्ताप्रयुक्तप्रकाशत्वम्, अव्यभिचरितप्रकाशसत्ताकत्वम्, स्वस्मै प्रकाशमानत्वम्,

स्वस्मै स्वयंप्रकाशत्वम्, स्वयंप्रकाशत्वमिति पञ्चविधं स्वप्रकाशत्वं संविदो निरस्यन्तः खण्डनार्थंमद्वैत्यभिमतं स्वातिरिक्तसंविदनपेक्षस्वव्यवहारकत्वरूपं स्वप्रकाशत्वं न विकल्पावसरे परामृशन्तीत्यनुक्तोपालम्भनमेवात्र कुर्वते, नाद्वैतमतप्रक्रियानिरसनमिति स्वयं परीक्ष्य सर्व एव विजानीयुरिति, नात्र बहुशो व्याप्रियते। अद्वैतिभिर्हि संविदः संवेद्यत्वमेव चित्तादात्म्यापरपर्यायं नोरीक्रियते, न त्वविषयत्वमिति, चित्तादात्म्यस्यैवाननुभूतित्वप्रसञ्जकत्वं मन्यते इति, घटादिदृष्टान्तेन फलव्याप्यत्वापरपर्यायानुभूतिविषयत्वनिरासोऽपि नानुपपन्नः। तथाच स्वगतातीतानुभवानां परगतानुभवानां च सर्वेषामनुमानशब्दादिजन्यवृत्तिविषयत्वेन सर्वव्यवहारनिर्वाहसंभवात् श्रीभाष्यापादितः सर्वव्यवहारोच्छेदप्रसङ्गश्छिन्नमूल एवेति सिद्धम्॥

(४२) अननुभाव्यत्वेऽप्यनुभूतेः श्रीभाष्यापादिताननुभूतित्वशङ्कानिरासः॥

एतेन—अनुभूतित्वं नाम वर्तमानतादशायां स्वसत्तयैव स्वस्मै स्वयं प्रकाशमानत्वम्, घटादीनामननुभूतित्वमप्येतत्स्वभावविरहात्, नानुभाव्यत्वात्; तथानुभूतेरननुभाव्यत्वेऽननुभूतित्वप्रसङ्गो दुर्वारो गगनकुसुमादिवदिति श्रीभाष्योक्तिरपि—परास्ता; संविद एवानुभूतित्वात्। गगनकुसुमाद्यननुभूतित्वे तु न फलाव्याप्यत्वं कारणम्, किन्त्वसत्त्वमेव। एवं च चित्तादात्म्यासत्त्वान्यतरत्वमेवाननुभूतित्वप्रयोजकमिति न कोऽपि दोषः। एतेन—घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वप्रयोजकमिति श्रीभाष्योक्तिरपि—परास्ता। अद्वैतमते हि—घटादिकमिव केवलं चैतन्यमपि नाज्ञानविरोधीति न तदननुभूतित्वप्रयोजकम्। तथाचाननुभाव्यत्वेऽनुभूतेरज्ञानाविरोधित्वापादनं श्रीभाष्यकाराणामिष्टापत्तिपराहतम्॥

(४३) श्रीभाष्यापादितज्ञानानित्यत्वनिरासः

एतेन—संविन्नित्यतापि—व्याख्याता॥ संवित्प्रागभावो हि संविदः कदाचिदसत्त्वं कालान्तरे सत्त्वं च यदि स्यात्, तर्हि खलु भवति; नान्यथा। तथाच यदि संविदुत्पत्त्यनुभवः स्यात्, तदा खल्वनुमानादिना तत्प्रागभावानुमानं स्यात्। यदि ज्ञानमुत्पन्नमित्याद्यनुभवस्तु वृत्तिमादायैव चरितार्थः, न तु संविदमादाय। नहि श्रीभाष्यकारमतेऽपि ज्ञानमुत्पन्नं विनष्टमित्याद्यनुभवानां नित्यात्मरूपज्ञानपरत्वं

तादृशधर्मभूतज्ञानपरत्वं वा संभवतीति धर्मभूतज्ञानगतसंकोचाद्यभिप्रायतयैव तस्योपपत्तिर्वक्तव्या। इयान् विशेषः—श्रीभाष्यमते नित्यं धर्मभूतं ज्ञानं संकोचविकासादियोग्यमुरीक्रियते, अद्वैतमते तु धर्मभूतज्ञानस्थाने स्वत उत्पत्ति-विनाशशालिनी वृत्तिः स्वीक्रियत इति का वाऽनुपपत्तिरद्वैतमते। एतावता विवक्षितः सारांशोऽयमेव—यत् ज्ञाननित्यत्वादिखण्डनं श्रीभाष्यकारैरद्वैत्यभिमत-वृत्तिपदार्थापरामर्शेनैव क्रियते, न तु तत्परामर्शेन। लोके हि निर्विषया संवित् वृत्त्यवच्छिन्नसंविदिव न दृष्टेति श्रुतिप्रामाण्येन सर्वोपाधिविरहितसंविद्रूपमात्र-नित्यत्वाद्यङ्गीकारे का वा बाधा? श्रुतिवाक्यानि हि—"अथात आदेशो नेति नेति" इति सकलोपाधिनिरासपुरस्कारेणैव संविद्रूपं प्रकाशयन्तीति, लोकदृष्टान्तेन श्रुत्यर्थव्यवस्थापनमिदं ब्रह्मणोऽनन्तकल्याणगुणत्वादिसिद्धान्तस्यापि कथं न बाधकम्? नहि लोकेऽप्राकृतदिव्यमङ्गलविग्रहः कोऽपि दृश्यत इति, श्रुतिगततत्तत्पदार्थवाक्यार्थादिज्ञानानन्तरमावापोद्वापाभ्यामद्वितीयब्रह्म-तत्त्वनिर्णये का वा बाधेति सर्व एव समालोचयन्तु॥

(४४) श्रीभाष्यापादितसंविद्विनाशापत्तिशङ्कानिरासः।

एतेन—संविदनुत्पत्त्या संविद्विनाशाभावादिकमपि—व्याख्यातम्। नह्यनुत्पन्ना भावाः केऽपि विकारवन्तो दृश्यन्ते। अविद्या ह्यद्वैतमते न भावो न वाऽभावः; अन्यथा भावरूपत्वेऽभावस्याज्ञानोपादानकत्वाभावापत्तिरित्यद्वैतसिद्धौ विवेचित-मिति, तृतीयप्रकारैवोरीक्रियते इति, न तस्यामपि व्यभिचारः केवलभावत्वमादाय श्रीभाष्यकारैरापादितः सावसरः। यत्तु पुनः अविद्याया मिथ्याभूता एव विकाराः सन्तीत्याशङ्कनम्, किं भवतां परमार्थभूतोऽपि विकारोऽस्ति कश्चित्? इति समाधानं च श्रीभाष्यकाराणाम्, तदिदमकाण्डताण्डवमेव। एतेन—अनुभूतिनानात्वराहित्यमपि—व्याख्यातम्। अत्र हि नानात्वं स्वसमानजातीय-भेदरूपमेव विवक्षितमनन्त्वहेतुकघटकम्, न तु विजातीयप्रतियोगिकनानात्वमिति नात्मनि देहादिभेदमादाय कालात्ययापदेशः; नवाऽविद्यायां ब्रह्मव्यतिरेकमादाय व्यभिचारः श्रीभाष्यापादितः संभवदुक्तिकः। "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति सिद्धान्तात् स्वसमानसत्ताकधर्मवत्त्वमपि दृशिरूपायाः संविदो दृश्यं न संभवति॥

(४५) श्रीभाष्यापादितनिर्धर्मकात्मस्वरूपसंविदसिद्धिनिरासः।

यथा च सत्यं ज्ञानमनन्तमित्यादीनां वाच्यार्थबोधदशायां सगुणपरतायामपि वस्तुगत्या न सगुणपरत्वमस्थूलादिवाक्यैकवाक्यतया, तथान्यत्र व्यक्तम्। एतेन संवित्सिद्धिरपि व्याख्याता; सिद्धेरेव संविद्रूपत्वात्। न हि सर्वत्र कस्येत्याकाङ्क्षा भवति, अन्यथा हि परमात्मबोधानन्तरमपि कस्यायं परमात्मेत्याकाङ्क्षाप्रसङ्गः॥ वस्तुतस्तु—सिद्धिपदेनाज्ञाननिवर्तकवृत्तेरेव विवक्षणात् संविदः सिद्धत्वं न सधर्मतापादकम्॥ वृत्तिर्हि घटादीनामप्याकारताख्यसंबन्धमेव लभते, न तु यावद्धर्मिसमवस्थानरूपां धर्मताम्। अनेन ज्ञानसकर्मकत्वादिकमप्यद्वैतमते नानुपपन्नमिति सूचितम्; वृत्तिमादाय सर्वनिर्वाहसंभवात्। अधिकं न्यायरत्नावलीतोऽवगन्तव्यम्। तदिदं सिद्धम्—यत् स्वप्रकाशा नित्या स्वसमानजातीयपदार्थान्तरभेदशून्योत्पत्त्यादिविकाररहिता, निर्धर्मका च संविदेव सर्वदा जाग्रत्स्वप्रसुषुप्त्यवस्थासु भासमाना आत्मा, न तु संविदतिरिक्त आत्मनि प्रमाणमस्तीति॥

(४६) श्रीभाष्यापादितानामहमर्थानात्मत्वपक्षदोषाणामनवसरः।

अहं जानामीत्यादिप्रत्ययेऽहंपदेन भासमानो हि नात्मा, किन्त्वहंकारतादात्म्यापन्नोऽनात्मैवेति, अहं जानामीत्यनुभवो वृत्त्यवच्छिन्नचैतन्यतादात्म्यमहंपदार्थस्य ग्राहयन् न संविद आत्मत्वसिद्धान्तविरोधी। अहमर्थो हि नात्मा; विस्तरतश्चायमर्थोऽस्मदीयचतुर्ग्रन्थ्यां तत्तत्प्रमाणविस्तारपूर्वकं न्यायामृतादिनिरसनपूर्वकमुपपादितः। अत्र न्यायामृतसिद्धान्तात् श्रीभाष्यसिद्धान्तो न भिन्न इति नात्र पुनरपि समालोचनीयमिदं पश्यामः। तथाहि—शरीरविविक्तात्मान एव स्वर्गोपभोक्तृत्वेऽपि यथा ब्राह्मणोऽहं स्वर्गी स्यामिति व्यपदेशः, एवमहमर्थविविक्तात्मन एव मोक्षान्वयेऽपि अहं मुक्तः स्यामितीच्छोपपद्यत एव। एतेन—

"अहमर्थविनाशश्चेत् मोक्ष इत्यध्यवस्यति।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः॥
मयि नष्टेऽपि मत्तोऽन्या काचित् ज्ञप्तिरवस्थिता।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥"

इत्यादिश्रीभाष्योक्तिरपि—परास्ता। अहंप्रत्यये हि अहंकारसंवलितं चैतन्यमवभासते। तत्र चैतन्यस्य सर्वदा भासमानस्याहंकारसंबन्धं विना व्यवहारासंभवात् अहंपदेन व्यवह्रियमाणमपि प्रत्यक्चैतन्यमहंकारांशविरहितमेव मुक्तौ

भवति । काकवद्देवदत्तगृहमित्यत्रेवाहंकारस्योपलक्षणतावस्थायामेवास्य प्रत्यक्चैतन्यरूपत्वात् ॥ एतेन—

"अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत्"

इति श्रीभाष्योक्तिरपि—परास्ता ; अहमर्थस्याहंप्रतीतिविषयस्याप्यहंकारोपहितत्वेन युष्मदर्थत्वम्, तदुपलक्षणत्वेन तु प्रत्यक्चैतन्यत्वमिति न कोपि दोषः ॥

(४७) ज्ञानस्वरूपस्याप्यात्मनो जानामीति प्रतीत्युपपत्तिः ।

यथाच चिद्रूपस्यात्मनः श्रीभाष्यमते चैतन्यगुणत्वेन जानामीति व्यपदेशस्तथाऽस्माकमपि तस्य वृत्तिविशिष्टत्वेन जानामीति व्यपदेशः । अत्रैवार्थे—"प्रज्ञानघनः स्वयंज्योतिरि"त्यादिपदानामपि स्वारस्यम् । यथा च "विज्ञातारमरे विजानीयादि"त्यादिवाक्यानामपि क्वाचित्कवृत्तिविज्ञानाश्रयत्वस्यैव विज्ञानव्यतिरेकेण ज्ञानाश्रयताबोधनेनाद्वैत एव स्वारस्यम्, तथा बहुषु स्थलेषु विस्तृतमस्ति ।

(४८) श्रीभाष्यापादितसंविदादिसम्बन्धिकत्वनिरासः ।

सविषयवृत्तिसम्बन्धमादायापि ज्ञातृत्वोपपत्तिश्च ।

यत्तु—संविदनुभूतिविज्ञानादिशब्दाः सम्बन्धिशब्दा इति शब्दार्थविदां वचनम्, तदिदमपि वृत्त्यभिप्रायमेवेति न कोऽपि दोषः । तथाच—परमार्थतो निर्विषया निराश्रयाऽपि संवित् भ्रान्त्येव ज्ञातृतयाऽवभासते रजततयेव शुक्तिरिति सिद्धम् ॥ अयं भावः—यत्र यदध्यासः तयोरभेदप्रतीतिस्तादात्म्यकल्पनानिमित्ता भवतीत्युत्सर्गः, यथा—इदं रजतमिति ; एवमपि घटमहं जानामीत्यादौ घटादीनामपि प्रमातृचैतन्याध्यस्ततादशायां घटोऽहमिति प्रतीतिस्तु न संभवति । यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वम्, तस्य तदाकारानुभवविषयत्वमिति हि नियमः ; अन्यथा मीमांसकदृष्ट्याऽवयवावयविनोर्गुणगुणिनोस्तादात्म्यात् कथं रूपं घट इति प्रतीतिर्न भवतीत्येतादृशस्थले नैमित्तिके सति निमित्तानुसरणम्, नतु निमित्तमस्तीति नैमित्तिकारोप इति न्याय एव शरणम् । तथाच रूपी घट इति प्रतीतिर्यथा न घटस्य रूपतादात्म्यविरोधिनी, एवमनुभवामीति प्रतीतिरात्मनोऽनुभवरूपत्वेऽपि न विरोधिनी । इयान् विशेषः—यत् इदं रजतमित्यत्र रजतं कल्पितम्, अत्र वृत्तिः कल्पितेति ॥ वस्तुतस्तु—श्रीभाष्यमते—धर्मभूतज्ञानस्यापि नित्यस्य पदार्थत्रयवादोपपत्त्यर्थमात्मरूपत्वमूरीकर्तव्यम् ।

अत एव—धर्मभूतज्ञानव्यापकतामादाय तत्र तत्र जीवात्मनः श्रुतं सर्वगतत्वमुपपाद्य-मानमुपपद्यत इति, तदात्मनोऽपि तद्धर्मत्वव्यपदेशः श्रीभाष्यकाराणामपि संमत इति, "यत्रोभयोः समो दोषो न तत्रान्यतरः पर्यनुयोज्य" इति न्यायेन अहं प्रतीतिः स्यादित्यापादनमिदं श्रीभाष्यकाराणामनुपपन्नमेवेति ज्ञातृत्वमात्मन्यनुसन्धीयमानं मिथ्यैव वयं जानीमः।

(४९) श्रीभाष्योपपादितज्ञातृत्वात्मधर्मत्वनिरासः।

ज्ञातृत्वं हि नाम वृत्त्यवच्छिन्नत्वम्, वृत्तिविशिष्टं मानसवृत्तिरिति यावत्। न हि देहात्माभिमानादि विना मनोवृत्तिसमुद्भवः सम्भवति। सुषुप्तौ तु न मनोवृत्तिर्न वाऽऽविद्यकवृत्तिरिति सिद्धान्तोऽपि न्यायरत्नावल्यामुपचितम इति न दोषः। यथाचानुभूतिः संविदेव, न वृत्तिस्तथा सहस्रश उपपादितमिति, अनुभूतिमिथ्यात्वापादनमिदं निरवसरमेव। सुषुप्तौ तथाऽसंप्रज्ञातसमाधौ च न वृत्तिरेकाऽपि वर्तते। संविन्मात्रं विद्यमानमपि देहाद्यभिमानाभावान्नाहमिति ज्ञायते। यदा तु देहाद्यभिमानोऽहंतादात्म्याभिमानश्च व्यक्तस्तदैवाहं जानामीति प्रतीतिर्जाग्रदशादौ भवतीति ज्ञातृत्वमिदमनात्मधर्म एव, नात्मधर्म इत्यवश्यमुरीकरणीयम्॥

(५०) अहमर्थविशिष्टचैतन्यधर्म एव ज्ञातृत्वम्,
नतु केवलाहङ्कारादिधर्म इत्युपपादनम्।

न वयमद्वैतिनो जडस्याहङ्कारमात्रस्य ज्ञातृत्वं वदामः, किन्त्वहङ्कारोपहितस्य जीवस्य। व्यक्तं चैतत् "यथाच तक्षोभयथे"त्यधिकरणे भाष्य इति, तत एवाधिकमवगन्तव्यम्। एवं च न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसम्भवः। अहङ्कारस्य जडस्वभावस्यापि चिच्छायापत्त्या चित्सन्निधानेन तत्सम्भव इति चेत्, केयं चिच्छायापत्तिरि"त्यादिकमनुक्तोपालम्भनमेव। तथाचाहङ्कारप्रतिफलितचैतन्यस्य जीवस्यैव कर्तृत्वात् न कोऽपि दोषः। अहङ्कारप्रतिफलनं च जीवस्य शुद्धचैतन्याश्रितस्याज्ञानस्याहङ्कारदेशावच्छेदेन तिरोधानार्थमुरीक्रियते। यथाहि चन्द्रः राहुं प्रकाशयति, एवमज्ञानावृतमपि चैतन्यमज्ञानं प्रकाशयतीति न किञ्चिदनुपपन्नम्। अहङ्कारप्रतिफलनं नामाहङ्कारतादात्म्येन प्रतिभानमित्यद्वैतप्रक्रिया॥

(५१) श्रीभाष्याभिमताहंकारमोचाद्यन्वयनिरासः।

यत्तु श्रीभाष्ये न तावत्संविदभिव्यक्तिर्नाम तदुत्पत्तिरित्यादिविकल्पनं तन्निरासादिकं च, तत् सर्वमनुक्तोपालम्भनमेव। सर्वथा तु अहङ्कारस्य केवलस्य

ज्ञातृत्वं नाद्वैतिसंमतम्, न वा केवलस्य चैतन्यस्य, किन्तूपहितस्यैव। यत्तु जाग्रद्दशायां—सुखमहमस्वाप्समिति स्मरणम्, तत्राहङ्कारांशेऽनुभव एव, न स्मरणमित्यादिकमद्वैतसिद्ध्यादौ व्यक्तम्। तथाच सुषुप्तिदशायां साक्षित्वेनैवात्मनः सत्त्वम्, न ज्ञातृत्वेन। साक्षित्वं नामाहङ्कारोपहितत्वम्, नान्यदित्यादि वेदान्तपरिभाषायां व्यवस्थापितमेव। यथाचाहमर्थस्य मोक्षदशायां नानुवृत्तावपि मुक्त्युपपत्तिस्तथा पूर्वमेवोपपादितम्। एतेन—मुक्तावपि स आत्मा अहमित्येव प्रतीयते, इत्यादिश्रीभाष्योक्तिः—परास्ता, प्रमाणाभावात्। यथाचान्यादृशमेव स्वप्रकाशत्वम्, ज्ञानस्यैव तत् भवति ; तथा पूर्वमेव विवेचितम्।

(५२) दृष्टिसृष्टिपक्षेण प्रत्यक्षस्य सन्मात्रग्राहित्वेन निर्विशेषसाधनम्।

वस्तुतस्तु—यावत्सर्वमुक्ति ईश्वरभाव एव मुक्तिरिति सिद्धान्तलेशसंग्रहोपपादितसिद्धान्तानुसारे मुक्तावपि आविद्यकाहमाकारवृत्तेरङ्गीकारात् "तदैक्षत बहु स्याम"त्यादिव्यवहाराः सर्व एवोपपद्यन्त इति न कोऽपि दोषः। तथाच प्रत्यक्षस्य सन्मात्रग्राहित्वेनानुवर्तमानस्य सत एव नित्याभिन्नस्वप्रकाशसंविदात्मकत्वेन तद्व्यतिरिक्तस्य सर्वस्य दृष्टिसृष्टिपक्षेणाविद्यकवृत्तिविषयत्वस्यैव स्वीकारादद्वैतमतरीत्या प्रपञ्चावगाहिप्रमाणमेव नास्तीत्यप्रामाणिकप्रपञ्चरूपोपाधिविलयनेन निर्विशेषबोधनमेव वेदान्ततात्पर्यानुकूलमिति सिद्धम्।

(५२) दृश्यत्वेन प्रपञ्चमात्रमिथ्यात्वम्, श्रीभाष्यापादित-
शुद्धब्रह्ममिथ्यात्वशङ्कानिरासश्च॥

एतावता प्रपञ्चेन दृष्टिसृष्टिवादेन निर्विशेषं ब्रह्म साधितम्। प्रतिकर्मव्यवस्थानुसारेणापि प्रपञ्चमिथ्यात्वोपपादनमिदानीमुपपादयामः। तत्र पक्षे यद्यपि सन् घट इत्यादिप्रत्यक्षगम्यत्वं घटादीनां वर्तते; एवमपि प्रत्यक्षस्यास्य दोषमूलत्वेन शास्त्रबाधितत्वात् न निर्विशेषब्रह्मासिद्धिः॥ "दोषश्चाविद्यैव, शास्त्रमप्यविद्यामूलकमेवेति, शास्त्रेणापि बाधितार्थविषयकमेव ज्ञानमुत्पादयितुं योग्यम्। तथाच निर्विशेषं ब्रह्मापि मिथ्या स्यात्। दोषमूलज्ञानविषयत्वं खलु मिथ्यात्वप्रयोजकम्, नत्वबाधः; अन्यथा यस्य भ्रान्तस्य हिमगिरिगुहास्थस्यापरोक्षकस्य बाधबुद्धिरिव शुक्तिरजतादिस्थले न संजाता, तद्दृष्ट्या तस्य सत्यत्वमापद्येते"ति श्रीभाष्यकाराणामाक्षेपस्तु शास्त्रजन्यज्ञाने यदि शुद्धं ब्रह्म विषयः स्यात्, तदैव संभवति। शास्त्रजन्यज्ञाने हि वृत्त्युपहितमेव भासते। अज्ञानस्य

वृत्तेश्च विनाशानन्तरं शुद्धं स्वत एव प्रकाशत इति शुद्धं न शास्त्रजन्यज्ञानविषयः। "तं त्वौपनिषदं पुरुषं पृच्छामो"ित्यादीनामप्युपहितविषयत्वमित्यद्वैतप्रक्रियायां त्वाद्रियमाणायां शास्त्रस्य शुद्धब्रह्मबोधप्रयोजकत्वस्यैवोरीकरणात् शास्त्रजन्यज्ञान-विषयस्य ब्रह्मण उपहितस्य मिथ्यात्वापत्तेरिष्टापत्तिग्रस्तत्वात् न स सावसरो भवति। एतेन—ब्रह्म, मिथ्या, अविद्यावदुत्पन्नज्ञानविषयत्वात्, प्रपञ्चवत्; ब्रह्म, मिथ्या, मिथ्याज्ञानविषयत्वात्; ब्रह्म, मिथ्या, असत्यहेतुजन्यज्ञान-विषयत्वात्, प्रपञ्चवदित्यनुमानप्रयोगा अपि श्रीभाष्यकारीयाः—परास्ताः। सर्वत्र शुद्धब्रह्मणः पक्षतायां हेत्वसिद्धेः उपहितब्रह्मपक्षतायां च सिद्धसाधनस्य च पूर्वोक्तरीत्या सिद्धत्वात्। यदि तु शुद्धमेव वेदान्तगोचर इत्युरीक्रियते, तावतापि अविद्याया दोषता तत्समानसत्ताकपदार्थाकारेण परिणामित-यैवाद्वैतिभिः स्वीक्रियते। तत्र ब्रह्मापि यदि मिथ्या स्यात्, तर्हि प्रपञ्चवत् ब्रह्मणोऽपि अविद्यापरिणामित्वमवश्यमुरीकरणीयं स्यात्। न चैतत् संभवति; निराश्रयाया निर्विषयायाश्चाविद्यायाः परिणामित्वाः स्वीकारायोगादिति, प्रपञ्चमिथ्यात्वं प्रति अविद्योपादानकत्वमेव प्रयोजकम्, नाविद्यावदुत्पन्नज्ञान-विषयत्वम्। तथाच श्रीभाष्यकारानुमानजातमविद्यापरिणामित्वरूपोपाधि-ग्रस्तमप्रयोजकं चेति सिद्धम्॥

(५४) अविद्याविषयस्य ब्रह्मणस्तदधिकसत्ताकत्वोपपत्तिः।

अयं भावः—यत्र काचादिकं दोषान्तरं तत्राविद्या स्वविषयातिरिक्तविषय तदाकारवृत्त्याकारेण परिणमते। यत्र तु अविद्यैव दोषः, तत्र स्वविषयाति-रिक्तविषयाकारेण परिणमते। स्वविषयस्तु स्वापेक्षयाधिकसत्ताक एव सर्वत्र। यथा शुक्तिरूप्यादिस्थले शुक्तिः पल्लवाज्ञानापेक्षयाऽधिकसत्ताका दृष्टा। एवं प्रपञ्चोपादानाविद्यापेक्षया तादृशाविद्याविषयशुद्धचैतन्यमधिष्ठानमधिकसत्तावदेव स्वीकर्तव्यम्॥

(५५) शास्त्रमिथ्यात्वेऽपि ब्रह्मसत्यत्वोपपत्तिः।

तथाच—यत्र प्रमाणं प्रमेयमुभयमविद्योपादानकं तत्रैव ज्ञानप्रमाणविषयाणां सर्वेषामपि मिथ्यात्वम्, यथा घटतज्ज्ञानतत्प्रमाणानाम्। शास्त्रं तु अविद्यो-पादानत्वात् स्वयं मिथ्याभूतमपि स्वज्ञाप्यस्य ब्रह्मणोऽविद्यानुपादानकस्य कथं मिथ्यात्वमन्तरा नोपपद्यते। तथाच मिथ्याभूतेनापि शास्त्रेण सत्यार्थप्रतीतिः

संभवत्वेवेति, कथं शास्त्रजन्यज्ञानविषयतया ब्रह्मणो मिथ्यात्वम् ? अन्यथा स्वाप्निकज्ञानसूचितशुभाशुभादीनामपि जाग्रद्दशायामनुभूयमानानां मिथ्यात्वमापद्येत ? "अर्थेनैव विशेषो हि निराकारतया धियामि"ति वचनात् ज्ञानमिवार्थोऽपि कारणकोटिप्रविष्ट एवेत्यद्वैतसिद्धौ व्यक्तमिति, "स्वाप्निकादिज्ञानस्यैव सत्यस्य तत्र हेतुत्वम्, न तु तदर्थस्ये"ति श्रीभाष्योक्तमपि न सोपपत्तिकं पश्यामः। अतश्च प्रतिकर्मव्यवस्थापक्षेणाप्यद्वैतमेव परमार्थः। अत एव हि निर्विशेषब्रह्मप्रतिपादनपराणि सर्वाणि वेदान्तवाक्यानि चरितार्थानि॥

(५६) श्रीभाष्यकाराभिमतनिर्विशेषवाक्यसविशेषपरत्वनिरासः।

यत्तु पुनर्निर्विशेषपराणामपि सर्वेषां वाक्यानां हेयगुणादिराहित्यप्रतिपादनपरतयाऽन्यथा योजनं श्रीभाष्यकाराणाम्, तत्र श्रुतार्थत्यागोऽश्रुतार्थकल्पना च सर्वविदित एव दोषः। तत्र यदि सूत्रकारैः कुत्रापि तानि वाक्यानि योजितानि तत्परतया भवेयुस्तर्हि कथमपि काऽप्युपपत्तिरत्राङ्गीकरणीया स्यात्, स्वतन्त्रं वाक्यानामुत्सूत्रमन्यथानयनं तु स्वीयमिति स्वस्य दौर्बल्यमेव प्रकाशयति।

(५७) संक्षेपतो न स्थानतोऽपीतिसूत्रगतभाष्यद्वयार्थसमालोचनम्।

तत्राद्वैतभाष्यकारा "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इति सविशेषपराणां निर्विशेषपराणां च वाक्यानां परस्परविरोधेन किंपरत्वमिति विचारेण "भेदादिति चेन्न प्रत्येकमतद्वचनात्" "अरूपवदेव हि तत्प्रधानत्वादि"-त्यादिसूत्रैर्निर्विशेषप्राधान्यं स्पष्टमेव प्रतिपादयन्ति। श्रीभाष्यकारास्तु—अस्मिन्नधिकरणे शरीरशरीरिभावप्रयुक्तापुरुषार्थगन्धापत्तिनिरासं कुर्वाणाः न केवलं बहूनामेतदधिकरणसूत्रादीनां वैयर्थ्यमापादयन्ति, किन्तु सौत्रपदानामप्रसक्तार्थाध्याहारादिना श्रुतार्थत्यागेनाश्रुतार्थकल्पनामपि कुर्वत इति कस्य वेदं भाष्यद्वयपर्यालोचनशीलस्य न प्रत्यक्षम् ? अथात्रावसरे स्पष्टप्रतिपत्त्यर्थं भाष्यद्वयस्याप्येतदधिकरणसूत्राणां योजनाप्रकारः परीक्षणार्थमुपक्षिप्यते।

(५८) विस्तृतरूपेण नस्थानतोपीतिसूत्रगतभाष्यद्वयार्थविमर्शनम्।

तत्राद्वैतभाष्यकाराः—न स्थानतः स्वभावतश्च ब्रह्मोभयलिङ्गम्, यतः सर्वत्र-सर्वासूपनिषत्सु हि प्रसिद्धम्, एकरूपतया निर्विशेषतयैवेति यावदिति प्रथमसूत्रं व्याचक्षते। श्रीभाष्यकारास्तु—ब्रह्मणः स्थानतः उपाधितोऽपि नापुरुषार्थ-

गन्धः ; यतः सर्वत्र उभयलिङ्गम् निरस्तसमस्तदोषत्वकल्याणगुणाकरत्वविशिष्टं ब्रह्म वर्तत इति तत् विरुध्यते । तत्राद्वैतभाष्यमतेऽपिशब्दस्यानुक्तसमुच्चयार्थत्वम्, नञः श्रुतेनोभयलिङ्गेनान्वय इत्यादिस्वारस्यम्, सर्वत्र हीत्यत्र तु निर्विशेष-मेवेत्यध्याहारदोष इव भवति । श्रीभाष्यमते तु—न केवलमश्रुतस्याप्रसक्त-स्यापुरुषार्थगन्ध इत्यस्याध्याहारो नञन्वयार्थम्, नचोभयलिङ्गपदेन विरुद्ध-गुणद्वयस्य प्रतीतस्य परित्यागेनाविरुद्धधर्मद्वयपरतया योजनमिति चास्वारस्यम्, किन्तु—“भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्” “स्थित्यदनाभ्यामि”ति सूत्र-सिद्धस्यैवात्र पुनरुक्तिदोषोऽपि भवति । यद्यप्यत्र श्रीभाष्ये—“ननु संभोग-प्राप्तिरिति चेन्न वैशेष्यात्” “स्थित्यदनाभ्यां च” इत्यादिषु परस्याकर्मवश्यत्वेन दोषाभाव उक्तः ; तथापि “देहयोगाद्वे”ति देहसम्बन्धेनैवाकर्मवश्यत्वेऽपि कर्मसम्बन्धापादानद्वाराऽपुरुषार्थगन्धापत्तिशंका भवितुमर्हतीति तन्निरासार्थमि-सूत्रमित्युक्तम् ; तथापीदमेवात्रालोचनीयम्—यत् “देहयोगाद्वा” इति सूत्रं जीवस्यापहतपाप्मत्वादिस्वभावतिरोभावनिमित्तं देहयोगं बोधयत् कथमकर्मवश्ये परमेश्वरेऽप्यपुरुषार्थगन्धापादकं भवतीति । जीवे हि—अकर्मवश्यत्वमप्रसक्तमिति कर्मवश्यत्वप्रयुक्तदेहयोग एव तत्र तिरोभावनिमित्ततया विवक्षणीयः; अन्यथा तत्रैव भगवत इव देहयोगोऽपि न तिरोभावनिमित्तं स्यादिति कथमियं शंका परिहृता भविष्यति ? अत एव—तस्मिन्नेव सूत्रे “अतो जीवानामल्पाल्पकर्मानु-गुणफलानुभवार्थमित्याद्युपसंहारः श्रीभाष्यगत उपपद्यते ।

(५८) भेदादिति चेन्नेति सूत्रगतभाष्यद्वयविमर्शनम् ।

एतेन—“भेदादिति चेन्न प्रत्येकमतद्वचनात्” इति द्वितीयसूत्रमपि व्याख्या-तम् । इदं हि सूत्रं शंकरभगवत्पादैः—ब्रह्मैकलिङ्गं निर्विकल्पमेवेति न युक्तम् ; भेदात् आकारस्य तत्र तत्र विधानादिति चेन्न, प्रत्युपाधि अभेदवचना-दिति विवृतम् । श्रीभाष्यकारैस्तु—जीवस्येव प्रजापतिवाक्यावगतापहतपाप्मत्वाद्यु-भयलिङ्गस्य देवादिदेहयोगरूपावस्थाभेदादन्तर्यामिणोऽपि स भवतु इति चेन्न ; प्रतिपर्यायं तस्य “यः पृथिव्यां तिष्ठन्नि”त्यादिनाऽमृतत्ववचनेन तन्निषेधात् । जीवस्य तु तत्स्वरूपं तिरोहितमिति “पराभिध्यानात्तु” इत्यत्रोक्तमिति व्याख्यातम् । अद्वैतभाष्ये—भेदादित्यनेन यत्प्रयुक्तं सविशेषत्वमाशंकितम्, अतद्वचनादित्यत्र

साक्षादतत्पदेन तच्छेदस्यैव निरासः क्रियत इति तत्पदस्य सूत्रप्रक्रान्तार्थपरामर्शित्वेन स्वारस्यम् ; श्रीभाष्यमते तु न केवलमतत्पदेनामृतत्वस्यानुपस्थितस्य परामर्शेनाश्रुतार्थकल्पनम्, किन्तु कर्मवश्यत्वापादनप्रयुक्तपुरुषार्थगन्धशंकायाः प्रथमसूत्रेणैव निरासात् द्वितीयसूत्रवैयर्थ्यमपि दोषः। जीवस्य हि प्रजापतिवाक्यावगतोभयलिङ्गस्य देहयोगप्रयुक्तापुरुषार्थगन्धो ह्युभयलिङ्गस्यानभिव्यक्तताशायामेव, न तदभिव्यक्ततादशायामिति सर्वदाभिव्यक्तोभयलिङ्गस्यान्तर्यामिणः कथं जीवदृष्टान्तेनोक्तशंकायाः पुनरुत्थानम् ?

अयं भावः—पूर्वसूत्रे निरस्तसमस्तदोषत्वपदेन प्राकृतशरीरनिषेधोऽपि विवक्षितो वा, न वा ? आद्ये पुनराशंकोत्थानमसंभवदुक्तिकम्। द्वितीये—पूर्वसूत्रेणाप्युक्तशंकाया अपि निवृत्तिरिति तत्सूत्रवैयर्थ्यमिति ॥

(६०) अरूपवदेवेति सूत्रगतभाष्यद्वयविमर्शनम्।

एतेन—तृतीयम् "अरूपवदेव हि तत्प्रधानत्वादि"ति सूत्रमपि—व्याख्यातम्। इदमत्र शांकरं भाष्यम्—"रूपादिरहितमेव ब्रह्म, निर्विशेषप्रधानत्वात् सर्वासामुपनिषदामि"ति। श्रीभाष्यं तु—ब्रह्मणोऽपि नामरूपादिव्याकरणेन तदात्मभूतस्य तत्तन्नामभाक्त्वमस्तीति कर्मवश्यत्वं स्यादिति शंकानिराकरणार्थमिदं सूत्रम्। अरूपवत् रूपरहिततुल्यमेव, जीववच्छरीरत्वनिबन्धनं कर्मवश्यत्वं न विद्यत इति। कुतः ? तन्निर्वाहकत्वेन प्रधानत्वादिति। अत्र प्रथमभाष्ये—एकलिङ्गत्वे निर्विशेषत्वमेवेति कुत इति विनिगमनाविरहशङ्कानिरासपरतयोक्तसूत्रयोजनेति स्वारस्यं सर्वविदितमेव ; श्रीभाष्यमते तु—न केवलं सूत्रद्वयेन, किं बहुना? भोक्त्रापत्तेरित्यधिकरणान्तरेणापि निरस्तस्य कर्मवश्यत्वस्यैव निरासादुक्तसूत्रस्यापि वैयर्थ्यम्, किन्तु अरूपवत्पदस्य कर्मावश्येत्यर्थकल्पनादोषोऽपि ; एवं तत्प्रधानत्वात् इत्यत्र तत्पदेन रूपवच्छरीरपरामर्शादतिक्लिष्टकल्पना च। अयं भावः—अरूपवदेवपदं हि श्रीभाष्यकारैररूपतुल्यमिति विवरणेन केनाप्यंशेन रूपवन्तं पदार्थं नोपस्थापयति। वतिप्रत्ययो ह्यत्र श्रीभाष्यकारैररूपवदित्यत्र विवक्षितः ॥

एतेन—रूपपरामर्शोऽपि—परास्तः ; अप्रधानत्वात् रूपस्य तत्र ; अद्वैतमते तु तच्छब्देनारूपवच्छब्दनिर्दिष्टनिर्विशेषबोधनात्कोक्ता क्लिष्टकल्पना। "प्रकाश-

वस्थावैयर्थ्यादि"ति सूत्रमाकारवद्ब्रह्मनिरूपणपराणां सार्थक्यनिरूपणपरं अरूपवदेवेति सूत्रे एवेत्यवधारणव्यावर्तितस्य सविशेषस्योपासनादिषु सार्थक्यं संपादयत् सर्वेषां वेदान्तानामविरोधमद्वैतसिद्धान्ते प्रतिपादयत्यद्वैतमतानुसारेण। श्रीभाष्यमते तु—रूपवत्सत्यकामत्वादिसार्थक्यनिरूपणपरम् ॥

(६१) न स्थानतोपीत्यधिकरणस्याद्वैत एव स्वारस्यम्।

अत्रेदमेवालोचनीयम्—यत् समस्तदोषनिरासपरत्वमेव निर्गुणवाक्यानाम्, एवमथात आदेशो नेति नेतीत्यनेन गुणेयत्तानिषेध एव विवक्षित इति, सत्यं ज्ञानमिति वाक्यं न निर्विशेषपरमित्यादि सिद्धान्तपक्षपातिनां मतरीत्याऽथात आदेश इति वाक्यानुसारेण प्रपञ्चमिथ्यात्वशंका, निर्विशेषमात्रपरत्वमिति शंका चाकस्मात् कथमत्रोत्थितेति ? एवं श्रीभाष्यकाराणां मते—अपुरुषार्थगन्ध-निषेधव्यवस्थापनार्थं प्रवृत्तेऽधिकरणे सत्यकामत्वादिलिङ्गान्तरसमर्थनस्य को वोपयोगः ? यतो निरस्तसमस्तदोषत्वलिङ्गमेकमेव तत्र पर्याप्तम्। तथाच प्रपञ्चसत्यत्वादिस्थापनमिदमप्रसक्तं भवति ॥ एतेन—उभयलिङ्गमित्युभयपदस्वा-रस्यमप्यद्वैतमत एवेति—व्याख्यातमेव ॥

(६२) तृतीयाध्यायद्वितीयपादे स्वप्नादिपरीक्षायाः श्रीभाष्यमतेऽनुपयोगः।

तथाच निर्विशेषब्रह्मस्वरूपनिरूपणपरमेवेदमधिकरणमित्यवश्यमूरी-कर्तव्यम्। अत एव हि—जीवस्याप्यत्र द्वितीयपादे परीक्षणं कृतमुपपद्यते। यदि जीवस्य दुःखित्वेन न प्राप्यत्वम्, किन्तु परस्य ब्रह्मण एवेति श्रीभाष्य-सिद्धान्त एव सूत्रकाराभिमतः, तर्हि वयं पृच्छामः—"सन्ध्ये सृष्टिराह ही"ति स्वप्नादिपरीक्षणं द्वितीयपादे क्रियमाणं व्यर्थमिति। यतः प्रथमपादे लोकान्तर-संचारी यो बोधितः, तावतैव जीवविलक्षणत्वं ब्रह्मणः सिद्ध्यति। अस्तु वा कथमपि जाग्रदाद्यवस्थानामपि तन्मतरीत्योपयोगः, परंतु प्रथमपाद एव वैराग्यपादत्वेन श्रीभाष्यकाराणामप्यभिमते तदनिरूपणेन प्राप्यवस्तुचिन्तापादेऽत्र तन्निरूपणमिदमेव गमयति—यत् जाग्रदाद्यवस्थानिरूपणमपि प्राप्यवस्तुनः शोधनार्थमेव क्रियते इति। एवं सति हि त्वंपदार्थः शोधितो भवति। तत्र चावस्थासु जाग्रदाद्यवस्थायाः प्रथमतोऽपरीक्षणेन स्वप्नावस्थायाः परीक्षणेन सूत्रकार इदं सूचयतीत्यवश्यमूरीकर्तव्यम्—यत् वस्तुगत्या तत्तदवस्थारहितमेव जीवस्य परमार्थं स्वरूपमिति।

(६३) मायामात्रं त्विति सूत्रस्याद्वैतमत एवोपपत्तिः, नतु श्रीभाष्यमते।

अत एव हि—"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति सूत्रे मायामात्रपदप्रयोग उपपद्यते। इदं तु सूत्रं श्रीभाष्यकाराः मायामात्रपदस्य "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादावाश्चर्यपरत्वं स्वीकृत्य स्वाप्निकसृष्टेरीश्वरसृष्टिपरत्वमेव, न जीवसृष्टिपरत्वमिति विवृण्वते। अत्र जीवसृष्टिनिरासे तस्यातेऽनभिव्यक्तस्वरूपत्वं हेतुतया विवक्षितम्। अनेन पदेन विवक्षितोऽर्थोऽयमेव– यत् अपहतपाप्मत्वादिकं जीवस्य संसारदशायां तिरोहितं वर्तते इति। आवाभ्यामिदमेव पृच्छ्यते—यत् जीवस्यापहतपाप्मत्वतिरोधनवर्णनं कथं जीवसृष्टिनिषेधाय समर्थं भवतीति। नहि सत्यप्यपहतपाप्मत्वे जीवस्य नियमेन स्रष्टृत्वसंभवः श्रीभाष्यकाराणां मते संभवति। जगद्व्यापारवर्जमिति हि सूत्रे श्रीभाष्यकाराः स्वयमेव वदन्ति—यत् जीवस्यापहतपाप्मत्वादिगुणयोगेऽपि न स्रष्टृत्वमिति। अत एव—"तन्वभावे सन्ध्यवदुपपत्तेः" "भावे जाग्रद्वत्" इति तुरीयाध्याये स्वाप्निकजागरिकपदार्थयोर्वैलक्षण्यं प्रतिपादितमुपपद्यते; अन्यथोभयोरपीश्वरसृष्टत्वे कथमिदमुपपद्यते? अत्र हि भाष्ये ईश्वरसृष्टित्वं स्वाप्निकप्रपञ्चस्य पूर्वपक्षयित्वा मायामयत्वम्; तत्तत्सामग्र्यभावेन सम्यगनभिव्यक्तस्वरूपत्वात्; नहीश्वरसृष्टं किमपि कालान्तरे देशान्तरे वाऽनभिव्यक्तं भवति। स्वाप्निकं तु वस्तु एकस्यैव प्रतीयते, तस्यापि कालान्तरे न प्रतीयते इति मिथ्याभूतमिति विवेचितम्। मिथ्याभूतस्य प्रतीतिमात्रसत्त्वम्, अनन्तरं न सत्त्वमिति परीक्षणार्थं तु सुषुप्तिपरीक्षा। तथाच प्रपञ्चमिथ्यात्वोपपादनपूर्विका स्वप्नादिपरीक्षाऽत्र क्रियमाणा वस्तुगत्या जीवस्य तदभावनिरूपणद्वारा विगलितोपाधिस्वरूपसमर्थनार्थैत्येव युक्तम्। अन्यथा हि मायामात्रमिति ईश्वरसृष्टिप्रतिपादनमेव यदि विवक्षितम्, तर्हि इदमधिकरणमेवात्रासङ्गतं स्यात्। अविरोधाध्याये खल्वन्यथास्य प्रसङ्गः, नतु प्राप्यवस्तुचिन्तायाम्। तदिदं सिद्धम्—यत् स्वप्नादिपरीक्षणं सूत्रकाराणां त्वंपदार्थशोधनार्थमेव प्रवृत्तमिति। एवं च सति—न स्थानतोऽपीत्यत्रापि प्रथमाध्यायादिविचारितसगुणवाक्यावगतगुणनिषेधद्वारा निर्विशेषवस्तुपरतया तत्पदार्थशोधनपरत्वमेव युक्तम्, नत्वकस्माद्देवापुरुषार्थगन्धशंकादिनिरासपरत्वम्।

(६४) अत एव चोपमा सूर्यकादिवदिति सूत्रभाष्यविमर्शः।

एतेन—"अत एव चोपमा सूर्यकादिवत्" इति सूत्रमपि व्याख्यातम्। अत्र हि सूत्रे नानाविधेषु स्थानेषु स्थितस्यापि ब्रह्मणो जलदर्पणादिप्रतिबिम्बित-सूर्यादेरिव निर्दोषत्वमिति विवरणोपष्टंभकतया श्रीभाष्यकारोद्धृतम्—

आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्॥

इति वचनं ह्याकाशस्य यथा ह्युपाधिसम्बन्धः कादाचित्कः, एवं ब्रह्मणोऽपि तत्तत्पृथिव्याद्युपाधिसंबन्धः कादाचित्क एव, न तु नियत इति बोधयत् कथमद्वैत-सिद्धान्तस्याप्यनुगुणं न भवतीति सर्वं एव समालोचयन्तु।

(६५) प्रकृतैतावत्त्वमिति सूत्रस्याद्वैत एव स्वारस्यम्।

"प्रकृततावत्त्वं हि प्रतिषेधती"ति सूत्रस्य हि श्रीभाष्यकारैः गुणियत्तानिषेध-परतया विवरणेन अनन्तकल्याणगुणपरतया "अथात आदेशो नेति नेती"त्यस्य योजनं क्रियते, तेन वयं मन्यामहे श्रीभाष्यकाराः सूत्रकारानपथ एव नयन्तीति॥

एतेन—"अहिकुण्डलवद्दे"त्यधिकरणगतं "पूर्ववद्दे"ति सूत्रमपि व्याख्यातम्। अत्र हि पूर्वपदेनाहिकुण्डलवद्भाव एव स्पष्टं प्रतीयते, न तु "अंशो नानाव्यप-देशादि"त्युक्तांशत्ववदिति, पूर्वशब्देनातिदूरस्थस्य परामर्शः कथं वा सूत्रकार सिद्धान्तपक्षपातितां श्रीभाष्यकाराणां गमयति?

(६६) ब्रह्मस्वरूपपरस्य प्रथमाध्यायार्थस्य तृतीयद्वितीयपादार्थस्य च प्राप्यस्वरूपपरस्याद्वैतमत एवैकवाक्यता।

एतावता विवेचितः सारांशोऽयमेव—यत् विचारणीयतया प्रतिज्ञातं ब्रह्म-स्वरूपं प्रथमाध्यायेन यत् निरूपितं तदेवात्रापि तृतीयाध्यायद्वितीयपादे निरूप्यत इति श्रीभाष्यकाराणामपि मतमित्यत्र न विवादः। तत्र प्रथमाध्याये बहुषु वाक्येषु जीवादिपरत्वव्युदासेन ब्रह्मपरत्वस्थापनं यत् कृतम्, तत्र कुत्रापि जीवस्याव्यक्तस्याचितो वा भगवच्छरीरत्वं न प्रतिपादितम्। श्रीभाष्यकारा अपि किमपि सूत्रं तत्परतया न योजयन्ति। अन्तर्यामिवाक्यं तूपासनाविशेषविधानपरं न ब्रह्मपरवाक्यसामान्ये चिदचिच्छरीरकब्रह्मनिरूपणपरं भवितुमर्हति। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रे यद्यपि श्रीभाष्यकाराः शरीरि-शरीरभावं प्रतिपादयन्ति, परं तु नेदं सूत्रकाराभिमतमित्यत्र किमपि प्रमाण-मस्ति; प्रत्युत सूत्रकाराणामुक्ताधिकरणगतश्रीभाष्यसिद्धान्तोऽनभिमत इत्यत्र

सूत्राण्येव गमकानि वर्तन्ते। तानि यथा—"न विलक्षणत्वादस्य तथात्वं च शब्दादि"त्यादीनि। अस्मिन् हि सूत्रे ब्रह्मणो विलक्षणस्य नोपादानत्वमिति सांख्यपक्षमाश्रित्य निरस्यते। अत्र सांख्यानां प्रत्यवस्थानं हि कार्यकारणयोर्विलक्षणत्वं यदि सूत्रकारैः पूर्वं साधितं स्यात्, तर्ह्येवावसरेत्। ब्रह्मण एवावस्थाभेदेन कारणत्वमवस्थाभेदेन कार्यत्वमिति श्रीभाष्यसिद्धान्तो हि यदि प्रथमाध्यायार्थः, तर्हि कार्यकारणयोः सलक्षणत्वात् कथं विलक्षणयोः कार्यकारणभावासंभव इति सांख्यानां प्रत्यवस्थानमाम्रान् पृष्टः कोविदारानाचष्ट इति न्यायविषयो न भवति।

(६७) अंशो नानाव्यपदेशादित्यधिकरणस्य श्रीभाष्यमते वैयर्थ्यम्।

एतेन—अंशो नानाव्यपदेशादित्यधिकरणमपि—व्याख्यातम्॥ तत्रापि ह्यधिकरणे श्रीभाष्यकाराः जीवस्य भगवच्छरीरत्वमेव, न तु वस्तुगत्या ब्रह्मणाऽभेद इत्येव व्याचक्षते। यथा चास्याधिकरणस्य श्रीभाष्यमते वैयर्थ्यं तथाऽन्यत्र व्यक्तम्। तथाच चिदचिच्छरीरकपरमात्मवादोऽयं न सूत्राक्षरानुगुणः, किन्तु निर्विशेषब्रह्मतावाद एवेति सिद्धम्॥

(६८) श्रीभाष्यमते तत्त्वमसीत्यवासिपदप्रयोगानुपपत्तिः।

एवं च तत्त्वमसीत्यादिवाक्यानां भामत्यादिवर्णितरीत्या जीवब्रह्माभेदपरत्वमेव स्वीकर्तव्यम्, नतु शरीरशरीरिभावपरत्वम्। तत्त्वे हि श्रीभाष्योक्तदिशोद्देश्यविधेयभावाविवक्षणेन जीवशरीरकः परमात्मास्तीत्यर्थोऽत्र विवक्षणीयः। तत्र चासीति मध्यमपुरुषप्रयोगस्यापत्वं कल्पनीयं स्यात्। वाक्यान्तराणामद्वैतानुगुणानां श्रीभाष्यकारादिभिरन्यथा नीयमानानां समालोचनमत्रैव प्रयोजनपरिच्छेदान्ते विशदं कृतमिति तत एव तदधिगन्तव्यम्। एतावत्त्वत्र सुधीरसुपवर्ण्यते-यदद्वैतप्रक्रियाणां सर्वासां ब्रह्मसूत्रै र्यादृशः संबन्धः, यादृशश्च श्रुतिभिस्तः, तथा न श्रीभाष्यसिद्धान्तानां तत्प्रक्रियाणां चेति।

(६९) बहूनामद्वैतप्रक्रियाणां सूत्रारूढत्वसमर्थनम्।

प्रपञ्चमिथ्यात्वं ह्यद्वैतिनः स्वाप्निकपदार्थदृष्टान्तेनैव साधयन्तीति मायामात्रं तु इति सूत्रं तदनुगुणम्। अत्र वियदाद्यनित्यत्वसाधनपरो वियत्पादोऽपि अनुगुणः। तृतीयद्वितीयपादस्तु तत्त्वंपदार्थसाधनपरो जीवब्रह्मैक्यसिद्धान्तानुगुणः।

व्यवहारदशायां प्रपञ्चसत्यत्ववादादयः सर्वेऽपि "भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवदि"ति सूत्रानुगताः। जीवस्य स्वभावतो नित्यस्य ज्ञानरूपस्य व्यापकस्याकर्तृरनंशस्य चौपाधिकानित्यत्वे तादृशे ज्ञानाश्रयत्वे तादृशेऽणुत्वे तादृशे कर्तृत्वे तादृशेंऽशत्वे च "चराचरव्यपाश्रयस्तु" "ज्ञोऽत एव" "तद्गुणसारत्वात्तु" "यथाच तक्षोभयथा" "अंशो नानाव्यपदेशात्" इत्यादिसूत्राणि गमकानि। श्रीभाष्यमते तु यत्र पदार्थत्रयनित्यता, तत्र वियदादिनित्यतायामपि शरीरशरीरिभावेन निर्वाहात् वियदाद्यनित्यत्वव्यवस्थापनम्, अणुत्वव्यवस्थापनादिकं च सर्वं वितथमेव। अन्यथाऽपि हि जीवस्य मुक्तिरुपपादयितुं शक्यत एव। न हि व्यापकत्वे जीवस्य न शरीरत्वमिति संभवति; प्रकृतेरिव तत्संभवात्। एतेन—धर्मभूतज्ञानमपि व्याख्यातम्। न हि नित्यधर्मभूतज्ञानव्यवस्थापकमेकमपि सूत्रमस्ति॥

(७०) श्रीभाष्यपादितान्ज्ञानविषयसन्तानुपपत्तिनिरासप्रतिज्ञा।

अथ विस्तरभयादुपरमन्तो वयं श्रीभाष्यकारैरद्वैतमतसम्मतेऽज्ञाने यास्सप्तानुपपत्तयो भाष्य उपन्निबद्धास्तासामद्वैतमतसम्मतानां प्रक्रियाणामनुसन्धाने नावसरोऽस्तीत्येतावन्मात्रोपपादनेन प्रासङ्गिकं विषयमिममुपसंहर्तुमिच्छामः॥

(७१) अज्ञाने आश्रयानुपपत्तिशङ्का।

तत्र प्रथमाऽनुपपत्तिः—आश्रयानुपपत्तिः। इदमत्र श्रीभाष्यकाराणां मतम्—

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥?
ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम्।
ब्रह्मवत्तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात् प्रमेयता।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते॥" इति।

एतैर्हि नाथमुनिश्लोकैर्विवक्षितोंऽशोऽयमेव—यत् ब्रह्मणो ज्ञानरूपस्य नाज्ञानाश्रयत्वम्, प्रमाणजन्यब्रह्मज्ञानमपि ब्रह्मरूपमेव वक्तव्यम्; अन्यथा तादृशज्ञानविषयत्वेन ब्रह्मणोऽज्ञानत्वमेवोरीकृतं स्यात्। तथाचाज्ञाननिवर्तकस्य

च

ज्ञानस्य कथमज्ञानाश्रयत्वमिति ब्रह्मणोऽज्ञानाश्रयत्वानुपपत्तिः । एतेन जीवस्याश्रयत्वानुपपत्तिरपि—व्याख्याता; अन्योन्याश्रयादिति ॥

(७२) अज्ञाने आश्रयानुपपत्तिनिरासः ।

इयं हि अनुपपत्तिः "कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणामि"ति अद्वैतभाष्यकारैरपि शंकितैव । अत्राद्वैतभाष्यकाराणां परिहाराशयोऽयमेव—यत् वृत्तिप्रतिफलितमेव ज्ञानमज्ञानविरोधि, न केवलं ज्ञानम् । वृत्तिफलितचैतन्यस्याज्ञानविरोधित्वे च वृत्तिसंबन्ध एव कारणम्, न तु चैतन्यत्वम् । इयं च वृत्तिरन्तःकरणपरिणामरूपा जन्या न ब्रह्मरूपेति तद्विषयत्वेन न ब्रह्मणोऽननुभूतित्वप्रसङ्गः । वृत्तिप्रतिफलितचैतन्यविषयत्वमेव तत्तादात्म्यापरपर्यायं घटादीनामननुभूतित्वप्रयोजकम् । सुखादावपि तदाकारवृत्त्यभ्युपगमपक्षे वृत्तिप्रतिफलितचैतन्यतादात्म्यं वर्तते इत्यननुभूतित्वसमन्वयः, पक्षान्तरे तु सुखस्यैव वृत्तिरूपत्वात् स्वावच्छिन्नचैतन्यतादात्म्यरूपं फलव्याप्यत्वं वर्तत एव । ब्रह्मणस्तु शुद्धस्य वृत्त्याकारत्वमात्रम्, न तु वृत्त्यवच्छिन्नचैतन्यतादात्म्यमिति न फलव्याप्यत्वम् । अधिकमस्मदीयाद्वैतदीपिकायां साक्षिभास्येऽपि सुखादावज्ञानाप्रसङ्गः इति प्रकरणे विवेचितम् । एतावता विवक्षितोऽत्र सारांशोऽयमेव—यत् प्रमाणजन्यज्ञानस्यौपचारिकज्ञानत्वस्यैवोरीकरणेन मुख्यज्ञानत्वस्यानङ्गीकारात् तस्याननुभूतित्वस्याद्वैतिनामिष्टत्वात् तद्विषयत्वेन ब्रह्मणोऽननुभूतित्वाप्रसङ्गात् तस्यैवाज्ञाननिवर्तकत्वेन ज्ञानरूपस्यापि ब्रह्मणोऽज्ञानाश्रयत्वं नानुपपन्नमिति न प्रथमानुपपत्तेरवसरः । एतेन—जीवाश्रयत्वमपि—व्याख्यातम् ॥

"जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।" इत्यनादित्वात् जीवस्योत्पत्तौ स्मृतौ स्थितौ वाऽविरोधित्वेनान्योन्याश्रयस्याद्वैतसिद्धान्तरीत्याऽदोषत्वात् न जीवाश्रयत्वमप्यनुपपन्नम् । अत एव—अहमज्ञ इति प्रतीत्युपपत्तिः ॥

यत्तु श्रीभाष्ये—शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्निवर्तने ज्ञानान्तरमपेक्षन्ते, ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येवेति वर्णितम्, तदिदं शुक्त्यादावधिष्ठानातिरिक्तस्यैव ज्ञानस्य निवर्तकत्ववत् ब्रह्मण्यपि स्वातिरिक्तज्ञानस्यैवाज्ञाननिवर्तकत्वात् विनाऽन्तःकरणवृत्तिमाविद्यकवृत्तिं वा परं प्रति ब्रह्मणः स्वतः स्वयाथात्म्यप्रकाशसामर्थ्यस्याद्वैति-

भिरनङ्गीकाराच्च न सोपपत्तिकम्। तदिदं सिद्धं यत्र विरोधात् ब्रह्मणोऽज्ञानाश्रयत्वानुपपत्तिः ॥ एतेन—अज्ञाननिवर्तकानुपपत्तिरपि षष्ठी—परिहृता ।

(७३) ब्रह्मणो ज्ञानरूपस्याज्ञानविषयत्वसमर्थनम् ।

(२) एतेन—ब्रह्मणोऽविद्याविषयत्वमपि तदावरणापरपर्यायं व्याख्यातम् । ब्रह्मणोऽविद्यया तिरोधानं नाम सच्चिदानन्दात्मकस्य तस्य जीवेनासत्त्वेनाभासमानत्वेनानानन्दत्वेन च ग्रहणमेव । अत एव—अज्ञानस्य असत्त्वापादकमभानापादकमनानन्दतापादकमिति त्रेधा विभागोऽद्वैतिनामुपपद्यते, नतु स्वतोऽप्रकाशमानत्वम् ॥ यथा हि कुड्यादिनाऽऽवृतो दीपः स्वयं प्रकाशमानोऽपि तद्व्यवहितपुरुषदृष्ट्या न भासते, एवमेवात्राप्यनुसन्धेयम् । एवं च जीवमन्तःकरणावच्छिन्नमविद्यावच्छिन्नं वा प्रति स्वरूपचैतन्यस्याप्रकाश एव तत्तिरोधानमिति वृत्त्याऽज्ञाननाशे जीवं प्रति तत्प्रकाशो भवतीति पर्यवसन्नम् । जीवं प्रत्यप्रकाशो नाम जीवस्य तद्रूपताऽभावः, प्रकाशश्च तद्भावापत्तिरिति न कोऽपि दोषः । एतेन—प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो वा, विद्यमानस्य प्रकाशस्य विनाशो वा ; तत्र प्रकाशस्यानुत्पाद्यमानत्वेन प्रकाशतिरोधानं प्रकाशनाश इति श्रीभाष्यमनुक्तोपालम्भनमिति सूचितम् । एवं च ब्रह्माश्रया ब्रह्मविषया चाविद्या दोषविधया प्रपञ्चकारणमिति प्रपञ्चमिथ्यात्वमर्थसिद्धमेव ॥

(७४) अविद्यास्वरूपोपपत्तिः ।

(३) एतेन अविद्यायाः स्वरूपानुपपत्तिरपि—परास्ता । सत्यमस्माभिरविद्या न द्रष्टृत्वेन दृशित्वेन वा स्वीक्रियते, दृश्यत्वेन तु अनादेस्तस्याः स्वीकारे न काऽप्यनुपपत्तिः । दृश्यत्वं हि नाम वृत्त्यवच्छिन्नचैतन्यतादात्म्यमिति, तदविद्यासाधारणमेवेति न दोषः । एतेन द्रष्टृदृश्ययोरवच्छिन्नदृशोश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यादिति श्रीभाष्योक्तं परास्तम् ; स्वस्यैव स्वनिर्वाहकत्वेनादोषात् । स्वस्यैव स्वनिर्वाहकत्वमन्यत्र न दृष्टमनुपपन्नं च कल्प्यमानमविद्याया अनिर्वचनीयतोपपादकमेव भविष्यतीति न किञ्चिदनुपपन्नम्, ब्रह्मण एवाविद्यारूपत्वादिनिरासादिकं त्वनुक्तोपालम्भनमेव ॥

(७५) अविद्यानिर्वचनीयतोपपत्तिः ।

(४) एतेनाविद्याऽनिर्वचनीयताऽपि व्याख्याता ; सदसद्विलक्षणत्वस्यैवानिर्वचनीयत्वरूपत्वात् । तच्च सत्त्वाभावासत्त्वाभावोभयवत्त्वमेव । अत्रासत्त्वं

नाम क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, सत्त्वं च त्रिकालाबाध्यत्वं विवक्षितम्। तथाच यत्रासत्त्वाभावः उक्तविधः शुक्तिरूप्यादौ, तत्रोक्त-सत्त्वाभावोऽपि वर्तते इति न तत्रैकाभावेऽपरसत्त्वावश्यकत्वेन श्रुतप्रका-शिकोक्तव्याघातावसरः। अधिकं चाद्वैतसिद्ध्यादितोऽधिगन्तव्यम्। तथाच— "तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् सर्वार्थप्रतीतिः सदसदाकारा। सदसदाकारायाः प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यादि"ति श्रीभाष्योक्तं न सावसरमिति सूचितम्। नहि सदसद्विषया काऽपि प्रतीतिः संभवति। अस्माकं तूक्तसदसद्विलक्षणत्वप्रतीतिः शुक्तिरूप्यादौ सिद्धेति न दोषः॥

(७८) भावरूपाज्ञाने प्रत्यक्षप्रमाणोपपत्तिप्रदर्शनम्।

(५) एतेन भावरूपेऽज्ञाने प्रमाणानुपपत्तिरपि परास्ता; प्रत्यक्षानुमानार्था-पत्त्यागमानां बहुविधानां प्रमाणानामत्र संभवात्। तत्र प्रत्यक्षं तावत्—अहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासः। अत्र हि ज्ञानप्रागभाव एव विषय इति श्रीभाष्यकाराणां मतम्। तस्यायमाशयः—यत् ज्ञानप्रागभावविषयत्वे यो विरोधोऽद्वैतिभिरुपपाद्यते, स विरोधो भावरूपाज्ञानविषयत्वेऽपि समानः। अयमत्र प्रागभावविषयत्वेऽद्वैतिभिरुच्यमानो विरोधः, भावरूपाज्ञानविषयत्वे तदविरोधश्च—यत् प्रागभावो हि षष्ठप्रमाणगोचरो न प्रथमप्रमाणगोचर इति उक्तप्रत्यक्षगम्यत्वं प्रागभावस्य न संभवति। प्रत्यक्षत्वेऽप्यभावस्य नायमनुभव आत्मनि ज्ञानप्रागभावविषयः। तत्र हि ज्ञानसामान्यप्रागभावो विषयः, उत यत्किञ्चित्ज्ञानप्रागभावः। अनुभववेलायामेव ज्ञानसामान्यप्रागभावज्ञानं हि बाधितमेव। ज्ञानविशेषप्रागभावविषयत्वे यद्यपि नोक्तानुपपत्तिः, परं तु सामान्यधर्मावच्छिन्नविशेषाभावस्वीकारे घटवत्यपि भूतले निर्घटं भूतलमिति प्रतीत्यापत्त्या विशेषधर्मस्यैवावच्छेदकत्वमूरीकर्तव्यमिति ज्ञानानुत्पत्तिदशायां विशेषधर्मावच्छिन्नप्रतियोगिज्ञानासंभवेन ज्ञानविशेषप्रागभावानुभवोऽसंभव-दुक्तिकः। भावरूपाज्ञाने त्वङ्गीकृते तस्य प्रतियोगिनिरपेक्षत्वेनाहमज्ञ इति प्रतीतिरबाधैव। इदं च भावरूपाज्ञानं स्वाश्रियमाणशुद्धचैतन्याकारवृत्त्यैव निवर्तते, न तु शुद्धचैतन्येन, तेन तस्याविरोधादित्यनुपदमेव विवेचितम्। तथाच तस्य

साक्षिचैतन्येनैव स्वोपहितेन भानसंभवान्न किञ्चिदनुपपन्नम्; "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि"ति सिद्धान्तात्—इति॥

(७७) श्रीभाष्याभिमतस्याहमज्ञ इति प्रत्यक्षे ज्ञानप्रागभावविषयत्वस्योपपादनम्।

अयं तु विरोधः—भावरूपाज्ञानविषयत्वेऽपि समान एव। तथाहि—अज्ञानाश्रयत्वेन तद्विषयत्वेन च प्रत्यगर्थः प्रतिपन्नो वा, न वा? यदि प्रतिपन्नः, तेनैवाज्ञाननिवृत्त्या कथमज्ञानप्रत्यक्षम्। यदि त्वप्रतिपन्नः, तर्हि स्वाश्रयविषयशून्यमज्ञानं कथमनुभूयेत? अथ प्रत्यगर्थोऽविशदतया भासते इति तस्याविरोधित्वेन स्वाश्रयविषयसहितमेव भावरूपाज्ञानं विषय इति मन्यते, तर्हि अस्मन्मतेऽपि आश्रयप्रत्यगात्मज्ञानं प्रतियोगिभूतज्ञानं च स्मरणात्मकमविशदमूरीक्रियत इति, अविशदप्रतियोग्यादिज्ञानं न प्रागभावविरोधीति तुल्यम्। अयं भावः—अज्ञाननिवर्तकप्रमाणज्ञानाभावस्तावदद्वैतिभिरवश्यमभ्युपगन्तव्यः, अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानुभवाभावप्रसङ्गात्। ततश्च प्रमाणज्ञानाभावेनैवेष्टसिद्धा नातिरिक्तभावरूपाज्ञानकल्पनं युक्तमिति॥ वस्तुतस्तु—भावरूपाज्ञानस्यापि ज्ञानविरोधित्वेनैवानुभवात् ज्ञानस्वरूपज्ञानमपेक्षितमिति तत्र यथाऽज्ञाननिवर्तकस्य तस्य संपादनं क्रियते, एवमत्रापि संपाद्यतामिति व्यर्थं भावरूपत्वकल्पनम्। अज्ञानं हि सर्वदा अज्ञानमिति ज्ञानविरोधित्वेनैवावगम्यते, न तु स्वरूपतः, येन तम इव प्रतियोगिज्ञानानपेक्षा। तथाचोभयसंमतज्ञानप्रागभावेनैव निर्वाहात् भावरूपत्वकल्पनं न सोपपत्तिकम्। यथाच ब्रह्मणः स्वप्रकाशस्याज्ञानाविषयत्वम्, अज्ञानेन तिरोधाने स्वरूपनाश एव च स्यात्, तथा पूर्वमेव विविचितम्।

(७८) अज्ञानस्यैव प्रत्यक्षविषयत्वं न तु ज्ञानप्रागभावस्य।

प्रागभावपदार्थो हि नास्माभिरूरीक्रियते, घटो भविष्यतीत्यादिना घटस्य स्वस्वध्वंसकालावृत्तित्वमेव बोध्यते, न तु प्रागभावः। अन्यथा परेद्युर्भाविनि घटेऽपि घटोऽद्य भविष्यतीति बोधापत्तेः; प्रागभावस्यैकरूपत्वादित्युभयाभ्युपगतप्रागभावेनैव निर्वाहे इत्यादिकमसंभवदुक्तिकम्। अज्ञानं हि अस्माभिर्ज्ञानविरोधित्वेनानुभूयत इति न स्वीक्रियते, किन्तु तम इव स्वरूपत एव। तस्य च प्रतियोगिज्ञानापेक्षा नास्मन्मते संभवति। ज्ञानप्रागभावस्तु स्मर्यमाणज्ञानप्राग-

भावरूप इति हि भवतां मतम्। तत्र धर्मभूतज्ञानस्य नित्यस्य सदातनत्वेनानतीतत्वात् स्मरणमिव भवन्मतरीत्या निरूपयितुमशक्यम्। शक्यत्वेऽपि वा—

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात्॥"

इति श्लोकवार्तिकोक्तरीत्या स्मृतप्रतियोगिकाभावज्ञानं न प्रत्यक्षतामर्हतीति ज्ञानप्रागभावस्य न प्रत्यक्षगम्यत्वम्। एतदर्थमेव ह्यनुपलब्धिप्रमाणान्तरतास्वीकारः। तथाच ज्ञानप्रागभावः कथमपि प्रत्यक्षगम्यो न भवति। यथाच घटप्रागभावोऽपि नोरीक्रियते, तथा अद्वैतसिद्ध्यादौ व्यक्तम्। एतेन प्रमाणाभावोऽपि व्याख्यातः। प्रमाणाभावस्थान एव ह्यज्ञानमस्माभिः स्वीक्रियत इति, प्रमाणाप्रवृत्तिदशायामज्ञानानुभवो नानुपपन्नः। तथाच भावरूपमेवाज्ञानमस्मन्मतमिति तस्य पूर्वोक्तप्रकारेण चैतन्यतिरोधायकत्वात् तदाश्रयत्वविषयत्वादीनां सर्वेषां संभवादहमज्ञ इत्याद्यनुभवो भावरूपाज्ञाने प्रमाणमेवेति, न तत्र प्रत्यक्षप्रमाणानुपपत्तिः।

(७९) अज्ञानेऽनुमानप्रमाणप्रयोगः।

एतेन—तत्रानुमानप्रमाणमपि—व्याख्यातम्। इदमत्राद्वैत्यभिमतमनुमानम्—विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्—इति।

(८०) श्रीभाष्यकारीयमविद्यानुमानदूषणम्,

अत्र श्रीभाष्यकाराः—उक्तानुमानस्याप्यप्रकाशितार्थप्रकाशकत्वमवश्यमूरीकर्तव्यम्, प्रमाणज्ञानसामान्यान्तर्गतत्वात्; तथाचोक्तानुमानविषयस्याज्ञानस्याप्यावरणान्तरमूरीकर्तव्यम्। एवं च सत्यज्ञानविषयाज्ञानेनावृतस्याज्ञानस्य साक्षिचैतन्येनापि भानाभावात् तेन ब्रह्मणोऽनावरणेन ब्रह्मज्ञानेनानिवृत्त्या चानभिमतार्थसिद्ध्याऽर्थान्तरदूषणम्; अन्यथा तु प्रकृतानुमान एव व्यभिचारः, साक्षिचैतन्यभास्यमज्ञानमिति तस्याप्रकाशितार्थत्वं नास्तीति यद्यपि नोक्तव्यभिचारशंका भवति; तथापि साक्षिचैतन्येनाज्ञानसिद्धौ अनुमानप्रमाणम्, तस्मिन् सति भावरूपाज्ञानसिद्धिः, तस्यां साक्षिचैतन्यभास्यत्वमिति चक्रकापत्त्याऽप्रकाशितार्थप्रकाशकत्वमज्ञानानुमानेऽप्यूरीकर्तव्यमिति न दोषः। किञ्च अप्रकाशितार्थप्रकाशकत्वम् किं साक्षात्, उत परंपरया, अथवा साक्षाद्वा परंपरया वा प्रकाशकत्वमात्रम्, आद्ये स्वविषयावरणनिरासकत्वम्; आद्ये दृष्टान्तः साधनविकलः;

ज्ञानद्वारैव प्रदीपस्यापि प्रकाशकत्वात्, द्वितीये तु पक्षेऽसिद्धिः, तृतीये इन्द्रियेष्वनैकान्त्यम्; चतुर्थे साध्याविशिष्टतेति हेतुरपि सर्वथा दुष्ट एव॥ न केवलं प्रकृतानुमाने व्यभिचारादिदूषणमात्रम्, किन्तु सत्प्रतिपक्षितत्वमपि वर्त्तते। त इमे प्रतिपक्षानुमानप्रयोगाः—(१) अज्ञानम्, न ज्ञानमात्रब्रह्माश्रयम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्॥ (२) तथा नाज्ञानं ज्ञानमात्रावरणम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्, विषयावरणं हि तत्॥ (३) अज्ञानम्, न ज्ञाननिवर्त्त्यम्, ज्ञानविषयानावरणत्वात् शुक्त्यज्ञानवत्। (४) ब्रह्म, नाज्ञानास्पदम्, अज्ञातृत्वात्, घटवत्। (५) ब्रह्म, नाज्ञानावरणम्, ज्ञानाविषयत्वात्, शशशृङ्गवत्। (६) ब्रह्म, न ज्ञाननिवर्त्त्याज्ञानम्, ज्ञानाविषयत्वात्॥ (७) प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्, अज्ञानानुमानवत्; इति।

(८१) श्रीभाष्यकारीयाविद्यानुमानव्यभिचारादिदूषणपरिहारः।

अत्राद्वैतिन एवमभिप्रयन्ति—अज्ञानविषयमज्ञानान्तरं सत्यं वयं नाङ्गीकुर्मः। एवमपि हि प्रकृतानुमाने न व्यभिचारप्रसङ्गः। प्रकृतानुमानं हि नाज्ञानं साधयति, तस्यानादेः साक्षिचैतन्येनैव सिद्धत्वात्, किन्तु तस्य भावरूपत्वं ज्ञाननिवर्त्त्यत्वं चैव, तच्चावृतमिति स्वीक्रियत एव। व्यक्तं चैतदद्वैतसिद्धौ। तथाचोक्तानुमानसाध्यभावत्वादेरावृतत्वस्यैव स्वीकारात् न साध्याभाववत्त्वमुक्तानुमानस्येति न व्यभिचारः। एतेन—चक्रकाद्यापत्तिरपि श्रुतप्रकाशिकादिसूचिता—परास्ता। एतेन—अप्रकाशितार्थप्रकाशकत्वमपि—व्याख्यातम्। अत्र हि प्रकाशकत्वपदेन साक्षादप्रकाशविरोधित्वमेव विवक्ष्यते, अथवा प्रकाशकपदवाच्यत्वमनादिसंप्रदायसिद्धम्। अप्रकाशपदेन चावरणमेव विवक्ष्यते इति प्रदीपज्ञानयोरुभयोरपि न हेत्वसिद्धिः, नवेन्द्रियसन्निकर्षादौ व्यभिचारः। एतेन भावरूपाज्ञानप्रतिप्रयोगा अपि परास्ताः॥

(८२) श्रीभाष्यकारीयाविद्यानुमानसत्प्रतिपक्षदूषणम्।

तत्र प्रथमद्वितीययोरनुमानयोः पल्लवाज्ञानपदवाच्यत्वमुपाधिः। पल्लवाज्ञानानङ्गीकारे तु शुक्तिकाद्यज्ञानमपि मूलाज्ञानमेवेति दृष्टान्ते साध्यवैकल्यम्। अथवा जीवाश्रयत्वमुपाधिः। न च पक्षेऽपि जीवाश्रयत्वं वर्त्तत इति साधनव्यापकत्वमिति वाच्यम्; ब्रह्माश्रयत्वपक्षेणोक्तदोषप्रवृत्तेः। एतेन—अज्ञानम्,

ज्ञानानिवर्त्यम्, ज्ञानविषयानावरणत्वात्, इति तृतीयानुमानमपि परास्तम्; शुक्तिकाज्ञाने तु अज्ञानत्वमेव ज्ञाननिवर्त्यत्वप्रयोजकम्, न तु ज्ञानविषयावरणत्वमित्यप्रयोजकत्वात्, पक्षवाज्ञानपदवाच्यत्वेन सोपाधिकत्वाच्च। पक्षवाज्ञानानङ्गीकारे तु शुक्त्यज्ञाने दृष्टान्ते हेतुसिद्धिः; तत्रापि भवदुक्तरीत्याज्ञानविषयावरणत्वस्याङ्गीकारात् ॥ चतुर्थानुमाने तु फलव्याप्यत्वमुपाधिः। यथा च घटादिकमेव फलव्याप्यं न ब्रह्म, तथा पूर्वमेव विवेचितम् ॥ पञ्चमानुमाने तु वृत्त्यवच्छिन्नचैतन्यतादात्म्यरूपज्ञानविषयत्वापेक्षया वृत्तिविषयत्वस्यैव लघुभूतस्याज्ञानानावरणत्वप्रयोजकत्वं युक्तमित्यप्रयोजकता। एतेन—तृतीयानुमानेऽपि ज्ञानपदेन वृत्तेरेव लाघवाद्विवक्षाया युक्तत्वेनाप्रयोजकत्वं सूचितम् ॥ एतेन—षष्ठानुमानमपि—परास्तम्। यथाचाद्वैत्यभिमताज्ञानानुमानेऽज्ञानभावत्वमेव विषयः, नतु अज्ञानम्, तथा पूर्वमेव विवेचितमिति अविद्यानुमानस्यापि स्वविषयाज्ञानपूर्वकत्वमेव वर्त्तत इति सप्तमानुमाने दृष्टान्ते साध्यवैकल्यम्। अष्टमानुमाने तु ज्ञानम्, वस्तुनो न नाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्, इत्याकारे ज्ञाने शक्तिविशेषोपबृंहणविरहस्यासिद्ध्या स्वरूपासिद्धिः॥ एतेन—नवमानुमानमपि—व्याख्यातम्। अत्र हि भावरूपमज्ञानम्, न ज्ञाननाश्यम्, भावरूपत्वात्, इति प्रयोगे भावरूपत्वस्य ज्ञानविनाश्ये शुक्त्यज्ञाने विद्यमानत्वात् व्यभिचारः। एवं—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन।" इति वाक्यानुसारेण ज्ञाननाश्ये कर्मणि व्यभिचारश्च। सर्वथा तु नाज्ञानेऽनुमानप्रमाणस्याप्युनपपत्तिरिति सिद्धम्। यथाच स्वप्रागभावव्यतिरिक्तेत्यादिविशेषणानां सार्थक्यं तथाद्वैतसिद्धौ व्यक्तम् ॥

(८३) अविद्यायामागमप्रमाणोपक्षेपः। तत्र श्रीभाष्यकारीयदूषणनिरासश्च।

एतेन—भावरूपेऽनिर्वचनीये चाज्ञाने आगमप्रमाणमपि—व्याख्यातम्। अत्रानुसन्धेयानि वाक्यानि। "अनृतेन हि प्रत्यूढाः" "नासदासीन्नो सदासीत्तदानीम्" तमसा गूढमग्रे" "मृत्युनैवेदमावृतमासो"दित्यादीनि। अत्रानृतपदस्य काम्यकर्मपरतया श्रीभाष्यकाराणां विवरणे हि प्रसिद्धार्थत्यागदोषः सर्वविदित एव। एतेन—"नासदासीदि"त्यपि—व्याख्यातम् ॥ अत्र हि श्रीभाष्यकाराः उत्पत्तिवेलायां सत्त्वच्छन्दवाच्ययोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य न कस्यचित्

सदसदनिर्वचनीयतोच्यत इति विदुषवति। अत्रैतद्विवरणसमालोचनात् पूर्वं प्रकृतोपयुक्तोक्तसूक्तवाक्यानि कानि चन संगृह्यन्ते—"नासदासीन्नोसदासीत्तदानीम्। नासीद्रजो नो व्योमापरो यत्। किमावरीवः कुहकस्य शर्मन्। अंभः किमासीद्गहनं गभीरम्। न मृत्युरासीदमृतं न तर्हि। रात्रिया अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकम्। तस्माद्धान्यन्न परं किञ्चनास। तम आसीत्तमसा गूढमग्रे प्रकेतम्॥" इत्यादीनि। अत्र श्रीभाष्यरीत्या सर्वस्य व्यष्टिलोकस्य प्रलयकाले समष्टिलयप्रतिपादन एव यदि "नासदासीन्नो सदासीत्," इत्यस्य तात्पर्यं स्यात्, तर्हि तदानीं "नासीद्रजः" इत्यादिना पृथक् लोकनिषेधकरणं व्यर्थम्। अतस्तदानीं यदासीत्, तत् तम आसीदित्यनेनोच्यते; तदेव गृहीत्वा न सदासीत् नासदासीत्। नापि लोकादिरूपेणासीत, किन्तु स्वरूपेणैवासीत्॥ तद्विशिष्टं तत्पिहितं चैकमद्वितीयं ब्रह्मासीदित्येवमेव विवरणमत्र कर्तुं योग्यमिति कथमत्र तमःशब्दवाच्यस्य सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वं न बोध्यत इति सर्वं एव समालोचयन्तु। तथाच सदसद्विलक्षणतयाऽनिर्वचनीयतया च सिद्धमज्ञानमेव —"मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्।" इत्यादौ बोध्यत इत्यङ्गीकर्तव्यम्। दृष्टो हि मायाशब्दस्य बहुषु स्थलेषु मिथ्यार्थे प्रयोगः। प्रकृतिशब्दो हि "जनिकर्तुः प्रकृति"रित्यादाविवोपादानकारणपरो विशिष्यवाचक इत्यत्राङ्गीकारे उपादानकारणसामान्यमत्र विचित्रार्थसर्गकारितया विवक्ष्येतेति मायामुद्दिश्य प्रकृतित्वविधानमेवात्र क्रियत इत्यङ्गीकर्तव्यमिति नात्र मायाशब्दो विचित्रार्थसर्गपरः, किन्त्वविद्यापर एव विवक्षणीयः। दृष्टो हि बहुषु स्थलेषु मायाविद्ययोः पर्यायतया प्रयोगः। अत्र मायित्वमीश्वरस्य स्ववशमायत्वरूपमेवेति, "अनादिमायया सुप्तः," इत्यादौ जीवस्य मायया निरोधः श्रुत्यन्तरसिद्धो नानुपपन्नः॥

(८४) मायाशब्दार्थत्वमविद्याया एव, ननु विचित्रसर्गशक्तेः।

एतेन—"तस्मान् मायी सृजते विश्वमेतत्" इत्यपि—व्याख्यातम्। तत्र हि मायित्वेन खलु विचित्रसर्गो बोध्यते, ननु विचित्रसर्गेण मायित्वम्। तदा हि यो विश्वमेतत् सृजते स मायीति खलु वाक्यमपेक्षितं स्यादिति, "मायां तु प्रकृतिं विद्यादित्यादौ" मायाशब्दो न विचित्रार्थसर्गकर्तृत्वप्रयुक्त इति सिद्धम्। स्मृतिपुराणेतिहासादौ अज्ञानवादो नास्तीति श्रीभाष्यकाराणामुक्तिस्तु तद्वतानामपि

ज्ञानानिवर्त्यम्, ज्ञानविषयानावरणत्वात्, इति तृतीयानुमानमपि परास्तम्; शुक्तिकाज्ञाने तु अज्ञानत्वमेव ज्ञाननिवर्त्यत्वप्रयोजकम्, न तु ज्ञानविषयावरणत्वमित्यप्रयोजकत्वात्, पक्षवाज्ञानपदवाच्यत्वेन सोपाधिकत्वाच्च। पक्षवाज्ञानानङ्गीकारे तु शुक्त्यज्ञाने दृष्टान्ते हेत्वसिद्धिः; तथापि भवदुक्तरीत्याज्ञानविषयावरणत्वस्याङ्गीकारात् ॥ चतुर्थानुमाने तु फलव्याप्यत्वमुपाधिः। यथा च घटादिकमेव फलव्याप्यं न ब्रह्म, तथा पूर्वमेव विवेचितम् ॥ पञ्चमानुमाने तु वृत्त्यवच्छिन्नचैतन्यतादात्म्यरूपज्ञानविषयत्वापेक्षया वृत्तिविषयत्वस्यैव लघुभूतस्याज्ञानानावरणत्वप्रयोजकत्वं युक्तमित्यप्रयोजकता। एतेन—तृतीयानुमानेऽपि ज्ञानपदेन वृत्तेरेव लाघवाद्विवक्षाया युक्तत्वेनाप्रयोजकत्वं सूचितम् ॥ एतेन—षष्ठानुमानमपि—परास्तम्। यथाचाद्वैत्यभिमताज्ञानानुमानेऽज्ञानभावत्वमेव विषयः, नतु अज्ञानम्, तथा पूर्वमेव विवेचितमिति अविद्यानुमानस्यापि स्वविषयाज्ञानपूर्वकत्वमेव वर्तत इति सप्तमानुमाने दृष्टान्ते साध्यवैकल्यम्। अष्टमानुमाने तु ज्ञानम्, वस्तुनो न नाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्, इत्याकारे ज्ञाने शक्तिविशेषोपबृंहणविरहस्यासिद्ध्या स्वरूपासिद्धिः॥ एतेन—नवमानुमानमपि—व्याख्यातम्। अत्र हि भावरूपमज्ञानम्, न ज्ञाननाश्यम्, भावरूपत्वात्, इति प्रयोगे भावरूपत्वस्य ज्ञानविनाश्ये शुक्त्यज्ञाने विद्यमानत्वात् व्यभिचारः। एवं—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन।" इति वाक्यानुसारेण ज्ञाननाश्ये कर्मणि व्यभिचारश्च। सर्वथा तु नाज्ञानेऽनुमानप्रमाणस्याप्युपपत्तिरिति सिद्धम्। यथाच स्वप्रागभावव्यतिरिक्तत्वादिविशेषणानां सार्थक्यं तथाद्वैतसिद्धौ व्यक्तम् ॥

(८३) अविद्यायामागमप्रमाणोपक्षेपः। तत्र श्रीभाष्यकारीयदूषणनिरासश्च।

एतेन—भावरूपेऽनिर्वचनीये चाज्ञाने आगमप्रमाणमपि—व्याख्यातम्। अत्रानुसन्धेयानि वाक्यानि। "अनृतेन हि प्रत्यूढाः" "नासदासीन्नो सदासीत्तदानीम्" तमसा गूढमग्रे" "मृत्युनैवेदमावृतमासी"दित्यादीनि। अत्रानृतपदस्य काम्यकर्मपरतया श्रीभाष्यकाराणां विवरणे हि प्रसिद्धार्थत्यागदोषः सर्वविदित एव। एतेन—"नासदासीदि"त्यपि—व्याख्यातम् ॥ अत्र हि श्रीभाष्यकाराः उत्पत्तिवेलायां सत्त्यच्छब्दवाच्ययोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य न कस्यचित्

सदसदनिर्वचनीयतोच्यत इति विद्वद्वत्ते। अत्रैतद्विवरणसमालोचनात् पूर्वं प्रकृतोपयुक्तोक्तसूक्तवाक्यानि कानि चन संगृह्यन्ते—"नासदासीन्नोसदासीत्तदानीम्। नासीद्रजो नो व्योमापरो यत्। किमावरीवः कुहकस्य शर्मन्। अंभः किमासीद्गहनं गभीरम्। न मृत्युरासीदमृतं न तर्हि। रात्रिया अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकम्। तस्माद्धान्यन्न परं किञ्चिनास। तम आसीत्तमसा गूढमग्रे प्रकेतम्॥" इत्यादीनि। अत्र श्रीभाष्यरोत्या सर्वस्य व्यष्टिलोकस्य प्रलयकाले समष्टिलयप्रतिपादन एव यदि "नासदासीन्नो सदासीत्," इत्यस्य तात्पर्यं स्यात्, तर्हि तदानीं "नासीद्रजः" इत्यादिना पृथक् लोकनिषेधकरणं व्यर्थम्। अतस्तदानीं यदासीत्, तत् तम आसीदित्यनेनोच्यते; तदेव गृहीत्वा न सदासीत् नासदासीत्। नापि लोकादिरूपेणासीत, किन्तु स्वरूपेणैवासीत्॥ तद्विशिष्टं तत्पिहितं चैकमद्वितीयं ब्रह्मासीदित्येवमेव विवरणमत्र कर्तुं योग्यमिति कथमत्र तमःशब्दवाच्यस्य सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वं न बोध्यत इति सर्व एव समालोचयन्तु। तथाच सदसद्विलक्षणतयाऽनिर्वचनीयतया च सिद्धमज्ञानमेव—"मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्।" इत्यादौ बोध्यत इत्यङ्गीकर्तव्यम्। दृष्टो हि मायाशब्दस्य बहुषु स्थलेषु मिथ्यार्थे प्रयोगः। प्रकृतिशब्दो हि "जनिकर्तुः प्रकृति"रित्यादाविवोपादानकारणपरो विशेष्यवाचक इत्यवाङ्गीकारि उपादानकारणसामान्यमत्र विचित्रार्थसर्गकारितया विवक्ष्येतेति मायामुद्दिश्य प्रकृतित्वविधानमेवात्र क्रियत इत्यङ्गीकर्तव्यमिति नात्र मायाशब्दो विचित्रार्थसर्गपरः, किन्त्वविद्यापर एव विवक्षणीयः। दृष्टो हि बहुषु स्थलेषु मायाविद्ययोः पर्यायतया प्रयोगः। अत्र मायित्वमीश्वरस्य स्ववशमायत्वरूपमेवेति, "अनादिमायया सुप्तः," इत्यादौ जीवस्य मायया निरोधः श्रुत्यन्तरसिद्धो नानुपपन्नः॥

(८४) मायाशब्दार्थत्वमविद्याया एव, ननु विचित्रसर्गशक्तेः।

एतेन—"तस्मान् मायी सृजते विश्वमेतत्" इत्यपि—व्याख्यातम्। तत्र हि मायित्वेन खलु विचित्रसर्गो बोध्यते, नतु विचित्रसर्गेण मायित्वम्। तदा हि यो विश्वमेतत् सृजते स मायोति खलु वाक्यमपेक्षितं स्यादिति, "मायां तु प्रकृतिं विद्यादित्यादौ" मायाशब्दो न विचित्रार्थसर्गकर्तृत्वप्रयुक्त इति सिद्धम्। स्मृतिपुराणेतिहासादौ अज्ञानवादो नास्तीति श्रीभाष्यकाराणामुक्तिस्तु तद्गतानामपि

वाक्यानामर्थान्तरकल्पनयैव प्रवृत्ता। इदमेवावाभ्माकं वक्तव्यम्—यत् यदि प्रत्यक्षानुमानादिना पूर्वोक्तरीत्या भावरूपाज्ञानमेव सिद्ध्यति, नतु कर्मवाज्ञनम्, तदा कथमुक्तकल्पनादिकमुपपद्यते ?—इति।

(८५) श्रीभाष्याभिमतकर्मरूपाज्ञानेऽप्यनुपपत्तिसाम्यम्।

इदमत्रास्माभिरप्यालोच्यते—यत् कर्मरूपस्याज्ञानस्य किमाश्रयः कश्च विषयः ? इति। तत्र न ब्रह्म कर्माश्रयः; अपसिद्धान्तात्। नापि जीवः; स हि मुक्तो वोत बद्धः। आद्ये स एव दोषः; मुक्तस्यापि कर्मावश्यत्वात्। नापि बद्धः; कर्माश्रयत्वेन बद्धसिद्धिः, बद्धसिद्ध्या च कर्माश्रयत्वसिद्धिरित्यन्योन्याश्रयात्। तत्र प्रमाणमपि निरस्तम्। नहि काम्यकर्माधिकार्येवाहं न जानामीति प्रत्ययं लभते, न नित्यकर्माधिकारी। नहि न जानामीति प्रत्यये कर्मणो विषयता। नहि तत्र श्रुतिरपि प्रमाणम्; कर्मणः तमःशब्दादिवाच्यत्वे प्रलयेऽवस्थाने च प्रमाणाभावात्। अन्यथा प्रलये शरीरादीनामपि सत्त्वापत्त्या प्रलयत्वमेव हीयेतेति न तत्र किमपि प्रमाणमस्ति। तथाचाश्रयाद्यनुपपत्तिः कर्माज्ञानता-वाद एव संभवति, न भावरूपानिर्वचनीयाज्ञानवादे॥

(८६) सर्वविज्ञानप्रतिज्ञादीनामद्वैतमत एव संभवः, न श्रीभाष्यमत इत्युपपादनम्।

एतावता विवक्षितः सारांशोऽयमेव—यत् श्रुतौ ब्रह्मणो निर्विशेषत्वम्, प्रपञ्चस्य कारणे तत्र निषेधः, आवारकतयाऽज्ञानस्य निरूपणम्, ब्रह्मकारणत्वम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, तदुपपादनार्थं कारणातिरेकेण कार्यस्य वाचारंभणत्वम्, सर्वमिदं प्रपञ्चमिथ्यात्वमनिर्वचनीयाज्ञानकर्तृनावरणेन सवप्रपञ्चात्मना ब्रह्मणो भानम्, ब्रह्मैकमेव सत्यम् इत्यादिसिद्धान्तान् गमयतीत्यवश्यमङ्गीकर्तव्यम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हि यदि शरीरशरीरिभावेन श्रुतिसंमता, तर्हि किमर्थं तदुपपादनावसरे मृत्तिकेत्येव सत्यमिति कारणसत्यत्वनिरूपणम् ? किमर्थं वा ब्रह्मणः कारणत्वनिरूपणम् ? न हि यत् ब्रह्मणः कार्यं तदेव ब्रह्म-शरीरमिति भवतामपि सिद्धान्तः; अन्यथा सूक्ष्माचितो नित्यविभूत्यादीनां च भगवच्छरीरत्वाभावापत्तेरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञैव व्याहता स्यात्। एवं च "जन्माद्यस्य यतः" इति कारणत्वेन ब्रह्मलक्षणमपि श्रीभाष्यमतेऽनुपपन्नमेव संवृत्तम्। सर्वेषां ब्रह्मशरीरत्वेन शरीरि ब्रह्मेति खलु अन्तर्यामिब्राह्मणोदाहरण-

पूर्वकं प्रथमत एव ज्ञेयं ब्रह्म लक्षणीयम्, नतु कारणत्वेन। कारणत्वेन ब्रह्मणः सूक्ष्मचिदचिच्छरीरकत्वं स्थूलचिदचिच्छरीरकत्वं च यथा बोध्यते, न तथा नित्यविभूतिमुक्तजीवादिशरीरकत्वमपि बोध्यते। तेषां कार्यकोटौ कारणकोटौ वाऽप्रवेशात्। एवं चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहो यथा स्यात्, तथैव लक्षणं ब्रह्मणो वक्तव्यमिति, "जन्माद्यस्य यतः" इति सूत्रं ब्रह्मणो विवर्त्तोपादानता-निरूपणार्थं प्रवृत्तमित्येव स्वरसतः सिध्यति। तत्र हि—एकविज्ञानेन सर्व-विज्ञानप्रतिज्ञानिर्वाहः कारणतोपपादनपूर्वकं प्राधान्येनोपपद्यत इति निर्विशेष-ब्रह्मजिज्ञासैव सूत्राशयानुगुणा॥

(८७) श्रीभाष्यापादितानामीक्षत्यधिकरणानुपपत्त्यादीनामस्मन्मतेऽनवसरः।

नहि निर्विशेषब्रह्मवादिनां मते सविशेषवाक्यान्यप्रमाणमिति सिद्धान्तः, येन सगुणवाक्यानां कारणत्वादिपराणां विचारपराणि ईक्षत्यादिसूत्राणि तद्विचारित-श्रुतिवाक्यानि वा श्रीभाष्यकारोक्तरीत्या बाधकानि भविष्यन्ति॥ अयमत्र सारांशः—यत् उपलभ्यमानानां सविशेषवाक्यानां कर्मकाण्डानां निर्विशेष-वाक्यानां च सर्वथा विनैव क्लिष्टकल्पनां तेषां तेषां तत्तत्परत्वं स्वीकृत्यैवाद्वैतमतं प्रवर्त्तते, श्रीभाष्यकारादिमतं तु निर्विशेषवाक्यानामन्यथाऽन्यथा योजनेन सविशेषा-दीनामेव प्रामाण्यस्वीकरणेन? अतोऽत्र वयं पश्यामः—यत् बादरायणाचार्याः कुत्र सविशेषपरत्वं कुत्र निर्विशेषपरत्वम्; तत्रापि सविशेषपराणां कुत्र जीवपरत्वं कुत्र चेश्वरादिपरत्वमिति विचार्य विनिर्णयार्थमेव ब्रह्मसूत्राण्यसूत्रयन्, नतु निर्विशेषवाक्यानामप्रामाण्यस्थापनार्थमिति। अत्र निर्विशेषवस्तुबोधनं प्रमाण-मेव न संभवतीति विवेचनमपि श्रीभाष्यकाराणां स्वप्रौढिमप्रकाशनमेवेति जानीमः। यतः निर्विकल्पज्ञानं शब्दजन्यं हि निर्विशेषविषयं ते नाङ्गीकुर्वन्ति॥ "अत्यन्तबाधितेऽप्यर्थे ज्ञानं शब्दः करोति हि" इति खण्डनोक्तरीत्या प्रथमतः किञ्चिद्रूपेण ब्रह्म प्रबोध्य गुणविशिष्टम्, तस्यैव मनसि धारणपूर्वकं यदि एकैक-गुणनिषेधेन सर्वगुणानां निषेधः, तावता मानसं स्वरूपमात्रविषयकं प्रत्यक्षं कथं न संभवति? नैयायिका हि विशेषणविशेष्यभावानवगाहि ज्ञानं निर्विकल्पक-मिति वदन्ति। श्रीभाष्यकारास्तु—गौरिति प्रथमपिण्डग्रहणं निर्विकल्पकमिति। उभयत्रापि निर्विकल्पकज्ञाने न धर्मभानमिति समानमेव। इदमेवात्र पृच्छ्यते—यत् यत्र न पिण्डानामनेकत्वम्, किं तत्र निर्विकल्पकज्ञानादिविभाग एव न वर्तेत

उत वर्तत इति। अन्त्ये तु स्वरूपमात्रविषयकं निर्विकल्पकं कथं न सिद्ध्यति। सधर्मके वस्तुतो धर्मसत्त्वं तु न वयमपि वारयामः। इदमेवास्माभिरुच्यते विना प्रमाणं न धर्मसाधनं संभवतीति। यथा च सगुणवाक्यापेक्षया निर्गुणवाक्यानि तत्पराणि प्रबलानि तथाऽन्यत्र व्यक्तमिति न वाक्यप्रमाणेनापि निर्विशेषासिद्धिः।

(८८) श्रीभाष्यसम्मतकतिपयासाधारणप्रक्रियायां समालोचनप्रतिज्ञा।

अथास्मिन् प्रसङ्गे श्रीभाष्यकारैः स्वमतसमर्थनार्थं स्वयं कल्पिताः अपरा काश्चन प्रक्रियाः संगृह्यन्ते॥ (१) धर्मविचारानन्तरमेव ब्रह्मविचारः, न तु साधनचतुष्टयसम्पत्त्यनन्तरम्। (२) सगुणमेव स्वरूपं ब्रह्मपदार्थः, न तु निर्गुणम्। (३) उत्क्रमणापेक्षैव मुक्तिः, न तु तन्निरपेक्षा। (४) जीवस्य मुक्तौ भगवच्छरीरतयाऽवस्थानम्, न तु भगवद्भावः। (५) सगुणवाक्याविरोधेन निर्गुणवाक्यानां योजनम्। (६) पूर्वोत्तरमीमांसयोरैकशास्त्र्यम्—इत्यादयः॥ एताश्च कल्पनाः सूत्रकाराणामपि सम्मता वा न वेति विचारोऽस्माकमिदानीं कर्तव्य इति "अथातो ब्रह्मजिज्ञासा" इत्यत्राथशब्दार्थादिसमालोचनपूर्वकं संग्रहेण सर्वं निरूपयामः।

(८९) कर्मविचारस्य ब्रह्मविचारपूर्ववृत्ततानिरासोपयोगितया तृतीयाध्यायतुरीयपाद-
भाष्यद्वयविमर्शावश्यकता।

तत्र प्रथममथशब्दार्थविवेचनार्थं तृतीयाध्यायः समालोच्यते॥ अथशब्देन जिज्ञासासाधनानन्तर्यमेव हि विवक्षितम्। तत्र श्रीभाष्यकाराः—तृतीयाध्याये उपायभूतोपासनाविषया चिन्ता वर्तते। उपासनाख्यस्य हितोपायस्य प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा चेति तत्सिद्ध्यर्थं जीवस्य लोकान्तरे सञ्चरतो जाग्रतः सुषुप्तस्य च दोषाः, परस्य च ब्रह्मणस्तद्रहितता कल्याणगुणाकरता च प्रथमद्वितीयपादयोः प्रतिपाद्यते—इति प्रथमपादेनेहामुत्रार्थफलभोगवैराग्यं मुमुक्षा चोपायः प्रतिपाद्यत इति विवेचयन्ति॥ तत्र मतद्वयेऽपि लोकान्तरसंचारः वैराग्यातिशयसंपादनार्थमेवेत्यत्र न विवादः। स्वप्नावस्थानिरूपणं तु जीवस्य स्थूलसूक्ष्मशरीरसम्बन्धराहित्यप्रतिपादकमिति त्वद्वैतमतम्। लोकान्तरसञ्चारः सूक्ष्मशरीरसम्बन्धप्रयुक्त इति "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इत्यादिसूत्रेण विवेचिते—वस्तुतस्तत्सम्बन्धराहित्यप्रतिपादनं हि सावसरमेवेति सर्व एव विजानन्ति। अत एव हि स्वप्नाद्यवस्थायाः लोकसंचारपादात् पादान्तरे विचारोऽपि उपपद्यते।

यथाचात्र "न स्थानतोपी"त्यादीनां श्रीभाष्यमतेऽतीव क्लेशेन पौनरुक्त्यादिदोषेण च विवरणमद्वैतमत इव न स्वरसम्, तथा पूर्वमेव विवेचितम्। तृतीयपादे तु मतद्वयेऽपि साम्यमेव वर्तते इति, न तेन सूत्रकाराणां मतविशेषो निर्धारयितुं शक्यते। चतुर्थपादस्तु सूत्रकाराणामथशब्दार्थतया कर्मविचारस्याप्युपयोगो वर्तते वा न वेति आशयविनिर्णयेऽत्यन्तमेवोपयुज्यते। अतोऽत्र प्रत्यधिकरणं सूत्राशय-समालोचनं पाठकमहोदयानामत्यन्तमेवोत्साहं वर्धयेत्॥

(९०) तृतीयतुरीयपादप्रथमाधिकरणस्य ब्रह्मविचारस्य कर्मविचारानपेक्षतायां स्वारस्यम्।

तत्र प्रथमाधिकरणे तावत् किं विद्यातः पुरुषार्थः, उत विद्याङ्गकात् कर्मणः इति चिन्ता मतद्वयेऽपि समानैव। परं तु इदमेवात्रालोचनीयम्—यत् जीव-ब्रह्मैक्यविवक्षायामेवेश्वरपराणामपि जीवस्तावकतापूर्वपक्षः संभवदुक्तिकः, उतेश्वरस्य जीवात् पृथक्त्वेऽपीति। तत्र पूर्वतनेन प्रपञ्चेन जीवादिव्यावृत्तस्य परमात्मनः कारणस्य निरूपणानन्तरं तत्प्राप्यस्वरूपविवेचनानन्तरं च जीवेश्वर-योरैक्येऽवगते तस्यैव जीवस्य कर्माधिकारित्वेन तत्स्तावकत्वपूर्वपक्षकल्पनमेव समुचितम्। एवं सति हि जीवस्य कर्माधिकारिण एकतार्हस्य च विशेषाज्ञानेन पूर्वपक्षः, "अधिकं तु भेदनिर्देशात्" इति तस्यैव जीवस्य कर्माधिकारिणः एकभावार्हस्य च भेदनिरूपणपूर्वकमसङ्गजीवपराणामपि वाक्यानां जीवस्ताव-कतयोपयोगासंभवे किमु वक्तव्यमीश्वरस्वरूपप्रतिपादनपराणामिति समाधानमपि योग्यं प्रतीयते। श्रीभाष्यकारमते तु यत्र "अधिकं तु भेदनिर्देशादि"त्यत्र जीवादतिरिक्तस्य परमात्मनो निरूपणादर्थवादत्वमिति सिद्धान्तसूत्रं योज्यते, तत्र जीवस्तावकतया पूर्वपक्षे परमात्मनिरूपणात् सिद्धान्त इति जीवपरता-श्रयणेनैवार्थवादत्वपक्षानिरासात् "आम्रान् पृष्टः कोविदारानाचष्टे" इति न्याय एव पुरतः स्फुरति। अतो ज्ञायते जीवपरमात्मनोरात्यन्तिकाभेदसिद्धान्त एव प्रथमद्वितीयतृतीयाध्यायैरभिप्रेयत इति। अस्मिन् न्याये विद्यात एव न पुरुषार्थावाप्तिरिति पूर्वपक्षावसरे जनकादीनां ब्रह्मज्ञानित्वेन प्रसिद्धानामा-चारादिकं यल्लिङ्गजातमुपवर्णितम्, तदिदमपि जीवो ब्रह्मेति सिद्धान्त एव समुपपद्यते। अद्वैतमते हि जनकादीनां ब्रह्मज्ञानिनामपि कर्मदर्शनात् वेदान्त-विज्ञातात्मतत्त्वमपि कर्माधिकारयोग्यमिति पूर्वपक्षस्यास्ति सुतरामवकाशः॥ श्रीभाष्यमते तु उक्तलिङ्गानां जीवातिरिक्तब्रह्माङ्गीकारेण योजने उपनिषदर्थ-

वादत्वोपपादकता तेषां न भविष्यतीति संसारिजीवातिरिक्तजीवस्वरूपानङ्गीकारेणैव प्रवृत्तिरिति कल्पनीयम्; एवं च सति अध्यायद्वयानन्तरमकस्मादस्य पूर्वपक्षस्य प्रवृत्तिस्तत्समाधानं च कथमुपपद्यते ? यथाचाविरोधाध्यायेऽद्वैतमतस्यामालोचनात् सूत्रकारा न कुत्राप्यद्वैतमतं पूर्वपक्षितं मन्यन्ते तथा प्रथमत एवास्ति समालोचितम्। अतः प्रथमसूत्रमेकमेव तृतीयचतुर्थगतमद्वैतपक्षपातमेव सूत्रकाराणां गमयति ॥

(८१) ऊर्ध्वरेतःसु चेति सूत्रस्यापि ब्रह्मविचारस्य कर्मविचारानपेक्षतायामेव स्वारस्यम्।

एतेन—"ऊर्ध्वरेतःसु च शब्दे हि" इति प्रथमाधिकरणान्तिमं सूत्रमपि—व्याख्यातम्, अस्मिन् हि सूत्रे श्रुत्यादिसिद्धतयोत्तराधिकरणस्थापयिष्यमाणोर्ध्वरेतसां ब्रह्मविद्याधिकारिणां विनाऽपि कर्म ब्रह्मविद्याधिकारो हि यो निरूप्यते, स हि ब्रह्मविद्याधिकारं प्रति तत्तज्जन्मीयकर्मणां नोपयोग इति विशदयति; अन्यथोर्ध्वरेतसां ब्रह्मविचारकाले कर्मानुष्ठानासंभवात् कथं तेषां ब्रह्मविद्याधिकारः स्यात्। अत्र यद्यपि विद्या न कर्माङ्गमित्येव बोध्यते; तथापि तुल्यन्यायेन कर्मणोऽपि न विद्याङ्गत्वमित्यूरीकर्तव्यम्; अन्यथा यदा कदाचिदनुष्ठितकर्ममात्रेण ब्रह्मविद्यानिर्वाहे व्यर्थं कर्मविचारानन्तरत्वसाधनावसरे कर्मणां विद्याङ्गत्वसाधनम्। तथाचैकत्र विनाऽपि कर्म ब्रह्मविद्यासिद्धिरपरत्र कर्मणैव ब्रह्मविद्येति कल्पनायां प्रमाणाभावात् कर्मणां ब्रह्मविद्यानङ्गत्वस्वीकार एव समुचितः। अयमेवार्थः सूत्रकाराभिमतः।

(८२) "अग्नीन्धनाद्यनपेक्षा" इत्यादिसूत्राणां कर्मविचारानन्तर्यवादेऽनुपपत्तिः।

अतएवा"ग्नीन्धनाद्यनपेक्षे"ति कर्मणां ब्रह्मविद्यायामनुपयोगः साध्यमान उपपद्यते। यत्त्वत्र श्रीभाष्ये—तेषु तु आश्रमकर्मानपेक्षा विद्येति विवृतम्, तदिदं ऊर्ध्वरेतसामाश्रमकर्मविचारानन्तरं विधुरादीनां दानादिवाक्यार्थविचारानन्तरं ब्रह्मविचार इत्यर्थस्यैव स्वीकारापत्त्या सर्वानुगतस्यैकस्याधिकारितावच्छेदकस्यानिरूपणाच्च चिन्त्योपपत्तिकं प्रतिभाति। तथाच "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्येनैनैव यथायोगं तत्तत्कर्माङ्गताया निर्वाहसंभवात् "अग्नीन्धनाद्यनपेक्षे"ति सूत्रं श्रीभाष्यमते वितथं संपद्यते, अद्वैतमते तु यज्ञादीनां फले नोपयोगः, किन्तु विविदिषायां ज्ञाने वेति सूत्रद्वयमपि सार्थकं भवति।

“अन्योन्यनाद्यनपेक्षा सर्वापेक्षा चे”ति सूत्राभ्यां अन्योन्यनादीनां सर्वेषामपेक्षाऽनपेक्षा चांशभेदेन ज्ञाप्यते इति हि सूत्रस्वारस्यतोऽवगम्यते। तथाच एकत्र निरपेक्षस्यापि अन्यत्र सापेक्षत्वमित्येवाश्ववदिति दृष्टान्तेन ज्ञाप्यते। अश्वो हि गमनव्यापारांशे एवोपयुज्यते, नतु ग्रामप्राप्तावपीति तत्त्वदीपनादौ व्यक्तम्। तत्रान्योन्यनाद्यनपेक्षेति सूत्रेऽन्योन्यनवदप्रयोगेणात्र सर्वपदप्रयोगेण च सूत्रकारा: “यज्ञेन दानेन तपसाऽनाशकेने”ति श्रुतिगतयज्ञदानयोरदृष्टविधया पापनिरसनद्वारेण ज्ञानोत्पत्तौ उपयोगात् तस्य जन्मान्तरीयकर्मणाऽपि सिद्धौ नाधिकारिण: स्वाधिकारस्तदानीन्तनकर्मणैवेति नियम इति सूचनेन—“धर्मजिज्ञासाया: प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि”ति शांकरभाष्याशयमेवोपबृंहयन्ति। तथाच सूत्रकारै:“यज्ञेन दानेने”ति श्रुत: स्वरूपयोग्यतया, नतु फलोपधानविषयेत्येवमभिप्रायतया—“अन्योन्यनाद्यनपेक्षे”ति सूत्रेण योज्यते। तथाच सर्वापेक्षेति सूत्रे मतद्वयेऽपि यज्ञदानतपसां सर्वेषां विद्योपयोगबोधन एव तात्पर्यमिति, ऊर्ध्वरेतस्सु अन्योन्यनानपेक्षाऽन्येषु सर्वापेक्षेति श्रीभाष्यरीत्या सूत्रकाराशयावगमात् नियतपूर्ववर्तित्वं शमदमादीनामित्येव सूत्रद्वयेनापि गम्यते। अत एव “सर्वापेक्षा चे”ति सूत्रानन्तरं “शमदमाद्युपेत: स्यादि”ति शमदमादीनामिव ग्रहणमप्युपपद्यते। अन्यथा—‘यज्ञाद्युपेत इति खलु सूत्रणीयं स्यात्॥

(९२) शमदमादीनामेवानुगतमधिकारितावच्छेदकत्वम्।

अयं भाव:—ऊर्ध्वरेतोविषयेऽसंभवेऽपि कुत्र चनाधिकारिणि संभवाभिप्रायेण यथा—यज्ञेन दानेनेति, एवं तपसाऽनाशकेनेत्यपि संभवाभिप्रायेण भवतु। तथाच तस्यानियताधिकारितावच्छेदकत्वमिति शंकावारणं हि यज्ञदानाद्यंशेऽनुवाद: तपसीत्यत्र तु विधिरिति व्यवस्थापनेनैव भवतीति, शमदमादिसाधनचतुष्टयनियतपूर्ववर्तित्वं कर्मणां कुत्र चनादृष्टविधयोपयोगमात्रं च व्यवस्थापयितुमिवेदं प्रकरणं प्रवृत्तम्। तथासति हि ऊर्ध्वरेतसां गृहस्थानां सन्न्यासिनां विधुराणां देवानां च सर्वेषामधिकारिणामेकमधिकारितावच्छेदकं शमदमादिकं भवतीति न किञ्चिदनुपपन्नम्॥

(९४) श्रीभाष्यसिद्धान्तदृशापि कर्मजिज्ञासाया: ब्रह्मजिज्ञासाहेतुत्वानुपपत्ति:।

वस्तुतस्तु श्रीभाष्यकारा अपि—वाक्यजन्यज्ञाने न कर्मणामुपयोगं सर्वापेक्षा चेति सूत्रेण मन्यन्ते, किन्तु ध्रुवानुस्मृतिपदवाच्यश्रवणमननाद्यनन्तरकालिक-

दर्शनसमानाकारविद्यायामेव। अत्र तु "अथातो ब्रह्मजिज्ञासे"तिसूत्रेऽथपदेन वाक्यार्थज्ञाने कर्मणामुपयोगो यदि तेषामप्यसंमतस्तर्हीदमेव विचारणीयम्—यत् "अथातो ब्रह्म जिज्ञासे"ति प्रतिज्ञातजिज्ञासापूर्वतनत्वं कर्मविचारस्य कथमुपपद्यते ? इति। तदिदं सिद्धं यत् कर्मणामनियतोपयोगस्य शमदमादीनां नियतोपयोगस्य च निरूपणार्थमेवा"श्नोऽश्वनावपेचे"त्यादि "शमदमाद्युपेतः स्यादि"त्यन्न्रं प्रवृत्तमिति।

(८५) विहितत्वाच्चाश्रमकर्मेति सूत्रार्थनिष्कर्षः।

अत्र सर्वेषु भाष्येषु विषयवाक्यतया—"यज्ञेन दानेने"ति वाक्यमेव विवेचितम्। अनेन चेदं सिद्धं भवति—यत्, गृहस्थविषये यज्ञादीनामुक्तवाक्येऽनुवादमहिम्ना विविदिषोत्पत्त्यादौ उपयोग इति। एवं स्वीकारे हि महती शंका परा समुन्मिषति—यत् सर्वेषामाश्रमकर्मणामुक्तवाक्येऽननुवादात् गृहस्थाश्रमधर्मा अपरे न संपादनीया भविष्यन्तीति; तदर्थमिदं सूत्रम्—"विहितत्वाच्चाश्रमकर्मापी"ति केचन मन्यन्ते॥ एतेषां मतरीत्या—यज्ञेन दानेनेत्यत्राश्रमकर्ममात्रविवक्षेति सूचनार्थमुक्तं सूत्रमिति न दोषः,—परं तु—नेदं विवरणं सांप्रदायिकम्। अयमत्र मतद्वयसंप्रदायसिद्धोऽधिकरणार्थः—यत् मोक्षोपयोगिनामेषामाश्रमशेषत्वमपि विद्यत इति। सर्वथा तु अविरक्तविषयत्वात् यज्ञादिविधीनां यावदुत्कटवैराग्यं गृहस्थैः शमदमादिसंपन्नैरपि स्वस्वाश्रमकर्माण्यप्यनुष्ठेयानीति मतद्वयेऽप्यविशेषः॥ श्रीभाष्यकारा अपि—"ऊर्ध्वरेतस्सु च शब्दे हि" इति सूत्रे यावज्जीवश्रुतिस्त्वविरक्तविषयेति विवरणेनोक्तमर्थमनुमन्यन्त एव॥

(८६) कर्मविचारानन्तर्यपक्षे विधुरदेवतायनधिकारापत्तिः, पतितशूद्राद्यधिकारशङ्कानुत्थितिश्च।

ये तु पुनर्विधुरास्तेऽपि शमदमादिसंपन्ना एवाधिकारिण इति "अन्तरा-चापी"त्यधिकरणमपि व्याख्यातम्। तथाच कर्माधिकारं विनापि ब्रह्मविद्याऽधिकारी भवतीत्येव सूत्रकाराशयः॥ अत एव हि "तद्भूतस्य तु नातद्भाव" इति—पतितानां ब्रह्मविद्याधिकारसंभवोऽस्तु वा नवेति विचार उपपद्यते; अन्यथा कर्मानधिकारिणां तेषां ब्रह्मविद्याधिकारः कथं संभवदुक्तिकः ? इत्यद्वैताचार्यसंमत एव सूत्रार्थः सूत्रकारहृदयंगमः। अद्वैतमते हि शूद्राणामिव साधनचतुष्टयसंपन्नानामधीतवेदानामपि पतितानां वचनबलान्न ब्रह्मविद्याधिकार इति

सर्वं सङ्गतम्॥ एतेन—श्रीभाष्यमतेऽपशूद्राधिकरणासाङ्गत्यमपि देवताधिकरण-वैयर्थ्यमिवापरिहरणीयमेव वर्तत इति—सूचितम्। अधिकमत्र वक्तव्यमस्माभिरस्मदीयशास्त्रदीपिकाभूमिकायां पूर्वोत्तरमीमांसयोरेकशास्त्र्यनिरासावसरे विशदीकृतम्।

(८७) प्रतिवादिभयङ्करश्रीमदनन्ताचार्यकृतैकशास्त्र्यमीमांसासमालोचनप्रतिज्ञा।

सत्यमैकशास्त्र्यमीमांसायां प्रतिवादिभयङ्कर श्रीमदनन्ताचार्याः उक्तभूमिका-समालोचनेनैकशास्त्र्यं समर्थयन्ते, परन्तु नेदं संभवदुक्तिकम्। तथाहि—

(८८) पूर्वोत्तरमीमांसयोर्भेदेऽद्वैतभाष्यभामतीकल्पतर्वादिमतसंग्रहः।

"अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इत्यन्तं चतुर्लक्षणं ब्रह्ममीमांसाशास्त्रम्—"अथातो धर्मजिज्ञासा" इत्यारभ्य प्रवृत्तायाः कर्मदेवतामीमांसायाः पृथग्भूतम्, न तयोरैक्यमिति शङ्कर-भगवत्पादानां राद्धान्तः। तदुक्तं भाष्ये—"एवंच सति "अथातो ब्रह्मजिज्ञासा" इति पृथक्शास्त्रारम्भ उपपद्यते; प्रतिपत्तिविधिपरत्वे हि "अथातो धर्मजिज्ञासा" इत्येवारब्धत्वात् न पृथक् शास्त्रमारभ्येत, आरभ्यमाणं चैवमारभ्येत 'अथातः परिशिष्टधर्मजिज्ञासा' इति; "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा इति वदि"ति। इयमत्र भामती—"ब्रह्मणः शास्त्रार्थस्य धर्मादन्यत्वात् भिन्नविषयत्वेन शास्त्रभेदात् "अथातो ब्रह्मजिज्ञासा" इत्यस्य शास्त्रान्तरत्वमित्याह—एवंच सतीति। इतरथा तु धर्मजिज्ञासैवेति न शास्त्रान्तरमिति न शास्त्रारम्भत्वं स्यादित्याह—प्रतिपत्तिविधिपरत्वे हीति। न केवलं सिद्धरूपत्वाद्ब्रह्मात्मैक्यस्य धर्मादन्यत्वम्, किन्तु विरोधादपी"त्यादि। अयमत्र कल्पतरुः—"ननु बाह्यक्रियाविधिः प्रथमकाण्डे गतः, मानसज्ञानविधिविचाराय पृथगारम्भ इति शङ्कापोहार्थमारभ्य-माणं चेति भाष्यम्" इति। एतैर्हि भाष्यभामतीकल्पतरुवाक्यैः स्पष्टमिदमवगम्यते, यत् "अथातो धर्मजिज्ञासा" इति धर्मजिज्ञासाप्रतिज्ञया न ब्रह्ममीमांसापि गता, नवा धर्मशब्देन ब्रह्मापि तत्र विवक्ष्यत इति, न विंशतिलक्षणमेकं मीमांसाशास्त्रम्, किन्तु षोडशलक्षणात् पृथगेव चतुर्लक्षणं ब्रह्ममीमांसाशास्त्रमिति। तदुक्तं परिमले—"टीकाकारैर्धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं वदद्भिर्धर्मजिज्ञासासूत्रं वेदार्थविचारप्रतिज्ञापरं विंशतिलक्षणीसाधारणमङ्गीकृतमिति न मन्तव्यम्" इति

जिज्ञासासूत्रव्याख्यानोपसंहारे। एवंच धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं वदतां भामतीकाराणां श्रोतव्यादिवाक्यविधिपक्षपातिनां फलवदर्थावबोधार्थवेदान्ताध्ययनमपि स्वाध्यायविधिप्रयुक्तमित्येवाशयः, नतु धर्मजिज्ञासासूत्रेण ब्रह्मज्ञानेच्छोपदर्शनमुखेन ब्रह्ममीमांसाप्रतिज्ञापि सिद्धेति। तदुक्तं परिमले—"अत्र हि ब्रह्मजिज्ञासासूत्रं ब्रह्मज्ञानेच्छोपदर्शनमुखेन ब्रह्ममीमांसायां प्रवर्तनार्थम्, नतु वेदान्ताध्ययने प्रवर्तनार्थम्, वेदान्तानां विवक्षितार्थत्वोपपादनार्थं वा" इति ॥

(९९) "स्वाध्यायानन्तर्यं तु समानमि"ति भाष्यस्यान्तर्णीतपूर्वपक्षत्वनिरूपणम्।

सति चैवं "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्येण ब्रह्मजिज्ञासायामपि स्वाध्यायानन्तर्यस्य विवक्षितत्वे "अथातो ब्रह्मजिज्ञासा" इति सूत्रमपि "स्वाध्यायोऽध्येतव्यः" इति विध्यर्थनिर्णयार्थमित्येव स्यात्, सा तु "अथातो धर्मजिज्ञासा" इत्यनेनैव सिद्धेति पृथक् प्रतिज्ञा वितथा स्यादित्येवाभिप्रेतम्, नतु धर्मशब्देन ब्रह्मणोऽपि विवक्षितत्वात् धर्मजिज्ञासेति साधारणी प्रतिज्ञा, ब्रह्मजिज्ञासेति तु विशिष्टा प्रतिज्ञेति। इदं हि सर्वसम्मतमेव—यत् साधारणप्रतिज्ञा यदनन्तरा, तदनन्तरा तदवान्तराध्यायानन्तरैव च तदन्तर्गता विशेषप्रतिज्ञेति। तत्र यदि भाष्यकारा धर्मजिज्ञासा साधारणप्रतिज्ञा ब्रह्मजिज्ञासा तु विशेषप्रतिज्ञेत्येवमाशयाः, तर्हीदमत्र स्वीकर्तव्यम्—यत् सिद्धान्तभाष्यमिदं "स्वाध्यायानन्तर्यं तु" इति नतु पूर्वपक्षभाष्यमपीति। भाष्यकारा हि—"स्वाध्यायानन्तर्यं तु समानम्" इत्यादिना स्वाध्यायाध्ययनस्य कर्मविचारस्य च ब्रह्मजिज्ञासापूर्ववृत्ततानिरासमुखेन साधनचतुष्टयसंपत्तेरेव तत्त्वं साधयन्तः "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्यमन्तर्णीतपूर्वपक्षनिरासपरमेवाशरते इति नेदं कस्यापि तिरोहितम्।

(१००) शांकरभाष्यादिदृष्टैकशास्त्र्यव्यवस्थानिरासः।

सत्यप्येवं "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्यान्तर्णीतपूर्वपक्षभाष्यभामत्यादिग्रन्थेन शंकरभगवत्पादानामपि पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं सम्मतमिति यदेकशास्त्रमीमांसायां प्रतिवादिभयङ्करोपनामश्रीमदनन्ताचार्यस्वामिनोऽभिमन्यन्ते, तदिदं न केवलं सत्संप्रदायसंदर्भादिविरुद्धम्, किन्त्वसंभवदुक्तिकमपि ॥

इयमत्रैकशास्त्रमीमांसा—

"स्वाध्यायानन्तर्यं तु समानमि"ति भाष्यगतसमानशब्दस्य तुल्यार्थकल्पपक्षे "अथातो धर्मजिज्ञासा" इति सूत्रगतस्य जिज्ञास्यसमर्पकस्य धर्मशब्दस्य वेदार्थमात्रपरताश्रयणे धर्ममीमांसायामिव ब्रह्ममीमांसायामप्यथशब्देन वेदाध्ययनानन्तर्यस्य तत्रैव बोधिततया न पुनर्ब्रह्ममीमांसासूत्रगतेनाथशब्देन स्वाध्यायानन्तर्यबोधनं युक्तम्; अतस्तस्याथशब्दस्य न स्वाध्यायानन्तर्यमर्थो वर्णनीय इत्येव तात्पर्यं भाष्यकृतो वर्णनीयम्। तथैव वर्णितं च भामतीकारेण। समानशब्दस्य साधारणमित्यर्थमङ्गीकृत्य वेदाध्ययनानन्तर्यं ब्रह्मविचारारम्भस्य पुष्कलं कारणमिति वदतामन्येषां टीकाकाराणामाशयो यथा तथा वा भवतु, समानशब्दस्य लोकसिद्धतुल्यार्थकतामङ्गीकृत्य व्याचक्षाणस्य भामतीकारस्य तु मते "अथातो धर्मजिज्ञासा" इति सूत्रगतधर्मशब्दो वेदार्थमात्रपर इत्येव भाष्यकृदभिप्रायो भवितुमर्हति—इति।

युक्तं चैतत्—यत् भामतीकाराः, किं बहुना ? तुल्यार्थतापक्षपातिनः सर्वेऽपि टीकाकाराः भाष्यकाराश्च "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्यम् "अथातो धर्मजिज्ञासे"ति सूत्रगतस्य धर्मशब्दस्य ब्रह्मसाधारणीकरणेनैव प्रवृत्तं मन्यन्ते। अयमेव च सांप्रदायिकोऽपि भावोऽस्य भाष्यस्य। नात्र मात्रयापि वृत्तिरेकशास्त्रमीमांसाकाराणामपि समस्ति। परंतु इदमेवात्रालोचनीयम्—यदिदं भाष्यं किं पूर्वपक्षभाष्यमुत सिद्धान्तभाष्यमेवेति। आद्ये पूर्वपक्षिणां मतदृष्ट्या खलु धर्मपदस्य ब्रह्मसाधारण्यम्, न तु सिद्धान्तिनां दृष्ट्या। ततश्चेदमत्र सिद्धं भवति—यत् "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्यमेकशास्त्रवादेन स्वाध्यायाध्ययनस्य पूर्वतनत्वमाशङ्क्य निराकरोतीति, कथं वा तत्रत्यपूर्वपक्षाशयनिरूपणपरभामतीग्रन्थानुसारेण भामतीकाराणां भाष्यकाराणां वा पूर्वोत्तरसन्दर्भविरुद्धमेकशास्त्रकल्पनं सम्भवदुक्तिकमित्यलमनेनार्धजरतीयन्यायाश्रयणेन। वस्तुतस्तु—न केवलं स्वाध्यायाध्ययनस्य किन्तु कर्मविचारस्यापि ब्रह्मविचारपूर्ववृत्तत्वं स्पष्टमेव भाष्यकाराः प्रतिक्षिपन्तीति, पूर्वोत्तरमीमांसयोरेकशास्त्र्यं शांकरभाष्यस्यापि सम्मतमिति कल्पना निरस्यतया तत्सम्मतमित्येवमाशयेव योजनीया।

(१०१) ऐकशास्त्र्यमीमांसागतपूर्वापरविरोधः ।

अयमाशयः—"स्वाध्यायानन्तर्यं तु समानम्" इति हि भाष्यं स्वाध्यायाध्ययनस्य ब्रह्मविचारपूर्ववृत्ततानिरासपरमेव, न तु तत्समर्थनपरमित्यैकशास्त्र्यमीमांसायां भामत्याद्याशय उपवर्णितः। इयमत्रैकशास्त्र्यमीमांसा—"कर्मब्रह्मणोर्विचारे वेदाध्ययनानन्तर्यस्य तत्रैव सूत्रे कथिततया गतार्थत्वेन "अथातो ब्रह्मजिज्ञासा" इत्यत्राप्यथशब्दस्य वेदाध्ययनानन्तर्यार्थकत्वाङ्गीकारे सूत्रमेवानारभ्यं भवतीति स्पष्टशब्दैः कथयती भामतीकारस्ये"ति। सति चैवं नात्र कस्यापि विप्रतिपत्तिः—यत् येषां मते पूर्वोत्तरमीमांसयोरैकशास्त्र्यम्, तेषां मते "अथातो धर्मजिज्ञासा" इति सूत्रगतधर्मजिज्ञासयैव ब्रह्मजिज्ञासापि गतेति। इदमेवात्र विरुद्धम्—यत् शांकरभाष्यभामत्यादिसिद्धान्तेऽपि धर्मजिज्ञासया ब्रह्मजिज्ञासा गतेति। अन्यथा स्पष्टशब्दैर्भाष्यभामत्यादिषु वेदाध्ययनस्य कर्मविचारस्य च ब्रह्मविचारपूर्ववृत्ततानिरास ऐकशास्त्र्यमीमांसायामप्यनूदितः कथमुपपद्यते? अनेन च पूर्वापरविरोधोऽप्येक ऐकशास्त्र्यमीमांसायां सूच्यते।

(१०२) परिमलकाराणां दृष्ट्या न मुख्यमैकशास्त्र्यम्।

एतेन—"पूर्वोत्तरमीमांसयोरैकप्रबन्धत्वाङ्गीकर्तारोऽद्वैतिनः केचित् सन्तीति परिमलकारः प्राह। समर्थितं च पूर्वोत्तरमीमांसयोरैकशास्त्र्यं नानाविधपूर्वपक्षयुक्तीनां समाधानपूर्वकं तत्रैव" इति कल्पनापि—परास्ता।

सत्यं परिमलकारैः—"तदपि सिद्धान्ते प्रौढ्याऽभ्युपगम्य मतान्तरमिष्यत एव" इति प्रौढिवादेन पूर्वोत्तरमीमांसयोरैकशास्त्र्यं व्यवस्थापितम्। परंतु नेदं मुख्यम्, किन्तु वेदार्थविचारत्वोपाधिकत्वं गौणमेव। अयं भावः—श्रीभाष्यमतावलम्बिभिः पूर्वोत्तरमीमांसयोरैकशास्त्र्यं कर्मविचारपूर्ववृत्ततानियामकं मुख्यं यदभिमन्यते, तदेवात्र विप्रतिपत्तिविषयः; नतु गौणम्। तत्तु प्रौढ्यापि परिमलकारैर्नैकेवलं व्यवस्थापितम्, किन्तु प्रतिक्षिप्तमपि। स्पष्टं हि परिमलकाराः—"नचैवं कर्मब्रह्मविचारयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगतस्याथशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति वाच्यम्; भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः। न हि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकग्रन्थत्वमात्रेण

तत्तच्चिकित्साप्रकरणं विचारयिष्यता ज्वरप्रकरणमारभ्यैव विचारणीयम्"— इत्यादिना कर्मविचारपूर्वकत्वमैकशास्त्र्याभ्युपगमेऽपि निरस्यन्ति। तथाच वनसेनादीनामिवौपाधिकमेवैकत्वं परिमलकारैः साध्यते, न तु मुख्यमिति परिमलगतैकशास्त्रपदमात्रेण स्वविघातकेन कथं प्रतिवादिभयङ्कराम्सन्तुष्यन्तीति न वयं जानीमः। न हि वयमपि स्वतो भिन्नानां पटादिव्यक्तीनां जातितोऽप्यैक्यं नानुमन्यामहे। नापि वा मीमांसात्वेन मीमांसयोर्मीमांसानां वा पुराणत्वेन पुराणानामिव वयमप्यैक्यं प्रतिक्षिपामः।

(१०२) एकविद्यास्थानत्वं नैकप्रबन्धत्वम्।

एतेन—"काण्डत्रयात्मकमेकं विचारशास्त्रं चतुर्दशविद्यास्थानेष्वन्यतमतया महर्षिभिः परिगणितमि"ति वाक्यमपि ऐकशास्त्र्यमीमांसागतं व्याख्यातम्।

न हि "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥" इति वाक्यगतानि पुराणपदवाच्यानि शैववैष्णवादीनि सर्वाणि पुराणान्येकः प्रबन्धः। सत्यपि रूपान्तरेण भेदे रूपान्तरेणाभेदो न कस्यापि विप्रतिपन्न इति, सिद्धवेदार्थविचारत्वेन साध्यवेदार्थविचारत्वेन च पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रत्वमेवेति, न ब्रह्मविचारे कर्मविचारापेक्षा, न वा कर्मविचारानन्तरो ब्रह्मविचार इत्यस्मिन्नंशे मात्रयापि परिमलकाराणामनुमति-र्वर्तते इति, नाद्वैतिनां केषामपि सम्मतमिदम्—पूर्वोत्तरमीमांसे अधिकारितो विषयतः प्रयोजनतो वाऽपृथग्भूते इति। इदमेवाभिप्रेत्यास्माभिरस्मदीयशास्त्र-दीपिकाभूमिकायामेवं विवेचितम्, यत्—"वेदार्थविचारत्वोपाधिना समशास्त्रत्वे कल्पगृह्यसूत्रादिभिरपि तदापत्तिः, युक्त्यात्मकविचारत्वाभावेन तत्र भेदसाधने प्रकृतेऽपि साध्यवेदार्थविचारत्वाभावेन भेदसिद्धिरिति निर्णयामः।" "भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, इह तु भूतं नित्यवृत्तं ब्रह्म जिज्ञास्यमिति प्रतिपाद्य-वैलक्षण्यं निरूपयन्तो हि भगवत्पादाः ब्रह्मणो धर्मशब्दानर्हतामपि बोधयन्ति" इत्यादि। अत्र विचारपदेन निर्णयप्रयोजकग्रन्थमात्रविवक्षायामेवास्माभिर्गृह्य-सूत्रादिभिरभेद आपादितः, न तु तेषामपि युक्त्यात्मकविचारत्वमपि स्वीकृत्य। अत एव "युक्त्यात्मकविचारत्वाभावेन" इत्याद्युत्तरग्रन्थसमन्वयः।

एतेन—कल्पसूत्रगृह्यसूत्रादीनां वेदार्थविचारशास्त्रत्वाभावादित्यादि दूषणमनुक्तोपालम्भनमेवे"ति–सूचितम्॥ धर्मशब्देना"थातो धर्मजिज्ञासा" इति सूत्रगतेन ब्रह्मणो न ग्रहणं भगवत्पादसिद्धान्तदृष्ट्यैव न तु मतान्तरदृष्ट्येति पूर्वमेव सविस्तरमुपपादितम्।

(१०४) ब्रह्मजिज्ञासाया धर्मजिज्ञासानन्तर्भावः।

एतेन—"कर्मब्रह्मणोर्भव्यत्वभूतत्वाभ्यां वैलक्षण्यमस्तु वा मा वा। धर्मशब्दो ब्रह्मापि बोधयितुं शक्नोत्येव; तत्पदशक्यतावच्छेदकस्यालौकिकश्रेयःसाधनत्वस्योभयसाधारण्यादि"त्यादिकमपि—परास्तम्। अस्याद्वैतसिद्धान्तविरुद्धत्वात्। अद्वैतमते हि निर्गुणमेव ब्रह्माथातो ब्रह्मजिज्ञासेति मुख्यजिज्ञास्यतया विवक्षितम्, न तु सगुणं ब्रह्मेति सर्वविदितमिदम्। यथाच निर्गुण एव ब्रह्मणि वेदान्तानां ब्रह्मसूत्राणां च परमं तात्पर्यम्, न तु सगुणे, न वा श्रीभाष्यसिद्धान्ते, तथास्माभिरनुपदमेव सम्यगस्ति निरूपितम्, निरूपयिष्यते च। एतावन्मात्रमत्र निष्कृष्यते—यदद्वैतमतरीत्या न धर्मशब्दो ब्रह्मणि प्रवर्तते इति, नाद्वैतिसम्मतमिदं यत् पूर्वोत्तरमीमांसयोरेकशास्त्रं नाम।

(१०५) मीमांसकदृष्ट्या नैकशास्त्रत्वसिद्धान्तसंभवः।

अत्रेदं समालोचनीयम्—यत् पूर्वोत्तरमीमांसयोरेकशास्त्रमिदमेकशास्त्रमीमांसायां किं पूर्वमीमांसकदृष्ट्या साध्यते, आहोस्विदद्वैतदृष्ट्या उताहो श्रीभाष्यसिद्धान्तदिशा। कर्मापेक्षितकर्तृस्तावकतयैव वेदान्तानां पर्यवसानोरीकरणेनोपनिषदां स्वातन्त्र्येणोपासनाविधिपराणामप्यद्वितीये सिद्धे ब्रह्मण्यतात्पर्येण जिज्ञास्यब्रह्मसमर्पकत्वानूरीकरणेन सिद्धसाध्यभेदेन धर्मद्वयानङ्गीकारेण च कर्ममीमांसां द्वादशलक्षणीं षोडशलक्षणीं वातिरिच्य ब्रह्ममीमांसैव न वर्तते इति न पूर्वमीमांसकदृष्ट्या तत्संभवः। इदमेव जैमिन्यभिमतमित्यत्र—"शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति बादरायणसूत्रम् "एतेनोपनिषदो व्याख्याताः" इत्यर्थवादाधिकरणगतमुपनिषदर्थवादत्वव्यवस्थापकं तन्त्रवार्तिकं च मूलम्। अत एव—"फलमत उपपत्तेः""धर्मं जैमिनिरत एव" इतीश्वरस्यैव फलसाधनत्वम्, नतु कर्मणोऽपूर्वद्वारेति बादरायणमतस्य कर्मण एवापूर्वद्वारा फलसाधनत्वमिति

जैमिनिमतस्य च निर्देश उपपद्यते। तत्र यदि पूर्वोत्तरमीमांसयोरेकशास्त्र-मभिसंहितं स्यात्, तर्हि विरुद्धयोः सिद्धान्तयोः पूर्वोत्तरपक्षरूपेण निर्देशोऽसङ्गत एव स्यात्।

(१०६) विरुद्धसिद्धान्तकर्तृभेदेन शास्त्रभेदसाधनम्।

एतेन—"नच जैमिनिना कर्ममीमांसावद्ब्रह्ममीमांसापि कुतो न प्रणीता? बादरायणेन वा कर्ममीमांसा कुतो न प्रणीतेति शङ्कनीयम्; उभयोरुभयभाग-सामर्थ्ये सत्यपि प्रमेयगौरवानुसारेणैकैकभागप्रणयनोपपत्तेः। ... ... यथोपकोस-लायाग्नयो ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्यां चोपदिश्य प्रमेयगौरवं पश्यन्तः "आचार्य्यस्तु ते गतिं वक्तेत्यवदन्, तथैवात्रापि जैमिनिरन्तेवासी बादरायणेन स्वाचार्येण तत्प्रणयनं शुश्रुत्सुत्प्रेक्षमाणः सङ्क्षेपमेव शास्त्रमस्थापयत्। यथाच त्रिभिरग्निभिः सत्यकामेन च भागश उपदिष्टाया अप्युपकोसलविद्याया एकविद्यात्वम्, तथात्रापि जैमिनिना बादरायणेन च भागशः प्रणीतस्यापि शास्त्रस्यैक्यमुपपन्नतरमि"त्युक्तिरपि—परास्ता; वैषम्यात्। नहि जैमिनिमत-निरसनपूर्वकं बादरायणेनेवाग्निमतनिरसनपूर्वकं सत्यकामेन विद्योपदिष्टा। तथाच भिन्नकर्तृकयोर्विरुद्धसिद्धान्तपरयोः शास्त्रयोरेकत्वे न किमप्युदाहरणं प्रदर्शयितुं शक्यते। सर्वथा जैमिनीयदृष्ट्या न पूर्वोत्तरमीमांसयोरेकशास्त्रत्वम्;

(१०७) उपजीव्योपजीवकभावेन न पूर्वोत्तरमीमांसयोरेकत्वम्।

अन्यथा "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति पूर्वतन्त्रसूत्रेणैव गतार्थत्वात् "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि"ति सूत्रम्, पूर्वतन्त्रगतेन वेदापौरुषेयत्वाधिकरणेनेवेष्टसिद्धत्रा "अतएव च नित्यत्वम्" इति सूत्रम्, पूर्वतन्त्रगतापशूद्राधिकरणेनेव कृतार्थत्वादपशूद्राधिकरणान्तरम्, बलाबलाधि-करणेनैवाभीष्टलाभात् "श्रुत्यादिबलीयस्त्वाच्च न बाधः" इति सूत्रम्, "चोदना-लक्षणोऽर्थो धर्म" इति सूत्रेणैकशास्त्रमीमांसोक्तरीत्या ब्रह्मजिज्ञासाया अपि प्रतिज्ञातत्वपक्षे गतार्थत्वाच्छास्त्रयोनित्वाधिकरणादिकं च वितथं स्यात्। अतोऽवश्यमिदमूरीकर्तव्यम्—यत् स्वतन्त्रमेव पूर्वमीमांसायामिवोत्तरमीमांसाया-मपि तानि तानि भेदादिनिमित्तन्यायशरीराणि बादरायणाचार्यैरुल्लिख्यन्त इति। व्यक्तं चैतत् परिमले कर्मविचारपूर्वकत्वतानिरासावसर उत्तरमीमांसानपेक्ष्यत्वं पूर्वमीमांसायां विवेचितमिति तत एवाधिकमवगन्तव्यम्।

(१०८) अद्वैतसिद्धान्तदृष्ट्या शास्त्रैकत्वासंभवः ।

यथाचाद्वैतसिद्धान्तदृष्ट्या न पूर्वोत्तरमीमांसयोरेकप्रबन्धत्वम्, तथा सविस्तरं पूर्वमेव विवेचितम् । यानि पुनः "एक आत्मनः शरीरे भावात्" इति सूत्रगतान्येकशास्त्रमीमांसासमुद्धृतानि पूर्वतन्त्रेण पौनरुक्त्यशङ्कापराणि वाक्यानि, तैरिदमेव सूच्यते—यदुत्तरमीमांसाया यथा कुत्रचनांशे पूर्वमीमांसापेक्षा, एवं पूर्वमीमांसाया अपि समस्ति देहातिरिक्तात्मस्वरूपनिर्णयार्थमुत्तरमीमांसापेक्षेति नोपजीव्योपजीवकभावनिबन्धने पूर्वत्वोत्तरत्वे, किन्तु तत्तदवसेयफलपूर्वत्वोत्तरत्वनिबन्धने एव ते इति । तथाच न पूर्वतन्त्रेत्यादिव्यपदेशान्यथानुपपत्त्यैकप्रबन्धत्वाध्यवसायः स्थाने । अयमाशयः—सत्यमस्ति पूर्वोत्तरमीमांसयोरेकत्वव्यपदेशः, तत्र पूर्वमीमांसायाः प्राथम्यमुत्तरमीमांसाया उत्तरत्वमिति च । परंतु स गौणः । तत्र कानिचन पूर्वोत्तरतन्त्रविशेषाणि:, यथा वेदनित्यत्वादीनि, कानिचन तत्तदसाधारणानि । तत्र साधारणानां तन्त्रान्तरनिर्णीतानां संभवति ततोऽप्यनुसन्धानम्; अनुक्तमविरुद्धमन्यतो ग्राह्यमिति न्यायात् । ततश्च स्वाविरुद्धानां तन्त्रान्तरनिर्दिष्टानां व्यर्थं स्वस्मिन्नपि संकलनमित्यभिप्रेत्यैव "एक आत्मनः शरीरे भावात्" इत्यादौ पौनरुक्त्यमाशङ्क्यते, नतु तदेकप्रबन्धत्वमभिप्रेत्य । सति चैवं शांकरभाष्यानुसारेणापि पूर्वोत्तरमीमांसयोरेकप्रबन्धत्वकल्पनमेकशास्त्रमीमांसागतं छिन्नमूलमिति सिद्धम् ।

(१०९) श्रीभाष्यसिद्धान्तभिमतशास्त्रैकत्वपक्षयुक्तिसंग्रहः ।

अथेदानीमिदमेवावशिष्यते समालोचयितुम्—यत् श्रीभाष्यमतानुसारेण पूर्वोत्तरमीमांसयोरेकशास्त्रं सांप्रतमुतासांप्रतमिति । अत्र च—

"उपदेशादथोक्तादिस्वारस्यादसंयोगतः ।
पूर्णापदेशतश्चैक्यं पूर्वभागोपजीवनात् ॥"

इति प्राचां संग्रहकारिकैकैव समालोचनमर्हति ।

(११०) "जैमिनीयेन षोडशलक्षणेने"ति बोधायनवचनानुपपत्तिः, एकशास्त्रमीमांसाकाराणां पूर्वापरविरोधश्च ।

"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति सत्यमस्ति बोधायनाचार्याणामुपदेशः, परंतु, अनुपपन्न उपदेशो न वस्तुसाधनायालमिति,

इदमेवाद्यो परीक्षितव्यम्—कथमुपपद्यतेऽयमाचार्याणामुपदेश इति। अत्र प्रथमं "जैमिनीयेन षोड़शलक्षणेन" इति जैमिनीयत्वं षोड़शलक्षणस्य यदुल्लिखितम्, तदिदं न केवलम्—"कर्म-देवता-ब्रह्मगोचरा सोऽभौ त्रिधा सूत्रकारतः। जैमिनिर्मुनिः काशकृत्स्नो बादरायणादित्यतः क्रमात्" इति तत्त्वटीकोद्धृततत्त्वरत्नाकरवचनविरुद्धम्, किन्तु—

"देवताविचारपरो महर्षिणा काशकृत्स्नेन प्रणीत" इत्येकशास्त्रमीमांसावाक्येनापि विरुद्धम्। एतेन—"तत्र च पूर्वकाण्डं विवरीतुं प्रवृत्तेन महर्षिणा जैमिनिना कर्मदेवताकाण्डद्वयघटितं पूर्वमीमांसाख्यं प्रणीतमि"ति भूमिकावाक्यस्य "देवताविचारपरो महर्षिणा काशकृत्स्नेन प्रणीतः" इत्येकाशास्त्रमीमांसाद्वितीयवाक्यस्य च परस्परविरोधोऽप्यपरः सूच्यते।

वस्तुतस्तु न केवलं भूमिकावाक्येनैव, किन्तु "ततश्च जैमिनिना संकर्षान्ते सूत्रैकदेशावृत्तिं कुर्वता" "एनां प्रक्रियां मनसि कलयता जैमिनिना संकर्षान्ते कृतो विशिष्टवाक्यैकदेशाभ्यासः" "जैमिनिः कां प्रक्रियामवलम्ब्य संकर्षान्ते सूत्रैकदेशाभ्यासमकरोत्" इत्यादिस्ववाक्यैरपीति नेदं कस्यापि तिरोहितम्। ततश्च बोधायनाचार्याणां येषां "जैमिनीयेन षोडशलक्षणेने"ति व्यपदेश एकशास्त्रमीमांसातत्त्वटीकाद्यनुसारेण प्रामादिक एवेति प्रतिवादिभयङ्करैरपि वक्तव्यम्—यत् तेषामुपदेशमात्रं न तत्त्वनिर्णयाय पर्याप्तं प्रमाणमिति, कोवाऽयं बोधायन इति न वयं जानीमः। अधिकं टिप्पण्यां (२३०) पृष्ठे द्रष्टव्यम्।

(१११) पदैकवाक्यत्वरूपमुख्यैकशास्त्रत्वासंभवः।

ऐकशास्त्र्यं नामैकार्थगोचरशास्त्रत्वम्। तत्र कर्मब्रह्मभागयोः स्वतः स्वार्थबोधनसमाप्तयोरेकशास्त्रत्वं पदैकवाक्यतानिबन्धनमसम्भवदुक्तिकम्। वाक्यैकवाक्यत्वं तु सर्वेषां वेदवाक्यानामद्वितीये ब्रह्मणि पर्यवसानस्याद्वैतिभिरपि स्वीकारात् तस्यैकविद्यास्थानत्वप्रयोजकत्वेऽपि कर्मविचारे ब्रह्मविचारपूर्ववृत्ततानियामकत्वस्यैकशास्त्रत्वानियामकत्वाद्वाद्वैतिनामप्यनिष्टम्। "ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम्, किन्त्वेकप्रबन्धत्वमपीत्यभिप्रायेण संहितत्वोक्तिः" इति वदन्तस्तत्त्वटीकाकारा अपि नैकविद्यास्थानत्वमात्रमेकशास्त्रत्वमिति स्पष्टमेव

निरूपयन्ति। अतो यावद्ब्रह्मविचारस्य कर्मविचारानन्तरत्वं न साध्यते, तावदेकशास्त्रत्वं न चोदक्षमं भवति।

(११२) ब्रह्मविचारस्य कर्मविचारानन्तरत्वानियमः

एतेन—"वेदे स्वरवर्णपादगीतिविभागानुपूर्व्यादीनामुपदेशगम्यत्वं सर्वसंप्रतिपन्नम्, तथात्राप्युपदेशगम्यत्वं वक्तृसंकल्पस्य नापनेयमि"त्यादि—परास्तम्।

नहि कर्मविचारब्रह्मविचारयोः साध्यसाधनभावादिकं यागस्वर्गादिसाध्यसाधनभावादिकमिवोपदेशमात्रगम्यम्, अन्वयव्यतिरेकप्रमाणगम्यं तदिति खलु भवतां मतम्॥ यथाच विनापि कर्मविचारं ब्रह्मविचारः, नतु नियतानुपूर्वीरूपेणैव विचारः कर्तव्य इति च नियमः, तथा ज्वरचिकित्सादिविचारनिदर्शनेन परिमलानुसारेण पूर्वमेव विवेचितम्।

(११३) कर्मफलानित्यत्वनिर्णयोपयोगितया कर्मविचारानपेक्षा।

एतेन—"द्वादशलक्षण्यभ्यासेन कर्मणामल्पास्थिरफलत्वं निश्चितवता तत एव तज्जातीयाल्पास्थिरफलकर्मसु विरज्यमानस्य विचारितकर्मापेक्षया विलक्षणफलककर्मविचारस्य भावित्वेन सूचनं तत्रावश्यकमिति "अथातो ब्रह्मजिज्ञासा" इति शास्त्रारम्भः" इति समुल्लेखोऽपि—परास्तः ; बाधितत्वात्।

नहि द्वादशलक्षण्यां कुत्रापि कर्मफलास्थिरत्वं व्यवस्थापितम्, येन तदभ्यासेन कर्मणामल्पास्थिरफलत्वनिर्णयः, तन्निबन्धनो वा विरागः स्यात्। ब्रह्ममीमांसातृतीयाध्यायेन खल्वधीतेन विरागसमुत्पत्तिर्नतु द्वादशलक्षण्यभ्यासेन। इदमेव खलु श्रीभाष्यकाराणामपि मतम्। तदुक्तम्—"तत्र कर्मविधिस्वरूपे निरूपिते" इति श्रीभाष्यव्याख्यावसरे श्रुतप्रकाशिकायाम्—"तत्र केवलं कर्मविधिस्वरूपं विचारितम्, अल्पास्थिरफलत्वज्ञानमावृत्तिविधानादिना फलितम्" इति। तथाच ब्रह्ममीमांसातृतीयाध्यायाध्ययनं विना द्वादशलक्षण्यभ्यासमात्रेण कर्मणामल्पास्थिरफलत्वनिर्णयासंभवात् द्वादशलक्षण्याख्यकर्मविचारस्य ब्रह्मविचारपूर्ववृत्तता बाधितैव।

(११४) शास्त्रैकत्वपक्षेऽथशब्दास्वारस्यम्।

एतेन—"अथातो ब्रह्मजिज्ञासा" इत्यथशब्दस्वारस्यादपि पूर्वोत्तरमीमांसयोरेकशास्त्र्यं सिद्ध्यति। तथाहि—अथशब्दस्य स्वपूर्ववाक्यस्थधातुतात्पर्यविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नक्रियानन्तर्यं शक्तिरिति सर्वसंप्रतिपन्नम्। प्रकृते च कर्ममीमांसारूपवाक्यघटककर्तव्येतिधातुतात्पर्यविषयधर्मविचारकरणरूपक्रियानन्तर्यं ब्रह्ममीमांसायां बोध्यते" इत्युक्तिरपि—परास्ता।

सूत्रघटकस्याथशब्दस्यानन्तर्यार्थकस्य स्वविषयवाक्योपात्तप्रयोजकानन्तर्यबोधकत्वं हि "अथातो धर्मजिज्ञासा" इति सूत्रे क्लृप्तम्। अत्र हि विचारप्रयोजकत्वं वेदाध्ययनस्य विचारविधिगम्यस्यैवेति, तस्यैवानन्तर्यप्रतियोगित्वमुभयसंप्रतिपन्नम्। सन्दिग्धवाक्यनिर्णयार्थेषु सूत्रेष्वेतादृशशैल्यादरणमेव सांप्रतमिति, ब्रह्मजिज्ञासाविधिपरेषु गुणोपसंहारन्यायेन सर्वेषु "आत्मा वाऽरे द्रष्टव्य" इत्यादिषु वाक्यशेषाम्नातसाधनचतुष्टयसंपत्त्यानन्तर्यमेवाथशब्दार्थ इति युक्तम्, नतु कर्मविचारानन्तर्यम्।

(११५) धर्मजिज्ञासाप्रतिज्ञायाः श्रुतप्रकाशिकोक्तरीत्या प्रथमत्वासम्भवः।

नहि "अथातो धर्मजिज्ञासे"त्यादिद्वादशलक्षण्यादिप्रणयनानन्तरमेव बादरायणेन ब्रह्ममीमांसा प्रणीता, नतु ततः पूर्वमिति श्रीभाष्यानुसारिणो वर्णयितुमर्हन्ति, येन "अथातो धर्मजिज्ञासा" इति प्रथमप्रतिज्ञा स्यात्। अस्मिन् प्रसङ्गे—

"ननु यद्येकशास्त्रं कर्मब्रह्मविचारयोः, तर्हि उपक्रमे साधारणोऽर्थः प्रतिज्ञायेत—"अथातो वेदार्थजिज्ञासा" इति; नचैवं प्रतिज्ञातम्, किन्तु पूर्वभागासाधारण एव प्रतिज्ञातः—"अथातो धर्मजिज्ञासा" इति; अत्र ब्रूमः—"ब्रह्ममीमांसेत्येवोभयभागसाधारणार्थप्रतिज्ञा, कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन सङ्गतः। ब्रह्मविचारान्तर्भावेऽपि पृथक्करणमुपपद्यते, यथा निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः" इत्यादिश्रुतप्रकाशिकावाक्यान्यपि नानुल्लेखयोग्यानि। एतैर्हि वाक्यैरिदं स्पष्टमवगम्यते—यत् "अथातो धर्मजिज्ञासा" इति न प्रथमप्रतिज्ञा, न वा धर्मपदं धर्म-

ब्रह्मोभयसाधारणम्, किन्तु "अथातो ब्रह्मजिज्ञासा" इत्येव प्रथमप्रतिज्ञा, तथा द्वादशलक्षण्याः षोडशलक्षण्या वा ब्रह्ममीमांसाचतुर्थपादशेषत्वेनैवैकशास्त्रवाद इति।

(११६) मीमांसाद्वयभेद एवाथशब्दस्वारस्यं न तदैक्ये।

तथाच यावद्द्वादशलक्षण्याः षोडशलक्षण्या वा तृतीयाध्यायचतुर्थपादशेषत्वे नोपक्षिप्यते किमपि प्रमाणम्, तावदेकशास्त्रप्रतिज्ञा प्रतिज्ञैव केवलम्, न स्वार्थसाधिका। इदमेवात्र विवक्षितम्—यदथशब्दस्वारस्यात्र कर्मब्रह्मविचारयोरेकप्रबन्धत्वमिति। इदमेवाभिप्रेत्योक्तमस्माभिरस्मदीयशास्त्रदीपिकाभूमिकायाम्—"अथातो धर्मजिज्ञासे"ति धर्मविचारप्रतिज्ञानमपि ब्रह्माविषयकं पूर्वोत्तरयोस्तन्त्रयोर्भेदमवगमयति" इति। अन्यथा हि "जन्माद्यस्य यतः" इति पृथक् ब्रह्मलक्षणं वितथमेव स्यात्। न केवलमियदेव, किन्तु शास्त्रयोनित्वाधिकरणापशूद्राधिकरणादिकं बहु पुनरुक्तं भवति।

(११७) शास्त्रैक्ये देवतानां ब्रह्मविचारानधिकारापत्तिः।

तदयं निष्कर्षः—यत् न शांकरमतानुसारेण मीमांसकमतानुसारेण श्रीभाष्यमतानुसारेण वा जैमिनीयकर्मविचारानन्तर्यम"थातो ब्रह्मजिज्ञासा"ऽति सूत्रेऽथशब्दस्यार्थः। न हि श्रीभाष्यसिद्धान्ते देवतानामपि जैमिनीयकर्मविचारानन्तरमेव ब्रह्मविचार इति कल्पना संभवति। यथाच देवतानां न स्वाध्यायाध्ययनानधिकारिता, ब्राह्मणत्वाद्यभावात्; तथा शास्त्रदीपिकाभूमिकायामेव व्यक्तम्।

(११८) विषयभेदादिना मीमांसाभेद एव भगवत्पादमतसंग्रहः,
तवैकशास्त्रमीमांसाकाराणामवस्तुस्थितिकथनं च।

ततश्चाधिकारिभेदात् विषयभेदात् प्रयोजनभेदाच्च भिन्नशास्त्रत्वमेव तयोर्नैकशास्त्रत्वमिति सिद्धम्। सत्यप्येवं कुत्र कुत्रचन मीमांसात्वेन विद्यास्थानत्वेन वा पुराणत्वेन शैववैष्णवपुराणादीनामिवौपाधिक एकत्वव्यपदेशस्तु नास्माभिरपि वार्यते। प्रतिपाद्यैकत्वनिबन्धनः खल्वेकत्वव्यपदेशोऽस्माभिर्वार्यते। इदमेवाभिप्रेत्य शंकरभगवत्पादाः सर्वसिद्धान्तसंग्रहे संगृह्णन्ति—

"चतुर्दशसु विद्यासु मीमांसैका गरीयसी।
विंशत्यध्याययुक्ता, सा प्रतिपाद्यार्थतो द्विधा॥" इति।

अत्र हि स्पष्टं प्रतिपाद्यवैलक्षण्येनैव मीमांसयोर्वैलक्षण्यं सत्यपि मीमांसात्वेनैकत्व इति विवेचितम्। सति चैवं यदेकशास्त्रमीमांसायाम्—

"भगवान् शंकराचार्यस्य सर्वसिद्धान्तसंग्रहे—

"चतुर्दशसु विद्यासु मीमांसैका गरीयसी।
विंशत्यध्याययुक्ता, सा प्रतिपाद्यार्थतो द्विधा॥"

इति विंशत्यध्याययुक्ताया मीमांसाया एकत्वं कथयंस्तन्मतावलम्बिनां मुखानि मुद्रयतोत्युक्तम्, तदिदं "प्रतिपाद्यार्थतो द्विधा" इत्यत्र दृष्टिपातनिवारणेन धूलिक्षेपणमिव, नतु वस्तुस्थितिकथनम्।

अत्र प्रतिपादितः प्रतिपाद्यभेदो नावान्तरविषयभेदः, किन्तु स्वरूपतः प्रमाणप्रवृत्तिप्रकारतश्चात्यन्तविलक्षणविषयभेद इति भगवत्पादभाष्यदर्शिनां न परोक्षम्। तदुक्तं भाष्ये—"भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, इह तु भूतं ब्रह्म जिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम्; चोदनाप्रवृत्तिभेदाच्च; या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति, ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्" इत्यादि। तदिदं सिद्धम्—यदयशब्दस्वारस्यं शास्त्रभेद एव न तदैक्य इति। यथा तदुक्तमित्यादिनिर्देशः समान एव तन्त्रे न्यायविशेषाणां शास्त्रभेद एवोपपन्नः, यथाच न पूर्वोत्तरयोस्तन्त्रयोर्नोपजीव्योपजीवकभावः, यथा वा पूर्वमीमांसायामिव पूर्णापदेशः, तथा सर्वमिदमेकशास्त्र्यमीमांसादिगतानां सर्वासामापत्त्यादीनां समालोचनपूर्वकं व्यक्तमस्मदीयशास्त्रभेदमीमांसायां विशदीकृतम्। विस्तरभयान्नु नात्र सर्वमनूद्यते।

(११८) कर्मविचारानन्तर्यवादस्य सूत्रानारूढत्वम्।

यत्तु— "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" इति सूत्रम्, अत्र श्रीभाष्यकाराः श्रवणमननाभ्यामर्थान्तरभूतं मौनं नामोपासनावलम्बस्य पुनः पुनः संशीलनं विद्याङ्गतया विधीयते। बाल्यं तु स्वभावानाविष्काररूपम- "नाविष्कुर्वन्नन्वयात्" इत्यनेन बोध्यते। पाण्डित्यं नाम श्रवणमननाभ्यां ब्रह्मस्वरूपावगम इति विवृण्वते। अद्वैतभाष्यकारा अपि नात्र विपरीताशयाः।

तदिदं सिद्धम्—यत् सर्वापेक्षाद्यधिकरणानां शमदमादिनियतपूर्ववृत्तत्वनिरूपण एव तात्पर्यम्, नतु कर्मतद्विचारपूर्ववृत्तत्वनिरूपणे इत्येव सूत्राशयोऽवगन्तव्यः—इति। नहि श्रीभाष्यमतेऽपि कर्मणां वाक्यार्थज्ञाने उपयोगः, किन्तु

ततोऽन्यत्रैव भुवानुस्मृताविति वाक्यार्थविचाररूपब्रह्मविचारपूर्वतनत्वं कर्मविचारस्य, तत्रापि जैमिनीयकर्मविचारस्य न लेशतोऽपि वर्तत इत्य"थातो ब्रह्मजिज्ञासे"त्यत्राथशब्दविवरणम्—"ननु कर्मावबोधानन्तर्यं विशेषः, न; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"त्याद्याकारं शंकरभगवत्पादानामिव तृतीयाध्यायचतुर्थपादाद्यनुगुणं वर्तते ॥

अत्र ननु—"कर्मावबोधानन्तर्यम्" इति यज्ञेन दानेनेति वाक्यानुसारेण सर्वापेक्षा चेति सूत्रानुसारेण च पूर्वपक्षः ॥ सिद्धान्तस्तु—"अग्नीन्धनाद्यनपेक्षे"ति सूत्राद्यनुसारेण कर्मणां न सर्वाधिकारिसाधारण्येनोपयोग इति सूत्रकाराशयानुसारेणेति सुष्ठु लगति। श्रीभाष्यविवरणं तु न केवलं सूत्राशयाननुगुणम्, किन्तु पूर्वोक्तरीत्या जैमिनीयकर्मविचारस्यापि श्रुतप्रकाशिकोक्तरीत्या ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादशेषत्वादिबहुकल्पनाभूयिष्ठमपि वर्तते। यथा चात्र न प्रपञ्चमिथ्यात्वादिकं निर्विशेषप्रामाण्यादिकं च नानुपपन्नम्, तथा पूर्वमेव विवेचितम् ॥

(१२०) नित्यानित्यविवेकाद्यानन्तर्यपक्षेऽन्योन्याश्रयनिरासः, मतान्तरएव तदापत्तिश्च।

यत्तु नित्यानित्यवस्तुविवेकादेः विचारानन्तरस्य विचारपूर्वतनत्वायोग इत्याक्षेपः, सोऽद्वैत्यभिमतस्य तत्पदार्थस्य सामान्यतो नित्यमस्तीतिज्ञानसहकृतस्य विशेषतोऽनित्यमिदमिति निश्चयाभ्यासरूपस्य विज्ञाने सम्यक् संपादिते निरवसरो भविष्यतीति दृढोऽयमस्माकं विश्वासः। स्पष्टं चास्माभिरद्वैतदीपिकायामिदं विवेचितम्। एतावता विवक्षितः सारांशोऽयमेव—यत् अथशब्दविवरणम्, एवं ब्रह्मपदार्थविवरणमुभयमप्यद्वैतिनामेव सूत्रकारहृदयस्पृक्, न तु श्रीभाष्यकाराणामिति; यतस्तन्मत एव कर्मविचारस्य तृतीयाध्यायतुरीयपादशेषत्वादन्योन्याश्रयः।

(१२१) चतुर्थाध्यायसमालोचनोपक्रमः।

तत्पदार्थविचारावसरे प्रथमद्वितीयाध्यायौ तृतीयाध्यायद्वितीयपाद एव च विशेषतो विचारणीय इति, पूर्वमेवास्माभिस्तद्विचारस्य संपादितत्वाच्चतुर्थाध्यायपर्यालोचनमेकमेवास्माकं कर्तव्यमवशिष्यते।

(१२२) मतद्वये मुक्तेरुत्क्रमणापेक्षादिविषये सूत्रप्रमाणनिर्देशः

अत्राध्याये विचारणीयः प्रधानांशोऽयमेव—यत् विनाप्युत्क्रमणं किं मुक्तिर्भवति, उतोत्क्रमणापेक्षैव मुक्तिरिति। तत्र श्रीभाष्यकारा मन्यन्ते—उत्क्रमणप्रयोज्यैव

मुक्तिरित्येव सूत्रकाराशय इति। अद्वैतिनस्तु मन्यन्ते—न मुक्तिरुत्क्रमणमपेक्षते—इति। उभयोरपि निर्णयस्यास्य मूलम्—"प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषामि"ति सूत्रमेवेति वयमत्र तावन्मात्रं समालोचयामः। अत्र श्रीभाष्यमते "प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषामि"ति विशिष्टमेकं सूत्रम्। अद्वैतमते तु—"प्रतिषेधादिति चेन्न शारीरात्" इत्येकं सूत्रम्। "स्पष्टो ह्येकेषाम्" इत्यपरं सूत्रम्। अपरोऽयं विशेषः—यत् श्रीभाष्यमते इदं विशिष्टं सूत्रं "समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य"ति सूत्राद्याधिकरणस्य गुणसूत्रम्, अद्वैतमते तु—"प्रतिषेधादिति चेन्न शारीरादि"ति स्वतन्त्राधिकरणान्तरपूर्वपक्षसूत्रम्। "स्पष्टो ह्येकेषामि"ति तत्सिद्धान्तसूत्रमिति।

(१२२) उत्क्रमणापेक्षैव मुक्तिरित्यत्र श्रीभाष्यकाराणां सूत्रयोजनाप्रकारः, तत्समालोचनं च।

अयमत्र श्रीभाष्याभिमतसारांशः—यत् विदुषः—"अत्र ब्रह्म समश्नुते" इति,

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥"

इति वचनाभ्यामत्रैवामृतत्वप्राप्तेः श्रवणेन नोत्क्रान्तिरिति पूर्वपक्षयित्वोक्तवचनयोर्द्वितीयवचनस्यादग्धशरीरसम्बन्धस्यैव पुण्यपापासंश्लेषमात्रबोधने तात्पर्यात्, प्रथमवचनस्य चोपासनकालिकब्रह्मानुभवविषयत्वात् शरीरादिदाहबोधनेऽतात्पर्यात्, विदुषोऽपि

"शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्ति" इति

नाडीविशेषेणोत्क्रान्तिश्रवणाच्चोत्क्रान्तिरवर्जनीयैव, नाडीप्रवेशपर्यन्तं तु समानैव विद्वदविदुषोरुत्क्रान्तिरिति, विदुषः ब्रह्मप्राप्तिपर्यन्तं संसारव्यपदेशान्यथानुपपत्त्या देवयानेन गच्छतस्तस्य "सत्यं ब्रूयात्" इति चन्द्रमसा संवादान्यथानुपपत्त्यादिना चामृतत्वप्राप्तिः सम्बन्धादाहेनैवेति च व्यवस्थापने कृते, अनन्तरं विदुष उत्क्रान्तिप्रतिषेधवचनेन—"न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतो"तिरूपेण शरीरात् प्राणाद्युत्क्रमणनिषेधदर्शनेनानुत्क्रान्तिपूर्वपक्षमाशंक्य, अत्रोत्क्रमणावधितया न शरीरं गृह्यते, किन्तु शारीरः प्रत्यगात्मैवेति, तेन साकं प्राणाद्युत्क्रमणबोधन एव शाखान्तरीयस्य—"योऽकामो निष्कामः

आत्मकामः तस्मात् प्राणा उत्क्रामन्ति" इत्याकारस्य वाक्यस्यानुसारेण तात्पर्यात् न जीवात् प्राणादिविश्लेषबोधने "न तस्य प्राणा उत्क्रामन्ती"त्यस्य तात्पर्यमिति व्यवस्थापनपरतया—"प्रतिषेधादिति चेन्न, शारीरात् स्पष्टो ह्येकेषामि"ति विशिष्टसूत्रप्रवृत्तिरिति। अत्रेदमेवास्माकमालोचनीयम्—यत्—"न तस्य प्राणा उत्क्रामन्ती"त्यत्र यदि विदुषोऽपि जीवात् प्राणाविश्लेषबोधन एव तात्पर्यम्, तर्हि अविदुषोऽपि जीवस्य प्राणाविश्लेष एतच्छरीरसम्बन्धविच्छित्तिकाले समान इति खलु श्रीभाष्यकाराणां मतम्। तत्र च अविद्वद्विषये "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति प्राणेन सहोत्क्रमणमभिधाय विद्वद्विषये "न तस्य प्राणा उत्क्रामन्ती"ति श्रुत्यन्तरेण निषेधमुखेन प्राणाविश्लेषबोधनं कथं न व्यर्थम्। एवं च—"अथाकामयमानः" इति वाक्यस्य "अथाकाम" इति वाक्यस्य चोभयोरपि शरीरप्राणविश्लेषबोधन एव तात्पर्यमूरीकर्तव्यम्। प्राणवियोगो हि शरीरापादानक एव प्रसक्तः, न जीवापादानक इति, शाखान्तरीयवाक्येऽप्यपादानतया शरीरमेव गृहीतव्यम्। अत एव हि—विद्वांसं प्रस्तुत्य "याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो न" इति पृष्टे "नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते। स उच्छ्वयत्याध्मातो मृतः शेते" इति विदुषः प्राणानामत्रैव समवलयनं प्रतिपादितमुपपद्यते ॥

(१२४) मुक्तेरुत्क्रमणनिरपेक्षतायामेव सूत्रोपनिषदादिस्वारस्यम्।

अत्र श्रीभाष्यकाराः—अस्यापि वाक्यस्याविद्वत्परत्वमेव। तथाच स्थूलदेहवज्जीवं विमुञ्चन्ति, सूक्ष्मदेहवत्तु जीवमनुगच्छन्तीति श्रुतार्थत्यागाश्रुतार्थकल्पनानि कति वा कल्पयन्तीति सर्व एव समालोचयन्तु। अतो विना बह्वध्याहारादिकं सूत्राशयवर्णनं यद्यभिमतम्, वयं पश्यामः—सूत्रकाराणां मनसि विनैवोत्क्रमणं जीवस्यात्रैव शरीरे मुक्तिरिति बोधन एव स्वारस्यमिति। तत्र च—प्रतिषेधादिति चेन्न शारीरात्" इति सूत्रे श्रीभाष्यकारैः प्रबलवाक्यतयाऽभिमतमाध्यन्दिनशाखागतस्य "न तस्मात्प्राणा उत्क्रामन्ती"त्यस्यानुसारेण पूर्वपक्षः; "स्पष्टो ह्येकेषामि"ति बृहदारण्यकगतार्तभागप्रश्नाद्यनुसारेण सिद्धान्त इति विवेकः। भगवत्पादमते हि—"समाना चासृत्युपक्रमादि"ति सूत्रम्—अविदुषः कर्मिणोऽपरविद्यावतो विदुषश्च गोचरयति। तत्र चा"मृतत्वं चानुपोष्ये"त्येतावतैव शरीरसम्बन्धस्य

स्थापनात् तद्व्यवस्थापनार्थं न सूत्रान्तरमपेक्षितमिति "तदापीतेः संसारव्यपदेशा-दि"ति सूत्रम् "वाङ्मनसि संपद्यते" इत्यत्र संपत्तिनिरूपणपरमधिकरणान्तरपरमेव युक्तम् ॥

(१२५) चतुर्थाध्यायद्वितीयपादस्य सर्वस्यादित एव स्वरसं योजनम्।

अयं भावः—चतुर्थाध्यायद्वितीयपादे हि "वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्" इत्यत्र वागादिपदार्थविवेचनद्वाराऽर्चिरादिमार्गप्राप्तिपूर्वतनावस्था म्रियमाणस्य संशोध्यते। तत्र "वाङ्मनसि दर्शनात् शब्दाच्चे"ति सूत्रेण वाक्संपत्तिपदार्थम्, "तन्मनः प्राण उत्तरादि"ति सूत्रेण मनःसंपत्तिपदार्थञ्च विविच्य "प्राणस्तेजसी"त्यत्र तेजसि संपद्यमानतया निर्दिष्टः प्राणः साध्यक्ष एव कथ्यते इति "सोऽध्यक्षे तदुपगमादिभ्यः" इति सूत्रेण च प्रबोध्य, "भूतेषु तच्छ्रुतेरि"त्यत्र तेजःपदेन भूतसामान्यं विवक्ष्यते इति निरूपणानन्तरं "तेजः परस्यां देवतायामि"ति वाक्ये कमपि विचारमकृत्वा—"समाना चासृत्युपक्रमादि"त्यधिकरणं प्रवृत्तमिति सर्वसंमतमिदम्। अत्रेद-मेवालोचनीयम्—यत् "तेजः परस्यां देवतायामि"ति वाक्यमधिकृत्य विचारः कर्तव्य उत नेति। यदि कर्तव्यः, तर्हि किं "भूतेषु तच्छ्रुतेरि"त्यनन्तरमेव तद्विचारो युक्तः, उत यत्र कुत्रापीति। अत्र भगवत्पादानामाशयोऽयमवगम्यते —यत् "तेजः परस्यां देवतायामि"त्यत्र न संशयलेशोऽपि वर्तते। न ह्यत्र वृत्तिलयो वा स्वरूपलयो वेति संशयो वर्तते ; भूतेषु वृत्तेरनङ्गीकारात्। अत एव सूत्रकारैरपि—प्राणशब्देन तेजःशब्देन च किं विवक्ष्यत इत्येव विचार्य प्रतीय-मानार्थपरित्यागेन साध्यक्षस्य प्राणस्य भूतानां सर्वेषां च प्राणतेजःपदाभ्यां परामर्शो व्यवस्थाप्यते—तेजःपदार्थे च निर्णीते परस्यांपदार्थस्य निर्णीतत्वात् न किमपि प्रयोजनं तद्वाक्यविचारसाध्यं वर्तते इति। ततश्च तद्वाक्यसन्दर्भविचारसमाप्तौ, गतिरियं कर्मिणामुपासकानां च समानेति विवेचनार्थं "समाना चासृत्युपक्रमादि"त्यधिकरणम्। तत्र च विद्वच्छब्देन न ब्रह्मसाक्षात्कारवतो विवक्षा, किन्तूपास-कस्येति प्रसङ्गाद्विवेचनार्थम्—"प्रतिषेधादिति चेन्ने"त्यधिकरणप्रवृत्तिरिति स्थितिः। अत्र च मते—"तानि परे तथा ह्याह हो"ति सूत्रेण येषां न प्राणोत्क्रमः, तेषां प्राणशब्दोदितानामिन्द्रियाणां का गतिरिति शङ्कानिवारणेन परमात्मन्येव लयप्रतिपादनमिति प्रसङ्गादुपपाद्यते। अनन्तरं च स च लयोऽभेदरूप एवेति

"अविभागो वचनादि"ति सूत्रेण प्रासङ्गिकविषयं समाप्य, अपरविद्यावतां गतौ कस्यचन विशेषस्य व्यवस्थापनेन पादसमाप्तिरिति सर्वं सुलग्नं भगवत्पादमतस्यैव सूत्रारूढत्वे ॥

(१२६) चतुर्थाध्यायद्वितीयपादस्य श्रीभाष्यमतेऽस्वारस्यम् ।

श्रीभाष्यकारास्तु—"भूतेषु तच्छ्रुतेरि"त्यनन्तरं "समाना चासृत्युपक्रमादि"त्यनेनोत्क्रमणस्य विद्वदविद्विषयत्वं व्यवस्थाप्य "तानि परे तथा ह्याह हि" इति सूत्रेणासन्दिग्धं "तेजः परस्यां देवतायामि"ति वाक्यमेव विचार्यमाणं व्यवस्थापयन्तः निर्निमित्तं मध्ये विषयान्तरविचारेणासन्दिग्धवाक्यविचारपरतया "तानि" इति सूत्रं योजयन्तश्च कथं वा सूत्रप्रवृत्तिस्वारस्यं न विघ्नन्ति ? अत्र "वाङ्मनसि" "मनः प्राणे" इति मनःप्राणादिपदस्यैव 'तानि परस्यां तथा ह्याह ही'ति परस्यांपदस्याश्रवणेन "तानि परे" इति च सूत्रेण सूत्रकाराः "तेजः परस्यां देवतायाम्" इति वाक्यमत्र न विचारणीयं मन्यन्त इति, न "तानि परे"इति सूत्रस्वारस्यम् । किं बहुना ? तत्सार्थक्यमपि श्रीभाष्यमते न संभवदुक्तिकम् । अत उक्तसूत्रस्य स्वारस्यं सार्थक्यं च भगवत्पादसंमतप्रकारादरण एव भविष्यतीति भगवत्पादमतमेव सूत्राशयानुगुणम् ॥ एतेन "अविभागो वचनात्" इति "तानि परे" इत्यस्यानन्तरं प्रवृत्तं सूत्रमपि व्याख्यातम् ॥ इदं हि सूत्रं श्रीभाष्यकारा वागादीनामिव तेजःशब्दवाच्यानां भूतानामपि परमात्मनि लयोऽविभागरूपः, न कारणतापत्तिरिति विवृण्वते । ततश्च वागादीनां मनआदिषु संपत्तिर्मनआदिभिः संयोगमात्रम्, न तु कारणतापत्तिरिति भावः पर्यवस्यति । अत्र निमित्तं श्रीभाष्यकारा इदमेव मन्यन्ते—यत् मनो न वाचः कारणमिति । ततश्चेदमेवात्र पृच्छ्यते—यत् परमात्मा तु सर्वकारणमिति कथमत्र न परमात्मनि लयः कारणतापत्तिरेव संभवतीति ? वस्तुतस्तु—श्रीभाष्यकाराः वागादीनां मनआदिभिः संयोगमात्रं मन्वानाः परमात्मसंपत्तिमपि तदेव यदि विवक्षन्ति, तर्हि सूत्रगतस्याविभागशब्दस्य संयोगे लक्षणा कथं न तन्मते भवति । एवं चा"विभागेन दृष्टत्वादि"त्यनन्तरतुरीयपादसूत्रेण भिन्नवाक्यताऽपि श्रीभाष्यमते स्यात् । अद्वैतमते तूभयोरप्येकार्थतेति स्वारस्यम् । अत्रेदं सूत्रं प्रासङ्गिकम्, वागादिसंपत्तिवैलक्षण्यप्रतिपादनार्थम्, तुरीयपादे तु स्वप्रकरणस्थम् ; अथवाऽत्रेन्द्रियाणां परमात्मभावः, तत्रेन्द्रियाणामिव जीवात्मनोऽपि परमात्मनोऽविभागोऽभेदरूपः प्रतिपाद्यत इति न पौनरुक्त्यदोषः ।

सर्वथा तु जीवे मुक्तिदशायां यादृशोऽविभाग:, तादृश एवाविभागोऽत्रापीत्यविभाग-पदप्रयोगेण यत् सूत्रकारा ज्ञापयन्ति, तदिदं श्रीभाष्यमते न परिपाल्यत इति सिद्धम् ॥

(१२७) अप्रतीकालम्बनान्नयतीति सूत्रगतभाष्यद्वयार्थसंकलनम् ।

एतेन—चतुर्थाध्यायस्य तृतीयपादोऽपि—व्याख्यात:। तत्र भाष्यद्वयस्याप्य-र्चिरादिमार्गस्वरूपनिर्णये न वैषम्यं वर्तते। केवलम्—"अप्रतीकालम्बनान्नय-तीति बादरायण उभयथा च दोषात् तत्क्रतुश्चे"ति सूत्रविवरणे परं मतद्वयेऽपि विशेषो वर्तते। इदं हि सूत्रं श्रीभाष्यकारा:—"कार्यं बादरिरस्य गत्युपपत्ते:" "परं जैमिनिर्मुख्यत्वात्" इति सूत्रद्वयेन कार्योपासकानामर्चिरादिमार्गेण नयनमथवा परोपासकानामिति मतद्वय उपक्षिप्ते बादरायणाचार्या: प्रतीका-लम्बनव्यतिरिक्तान् परं ब्रह्मोपासीनान् आत्मानं च प्रकृतिवियुक्तमुपासीनान् नयतीति मन्यन्त इति व्याचक्षते।

(१२८) अप्रतीकालम्बनानिति सूत्रादिगतश्रीभाष्यविवरणास्वारस्यम् ।

अत्र श्रीभाष्यमते—पूर्वतनसूत्रद्वये बादरिजैमिनिग्रहणमत्र बादरायण-ग्रहणं च पूर्वयोर्द्वयो: पूर्वपक्षसूत्रत्वं सत्यं सूचयतीव, परंतु—इदमेवात्रालोचनीयम्—यत् "आतिवाहिकास्तल्लिङ्गादि"त्यनेन नेतृ-निर्णयानन्तरं प्राप्यस्वरूपम्—"स एनान् ब्रह्म गमयती"ति वाक्येन गम्यमानमेव खलु कार्यं परं वेति केवलद्वितीयान्तपदप्रयोगेण गम्यते, नतूपास्यं कर्म। अन्यथो-पासीनानिति पदाध्याहारदोष: कथं परिहरणीय: ? अत एव "गत्युपपत्तेरि"ति निर्देश उपपद्यते। श्रीभाष्यमते हि यत्र कार्योपासकानां परोपासकानामुभयेषां गतिर्वर्तते, तत्र गत्युपपत्तेरिति कार्योपासकानामेव नेयत्वमित्यत्र कथं हेतुर्भवति ? एतेन—"न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते प्राप्तत्वादेवेति "कार्यं बादरिरि"ति सूत्रस्थं श्रीभाष्यमपि व्याख्यातम्। इदमेवात्र पृच्छ्यते—यत् "परं जैमिनिर्मुख्यत्वादि"ति सूत्र-विवरणावसरगतेन—"नच गमनानुपपत्ति: प्रमाणम्, परस्य ब्रह्मण: सर्वगतत्वेऽपि

विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिश्शास्त्रादि''ति "प्रतिषेधादिति चेदि"ति सूत्रानुसारिणा भाष्येण कथं न विरोध इति। अत्र सत्यं पूर्वतनभाष्यं बादरिमतेन, इदं तु जैमिनिमतेनेति विरोधपरिहार इत्युत्तरस्यास्त्यवकाशः, तथाप्ययमेव पूर्वतनस्य प्रश्नस्याशयः—यत् पूर्वतनपादे "प्रतिषेधादिति चेन्ने''ति सूत्रेण विदुषोऽपि गतिसाधनानन्तरं मुख्यत्वहेतुकस्य जैमिनिमतस्योत्थितिरेव कथमिति। तथाचोक्तमतद्वयमप्यत्र सूत्रकारैर्गतिविषये मतभेदोऽस्तीति निरूपणार्थमेवेति खलु वक्तव्यम्। इदं च पूर्वतनपाद एव सङ्गतम्, नात्र। अत्र हि नेता नेतव्यः प्राप्यं त्रितयमपि खलु निरूपणीयम्, श्रीभाष्यमते तु नेता नेतव्याश्च निरूप्यन्ते, न प्राप्यम्। एतेन "सामीप्यात्तु तद्व्यपदेशः'' "कार्यात्यये तदध्यक्षेण सहातः परमभिध्यानादि"ति सूत्रद्वयमपि—व्याख्यातम्॥ सर्वविदितमिदं यत् श्रीभाष्यकाराः—अस्मिन् सूत्रद्वयेऽपि प्रथमतः प्राप्यं कार्यब्रह्म, अनन्तरं तु परं ब्रह्मेति विवृण्वते इति। तदत्र यदि श्रीभाष्यकाररीत्या नेतव्यनिरूपणमेव प्रसक्तम्, न प्राप्यनिरूपणम्, तदा को वाऽस्य विचारस्य प्रसङ्गः? एवं कार्योपासकानामपि हिरण्यगर्भप्राप्तिद्वारा परब्रह्मप्राप्तेरेव बादरिमतत्वमिति श्रीभाष्यविवरणे—"स एनान् ब्रह्म गमयती''त्यत्र ब्रह्मपदस्य हिरण्यगर्भपरत्वमिति यदुच्यते, तदिदं जैमिनिमतसाधारणमपीति वक्तव्यम्; यतः सर्वेषामुपासकानां ब्रह्मलोकगमनपूर्वकमेव परप्राप्तिस्तैरङ्गीकरणीया। तत्र च बादरिमतेऽपि परस्यापि ब्रह्मणः प्राप्यत्वं विवक्षितमेव। इयान् विशेषः—न साक्षात् स्वयं कार्योपासकानां परप्राप्तिः, किन्तु हिरण्यगर्भेण साकमिति बादरिमतम्, जैमिनिमतं तु विना हिरण्यगर्भापेक्षां स्वत एव परप्राप्तिरित्येव वक्तव्यम्। सर्वथा तु बादरिमतेऽपि परस्य प्राप्यत्वं संमतमेवेति, कथं बादरिमतनिरूपणावसरे परस्यागन्तव्यत्वविवरणं श्रीभाष्यकाराणामुपपद्यते॥ एतावता विवक्षितः सारांशोऽयमेव। यत् गत्युपपत्तेर्मतद्वयमाधारत्वात् "कार्यं बादरिरस्य गत्युपपत्तेरि''ति सूत्रे गत्युपपत्तेः कार्योपासकमात्रनेयत्वे कथं हेतुत्वमिति शंका परिहरणीया श्रीभाष्यमते भवति। अतः सूत्रद्वयेनापि "स एनान् ब्रह्म गमयती''त्यत्र ब्रह्मपदार्थविचार इत्येव सूत्राशयानुगुणं विवरणम्। तत्र च "गत्युपपत्ते"रिति बादरिमते, जैमिनिमते च "मुख्यत्वात्" इति हेतुद्वयेन किं वाऽत्र सूत्रकारैः सिद्धान्ततयाभिमतमिति विचारे—"स

एनान् ब्रह्म गमयती"ति वाक्ये ब्रह्मपदस्य गमयतिपदसमभिव्याहृतस्य गत्युपपत्तियैव भवति तत्परत्वमेव युक्तम्। अत एव गतिमार्गपादेऽस्य वाक्यस्य विचारोऽप्युपपद्यत इत्यादिभावं मनसि निधाय प्राप्यवस्तुनिरूपणपरतया यत् भगवत्पादानां विवरणम्, तदेवात्रापि सूत्रकारहृदयङ्गममिति प्रतिभाति। एवं चा"प्रतीकालम्बनान्नयती"त्यस्य अप्रतीकालम्बनानिति द्वितीयाबहुवचनान्तपदघटितस्य—"स एनान् ब्रह्म गमयती"त्यत्रत्येनान्पदार्थनिर्णायकतयाऽधिकरणान्तरपरत्वमेव स्वरसमवगम्यत इति,—"कार्यं बादरि"रित्यादिसूत्रघटिताधिकरणे सिद्धान्तसूत्रपरतया योजनं श्रीभाष्यकाराणां नोपपन्नमिति प्रतिभाति। एवंच—"प्रतिषेधादिति चेन्ने"ति सूत्रेण विदुषोऽनुत्क्रमणव्यवस्थापनमेव—बादरिमतादौ गत्युपपत्तेर्हेतुत्वादिनिर्देशेनापि गम्यत इति विदुषोऽप्युत्क्रमणादिव्यवस्थापनं श्रीभाष्यकाराणां चिन्त्योपपत्तिकमेव॥

(१२८) तुरीयाध्यायचतुर्थपादार्थसमालोचनोपक्रमः।

एतेन—तुरीयचतुर्थपादोऽपि—व्याख्यातः। अयं हि पादो मुक्तात्मस्वरूपनिरूपणार्थं प्रवृत्त इति सर्वसंमतमिदम्। इदमेवात्रालोचनीयम्—यत् सूत्रकारनिर्दिष्टमुक्तात्मस्वरूपमद्वैत्यभिमतमेव, आहो श्रीभाष्यसंमतमिति॥

(१३०) भाष्यद्वयाभिमतमुक्तात्मस्वरूपनिष्कर्षः।

तत्र श्रीभाष्याभिमतं मुक्तिस्वरूपं कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तस्वाभाविकरूपेणावस्थानम्, ज्ञानानन्दादिगुणानां विकासरूपाविर्भावः, देहादिप्राकृतरूपप्रहाणेन ब्रह्मसमानभावः, स्रष्टृत्वातिरिक्तापहतपाप्मत्वज्ञानोभयरूपताविर्भावरूपप्रहाणेन ब्रह्मसमानभावः, इति। भगवत्पादसंमतं तु अनेकजीववादे भगवद्भावः स्रष्टृत्वसत्यकामत्वज्ञानादिरूपताविर्भावस्य मुक्तिरिति।

(१३१) अद्वैत्यभिमतमुक्तात्मस्वरूप एव सूत्रस्वारस्यम्।

अत्र प्रथममते—"अविभागेन दृष्टत्वादि"ति सूत्रे मुक्तो जीवः परमात्मानं स्वाविभक्तं मन्यत इति विवचितम्, द्वितीयमते परमात्मभावापन्नो मुक्तो जीवो भवतीति। अत्राविभागशब्देन शुद्धचैतन्यभावो विवक्षित उत सविशेषब्रह्मभाव इति संशये, अनेकजीववादेन प्रतिकर्मव्यवस्थापत्तेर्वा

"ब्राह्मेण जैमिनिरुपन्यासादिभ्य" इति सूत्रेण सविशेषब्रह्मभाव एव स इति गम्यते। अत्र च चतुर्थद्वितीयपादगतेन—"अविभागेन वचनादि"त्यनेनैकवाक्यता भवति ॥ श्रीभाष्ये तु तस्मिन् सूत्रे संयोगमात्रविवक्षणाद्भिन्नवाक्यतेति पूर्वमेव विवेचितम् ॥

एतेन—"चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः" "एवमप्युपन्यासात् पूर्वभावाविरोधादि"ति सूत्रद्वयमपि व्याख्यातं भवति। अनेन चिन्मात्ररूपत्वमपि मुक्तात्मनो यत् बोध्यते, तदिदं यावत्सर्वमुक्ति ईश्वरभाव एवेति सिद्धान्ते विरुद्धमिव प्रतीयते; तथापीश्वरभावोऽप्ययं न पारमार्थिकः; अनेकजीववादे सर्वमुक्तौ, एकजीववादे एकमुक्तौ च सोऽपि न मुक्तात्मनः स्वरूपम्, किन्तु निर्गुणब्रह्मभाव एवेति सिद्धान्तात्र किञ्चिदनुपपन्नम् ॥ तथाच "ब्राह्मेण जैमिनिरि"-त्यत्र सत्यकामत्वादिसकलेश्वरधर्माणां मुक्तात्मनि संभवप्रतिपादनमिदमद्वैतसिद्धान्तमेव गमयति। अधिकं चात्रानुसन्धेयं सिद्धान्तलेशसंग्रहतोऽधिगन्तव्यम्। एतदेवाभिप्रेत्य भगवत्पादाः—"एवमप्युपन्यासादि"ति सूत्रे "एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया ब्राह्मस्यैश्वर्यस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यत" इति वदन्ति ॥

(१३२) श्रीभाष्यमते संकल्पादेवेत्यादिसूत्रवैयर्थ्यम्।

अत्र मुक्तेऽपि जीवे व्यवहारापेक्षया ब्राह्मैश्वर्याप्रत्याख्यानवर्णनेन भगवत्पादा मुक्तोऽपि न व्यवहारदशातीत इति सूचनेन चेश्वरभावोऽपि न परमा मुक्तिः, किन्त्ववान्तरमुक्तिरेवेति विशदयन्ति। तथाच श्रीभाष्यमते ब्राह्मैश्वर्यवर्णनेनैव "संकल्पादेव तच्छ्रुतेः" इति सूत्रार्थस्यापि सिद्धत्वादुक्तसूत्रवैयर्थ्यमपि समापतति। एतेन-"अत एव चानन्याधिपतिरि"त्यपि—व्याख्यातम्। अद्वैतमते तु—"संकल्पादेव तच्छ्रुतेरि"त्यस्य सगुणविद्यापरत्वात् न वैयर्थ्यम् ॥ अन्यानि च सर्वाणि सूत्राणि सगुणविद्यापरतयाऽद्वैतिनोऽपि मन्यन्त इति न वैषम्यलेशः ॥

(१३३) उपक्रमोपसंहारस्वारस्येन सूत्राणां सविशेषपरत्वशङ्का।

अत्र केचित् पर्यनुयुञ्जते—यत्—"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" इति सगुणविद्याफलेनैव कुतः सूत्रकारा ब्रह्मविद्यां समापयन्ति, न तु निर्विशेषज्ञानफलेन? अतो ज्ञायते सविशेषब्रह्मपक्षपातिन एव सूत्रकाराः।

अत एव—"जन्माद्यस्य यत" इत्युपक्रमोऽपि सविशेषविषय एव वर्त्तते, न निर्विशेषविषय इति ॥

(१२४) अनावृत्तिसूत्रादीनां संपत्तौ तात्पर्य्येण सूत्राणां निर्विशेषब्रह्मपर्य्यवसानम्।

इदमेवात्रास्माकं प्रतिभाति—यत् फलाध्यायप्रतिपादनीयं मुख्यं प्रयोजनं संपत्तिरेव। तत्र संपत्तिपदार्थमात्रमेव निर्वचनीयम्, नतु तत्र गत्यादाविव किमप्यपरं निर्वचनीयम्। सा च संपत्तिः सूत्रकारेण द्विविधा सूचिताऽस्ति—एकैहैव "भोगेन त्वितरे चपयित्वाऽथ संपद्यते" इति सूत्रेण, यत्र भोगचयमात्रमपेच्यते, न गतिप्रकारः, न वा हिरण्यगर्भलोकप्राप्त्यादिकम्। इमामेव संपत्तिमधिकृत्य "अत्र ब्रह्म समश्नुते" इति वाक्यम्। द्वितीया च—"कार्य्यात्यये तदध्यक्षेण सहातः परमभिध्यानादि"ति, या न जीवस्योत्क्रमणगत्यादिकं विना संभवति। तत्र भोगचयपदार्थे तत्प्रकारविशेषे वा न किमपि निरूपणीयं वर्त्तते इति, गतिप्रकार-चिन्तां द्वितीयपादेन सम्पत्त्युपयोगिनीं समाप्य, "सम्पद्याविर्भावः" इत्यादिना संकल्पादेवेत्येतत्पूर्वतनेन सन्दर्भेण संपत्तिपदार्थविवेचनेनैव शास्त्रार्थे समापितेऽपि हिरण्यगर्भलोकं गतानां जीवानामवान्तरमुक्तिरेका या जीवन्मुक्तिपदाभिधेया याव-त्तल्लोकवासं भवति, तत्र मुख्यमुक्तित्वभ्रमनिवारणार्थं "जगद्व्यापारवर्ज्ज"मि"ति कस्याश्चन न्यूनताया उपक्षेपो न पुनस्संसरणनिमित्तमिति सूचनार्थमनावृत्तिपद-प्रयोगः। एवं च हिरण्यगर्भलोकं गतानां जीवन्मुक्तिरित्येव सूत्रकारहृदयम्। तथाच तदनन्तरं तेषां न पुनरावृत्तिः किन्तु संपत्तिरेवेति सूचनमवश्यकर्त्तव्यमिति "अनावृत्तिः शब्दादि"त्युपसंहारः॥ अयं भावः—यथा लोकान्तरे शरीरग्रहणमेव प्रारब्धफलम्, न तथा हिरण्यगर्भलोके; तत्र संकल्पविशेषेण सद्भोगप्राप्तेरिति सत्यपि विशेषे, तद्भोगोऽपि "भोगेन त्वितरे चपयित्वे"त्यत्र भोगपदेन क्षपणीयतया गृह्यत इति सूचनार्थं "जगद्व्यापारवर्ज्जमि"त्यधिकरणेनोपसंहारः। अत्रानावृत्तिः शब्दादिति सूत्रेण—प्रारब्धपुण्यपापसमनन्तरमिवात्रापि संपत्तिमर्थसिद्धां सूचयन्ति। तथाच जगद्व्यापारवर्ज्जमीश्वरभावपर्य्यन्तं सर्वं त्याज्यकोटिप्रविष्टम्; तत्सहितेश्वरभावः, निर्गुणब्रह्मभाव एव वा मुख्या मुक्तिरिति बोधनमेव सूत्रकाराणामभिमतम्। तथाच निरतिशयपरिपूर्णत्वं जगत्कारणत्वपर्य्यन्तं प्राप्तव्यमिति सूचनार्थमेव "जन्माद्यस्य यत" इत्यप्युपक्रम इति सर्वमनवद्यम्॥

(१२५) सूत्राणामुपक्रमोपसंहारैकरूप्यमद्वैतमत एव ।

अयमत्र सारांशः—यत् बादरायणाचार्याः—सगुणवाक्यानि निर्गुणवाक्यानि च सर्वाणि प्रमाणानि मन्वाना यथायोगं सर्वेषां विषयविवेचनार्थं प्रवृत्ता अपि, सत्यपि निर्गुणवाक्यविचारजन्यापरोक्षसाक्षात्कारे, अनेकजीववादे ईश्वरभाव एव मुक्तिरिति सूचनार्थं "जन्माद्यस्य यत" इत्युपक्रम्य सर्वेषां तत्रैव वेदवाक्यानां पर्यवसानमपि स्थापयित्वा, कारणत्वसत्यकामत्वादीनि बहूनि ब्रह्मासाधारणलिङ्गानि जीवव्यावृत्तानि तत्र तत्रोपस्थाप्य च, निकृष्टतायां जगद्व्यापारवर्जतत्तद्धर्मवत्त्वमेव निमित्तमिति जगद्व्यापारवर्जमित्यन्तिमेनाधिकरणेन "अनावृत्तिः शब्दादनावृत्तिः शब्दादि"त्यन्तेन विशदयन्त इदमेव मन्यन्ते—यत् जीवस्य जीवतानिमित्तं जगत्कारणत्वाभावमपोह्य स्वरूपाविर्भावाख्यमोक्षप्रतिपादनार्थमिदं शास्त्रं प्रवृत्तमिति ॥ अत्र पूर्वोक्तप्रकारेण श्रीभाष्यसिद्धान्ते तात्पर्याभावादद्वैतपक्षपात्येव स्वीयं शास्त्रम् । तथाच—"अथातो ब्रह्मजिज्ञासे"त्यत्र ब्रह्मलोकान्तवैराग्यमधिकारितावच्छेदकमिति बोधनमेवैवमुपसंहारेण सूच्यते इति, अथात इत्यत्र प्रथमपदेनोपक्रान्तमन्तिमाधिकरणेनाप्युपसंक्षिप्यत इति सर्वमनवद्यम् ॥

(१२६) तैत्तरीयोपनिषदोपक्रमस्य श्रीभाष्यमतेऽस्वारस्यम्, अद्वैतमत एव स्वारस्यं च ।

सूत्रकारा हि—"अथातो ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" इति तैत्तिरीयवाक्यमेव प्रधानतया विचारणीयं मन्वाना जीवब्रह्माभेदमेवाशेरत इत्यकामेनाप्यूरीकर्तव्यम् । नहि वैकुण्ठनिवासिनो लक्ष्मीपतेः परिज्ञानार्थं शरीरात्मत्वाद्यनुसन्धानस्योपायता दृष्टविधया संभवति ; शरीराद्युपाधिसंवलनेन रूपान्तरेण ज्ञायमानमात्मस्वरूपं हि शरीराद्युपाधिपरित्याजनेन सुष्ठु विज्ञातं भवतीति "अन्योऽन्तर आत्मा" "अन्योऽन्तर आत्मे"त्युपदेशो हि ज्ञेयं ब्रह्म प्रत्यगात्मानं चैकं सूचयतीति तैत्तिरीयोपनिषदेव संग्रहात्मके प्राथमिके, एव"मानन्दमयोऽभ्यासादि"ति विस्तरात्मके ब्रह्मविचारेऽप्युपक्रमणं सूत्रकाराणामद्वैतसिद्धान्तपक्षपातं नितरामेव गमयति ॥

(१२७) अद्वैतदर्शनस्यैव सर्वादरणीयता ।

इदमेवात्र वयमन्ते निवेदयामः—यत् अद्वैतचर्चा हि सम्यगालोच्यमाना सर्वेष्वाचार्येषु सर्वेष्ववतारेषु सर्वासु मूर्तिषु च यथारुचि भक्त्यतिशयं जायमानं

न विरुणद्धि, मतान्तरचर्चा तु सम्यगालोच्यमाना न केवलं साधारणेषु जनेषु, किन्तु पूर्वाचार्येषु सर्वास्वाराध्यदेवतासु च कलङ्कादिकल्पनेन विद्रोहबुद्धिं जनयतीति युक्तमुक्तमद्वैतदर्शनमेव सर्वेषु दर्शनेषु दर्शनोत्तमं दर्शनमिति।

(१२८) मतान्तरावलम्बिनामद्वैतमतोपालम्भनस्यानुक्तोपालम्भनत्वम्।

अद्वैतसिद्धान्तस्य चास्यातिप्रसन्नगम्भीरस्यान्यथाऽन्यथाग्रहणेन प्रच्छन्नबौद्धमतमिति, मायावादिमतमिति, प्रपञ्चासत्त्ववादिमतमिति वा यथेच्छमेव सर्व एव निन्दन्तीति सत्यमिदमतिदुःखास्पदम्। अत्र च निदानमिदमेव—यदद्वैतप्रक्रियाणां सर्वासामपरिज्ञानम्। श्रीभाष्यकारा हि—महासिद्धान्तनिरूपणावसरे—अहं जानामीत्यनुभवमात्मनो ज्ञानरूपत्वविरोधिनं प्रतिपादयन्तः, ज्ञानमुत्पन्नमित्याद्यनुभवं तन्नित्यत्वसिद्धान्तविरुद्धं प्रतिपादयन्तः ज्ञानस्वरूपे चैतन्येऽज्ञानविरोधित्वेनाज्ञानाश्रयत्वानुपपत्तिं प्रदर्शयन्तश्चानुक्तोपालंभनमेव विशेषत आतन्वते। अद्वैतमते हि जानामीत्यत्र ज्ञानमुत्पन्नमित्यादौ च वृत्तेरेवात्मतादात्म्यसमुत्पत्त्यादिकमूरीक्रियते, नतु मुख्यज्ञानस्य चैतन्यपदाभिधेयस्य॥ एतेन—अज्ञानविरोधित्वमपि—व्याख्यातम्। वृत्तिरेव ह्यज्ञानविरोधिनी, न तु स्वरूपचैतन्यमिति ह्यद्वैतमतप्रक्रिया। एवं स्वाप्निकस्य ज्ञानस्य कारणत्वे—

"अर्थेनैव विशेषो हि निराकारतया धियाम्॥"

इति वचनानुसारेणार्थस्यापि तस्य कारणत्वस्योरीकर्तव्यत्वेनासत्यार्थेन सत्यप्रतीतिर्लोकसिद्धेति ह्यद्वैतप्रक्रिया। एतेनाहमर्थानात्मतावादोऽपि व्याख्यातः। अत्राहमर्थविनाशे मुक्तौ प्रवृत्तिरेव न स्यादिति श्रीभाष्ये यद्विविच्यते, तदिदं ब्राह्मणोऽहं स्वर्गी स्यामितीच्छया शरीरधर्मब्राह्मण्यादिविनाशेऽपि स्वर्गार्थिनः प्रवृत्तेरिव मोक्षार्थिनोऽप्यहमर्थविनाशेऽपि प्रवृत्तेः संभवाच्चिन्त्योपपत्तिकम्। अधिकमस्मदीयाद्वैतदीपिकातोऽवगन्तव्यम्।

(१२९) अद्वैतसिद्धान्तपरिज्ञानार्थं सिद्धान्तलेशसंग्रहसमालोचनावश्यकता।

सिद्धान्तलेशसंग्रहस्य वेदान्तपरिभाषायाश्च सम्बन्धविशेषः प्रतिविषयमन्याद्दशो वर्तते। सारांशोऽयमेव—यत् सर्वेऽपि सिद्धान्तलेशसंगृहीता विषयाः परिभाषायामपि प्रायेणानूदिताः। इयान् विशेषः—यत् बहुषु विशेषेषु सिद्धान्तलेशसंग्रहकाराः श्रीवाचस्पतिमतमनुवर्तन्ते परिभाषाकारास्तु विवरणमतमिति।

(१४०) श्रवणविधिविचारः॥

तत्र प्रथमो विषयः प्रतिपाद्यो विधिवादः सिद्धान्तलेशसंग्रहस्य। तत्र—

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते॥"

इति वचनानुसार्यपूर्वनियमपरिसंख्याविधिलक्षणानि, नियमपरिसंख्ययोरितरव्यावृत्तिफलकत्वाविशेषेऽपि नियमविधौ परिशेषात् परिसंख्यायां तु तात्पर्यत इतरनिवृत्तेर्भानमित्ययोगव्यवच्छेदे नियमविधिरन्ययोगव्यवच्छेदे तु परिसंख्याविधिरिति विशेषं च निष्कृष्य—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यत्रापूर्वविधिरेवेति केषांचन पक्षमादावुपाक्षिपन् दीक्षितवर्याः।

(१४१) अपूर्वविधिपक्षः।

तदिदमपूर्वविधिपक्षानुसारिणां मतम्—यत् शब्दो हि न केवलं परोक्षज्ञानजननस्वभावोऽपरोक्षसाक्षात्कारसाधनमिति न लोकतः कुतोऽप्यधिगतमिदम्, प्रत्युत कृतेऽपि श्रवणे नास्मदादीनां साक्षात्कारः, विनापि तु श्रवणं वामदेवस्य गर्भस्थस्यापि—"तद्धैतत्पश्यन् ऋषिर्वामदेवोऽहं मनुरभवं सूर्यश्च" इत्यादिरूपेणात्मसाक्षात्कारस्य दृश्यत इत्यन्वयव्यतिरेकव्यभिचारोऽपि विद्यते। श्रवणम्, साक्षात्कारसाधनम्, श्रवणत्वात् षड्जादिस्वरश्रवणवत्; इत्यनुमानं तु कर्मकाण्डश्रवणे व्यभिचरितं नात्र प्रयोजकम्। अत आत्मसाक्षात्कारोद्देशेन श्रवणविधिरयमपूर्वविधिरेव। अत्रानुकूलं भगवत्पादवाक्यं "सहकार्यन्तरविधि" रिति सूत्रगतमिदमेव—यत् "विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः; अपूर्वत्वात्" इति। अत्र हि बाल्यपाण्डित्यशब्दिते श्रवणेऽप्यपूर्वत्वादित्यपूर्वविधिः स्पष्टमेव भाष्यकारैरुल्लिखित इति श्रवणापूर्वविधित्वपक्ष एव भाष्यकाराभिमत इति।

(१४२) नियमविधिपक्षः।

द्वितीयं तु मतं विवरणानुसारिणां श्रवणे नियमविधिरेव, नापूर्वविधिरिति। अयमेतेषामाशयः—यद्यपि श्रवणं साक्षात्कारसाधनमिति न सामान्यतो लोकतोऽवगम्यते; तथापि प्रत्यक्षयोग्यवस्तुश्रवणस्य स्वविषयापरोक्षसाक्षात्कारनिश्चयसाधनत्वं नाप्राप्तम्। तथाच—वेदान्तश्रवणम्, अपरोक्षसाक्षात्कारहेतुः, तद्योग्य-

वस्तुश्रवणत्वात्, षड्जादिस्वरश्रवणवत् इत्यनुमानमेव तत्प्रापकम्। अन्वय-व्यतिरेकव्यभिचारी तु पूर्वोक्तो नात्र प्रसरतः ; यतः कारणापौष्कल्येनास्मदादीनां कृतेऽपि श्रवणे नात्मसाक्षात्कारः, वामदेवादीनां तु जन्मान्तरीयश्रवणादिकल्पनेनैव गर्भस्थानामिवात्मसाक्षात्कारः, सति चैवं वेदान्तश्रवणमिव "मनसैवानुद्रष्टव्यम्" इति वचनात् मनोऽप्यात्मसाक्षात्कारसाधनतया प्राप्नोतीति तन्मुख्यसाधनत्व-व्यवच्छेदेन श्रवणादिमात्रनियमार्थं "आत्मा वारे द्रष्टव्यः श्रोतव्यः" इति श्रवण-विधिरिति प्रकृते नियमविधिरेव समाश्रयणीयः, नापूर्वविधिः। "दर्शनपर्यवसा-नानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलनिर्वृत्त्यर्थानि" इत्यावृत्त्यधिकरणगतं भाष्यमत्र पक्षेऽनुगुणम्। अत्र श्रवणादीनां दृष्टार्थत्वस्यावघातदृष्टान्तेनोपक्षेपादिदमवगम्यते—यत् दृष्टार्थत्वं नियमविधिलक्षणमिति विधिरसायनग्रन्थात् नियमविधिरेव श्रवणे भाष्यकारा-भिमत इति। एतन्मते—सहकार्यन्तरविधिसूत्रगतमपूर्वत्वादिति पदं पाक्षिका-प्राप्तिपरम्। भाष्यद्वयमध्ये च स्पष्टं श्रवणनियमविधित्वपक्षस्योल्लेखात् द्वितीय-भाष्यानुसारिण्येव व्यवस्था सांप्रतमवलम्बितुमिति मनोनिवर्तनेन नियमविधि-पक्षसंग्रहः।

(१४३) भ्रमप्राप्तभेदज्ञानादिव्यावर्तनेन नियमविधिपक्षाः।

सहकारिकारणतयापि मनोऽपेक्षासत्त्वे तद्व्यावर्तनेन नियमविध्ययोगात् केचन मन्यन्ते—"जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति वाक्येन भ्रान्तिप्राप्तभेदज्ञानसाधनत्वव्यावर्तनेन नियमनमेव योग्यमिति। अन्येतु भ्रान्तिप्राप्तिप्रयुक्ताप्राप्तांशपूरकत्वेन नियमविधानेऽस्वारस्यात् स्वप्रयत्नसाध्यविचार-व्यावर्तनेन, भाषाप्रबन्धानामितिहासपुराणादीनां व्यावर्तनेन वा नियमविधिरिति मन्वते। विवरणानुसारिणस्तु—प्रकृते सहकारिविशेषसहकारेण भावनाप्रचय-सहकारेण वा शब्दस्यापरोक्षज्ञानजनकत्वं स्वत एव वेति मतभेदमप्युपक्षिपन्ति। अत्र शाब्दापरोक्षज्ञानपक्षविरोधिनः—द्रष्टव्यपदेनापरोक्षकल्पनिर्विचिकित्सपरोक्ष-ज्ञानमेवोद्दिश्यतया समर्प्यत इति परोक्षज्ञानसाधननियमविधिमत्र केचन वदन्ति। अत्र सहकारिकारणतया श्रवणेतरव्यावर्तनेन श्रवणविधिरित्येकः पक्षः ; न्यायविचारात्मकचेतोवृत्तिविशेषस्य श्रवणस्याप्रमाणत्वात् 'तस्य'

प्रमासाधनत्वासंभवात् द्रष्टव्य इति केवलं स्तावकमेवेति तात्पर्यभ्रमनिरास एवा-ख्याहृतोऽत्रोद्देश्य इत्यपरः पक्षश्च संगृहीताः। अत्रान्तिमेतरपक्षाः सर्वेऽपि विवरणानुसारिणामन्तिमस्तु संक्षेपशारीरकानुसारिणामिति सिद्धान्तलेशसंग्रह एव व्यक्तम्।

(१४४) परिसंख्याविधिपक्षः।

तृतीयं मतमत्र परिसंख्याविधिरिति। वेदान्तश्रवणवदन्यस्यापि पूर्वोक्ते-ष्वन्यतमस्य सर्वेषां वा समुच्चयेन प्राप्तौ वेदान्तश्रवणेतरव्यवर्तनतात्पर्यस्यैवात्र विवक्षितत्वात्। "तमेवैकं जानथ। अन्या वाचो विमुञ्चथ" इत्युपनिषद्वाक्यं तद्भाष्याणि चात्रावष्टंभः। समुच्चयेनेतरसाधनप्राप्ताविव परिसंख्याविधिरिति नायं नियमः; निदिध्यासने हि साधनेतरस्य व्यापारान्तरस्य व्यावर्तनेन यथा नियमविधानमेवमत्राप्यसाधनव्यापारान्तरस्य प्राप्तस्य व्यावर्तनतात्पर्येणापि परिसंख्यासंभवादिति वार्तिकानुसारिणो मन्यन्ते।

(१४५) अविधिपक्षः।

वाचस्पतिमिश्रास्तु—समन्वयसूत्रगतज्ञानविधिनिराकरणपरभाष्यावलम्बनेन ज्ञानरूपस्य श्रवणस्य विधिरेव न युक्तः; विचारस्तु तात्पर्यभ्रमनिरासार्थं इति लोकसिद्धमिति न तदुद्देशेनापूर्वविधिः। गुरूपसदनाङ्गके हि विचारे क्रियमाणे स्वप्रयत्नसाध्यविचारादीनामवसर एव नास्तीति न नियमविधिरपि। साधनान्तर-प्राप्तिभ्रमेण तद्व्यावर्तनेन नियमविधिर्न क्वापि दृष्टचरः। सन्यासविधिनैव व्यापारान्तरोपरमविधानात् न परिसंख्याविधेरपि संभवः। एतेन—भाषा-प्रबन्धादिव्यावर्तनेन नियमविधिपक्षोऽपि—व्याख्यातः। "स्वाध्यायोऽध्येतव्यः" इति वेदाध्ययनविधिनैव सिद्धा तद्वैयर्थ्यात्। सति चैवं श्रवणे नापूर्वविधिर्नवा नियमविधिः, नापि वा परिसंख्याविधिः, किन्त्वविधित्वपक्ष एवात्रोरीकरणीय इत्याशेरत इति सिद्धान्तलेशसंग्रहगतविधिवादसंग्रहः।

(१४६) श्रवणविधिविषये परिभाषाकारमतसंग्रहः।

अत्र परिभाषाकाराः प्रयोजनपरिच्छेदे (Page 345) शाब्दापरोक्षवादो मानसापरोक्षवाद इति प्रधानं वादद्वयमेव सर्वेषामितेषां पक्षाणां मूलमिति प्रस्थानद्वयस्यापि फलतोऽविरोधात् न तत्तदवान्तरपक्षभेदानामत्र निर्देशं

समाद्रियन्ते। विवरणानुयायिषु शब्दस्य सहकारिकारणता, मनस एव प्राधान्यमिति पक्षोऽपि वर्तत इति भामतीप्रस्थाने सर्वेषां विवरणानुयायिनां नात्यन्तविरोधः। परिभाषाकारास्तु—सिद्धान्तलेशसंग्रहमवष्टभ्यैव मतविशेषाणां संग्राहका अपि सिद्धान्तलेशसंग्रहकारा इव न तथा भामतीप्रस्थानं समाद्रियन्ते। ततश्च सिद्धान्तलेशसंग्रहेऽविधिपक्षस्यैव भामत्यभिमतस्योपसंहार उपक्षिप्तेऽपि परिभाषाकाराः श्रवणविधानपक्षमेव विवरणाभिमतं संगृह्णन्ति—"श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रवणमनननिदिध्यासनानां विधानात्" (Page 35) इत्यादि वदन्तः। अत्र श्रवणादीनां मानसक्रियात्वपक्षस्यैव संग्रहणात्, अपरोक्षज्ञानस्यैव साध्यत्वपक्षाश्रवणात्, "तत्त्वमस्यादिवाक्यात्" (Page 345) इति सर्वं वाक्यं सावधारणमिति न्यायेन नियमावधारणाच्च भामत्यभिमतश्रवणादिज्ञानरूपत्वपक्षः संक्षेपशारीरकाभिमतनियमविधिपक्षो वा न परिभाषाकारसम्मत इति स्पष्टमिदमवगम्यते। यद्यपि परिभाषाकाराः—"मनननिदिध्यासनसंस्कृतादन्तःकरणादित्यपरे" इति भामत्यभिमताविधिपक्षमप्युपक्षिपन्ति; तथापि प्रत्यक्षपरिच्छेदे मनइन्द्रियत्वादिनिरासपूर्वकं शाब्दापरोक्षवाद आगमपरिच्छेदेऽप्यादरातिशयं मन्यन्त इति नेदं दुरपह्नवं तत्त्वम्। इदमत्रालोचनीयम्—यत् विवरणाचार्यमते—"कथं तर्ह्यात्मावाऽरे द्रष्टव्य इत्यादीनि विधिच्छायापन्नानि वचनानि? स्वाभाविकविषयाभिमुखप्रवृत्तिविमुखीकरणार्थानीति ब्रूमः" इति भाष्यं श्रवणादिविधिनिराकरणपरमुपपद्यत इति। इदमत्र प्रतिविधानम्—यत् उक्तभाष्यं फलरूपदर्शनांशविधिनिराकरणपरमेव, न तु श्रवणादिसाधनविधिनिरासपरमिति।

(१४७) ब्रह्मलक्षणविचारः।

सिद्धान्तलेशसंग्रहे—विचार्यस्य ब्रह्मणो जगज्जन्मादित्रितयकारणत्वं लक्षणमिति न युक्तम्; "अत्ता चराचरग्रहणात्" इत्यत्र संहर्तृत्वमात्रं हि ब्रह्मलिङ्गमुपन्यस्तमन्यथाऽसङ्गतं स्यात्। अत्र प्रत्येकलक्षणत्वमेवोचितमिति कौमुदीकारमतम्, प्रत्येकलक्षणत्वे च केवलनिमित्तत्वं केवलमुपादानत्वं वा स्यात्. नत्वभिन्ननिमित्तोपादानत्वमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहकमिति तदर्थं त्रितयकारणत्वमेव युक्तम्; तत्र च कार्यविषमसत्ताककारणत्वरूपविवर्तोपादानत्वमेव युक्तमित्यन्येषां मतमिति मतद्वयमुपक्षिप्तम्।

(१४८) ब्रह्मलक्षणत्वपक्षेषु परिभाषाकारमतम्।

परिभाषाकारा अपि विषयपरिच्छेदे प्रथमतो जन्मादिप्रत्येकलक्षणत्वमभिधाय—(Page 284) "यद्वा निखिलजगदुपादानत्वमि"ति पक्षान्तरमप्युपक्षिपन्ति। अत्र विवरणभामतीप्रस्थानयोरुभयोरपि समसमादरपात्रत्वात् न विशेषलेशोऽपि समालोचनीयः।

(१४९) ब्रह्मकारणत्वविचारः।

तत्तूपादानत्वं शुद्धचैतन्यगतमुतेश्वरगतमिति विचारप्रसङ्गेन सिद्धान्तलेशसंग्रहकारा एवं संगृह्णन्ति। तद्यथाः—शुद्धचैतन्यमेवोपादानम्; तस्यैव लक्ष्यस्य जिज्ञास्यतया जिज्ञासासूत्रे प्रतिज्ञानादिति संक्षेपशारीरकमतम्; "अन्तस्तद्धर्मोपदेशात्" "सर्वत्र प्रसिद्धोपदेशात्" "अत्ता चराचरग्रहणात्" इत्यादिषु सगुणब्रह्मलिङ्गतयैव जगत्कारणत्वादीनामुल्लेखात् मायोपहितमीश्वरचैतन्यमेवोपादानकारणमिति विवरणमतम्; वियदादिप्रपञ्चं प्रतीश्वरोऽन्तःकरणादिकं प्रति तु जीव उपादानकारणमिति केषांचन मतम्; जाग्रत्प्रपञ्चं प्रतीश्वरः, स्वप्नप्रपञ्चं तु प्रति जीव उपादानकारणमितीतरेषां मतम्; तत्र जीवकारणत्वपक्षा मायाविद्याभेदपक्षमाश्रित्यैव प्रवृत्ता इति।

(१५०) ब्रह्मकारणत्वपक्षेषु परिभाषाकारमतम्।

परिभाषाकाराः पुनः ये खलु प्रत्यक्षपरिच्छेदे मायाऽविद्ययोरभेदपक्षमेव समाद्रियन्ते, तेन जीवकारणत्वपक्षेषु दृष्टिमपि क्षिपन्ति। शुद्धचैतन्यकारणत्वपक्षः संक्षेपशारीरकानुसारिणाम्, ईश्वरकारणत्वपक्षो विवरणानुसारिणां च परिभाषाकारैरपि विषयपरिच्छेदे स्पष्टमेव समादृतः। तत्र प्रथमं शुद्धचैतन्योपादानत्वपक्षमेव परिभाषाकारा अपि—एतादृशमुपादानत्वमभिप्रेत्यैव "इदं सर्वं यदयमात्मा" इत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्योपदेशः" (Page 280) इति वाक्येनोपक्षिपन्ति। ईश्वरकारणत्वपक्षं तु—"अथ जगतो जन्मक्रमो निरूप्यते। तत्र सर्गाद्यकाले परमेश्वर" इत्युपक्रमात् जन्मक्रमनिरूपणव्याजेन सूचयन्ति। परमार्थतस्तु—सिद्धान्तलेशसंग्रह एवेश्वरोपादानत्वपक्षस्य शुद्धचैतन्योपादानत्वपक्षस्य च फलतो न विशेषः—यतः ईश्वरोपादानत्वेऽपि तस्य तटस्थलक्षणत्वात् न जिज्ञास्यब्रह्मलक्षणानुपपत्तिरित्यभिप्रयन्तीति नात्रादरानादरसूचनं परिभाषाकारा युक्तं

मन्यन्ते। यदातु—जगज्जन्मादिकारणत्वं तटस्थलक्षणं नवविधमिव निखिल-जगदुपादानत्वमपि स्वरूपलक्षणं परिभाषायामुक्तमालोच्यते, तदा नात्र संशयलेश-स्याप्यवसरः—यत् परिभाषाकाराः पक्षद्वयमपि परिभाषायां सूचयन्तीति।

(१५१) मायाकारणत्वपक्षसंग्रहः।

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपामि"ति कुत्रचन माया प्रपञ्चोपादानकारणमवगम्यते, कुत्रचन "यतो वा इमानि भूतनि जायन्ते" इत्यादौ ब्रह्म तादृशमवगम्यते, तथा कुत्रचित् "स कारणं कारणाधिपाधिप" इति ब्रह्मण एव कारणत्वं न मायायाः, क्वचन तु ब्रह्म निर्गुणं वस्तुगत्याऽकारणमिति गम्यते। सर्वमिदं कथमुपपद्यत इति शङ्कावारणार्थं सिद्धान्तलेशसंग्रहे मायाकारणताविचारः प्रस्तुतः। तत्र माया परिणाम्युपादानम्, ब्रह्म विवर्तोपादानम्। उभयसाधारण-मुपादानत्वं स्वात्मनि कार्यजनिहेतुत्वम्, स्वाभिन्नकार्यजनकत्वं वा। सन् घटः जडो घट इति चाभेदानुभव उभयोपादानत्वमपि गमयति। "तदनन्यत्वमारम्भण-शब्दादिभ्यः" इति सूत्रे "अनन्यत्वं व्यतिरेकेणाभावः, न खल्वनन्यत्वमित्यभेदं ब्रूमः" इति ब्रह्मणा साकं प्रपञ्चस्याभेदनिषेधः ब्रह्मसमसत्ताकाभेदपरः, नतु प्रातिभासिका-भेदपर इति पदार्थतत्त्वनिर्णयकारमतम्, ब्रह्मण एव कूटस्थस्य मायाद्वारकमुपा-दानत्वं नतु मायाया इति संक्षेपशारीरकमतम्; जीवाश्रिताविद्याविषयस्य ब्रह्मण एवोपादानत्वम्, अविद्यायास्तु निमित्तत्वमात्रमिति भामतीमतम्; मायाशक्ति-रेवोपादानकारणम्, ब्रह्म तूपचारादेव तत्,

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते॥"

इति वार्तिकानुसारिसिद्धान्तमुक्तावलीकारमतं च संगृहीतानि।

(१५२) मायाकारणत्वविषये परिभाषाकारमतम्।

अत्र पदार्थतत्त्वनिर्णयकारमतमेव विवरणानुसारीति परिभाषाकारा अपि तदेव मतमुपक्षिपन्ति—"प्रपञ्चविभ्रमाधिष्ठानत्वरूपस्य तस्येष्टत्वात्"; तथा प्रपञ्चस्य परिणाम्युपादानं माया, न ब्रह्मेति सिद्धान्तः" (Page 259) इति निरूपयन्तः। अत्र ब्रह्मपरिणामितावादनिरासो वस्तुगतिमनुसृत्य, "भोक्त्रा-पत्तेरविभागश्चेत् स्याल्लोकवत्" इति सूत्रे तु भगवत्पादाः कृत्वाचिन्तयैव

ब्रह्मपरिणामवादं समर्थयन्ति। अत एवात्र मतचतुष्टयस्यैव ब्रह्मपरिणामवादस्य कथमनुपन्यास इति शङ्कापि परास्ता। शुद्धब्रह्मपरिणामवादो हि श्रीभास्करमते श्रीवल्लभमते वा वर्त्तते, नाद्वैतमते। अत एव तत्खण्डनमेव परिभाषाकारा मन्यन्ते—"न ब्रह्मेति सिद्धान्त" इति। अत्र ब्रह्म परिणाम्युपादानमिति न सिद्धान्तः, न वा वस्तुगतिरिति वर्णनेन परिभाषाकारा अनुपदोक्तं सर्वमर्थं सूचयन्ति। "घटस्सन्" इत्यादिः सद्रूपेण घटादिप्रतीतिः सद्रूपब्रह्मपरिणामित्वे लिङ्गमिति "तत्तु समन्वयादि"ति सूत्रे श्रीवल्लभाचार्या वदन्ति। परन्त्विदमत्रालोचनीयम्—शुक्तिरूप्याणां मायापरिणामत्वेन तदभ्युपगतानां ब्रह्मापरिणामिनां च मिथ्याभूतानामपि सद्रूपेणान्वयात् कथं सद्रूपेणान्वयो ब्रह्मपरिणामतालिङ्गमिति ? सत्यं "श्रुतेस्तु शब्दमूलत्वादि"ति यथाश्रुति वाक्यार्थो वर्णनीयः। परन्तु इदमेवात्र पृच्छ्यते—यत् ब्रह्मविवर्त्तोपादानत्वमेव न कथं श्रौतमिति ? लोकविरोधो हि मतद्वयेऽपि हि समानः। इयान् विशेषः—यत् सत्तादात्म्येन सदन्वयः सर्वत्राद्वैतमते एकरूपो भवति न मतान्तरे।

१५२ जीवेश्वरस्वरूपविचारः, तत्र परिभाषार्थसमालोचनं च।

जीवेश्वरस्वरूपविचारस्तु स्पष्टमेव सिद्धान्तलेशसंग्रहनिर्दिष्टानां पक्षाणामनुवादपूर्वकं परिभाषाव्याख्यायाम्—"जीवो नामान्तःकरणावच्छिन्नचैतन्यम्" (Page 96) इति परिभाषावाक्यव्याख्यावसर उपक्षिप्तो नात्र पुनरपि संगृह्यते, केवलं पञ्चदश्यन्तर्गतचित्रदीपप्रकरणोपक्षिप्तः—देहद्वयावच्छिन्नं कूटस्थचैतन्यं बिम्बम्, अन्तःकरणविशिष्टतत्प्रतिबिम्बचैतन्यं जीवः, शुद्धचैतन्यं बिम्बम्, तत्तद्धीवासनोपरक्ताविद्याप्रतिबिम्बचैतन्यं जीवः ; कूटस्थो घटाकाशतुल्यः, जीवो घटगतजलाकाशतुल्यः ; शुद्धचैतन्यं महाकाशस्थानीयम्, ईश्वरो मेघान्तर्गततुषारप्रतिबिम्बरूपमेघाकाशतुल्यः। तत्राहं ब्रह्मास्मीति बाधायामेव सामानाधिकरण्यम्, जीवस्य बाध्यस्वरूपत्वात् नामेद इति पक्षः, दृग्दृश्यविवेकसमुद्धृतः पारमार्थिकव्यावहारिक—प्रातिभासिकजीवभेदपक्षः, ब्रह्मानन्दग्रन्थगतः विश्व-तैजस प्राज्ञादिभेदश्च न तत्र प्रसङ्गाभावात् संगृहीताः। प्रत्यक्षपरिच्छेदे—"अन्तःकरणावच्छिन्नं चैतन्यं जीव इति भामत्यभिमतमवच्छेदवादमेव परिभाषाकाराः यदि ते विवरणपक्षपातिनः, तर्हि कथं निर्दिशन्तीति शङ्का सत्यमत्र सावसरा ; तथापि नीरूपस्य

कथं प्रतिबिम्बनम्? कथं च प्रतिबिम्बवादेऽन्तर्यामित्वमित्यादिशङ्कानिरासपूर्वकं विषयपरिच्छेदे त्वंपदार्थविवेचनप्रसङ्गेन स्वप्रकरणे जीवेश्वरयोः चैतन्यप्रतिबिम्बत्वपक्षस्यैव समुल्लेखात् न चिरकालस्थायिनो सेति न कुत्रापि परिभाषाकाराणां विवरणपक्षपातित्वविघातः।

(१५४) जीवैकत्वानेकत्वविचारः।

जीवैकत्वानेकत्वविचारे सिद्धान्तलेशसंग्रहकाराः प्रथमं जीवैकत्वपक्षांस्त्रीन् संगृह्णन्ति। तत्र जीव एक एव तस्यैकमेव शरीरम्, अन्ये जीवाः सशरीराः स्वप्नदृष्टजीववत् कल्पिता एव। बद्धमुक्तव्यवस्थापि नास्त्येव। शुकादिमुक्तिरपि स्वप्नदृष्टजीवमुक्तितुल्येत्येकशरीरैकजीववाद एकः। जीवस्य स्रष्टृत्वायोगात् जीवातिरिक्तस्येश्वरस्य स्रष्टृत्वं श्रुतप्रमाणसिद्धत्वात् ब्रह्मप्रतिबिम्बः प्रथमो जीवो हिरण्यगर्भाख्य एव मुख्यो जीवः। अन्ये तु तत्प्रतिबिम्बभूता जीवाभासाः संसारादिभाज इत्यनेकशरीरैकजीववादोऽपरः। इतरस्तु हिरण्यगर्भस्य प्रतिकल्पं भेदात् कल्पान्तरादिनिर्वाहार्थं सर्वशरीरव्यापिजीवोऽपर एवेति वादः। शरीरभेदात्तु नात्र परस्परसुखानुसन्धानम्; असति योगादिमहिमनि शरीरभेदे सुखानुसन्धानादर्शनात् इति। अनन्तरं च बद्धमुक्तव्यवस्थाव्यवस्थार्थमनेकजीववादे जीवविचारप्रकरणोक्तान् मतभेदान् सूचयित्वा मुक्तिस्वरूपविषये तत्त्वज्ञानेनाज्ञानस्य लेशतो नाशः, अन्तःकरणादिनाशः, अज्ञानस्य जीवसम्बन्धनाशः, जीवभेदेन भिन्नानामज्ञानानां स्वरूपत एव नाशो वा मुक्तिरिति पक्षा अपि प्रसङ्गतः संगृहीताः। सर्वेष्वेतेषु पक्षेष्वनेकजीववादे ईश्वरभाव एव मुक्तिरिति पर्यवसानं सिद्धान्तलेशसङ्ग्रहकाराः प्रयोजनपरिच्छेदे सूचयिष्यन्ति।

(१५५) जीवानेकत्वपक्षस्यैव परिभाषामतत्वम्।

परिभाषाकारा अपि तु सर्वानिमान् पक्षान् एकमुक्तौ सर्वमुक्तिशङ्कानिराकरणप्रसङ्गेन प्रयोजनपरिच्छेदे सूचयन्तीति तत्प्रकरणे सर्व एव सिद्धान्तलेशसंग्रहसंगृहीताः पक्षाः व्याख्यायां निष्कृष्य प्रायेण प्रदर्शिताः। नात्र मात्रयापि सिद्धान्तलेशसंग्रहकाराणां परिभाषाकाराणां च मतभेदः; यतोऽनेकजीववादे सगुणेश्वरभावरूपमुक्तिव्यवस्थापनेनैवोभयोरपि पर्यवसानमिति स्पष्टं ग्रन्थद्वयपठनेन ज्ञायते।

(१५६) ब्रह्मकर्तृत्वविचारः।

कर्तृत्वं ब्रह्मणः कार्यानुकूलज्ञानचिकीर्षाकृतिमत्त्वम्, कार्यानुकूलज्ञानवत्त्वमात्रम्, कार्यानुकूलस्रष्टव्यालोचनरूपज्ञानवत्त्वमिति पक्षत्रये सिद्धान्तलेशसङ्ग्रहोक्ते प्रथमं पक्षं विषयपरिच्छेदे परिभाषाकाराः शब्दत एव निर्दिशन्ति। "निखिलप्रपञ्चं बुद्धावाकलय्य" (Page 290) इति सृष्टिप्रक्रियानिरूपणप्रकरणगतवाक्येन तु कार्यानुकूलस्रष्टव्यालोचनरूपज्ञानवत्त्वमपि कर्तृत्वं स्वाभिमतं सूचयन्त्येव। "स्वाप्निका गजादयः साक्षान्मायापरिणामाः, अन्तःकरणद्वारा तत्परिणामा इत्यन्ये" (Page 128) इति प्रत्यक्षपरिच्छेदेऽन्तःकरणोपहितचैतन्याधिष्ठानत्वपक्षस्याप्युल्लेखात् जीवकारणत्वपक्षोऽप्युल्लिखितप्राय एवेति मध्यमपक्षमपि न परिभाषाकारा नोपक्षिपन्ति। तत्र प्रथमपक्षे ज्ञानानुकूलं ज्ञानं स्वरूपमेवेति नानवस्थादोष इति सिद्धान्तलेशसङ्ग्रह एव व्यक्तम्।

(१५७) ब्रह्मसर्वज्ञत्वविचारः।

ब्रह्मसर्वज्ञत्वं तु ब्रह्मणोऽन्तःकरणाभावेऽपि मायापरिणामवृत्तिसंभवात् नानुपपन्नमिति प्रकटार्थकारा मन्यन्ते। वाचस्पतिमिश्रानुसारिणस्तु स्वरूपज्ञानेनैव सर्वज्ञत्वम्, नतु मायापरिणामद्वारा तत्कर्तृत्वेन ; अत एव वाक्यान्वयाधिकरणे ज्ञातृत्वं जीवलिङ्गमिति वाचस्पतिमिश्रोक्तिरिति मन्वते। अत्र विवरणाभिमतमपि मतं प्रकटार्थकारमतमेवेति परिभाषाकारा अपि मायापरिणामद्वारा सर्वज्ञत्वमिति पक्षमेव समाद्रियन्ते। अत एव परिभाषायाम्—"नामरूपात्मकं निखिलप्रपञ्चं बुद्धावाकलय्येदं करिष्यामीति संकल्पयति" (Page 290) इति मायिकपरिणामेनैव सर्वज्ञत्वमीश्वरस्योपक्षिप्तम्। सूक्ष्मप्रपञ्चवासनाविशिष्टाविद्योपाधिकत्वेन वासनासाक्षितया, सूक्ष्मप्रपञ्चात्मना विद्यमानाविद्योपाधिकत्वेन, स्वरूपत एव चैतन्यस्य दृश्यतादात्म्यमात्रेणैव सर्वज्ञत्वमित्यादिपक्षा अपि न तिरस्कारमर्हन्ति। अत्रान्तिमः पक्षः परिभाषायामनुल्लिखितोऽपि लघुचन्द्रिकादौ सङ्गृहीत एव।

(१५८) जीवप्रकाशे वृत्त्युपयोगः।

जीवस्य स्वरूपचैतन्येनेश्वरवत् विषयप्रकाशोपपत्त्या वृत्तेरन्तःकरणपरिणामायाः को वोपयोग इति शङ्कावारणप्रसङ्गेन सिद्धान्तलेशसङ्ग्रहे त्रेधा

मतानि सङ्गृहीतानि। (१) सम्बन्धार्था (चिदुपरागार्था) वृत्तिः, (२) अभेदाभिव्यक्त्यर्था वृत्तिः, (३) आवरणाभिभवार्था वृत्तिरिति। अत्र चिदुपरागार्थत्वपदेनान्तःकरणसम्बन्धद्वारा विषयचैतन्येन जीवचैतन्यस्य सम्बन्ध एव विवक्ष्यते। अत्र जीवोऽविद्योपाधिक इति पक्ष एवाभिमतः। अभेदाभिव्यक्तिपदेनाप्ययमेवार्थो विवक्ष्यते ; इयान् विशेषः—यत् जीवपरिच्छिन्नत्वमतेनायं पक्ष इति। व्यापकत्वपक्षे हि अविद्योपाधिकस्य जीवस्य स्वत एव विषयसम्बन्धः संयोगरूपो वर्तते चेदपि विषयविषयिभावनियामकप्रमातृचैतन्याभेदो वृत्त्यधीन एव भवतीति न दोषः। अभेदाभिव्यक्तिरियं मतद्वयेऽप्यावरणाभिभवद्वारैवेति त्वन्यदेतत्। एतेन—तृतीयपक्षोऽपि—व्याख्यातः ; आवरणाभिभवमात्रार्थत्वस्यैव तद्रूपत्वात्। एतन्मते शुद्धचैतन्यमेवानावृतं सर्वत्र प्रकाशकमिति सिद्धान्तात् तस्य च विषयेण सम्बन्धस्य स्वतःसिद्धत्वादावरणाभिभवार्थैव वृत्तिरिति निगदव्याख्यातमिदम्। अत्र चिदुपरागोऽभेदाभिव्यक्तिर्वा प्रकाशकब्रह्मचैतन्येनैकीभाव इति सिद्धान्तलेशसङ्ग्रहोक्ते प्रथमे पक्षे प्रकाशकत्वं जीवचैतन्यस्यैव स्वीक्रियते। तच्चैकीभावद्वारकमेवेति। साक्षात् ब्रह्मचैतन्यप्रकाशकत्वेनावरणाभिभवार्थत्वपक्षो विवरणाचार्याणाम् ; यतो"विषयस्य प्रकाशः संविदभेदात्" इति विवरणाचार्या मन्यन्ते।

(१५९) वृत्त्युपयोगपक्षेषु परिभाषार्थसंग्रहः।

अत एव परिभाषाकारा अपि (Page 323) वृत्तिनिर्गमोपयोगगोचरमतभेदनिरूपणप्रकरणे सिद्धान्तलेशसङ्गृहीतं चिदुपरागार्था अभेदाभिव्यक्त्यर्था, आवरणाभिभवार्थेति क्रममपहाय प्रथमत आवरणाभिभवार्था वृत्तिरिति पक्षं तत एव सम्बन्धार्था वृत्तिरिति पक्षं च विवृण्वते। अत्र परिभाषायां मतत्रयेऽपि सिद्धान्तलेशसङ्ग्रहवदुपक्षेप्तव्ये मतद्वयस्यैवोल्लेखोऽपि वस्तुगत्या मतत्रये पर्यवस्यतीति न विरोध इति स्पष्टं व्याख्यायां विवेचितम्।

(१६०) वृत्तिसम्बन्धार्थत्वपक्षः।

तत्र सम्बन्धार्था वृत्तिः, अभेदाभिव्यक्त्यर्था वृत्तिरिति मतद्वयेऽपि सम्बन्धार्थत्वमभेदाभिव्यक्त्यर्थत्वं वा जीवस्य वृत्तिसम्बन्धप्रयुक्तेनैकीभावेन पर्यवस्यतीत्यत्र न विप्रतिपत्तिः, इदमेवात्र विप्रतिपन्नम्—यत् केनाभेदो जीवस्येति ? अत्र सिद्धान्तलेशसङ्ग्रहकाराः—केचिदाहुरित्यादिना विषयावच्छिन्नेन ब्रह्मचैतन्येनाभेदः

इति, अन्येत्वाहुरिति—जीवब्रह्मणोरैकीभावे ब्रह्मणः सर्वज्ञत्वानापत्त्या विषयभागसंसृष्टवृत्तेरग्रभागसमर्पितप्रतिबिम्बब्रह्मचैतन्येन जीवस्यैकीभाव इति, अपरेत्वाहुरित्यादिना—बिम्बचैतन्यस्यैव बिम्बत्वोपलक्षितरूपेण जीवेनैकीभावो न बिम्बत्वविशिष्टेन रूपेण; येन ब्रह्मणोऽसर्वज्ञत्वापत्तिरिति त्रीणि मतानि सङ्गृह्णन्ति। तत्र प्रथमे तृतीये च मते विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वम्, मध्यमे तु अन्तःकरणतद्वृत्तिविषयावच्छिन्नचैतन्यानामभेद इति विशेषोऽपि सिद्धान्तलेशसङ्ग्रहत एव सुसूक्ष्ममवगम्यते।

### (१६१) परिभाषागतवृत्तिसम्बन्धार्थत्वपक्षसंग्रहः।

परिभाषाकारास्तु—प्रत्यक्षपरिच्छेदमारभ्य—अन्तःकरणवृत्ति-विषय-चैतन्यानां त्रयाणामेकत्रोलोभावेनैकीभावमादाय ज्ञानप्रत्यक्षत्वस्य विषयप्रत्यक्षत्वस्य वा निष्कर्षणात् विषयपरिच्छेदेऽपि—"इदानीं परिच्छिन्नत्वपक्षो निरूप्यत इत्यादिना—वृत्तेर्बहिर्देशनिर्गमनाङ्गीकारेण वृत्त्यन्तःकरणविषयाणामेकदेशस्थत्वेनोपधेय-भेदाभावस्योक्तत्वात्" इत्यन्तेनोपसंहाराम्मध्यमं पक्षमेव समाद्रियन्ते। इद-मप्यतोऽवगम्यते—यत् परिभाषाकाराः अन्तःकरणावच्छिन्नो जीव इति जीव परिच्छिन्नत्वपक्षमपि समाद्रियन्ते इति। स्पष्टं च परिभाषायामवच्छेदपक्षे प्रतिबिम्बपक्षे वान्तःकरणोपाधिकत्वपक्षस्यैव प्रत्यक्षविषयपरिच्छेदयोर्वर्णनावात्र बहु समालोचनीयमवशिष्यते॥

### (१६२) वृत्त्यावरणाभिभवार्थत्वपक्षः।

आवरणाभिभवार्था वृत्तिरिति पक्षस्य तु आवरणभिभवमात्रं वृत्तेः प्रयोजन-मित्येवमभिप्रायत्वमेवेति न्यायरत्नावल्यादिषु व्यक्तमिदम्। इदमेव सांप्रतं विचार-णीयम्—यत् कोऽयमावरणाभिभवो नाम? आवरणाभिभवपदेनाज्ञाननाश इति प्रतीयमानार्थग्रहणं हि घटादिज्ञानेनैव मुक्त्यापत्त्या न विचारसहम्।

अत्र सिद्धान्तलेशसङ्ग्रहकाराः—चैतन्यमात्रावारकस्याज्ञानस्यैकदेशेन वृत्त्या नाशः, कटवत्संवेष्टनम्, भीतवदपसरणं वावरणाभिभव इति मतम्; समयान्तरे-ष्यावरणोपपत्त्यर्थं चैतन्यमात्रावारकस्याज्ञानस्य तत्तद्वृत्तिसंसृष्टविषयावच्छिन्न-चैतन्यानावारकत्वम्, जीवाश्रितस्याप्यज्ञानस्याहमनुभवाविरोधित्वेनानावारकत्व-मिति मतम्; चैतन्याश्रितं मूलाज्ञानम्, घटाद्यवच्छिन्नचैतन्याश्रितानि तु तदवस्था-

भूतानि बह्वन्यज्ञानानि, तत्तद्वृत्त्यैकैकाज्ञाननाश इति मतमिति त्रीणि मतानि निर्दिशन्ति। तत्र प्रथममतमज्ञानस्य जीवाश्रयत्वपक्षावलम्बनात् वाचस्पतिमिश्रानुयायिनाम्, अपरे तु विवरणानुयायिनाम्।

(१६३) वृत्त्यावरणाभिभवार्थत्वे परिभाषार्थसंकलनम्।

परिभाषाकारास्तु आवरणाभिभवार्था वृत्तिरिति मतोपपादनावसरे स्पष्टमेव—"घटाद्यवच्छिन्नचैतन्यावारकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम्।" (page 324) इति तृतीयमेव मतमुपक्षिपन्ति। यत्तु सिद्धान्तलेशसङ्ग्रहेऽवस्थारूपस्याज्ञानस्यानादित्वम्, सादित्वमिति पक्षद्वयमुपन्यस्तम्, सत्यं स्पष्टं परिभाषाकाराः किमपि तत्र न वदन्ति। सूक्ष्मदृष्ट्या तु गवेषणे परिभाषाकारा अपि तदनादित्वपक्षं समादरणीयं मन्यन्त इति प्रतिभाति। परिभाषायां हि तत्रैव प्रकरणे—"तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये" इति ग्रन्थेनावस्थाज्ञाननाशमात्रोल्लेखेन ह्येदं सूच्यते—यदवस्थाज्ञानानादित्वपक्ष एव तदभिमत इति।

(१६४) अवस्थाऽज्ञानानादित्वपक्षपरीक्षा। तत्र परिभाषामतं च।

यत्तु—अनादित्वपक्षे प्रथमोत्पन्नेन ज्ञानेन विनिगमनाविरहात् सर्वतदज्ञाननाशः, पाश्चात्यज्ञानानामावरणाभिभावकत्वानापत्तिरिति शङ्कासमाधानव्याजेन सिद्धान्तलेशसङ्ग्रहे—"अत्र केचिदाहु"रित्यादिना "एकज्ञानोदये एकस्यैव प्रागभावस्येवैकस्यैवाज्ञानस्य नाशः, अपरेषां तु सतामपि न विषयावभासप्रतिबन्धकत्वमिति मतम्; "अन्येतु" इत्यादिना सर्वेषां नावारकत्वं सर्वदा, किन्तु एकमेवाज्ञानमावृणोति, तद्विरोधिवृत्त्युपरमेऽज्ञानान्तरमावृणोति, ब्रह्मसाक्षात्कारेत्वनन्तानामनावारकतया स्थितानामज्ञानान्तराणां मूलाज्ञानपरतन्त्रतया मूलाज्ञाननिवृत्त्या निवृत्तिरिति मतम्; "अपरेतु" इत्यादिना अज्ञानानामावारकस्वभावानामनावरणेनावस्थानस्य विरुद्धत्वात्, अनागतातीतानामपि सूक्ष्मरूपेणाज्ञानविषयत्वाविरोधाच्च न पूर्वतनं मतं युक्तम्, किन्तु एकेन वृत्तिज्ञानेनैकस्याज्ञानस्य विनाशः, अन्येषां तु तिरस्कारोऽपसरणं वेति मतमिति मतत्रयमुपक्षिप्तम्। तत्र परिभाषाकाराः—"मूलाविद्यापरतन्त्रमवस्थापदवाच्यम्" (page 324)

इति मूलविद्यापरतन्त्रपदप्रयोगात् मध्यमपक्षमनुसरन्ति। अनेनापि परिभाषाकारा अवस्थाऽज्ञानानादित्वपक्षमेव मन्यन्ते, न तस्यादित्वपक्षमित्यवगच्छामः।

(१६५) धारावाहिकज्ञानप्रमात्वपरीक्षा।

पूर्वोक्तेषु मतेषु तृतीये मतेऽज्ञानान्तराणां तिरस्कारो योऽभिमतः स यावज्ज्ञान-स्थिति तदावरणशक्तिप्रतिबन्ध इति वर्णनानन्तरं सिद्धान्तलेशसङ्ग्रहकाराः—धारा-वाहिकस्थले द्वितीयादिवृत्तीनां वैफल्यमिति शङ्कापरिहारच्छलेन "अत्राहुरि"त्या-दिना वृत्तितिरस्कृतस्याप्यज्ञानस्य वृत्त्युपरमे पुनरावारकत्वमिति पुनरावरणप्रति-बन्धकत्वेन वृत्त्यन्तराणां साफल्यमिति मतम्; द्वितीयादिक्षणविशेषविशिष्टविषया-वारकाज्ञानान्तरविनाशेन द्वितीयादिवृत्तिसाफल्यमिति मतम्; धारावाहिक स्थले न ज्ञानभेद इति मतम्; ज्ञानाभेदेऽपि तदप्रामाण्यस्येष्टत्वात् प्रमाण-वृत्तीनामेवावरणाभिभावकत्वेन द्वितीयादिवैफल्यमिष्टापत्तिग्रस्तमिति मतमिति चत्वारि मतान्युपन्यस्यन्ति।

तेषु द्वितीयतृतीयमतयोः परिभाषायामपि "पूर्वपूर्वज्ञानाविषयतत्तत्क्षण-विशेषविशिष्टविषयत्वेन नाव्याप्तिः; किञ्च धारावाहिकस्थले न ज्ञानभेदः" (Page 22) इति सङ्ग्रहात् विशदव्याख्यातमिदम्—यत् प्रथमचतुर्थे वर्णयित्वा अत्रापि परिभाषाकाराः समाद्रियन्त इति। अत्र चतुर्थं तु मतं सिद्धान्तलेश-सङ्ग्रहकारा अप्यभ्युपगमवादेनैवोपक्षिपन्तीति तत एवावगम्यते।

(१६६) प्रमाणसामान्यलक्षणप्रयोगपरीक्षा।

अपरोक्षवृत्तीनां विषयसन्निकृष्टानामावरणाभिभावकत्वं सत्यं संभवति, परोक्षवृत्तीनां त्वन्तरेवावस्थितानां विषयासम्बद्धानां कथमावरणाभिभावकत्वम्? येन प्रमाणसामान्यस्याज्ञाननिवर्तकत्वनियमोऽपि संभवदुक्तिक इति शङ्का-वारणव्याजेन सिद्धान्तलेशसङ्ग्रहकाराः द्विविधमज्ञानमेकं विषयगतमपरं जीवगतम्। तत्र परोक्षवृत्त्या विषयाज्ञानानिवर्तनेऽपि तत्तद्विषयकजीवगता-ज्ञाननिवर्तनान्न दोषः। अवस्थाऽज्ञानं हि जीवगतमिव विषयगतमप्य निर्वचनीयरजतोत्पत्त्यादिनिर्वाहार्थमूरीकरणीयमिति विवरणमतम्; नयन-पटलमिवाज्ञानं पुरुषाश्रितमेव तु विषयावरणम्, नतु विषयाश्रिमप्यपरम-ज्ञानमङ्गीकरणीयम्: शुक्तिरूप्यादिकमपि पुरुषाश्रिताज्ञानविषयब्रह्मविवर्त एव।

परोक्षवृत्त्या तु पुरुषाश्रितत्वांशनिवृत्तावपि विषयाश्रितत्वावस्थाऽनिवृत्तेः परोक्षतया ज्ञातेऽपि शुक्तितत्त्वे रजतभ्रमोपपत्तिरिति वाचस्पतिमिश्रमतम्; शुक्तिरजताद्यनिर्वचनीयतोपपत्त्यर्थं विषयगतमेवाज्ञानं स्वीकर्तव्यम्, तत्र शुक्त्यावरणस्याज्ञानस्य साक्षात्साक्षिसंसर्गाभावेऽपि तस्य साक्षिविषयमूलाज्ञानेनाभेदात् साक्षिद्वारा शुक्तिमहं न जानामीति व्यपदेशोपपत्तेः, पुरुषाश्रितस्य चैकस्याप्यज्ञानस्यानाख्यानात् परोक्षवृत्तेर्नाज्ञाननिवर्तकत्वम्; "प्रमाणवृत्तानामि"ति धारावाहिकज्ञानप्रमात्वपरीक्षाप्रकरणान्तिमवाक्यगतेन तु पदेनापरोक्षप्रमाणवृत्तीनामेव ग्रहणमिति मतं च सङ्गृह्णते। तत्र प्रथममते शुक्तिरजतादिकमिव तदाकारवृत्तिरप्यज्ञानपरिणाम इति स्वीकार इति शुक्तिरजतादिप्रत्यक्षतादिनिर्वाहः। द्वितीयमते परोक्षवृत्त्या पुरुषाश्रितत्वावस्थानाशः, अपरोक्षवृत्त्या तु तस्याः पुरुषाश्रितत्वविषयाश्रितत्वरूपावस्थाद्वयविनाशः; तृतीयमते तु परोक्षवृत्तेर्न निवर्तकत्वम्, शुक्तिरूप्यादिकं केवलसाक्षिभास्यमिति निष्कर्षः।

परिभाषाकारास्तु—परोक्षस्थलेऽपि वृत्तेरज्ञाननिवर्तकत्वम्, शुक्तिरूप्यादीनामज्ञानकार्यत्वं तदाकारवृत्तिविषयत्वं च। वृत्तिं विना न साक्षिणाऽपि भानमित्यादि वदन्तः प्रथमपक्षमेव मुख्यं मन्यन्ते। एवं मन्वाना अपीमे—"मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्यतया रजतस्य शुक्तित्वज्ञानेनानिवर्त्यतया शुक्तिज्ञानात् निवृत्तिमात्रम्"—(Page 130) इति निर्दिशन्तो न वाचस्पतिसम्मतं द्वितीयमतमपि न परामृशन्ति।

(१६०) साक्षिस्वरूपविचारः।

जीवसाक्षिस्वरूपविचारप्रसङ्गेन सिद्धान्तलेशसङ्ग्रहकाराः—प्रथमं देहद्वयाधिष्ठानभूतं जीवातिरिक्तं स्वावच्छेदकदेहद्वयस्य साक्षादीक्षणेनोदासीनबोधरूपत्वाच्च साक्षिस्वरूपं प्रतिपादयन्ति। अत्र साक्षिप्रकाशितस्य जीवेन स्मरणं साक्षिजीवयोरभेदात् भवति। देहे जीवसाक्ष्युभयसत्त्वे प्रमाणं तु—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती"ति श्रुतिर्मानम्। नाटकदीपेऽप्ययमंशः स्पष्टं प्रतिपादितः। जीवातिरिक्तोऽपि साक्षी न ब्रह्म, किन्त्वस्पष्टजीवेश्वरविभागं चैतन्यमात्रमित्याद्यपि विवेचितमिति प्रथममतसारसङ्ग्रहः। ततः—"साक्षी चेता केवलो निर्गुण" इति श्रुतेः प्रत्यग्रूपं शुद्धं चैतन्यं साक्षिस्वरूपमिति तत्त्वदीपिकाकारमतम्, तत्त्वदीपिकी-

दाहृते "एको देव" इति वाक्ये देवशब्दश्रवणात् ईश्वरस्यैव रूपान्तरमुदासीनं जीवप्रवृत्तिनिवृत्त्योरनुमन्तृ अपरोक्षं कारणत्वादिधर्मानास्पदमज्ञानाद्यवभासकं सुषुप्त्यादौ जीवगताज्ञानमात्राभिव्यञ्जकं प्राज्ञशब्दगम्यमेव साक्षिस्वरूपमिति कौमुदीकारमतम्; जीववत्प्रतीयमानं ब्रह्मचैतन्यमेव साक्षीति तत्त्वशुद्धिकारमतम्; अविद्योपहितं साक्षात् द्रष्टृसङ्गोदासस्वभावं जीवचैतन्यमेव साक्षिस्वरूपम्, "एको देव" इति तु ब्रह्मभावाभिप्रायेणाविरूपम्; "द्वा सुपर्णे"ति श्रुतिस्तु बुद्धिक्षेत्रज्ञपरैवेति पैङ्गिरहस्यब्राह्मणेनैव व्याख्यातमिति केषां च न मतम्; अविद्योपहितरूपेण जीवस्य साक्षित्वे परस्परानुसन्धानापत्त्याऽन्तःकरणोपहितचैतन्यमेव जीवस्वरूपं साक्षीति मतान्तरमिति पञ्चमतानि निर्दिशन्ति स्म।

परिभाषाकारास्त्वन्तिमं पक्षमेवात्रावलम्बन्ते इति प्रायेण सर्वेषामेव तेषां सङ्ग्रहणपूर्वकं व्याख्यायामस्माभिः (Page 96) तमे पृष्ठे विवेचितम्।

(१६८) साक्षिणोऽज्ञानविषयत्वविचारः।

तत्र साक्षिस्वरूपमावृतमेव चन्द्र इव राहोरविद्यादीनां प्रकाशकमिति केचन मन्यन्ते। वस्तुतस्तु अनावृतमेवानन्दादिरूपं साक्षिचैतन्यमज्ञानादिभासकम्। अत संसारदशायामानन्दस्यापि प्रकाशः घट इत्यादिव्यवहारश्चानुपपन्नः। मुक्तिसंसारयोरविशेषापत्तिशङ्का तु नात्रावसरति। अनावृतस्याप्यानन्दस्यान्तःकरणतारतम्येन प्राक्तनसुकृतसंपत्त्यधीनविषयविशेषसंपर्कप्रयुक्तसत्त्वोत्कर्षापकर्षतारतम्येन प्रतिबिम्बतारतम्यात्प्रकाशतारतम्यनिर्वाह इत्येवमद्वैताचार्यैः परिक्रियते। अन्ये तु सदादिरूपेण प्रकाशते, आनन्दरूपेण तु न प्रकाशते। तद्भानार्थं तु वृत्तिरपेक्ष्यते इत्यादिरूपेण शङ्कामिमां परिहरन्ति। सर्वथा तु साक्ष्यंशेऽनावरणान्न वृत्तिरपेक्षेति तु निष्कर्ष इति सिद्धान्तलेशसङ्ग्रहे व्यक्तमिदम्।

तत्र प्रथममावृतमेव चैतन्यं प्रकाशकमिति मतमविद्योपहितं चैतन्यं शुद्धचैतन्यं वा साक्षीति मतेन, द्वितीयं तु अन्तःकरणोपहितं चैतन्यं साक्षीति मतेनेति विशदमिदमवगम्यते—यत् परिभाषाकारा अपि द्वितीयं मतमेव समाद्रियन्ते। द्वितीयेऽपि मते संसारदशायामप्यानन्दप्रकाशापत्तिशङ्कावारणं तु परिभाषाकारा अद्वैताचार्याभिमतमेव समाद्रियन्ते, नान्याभिमतम्। अत एव साक्षिभास्येष्वपि वृत्त्यङ्गीकारः परिभाषाकाराणामुपपद्यते।

(१६९) अहङ्कारानुसन्धानोपपत्तिः, परिभाषामतं च।

अहङ्कारस्य केवलसाक्षिभास्यत्वेऽप्यहङ्कारः स्वसंसृष्टसाक्षिणैव तत्तद्घटाद्याकारपरिणतस्वावच्छिन्नसाक्षिणाऽपि भास्यत इति तेन रूपेण साक्षिणोऽनित्यत्वात् संस्काराधानेनाहङ्करानुसन्धानमित्येकः पक्षः। नहि स्वाकारवृत्त्यवच्छिन्नसाक्षिणैव स्वगोचरवृत्त्याधानमिति नियमः; अन्यथा वृत्तिगोचरवृत्त्यनङ्गीकारेण वृत्तिस्मरणाभावप्रसङ्गादिति तदाशयः। अपरस्तु—अहङ्कारादिगोचराविद्यावृत्त्यङ्गीकारात् सुषुप्ताविव संस्काराधानात् अन्यवृत्तिकालेऽप्यहमाकाराविद्यावृत्त्यङ्गीकारात् "एतावन्तं कालं सुखमहं पश्यन्नेवासमि" त्यनुसन्धानाद्युपपत्तिरिति। तृतीयस्तु पक्षोऽयमेव—यदहमाकाराप्यन्तःकरणवृत्तिरेव, परन्तु न सा प्रमाणपरतन्त्रा, किन्तु पुरुषतन्त्रक्रियारूपैव। अहमर्थप्रत्यभिज्ञानं तु अहमंशे यद्यपि न ज्ञानम्; तत्तांशे तु संस्कारजन्यत्वात् ज्ञानमिति न दोषः। अंशभेदेन परोक्षत्वापरोक्षत्वयोरिव ज्ञानत्वाज्ञानत्वयोरप्युपपत्तिरिति। अथ-मवान्तिमः पक्षः—यत् अहमाकाराऽप्यन्तःकरणवृत्तिर्ज्ञानमेवेति। मनस एवान्तरिन्द्रियस्य करणत्वान्न पूर्वोक्तो दोष इति चत्वारः पक्षाः सिद्धान्तलेशसङ्ग्रहे संगृहीताः॥

परिभाषाकारास्तु—"अहमाकारान्तःकरणवृत्तिरङ्गीकृता" (Page 72) इति वदन्तोऽहमाकारान्तःकरणवृत्तिपक्षं स्वीकुर्वाणा अपि तदिन्द्रियत्वस्यानङ्गीकारात् तृतीयं पक्षमेव समाद्रियन्त इति प्रतिभाति, न तुरीयं पक्षम्; यस्यान्तःकरणेन्द्रियत्वाभ्युपगमेन प्रवृत्तिरिति सिद्धान्तलेशसङ्ग्रहत एवाधिगम्यते। सति चैवं प्रत्यभिज्ञानमनुभवात्मकं प्रमाणज्ञानमिति परिभाषाकाराणां मतमिति प्रतिभाति। अत एव सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानस्य स्वरूपमात्रविषयकत्व एव प्रामाण्यमिति परिभाषाकाराणां सिद्धान्तोऽप्युपपद्यते। सति चैवं बाह्यविषयाकारवृत्तीनामेवावरणाभिभावकत्वं पर्यवस्यति।

(१७०) भ्रमस्थले इदमाकारवृत्त्युपयोगः।

इदं रजतमित्यादिभ्रमस्थले इदमाकारवृत्त्या इदमंशाज्ञानं निवर्तते, शुक्तित्वाज्ञानं तु न निवृत्तमिति रजतोत्पत्तिरिदंज्ञानमुभयं चोपपद्यते। अत्रेदमंशोऽध्यासाधारः, शुक्तित्वांशस्त्वधिष्ठानमिति विवेक इत्येकः पक्षः। अपरः पक्षः—इदमंशाज्ञानमेवोपादानम्, इदमाकारवृत्त्या तु तदंशाज्ञानगतावरणशक्तिमात्रं

निवर्तते, विक्षेपशक्तिस्तु तस्यानुवर्तत एवेति पक्षद्वयं सिद्धान्तलेशसंग्रहे प्रथमतः उपक्षिप्तम्। तत्र मतद्वयेऽपि प्रथमतोऽधिष्ठानज्ञानम्, तत इदं रजतमिति भ्रमात्मकम्। तत्रेदमाकारवृत्तिरनुवर्तमाना रजताकारवृत्तिश्चानन्तरमुत्पन्नैकस्यैव चैतन्यस्यावच्छेदिकेति वृत्तिद्वयावच्छिन्नैकज्ञानाङ्गीकारात् भ्रमत्वोपपत्तिः।

(१०१) तत्र कवितार्किकनृसिंहभट्टोपाध्यायमतम्।

पूर्वतनमतद्वयोपक्षेपसमनन्तरं सिद्धान्तलेशसङ्ग्रह उपक्षिप्तं कवितार्किकनृसिंहभट्टोपाध्यायमतन्तु—इदं रजतमित्येकैव वृत्तिः, नत्विदमित्येका, पश्चादिदं-रजतमित्यपरा भ्रमवृत्तिः। इदंरजतोभयविषयैकवृत्त्यवच्छिन्नं ज्ञानमेव हि भ्रमः, न तु सत्यासत्यविषयकवृत्तिद्वयावच्छिन्नं ज्ञानम्, येन प्रथमत इद-मित्यधिष्ठानज्ञानम्, अनन्तरमिदं रजतमिति भ्रम इति कल्पना सावकाशा स्यात्। तर्हि रजताध्यासरूपकार्यानुमेयमुत्तप्रतिबद्धेन्द्रियसंप्रयोगजन्यं त्वया वक्तव्यम्।

(१०२) अधिष्ठानज्ञानस्याध्यासाकारणत्वाद्मिदमाकारवृत्त्यन्तरावश्यकता।

तत्र नाद्यः। तथाहि—अधिष्ठानज्ञानमध्यासं प्रति न कारणम्; दुष्टेन्द्रिय-संप्रयोगमात्रेण भ्रमोत्पत्तिनिर्वाहादधिष्ठानज्ञानकारणताकल्पनाया अनपेक्षित-त्वात्। सत्यं दुष्टेन्द्रियसंप्रयोगाभावेप्यहङ्काराध्यासो दृश्यते; अधिष्ठानज्ञानाभावे-ऽपितु घटाद्यध्यासो दृश्यते। नहि नीरूपं ब्रह्म चाक्षुषप्रत्यक्षगोचरः; आवृतत्वात्। आवृतानावृतसाधारणाधिष्ठानप्रकाशमात्रस्याध्यासकारणत्वं तु शुक्त्यादिसंश-संप्रयोगात् प्रागपि रजतभ्रमप्रसङ्गान्न संभवति। अस्ति हि तदाऽपि शुक्त्यवच्छिन्न-चैतन्यस्यावृतस्य स्वयंप्रकाश इति व्यर्थं इदमाकारवृत्त्यङ्गीकारः।

प्रातिभासिकेतराध्यासेऽधिष्ठानप्रकाशमात्रं कारणम्, प्रातिभासिकाध्यासे त्वभि-व्यक्ताधिष्ठानप्रकाशः कारणमिति कल्पना तु "पीतः शङ्खः" इति प्रातिभासिक भ्रमस्य शङ्खसाक्षात्कारपूर्वकत्वाभावात् न युक्ता। नहि नीरूपं चाक्षुषप्रत्यक्षता-मर्हतीत्यगृहीतशौक्ल्यशङ्खप्रत्यक्षमसम्भवदुक्तिकमेव। यद्यपि निरुपाधिकशुक्ति-रजताद्यध्यास एवाधिष्ठानज्ञानं कारणमिति कल्पनायां नोक्तो दोषः; तथापि सोपाधिकाध्यासेऽधिष्ठानसंप्रयोगः कारणम्, निरुपाधिकाध्यासेऽधिष्ठानज्ञानं कारणमित्यनेककार्यकारणभावकल्पनाया अयोगात् प्रातिभासिकभ्रमसामान्येऽ-धिष्ठानसंप्रयोग एव कारणमिति कल्पनैव युक्तेति न पृथगिदमाकारवृत्तिस्वीकार आवश्यकः।

(१०३) सादृश्यज्ञानविधयाऽधिष्ठानज्ञानस्यावश्यकताशङ्कापरिहारौ।

सादृश्यसापेक्षेऽध्यासे सादृश्यज्ञानविधयाऽधिष्ठानज्ञानं कारणम्; अन्यथेङ्गालादावपि हि रजतादिभ्रमप्रसङ्गः। सादृश्यं हि स्वरूपतो न दोषविधयाऽध्यासकारणम्; सादृश्यभ्रमेण भ्रमाभावप्रसङ्गात्। यथा जलधिसलिलपूरे शिलातलत्वभ्रमः। सादृश्यज्ञानसामग्र्येवाध्यासकारणम्, न सादृश्यज्ञानमिति कल्पना तु तस्या रजताद्यर्थहेतुत्वाभावात् न युक्तेति लाघवात् सादृश्यज्ञानमेव हेतुरध्यास इति वक्तव्यम्। नहि स्वभावविशेष एवेङ्गालादौ रजताद्यनध्यासे कारणमिति कल्पनं सांप्रतम्; कर्त्तनादिघटितपटखण्ड इव पटखण्डमात्रे पुण्डरीकमुकुलादिभ्रमादर्शनेन तदयोगात्। तदयं सारांशः—यत् सादृश्यज्ञानस्य सादृश्यसापेक्षेऽध्यासेऽधिष्ठानज्ञानविधया कारणत्वात् रजताध्यासस्य च सादृश्यसापेक्षत्वादिदमाकारा वृत्तिरध्यासकारणमङ्गीकरणीयैवेति शङ्कातु नात्र प्रसरति। यतः—विशेषदर्शनप्रतिबध्येष्वेवाध्यासेषु सादृश्यज्ञानं कारणमिति वक्तुमुचितम्, नान्यत्र। तत्र च प्रतिबन्धकाभावविधया विशेषदर्शनसामग्र्यभावस्यापि कारणत्वस्यावश्यकत्वात् तेनैव निर्वाहे व्यर्थं सादृश्यज्ञानस्यापि कारणत्वावलम्बनम्। इङ्गालादौ तु नीलत्वादिविशेषदर्शनसामग्रीसत्त्वात् न रजताद्यध्याससंभवः। शुक्तित्वं तु विशेषो मतद्वयेऽपि भ्रमात् पूर्वं न ज्ञातमिति तदवगमप्रतिबन्धकसामग्रीत्वेन दूरत्वादिदोषस्य नीलपृष्ठत्वादिग्राहकसामग्र्यसमवधानस्य च सत्त्वात्, चाकचक्यादिसादृश्यदर्शनस्य शुक्तित्वज्ञानसमकालिकस्य शुक्तित्वज्ञानप्रतिबन्धकत्वायोगाच्च न कथमप्यत्र सादृश्यज्ञानमपेक्ष्यते। भ्रमसामान्ये विशेषदर्शनसामग्र्यसमवहितेन्द्रियसंप्रयोगमात्रस्य हेतुत्वेन निर्वाहात्। करस्पृष्टेऽपि लोहादौ रजतताम्रादिभ्रमो विशेषदर्शनसामग्रीविरहदशायां भवत्येवेति रजताध्यासरूपकार्यानुमेया नेदमाकारा वृत्तिः।

(१०४) अधिष्ठानेन्द्रियसंप्रयोगस्योभयाकारैकवृत्तिजनकत्वेनापि निर्वाहान्नेदमाकारस्वतन्त्रवृत्त्यावश्यकता।

नापीदमर्थसंप्रयोगान्यथानुपपत्त्या भ्रमज्ञानतः पूर्वमिदमाकारवृत्तिरङ्गीकर्त्तुमुचिता। सत्यमप्रतिबद्धेन्द्रियसंप्रयोग इदंविषयकवृत्तिनिमित्तम्। परन्तु न तस्या इदंमात्रविषयकत्वम्; किन्तु रजतेदमुभयविषयकत्वम्; दोषसहकारात्। सत्यमत्र रजतस्य न चक्षुषा संप्रयोगः; तथापि तज्जन्यसाक्षात्कारसमानकालिकोत्पत्तिकत्वात् रजतस्यापि चक्षुर्ग्राह्यत्वव्यपदेशः रजतं

पश्यामीति ; अन्यथाऽध्यासकारणाधिष्ठानज्ञानसमनन्तरभाव्याविद्यकवृत्तिविषयस्यापि रजतस्य परम्परया चक्षुःसंप्रयोगमादाय चाक्षुषत्वे "पीतः शङ्ख" इति ज्ञानस्य पीतिमांशे प्रत्यक्षत्वं न स्यात्। नहि तत्र नीरूपशङ्खग्रहणे चक्षुरपेक्षा। नाप्यध्यस्यमानपीतिमग्रहणमात्रे इति तदप्रत्यक्षत्वमापद्येत। पीतिम्नो नयनदेशगतस्य प्रत्यक्षत्वे तदभिव्यक्तसाक्षिसंसर्गाभावान्न शङ्खचाक्षुषत्वव्यवहार उपपद्येत। शङ्खदेशे तु पीतिमा न सर्वैर्गृह्यत इति न तत्रत्यस्यैव तस्य भानमुचितम्। तथाच शङ्खादिसंप्रयोगमात्रेण शङ्खपीतिमाद्याकारैकैव वृत्तिरित्येव समुचितः पन्थाः। मधुरे तिक्तरसाध्यासे तु त्वगिन्द्रियजन्यवृत्त्यनन्तरं पित्तोपहितरसनेन्द्रियस्य तिक्तरसाकारवृत्त्यन्तरमुदेतीति स्वीकर्तव्यम्। मतान्तरे तु त्वगिन्द्रियजन्यमधुर पदार्थाकारवृत्त्यभिव्यक्तचैतन्ये तिक्तरसाध्यासे परम्परयाऽपि रसनेन्द्रियानपेक्षणात् न तद्भासनत्वोपपत्तिः। तथाच रजतं पश्यामीत्यनुभवोऽपि पीतशङ्खादिप्रत्यक्षस्थल इवाधिष्ठानसंप्रयोगमात्रेणैकस्या एवोभयविषयकवृत्तेरवलम्बनेनैव समर्थनीयः। प्रत्यक्षमात्रे विषयेन्द्रियसंप्रयोगः करणमिति नियमस्तु व्यावहारिकप्रत्यक्षविषयः सत्प्रत्यक्षविषयो वा। सन्निकर्षत्वस्यानुगतस्याभावेन प्रत्यक्षमात्रे विषयेन्द्रियसन्निकर्षः करणमिति नियमे प्रमाणाभावः। चैतन्यावकुण्ठनं विनाऽप्रत्यक्षत्वनिर्वाहात् नासन्निकृष्टस्यैव देशान्तरस्थस्य रजतस्य भ्रमे भानमित्यन्यथाख्यातिरत्रावसर इत्यादि सिद्धान्तलेशसङ्ग्रहे व्यक्तम्। सर्वथा भ्रमस्थले न वृत्तिद्वयम्, किन्त्वेकैवेति सिद्धमिति कविताार्किकन्सिंहभट्टोपाध्यायमतसङ्ग्रहः।

(१७५) रजतस्य वृत्त्यविषयत्वपक्षः।

अन्येतु मन्यन्ते—इदमाकारेदंसंप्रयोगजन्या वृत्तिरेकैव भ्रमस्थले सत्यमूरीकर्तव्या, परन्तु नास्या इन्द्रियासंप्रयुक्तरजतविषयकत्वमपि। विनाऽपि वृत्तिं रजतांशस्याभिव्यक्तसाक्षिचैतन्येनैव भानोपपत्त्या तु रजतप्रत्यक्षत्वनिर्वाहः। चैतन्याभिव्यञ्जनद्वारत्वं चक्षुरिन्द्रियस्यात्र वर्तत इति न दोष इति तदाशयः।

(१७६) भ्रमस्थले वृत्तिद्वयोपयोगः।

केचित्तु—इदमाकाराध्यासकारणमन्तःकरणवृत्तिरधिष्ठानज्ञानरूपैका, द्वितीयात्वविद्यापरिणामा रजताकारेति भ्रमस्थले वृत्तिद्वयमिति मन्यते। एतेषां मते द्वितीया वृत्तिरिदंरजतमित्युभयविषया न रजतमात्रगोचरा।

(१०७) तत्र मतान्तरसंग्रहः।

अन्येतु—रजतस्येदमवच्छेदेनैव रजतज्ञानस्याविद्यापरिणामभूतस्येदं-ज्ञानावच्छेदेनाध्यासात् वृत्तिद्वयस्यापि पृथक् पृथक् विषयः। परस्पराध्यासेन रजतज्ञानस्यापीदंविषयत्वं तु स्वीक्रियते। वृत्तिद्वयावच्छिन्नसाक्षिभानात्तु अधिष्ठानारोप्ययोरेकज्ञानविषयत्वनियमनिर्वाह इति वदन्ति, इत्येवं क्रमेण सिद्धान्तलेशसङ्ग्रहे भ्रमस्थले वृत्तिविशेषपरीक्षोपक्षिप्ता।

(१०८) भ्रमस्थले वृत्तिद्वयादिविषये परिभाषाकारमतम्।

परिभाषाकारास्तु तत्र "पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याकारा च काचिदन्तःकरणवृत्तिरुदेति। ... ... ततश्च शुक्तित्वप्रकारिकाऽविद्या ... रजत-रूपार्थाकारेण तदाकारवृत्त्याकारेण च परिणमते" (page 110) ननु ... ... रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थं इति चेत्"(page 119) इत्यादिविचारणेनानुवर्तमानायामिवेदंवृत्तौ वृत्तिद्वयघटितज्ञानान्तरं भ्रमात्मकमुत्पद्यत इति पक्षमेवावलम्बन्ते। अत एव "ज्ञानद्वयाभ्युपगमे गुरुमतप्रवेशापत्ति-शङ्कातत्परिहारादिकमपि परिभाषागतमुपपद्यते। "पीतः शङ्ख" इत्यादिभ्रमास्तु परिभाषाकारमते संसर्गमात्राध्यासेनान्यथाख्यातिरूपा एवेति न कवितार्किका-पादितशङ्कानामवसरः।

(१०९) वृत्तिनिर्गमोपयोगपक्षषट्कसंग्रहः।

प्रत्यक्षत्वपरोक्षत्वविभागस्य करणविशेषजन्यत्वमादाय निर्वाहात् तत्त-द्विषयकसंस्कारसहकृतसाक्षिप्रसादेन वा निर्वाहात् व्यर्थो बहिर्निर्गमवादो वृत्तेरिति शङ्का सिद्धान्तलेशसङ्ग्रहकारैः षड्भिःप्रकारैः समाहिता। (१) साक्षात्तादात्म्य-रूपसाक्षिसम्बन्धेनैव विषयप्रत्यक्षत्वनिर्वाहात् विना वृत्तिनिर्गमं च तदसंभवात् वृत्तिनिर्गम आवश्यकः। (२) अहङ्कारादिषु साक्षाच्चैतन्यसंसर्गेणैव प्रत्यक्षत्वा-दन्यत्रापि तदेव युक्तमिति तदभिव्यक्तये वृत्तिनिर्गमः। (३) शब्दानुमानाद्यव-गतमाधुर्यात् प्रत्यक्षावगतमाधुर्ये स्पष्टता प्रतीयमाना वृत्तिनिर्गममपेक्षते, विषयावारकाज्ञानस्य तं विना निवृत्त्यसंभवात्; अन्यथा देवदत्तीयघटज्ञानात् यज्ञदत्तस्यापि हि घटज्ञानप्रसङ्गः। यदज्ञानं यं पुरुषं प्रति विषयावारकं

तज्ज्ञानं तदज्ञाननिवर्तकमित्यूरीकरणेऽपि प्रत्यक्षाप्रत्यक्षाविवेकापत्तिस्तदवस्थैव। अत्र ज्ञानस्य प्रत्यक्षत्वविशेषणदानं तु प्रत्यक्षत्वस्य दुर्निरूपत्वान्न संभवतीति पूर्वोक्तातिप्रसङ्गवारणार्थं यदज्ञानं यद्विषयावरणम्, तत् तदीयतत्तद्विषयविषयक-तत्तदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभज्ञाननिवर्त्यमिति वक्तव्यमिति तत्त्वस्य वृत्तिनिर्गमसापेक्षत्वात् वृत्तिनिर्गम आवश्यक एव। (४) विषयगताज्ञानस्य लाघवात् समानाधिकरणतया निवर्तकत्वात् वृत्तिनिर्गम आवश्यकः। बाह्य-प्रकाशस्य बाह्यतमोनिवर्तकत्वं सामानाधिकरण्येन भवतीति तदर्थं वृत्तिनिर्गम आवश्यकः। (५-६) चिदुपरागार्थमभेदाभिव्यक्त्यर्थं वा वृत्तिनिर्गमः।

(१८०) परिभाषाकाराभिमतवृत्तिनिर्गमपक्षः।

सर्वेऽपीमे प्रकाराः परिभाषाकाराणामपि सम्मता एव ; यतः परिभाषायां प्रत्यक्षं न जातिः ; साङ्कर्यादिति, तथा सम्बन्धार्था वृत्तिरित्यादिकं सर्वमुपक्षिप्तम्। स्पष्टतासिद्धिरपि प्रयोजनमर्थसिद्धं सर्वमतान्तरसाधारणमेवेति न तस्य स्वतन्त्र-मतान्तरत्वम्। सर्वथा तु सिद्धान्तलेशे प्रथमपरिच्छेदे सङ्गृहीताः सर्व एव विषयाः परिभाषायामपि सङ्गृहीता इत्यत्र न विवादः। इयान् विशेषः—यत् केचन प्रत्यक्षपरिच्छेदे केचन विषयपरिच्छेदे परिभाषायां निर्दिष्टाः, न सिद्धान्तलेश-क्रमानुसारेणेति सिद्धान्तलेशसङ्ग्रहप्रथमपरिच्छेदार्थसङ्ग्रहः।

(१८१) सन् घट इति प्रत्यक्षाबाधे प्रत्यक्षस्य सन्मात्रावगाहित्वमिति श्रीभाष्यानूदिततत्त्वशुद्धि-कारादिमतषट्कसङ्ग्रहः।

द्वितीयपरिच्छेदे तु सिद्धान्तलेशसङ्ग्रहकाराः—"घटः सन्" इति प्रत्यक्षेण प्रपञ्चमिथ्यात्वश्रुतीनां बाधशङ्कां षड्भिः प्रकारैः समादधते।

(१) इदं रजतमित्यत्रेदमंशस्येन्द्रियसन्निकर्षेण प्रत्यक्षेण ग्रहणेऽपि रजत-स्याविद्यकस्य साक्षिमात्रवेद्यत्वेऽपि, आविद्यकवृत्तिविषयत्वेऽपि वा प्रत्यक्षत्व-व्यवहारात् सद्रूपब्रह्ममात्रस्य प्रत्यक्षत्वादावपि घटादीनां भ्रान्त्याऽवभास इति कल्पनैव युक्ता। सत्यं रजतवत् घटस्य न बाधोऽनुभूयते ; ज्ञानमात्रस्य भेदविषयकत्वनियमात्, भेदस्य च प्रतियोग्युपलम्भनियतोपलम्भविषयस्यासन्निकृष्टानां बहूनां प्रतियोगिनां सत्त्वात् प्रतियोगिविशिष्टस्य प्रत्यक्षासंभवात् न प्रत्यक्षभान-योग्यता घटादेर्ब्रह्मव्यतिरिक्तस्य। ब्रह्म तु सर्वविवर्तोपादानत्वात् तद्व्यतिरेकेण

चेतरस्याभावात् न भिन्नतया प्रतीयत इति न तत्रापि पर्यनुयोगावसरः। प्रतियोगिवैशिष्ट्यांशेऽनुमानमपि न संभवति ; तस्यापि भेदविषयकत्वावश्यकत्वेनानवस्थानात्, आत्माश्रयाद्वा। सर्वथा न घटादिप्रत्यक्षमिति सन् घट इति प्रत्यक्षेण तत्सत्त्वस्याग्रहणात् न तेनागमस्य विरोध इति तत्त्वशुद्धिकाराः।

अयमेव पक्षः श्रीभाष्यकारैर्विशदमनूद्य निरसनार्थमुपक्षिप्तः। यत्तु एतन्मतनिरासप्रसङ्गेन श्रीभाष्यकाराः—सन्मात्रविषयत्वे घटपटादिविलक्षणबुद्ध्यनुपपत्तिः, सन्मात्रस्य नीरूपस्याप्रत्यक्षत्वापत्तिश्चेति दूषणमपरिहरणीयं मन्यन्ते, तत्र किमपि दूषणं घटादीनामाविद्यकानां तत्त्वशुद्धिकारैरभ्युपगमात् सर्पज्ञानेनाविद्यकत्वाविशेषेऽपि रजताज्ञानात् तदर्थाप्रवृत्तिवदत्राप्यख्यार्थिनो मञ्चिपज्ञानेन प्रवृत्त्यदर्शनोपपत्तेः, प्रतिनियतग्राह्यचाक्षुषतायामेव रूपापेक्षणात्सर्वेन्द्रियग्राह्ये "न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इति वचनात् सर्वप्रत्ययगम्ये वा ब्रह्मणि विनाऽपि रूपं प्रत्यक्षोपपत्तेश्च नात्रावसरति।

(२) न्यायसुधाकृतो वदन्ति—'सन् घटः' इति प्रत्ययेन घटादावधिष्ठानभूतब्रह्मसत्तानुवेध एव विवक्ष्यते, नतु स्वनिष्ठसत्तावबोधः। नीलो घट इति ज्ञाने तु घटे नैल्यानुवेधप्रत्ययो नाधिष्ठाननैल्यानुवेधप्रयुक्तः ; नैल्यस्य ब्रह्मधर्मत्वाभावात्। तदुक्तम्—'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्''—इति, किन्तु स्वधर्मताप्रयुक्त एवेति।

(३) संक्षेपशारीरककृतस्त्वाहुः—"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर इति वचनात्" चैतन्यमेवाज्ञानाश्रयः, न घटादिकमिति न तदंशे ज्ञानमात्रस्य प्रामाण्यम्। अतो न घटादिविषयं प्रत्यक्षमेकमपि समस्तीति न प्रत्यक्षेणागमबाधशङ्काऽप्यवकाशते इति।

(४) केचित्तु—सन् घट इत्यादौ भासमानं सत्त्वं न ब्रह्मणः, किन्तु घटादेरेव। तच्च नाबाध्यत्वरूपम्, किन्तु सत्ताजात्यर्थक्रियाकारित्वादिभिः ध्यात्वाविरोधिरूपमेव। यतः कालत्रयेऽप्यबाध्यत्वं न घटादिषु केनापि प्रत्ययेन बाध्येषु बोधयितुं शक्यम्। प्रत्यक्षस्य वर्तमानमात्रार्थावगाहित्वात्तु सन् घट इति प्रत्यक्षं प्रत्यक्षकालिकमेव सत्त्वं गोचरयितुं शक्नोति, नतु सार्वदिकमिति वदन्ति।

(५) अन्ये तु मन्यते—अबाध्यत्वरूपमेव तु सत्त्वं सन् घट इति प्रत्यक्षावसेयम्। परन्तु तत् व्यवहारकालमात्राबाध्यत्वमेव, नतु त्रैकालिकाबाध्यत्वम्। सत्त्वद्वैविध्ये प्रमाणं तु—"प्राणा वै सत्यम्, तेषामेव सत्यमि"ति श्रुतिरेव। अत्र ह्युत्कर्षापकर्ष-विशिष्टं सत्यत्वं बोधितं नान्यथा नेतुं शक्यमिति।

(६) प्रत्यक्षस्य संभाव्यमानदोषस्य पूर्वस्य च निर्दोषेण परेण चागमेनात्य-न्तिकबाध एव युक्तः। अपच्छेदन्यायस्य सावकाशविषयत्वमिति त्वसति बाधे। अत एव—प्रथमतः उद्गात्रपच्छेदेऽनन्तरं प्रतिहर्त्रपच्छेदे चोद्गात्रपच्छेदप्रयुक्तस्य प्रायश्चित्तस्यात्यन्तिकबाध एव। दृष्टा हि बहुषु स्थलेषु प्रत्यक्षबाधेनागमस्य प्रवृत्तिः—"पृथिव्यामेव तं विद्यादपो वायुं च संश्रितमित्यादौ"इत्यपरे व्याचक्षते॥

अत्र प्रथममते घटादीनामनिर्वचनीयप्रातिभासिकत्वमिति दृष्टिसृष्टिवादः, द्वितीयमते घटादिस्वरूपं न प्रातिभासिकम्, एवमपि न स्वरूपतः सत्त्वं तेषामिति प्रतिकर्मव्यवस्था; इदमेव मतं गृहीत्वा स्वरूपेण त्रैकालिकनिषेधस्तेषाम्। तृतीयमतं तु प्रथममतस्यैव प्रकारान्तरम्, चतुर्थं च द्वितीयमतस्यैव। एतेन—षष्ठपक्षोऽपि—व्याख्यातः। प्रथममत एव तस्याप्यन्तर्भावात्। पञ्चमं तु मतं सत्तात्रैविध्यमतेन। तथाच मतत्रयमत्र विचारणीयं वर्तते।

### (१८२) सन् घट इति प्रत्यक्षाबाधपक्षेषु परिभाषाभिमतपक्षसंग्रहः।

अत्र परिभाषाकाराः—"नच घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षबाधः; अधिष्ठानब्रह्मसत्तायास्तत्र विषयतया घटादेः सत्यत्वासिद्धेः" (page 168) इति वदन्तः प्रथमतृतीयषष्ठपक्षान् द्वितीयचतुर्थपक्षौ च समाद्रियन्ते। अत्र "घटादेः सत्यत्वासिद्धे"रित्यस्याबाध्यत्वासिद्धेरित्यर्थविवक्षायां द्वितीयचतुर्थपक्षपरिग्रहः; मिथ्यात्वादित्यर्थविवक्षायामपरे पक्षा इति विवेकः। पञ्चमपक्षस्तु "यद्वा त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिकम्" (page 170) इत्यादि-वाक्यैर्विशदमेवोपक्षिप्यते। विषयपरिच्छेदे—"प्रामाण्यं द्विविधं व्यावहारिकत-त्त्वावेदकत्वम्, पारमार्थिकतत्त्वावेदकत्वमि"ति (page 276) इति स्वप्रकरणे समादरणात्, प्रत्यक्षपरिच्छेदान्ते—"नहि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः, किन्तु लौकिकपारमार्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रति-योगिताकः (page 131) इति विवेचनाच्च परिभाषाकाराः पञ्चममेव पक्षं

विशेषतः समाद्रियन्त इति प्रतिभाति। युक्तं चैतत्—यत् लौकिकपारमार्थिकत्वेन रजतनिषेधपक्षमिमं विवरणाचार्या एव मन्यन्ते।

(१८०) आगमस्य प्रत्यक्षबाधकत्वे निमित्तद्वयसङ्कलनम्।

सत्यमागमोऽपि प्रत्यक्षाविरोधार्थं "यजमानः प्रस्तरः" "सोमेन यजेत" इत्यादावन्यथा नीयते; तथापि न तात्पर्यविरोधेन श्रुतेरन्यथानयनं क्वापि संभवति। "यजमानः प्रस्तर"इत्यादावपि हि प्रकरणाद्यवगततात्पर्याविरोधार्थमेव लक्षणा स्तुत्यादौ स्वीक्रियते। "तत्त्वमसी"त्यादीनां तूपक्रमोपसंहाराद्यवगताद्वितीयब्रह्मबोधकानां जीवब्रह्मभेदप्रत्यक्षापेक्षया प्रबलत्वमेव स्वीकर्तव्यम्। अनेनैव न्यायेन—"नेह नानास्ति किञ्चन" इत्यादिवाक्यानामपि प्रपञ्चमिथ्यात्वावगाहिनां प्रपञ्चसत्यत्वावसायिप्रत्यक्षबाधकत्वमेव समादरणीयमिति केचित्।

अन्ये तु श्रुतेस्तात्पर्यवत्त्वं न प्राबल्यप्रयोजकम्, किन्तु निर्दोषत्वम्, अपच्छेदन्यायेन प्रत्यक्षाद्यपेक्षया परत्वमेव। श्रुतिबाधितमपि प्रत्यक्षं न सर्वथा निर्विषयम्; व्यावहारिकसत्त्वगोचरत्वेन सार्थक्यादिति—मन्यन्ते। उपक्रमप्राबल्याधिकरणस्य तु यत्रैकवाक्यता तत्रैव प्रवृत्तिर्नेतरत्रेति तदाशय इति सिद्धान्तलेशसङ्ग्रहे व्यक्तम्।

(१८१) आगमस्य प्रत्यक्षबाधकत्वे परिभाषामतसंग्रहः।

परिभाषाकारा अपि सर्वमिदमर्थजातम्—"भेदप्रत्यक्षस्य संभावितकरणदोषस्यासंभावितदोषवेदजन्यज्ञानेन बाध्यमानत्वात्" (page 334) "उपक्रमोपसंहाराद्यवगताद्वैततात्पर्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात्" (page 329) इत्यादिवाक्यैर्विवक्षन्त्येव। अपच्छेदन्यायस्यापि तु "असंभावितदोषवेदजन्यज्ञानस्ये"त्यस्य परस्य चेत्युपलक्षणद्वाराऽत्र सङ्ग्रहात्तु न दोषः।

(१८२) उपजीव्यत्वेन प्रत्यक्षप्राबल्ये मतचतुष्टयपरीक्षा।

उपजीव्यत्वेन प्रत्यक्षप्राबल्यशङ्का तु सिद्धान्तलेशसङ्ग्रहे चतुर्भिः प्रकारैः समाहिता। (१) वृषमानयेति प्रयुक्तं वाक्यं वृषभमानयेति श्रुतवतोऽपि यथार्थप्रत्ययदर्शनात् भ्रमप्रमासाधारणवर्णपदादिज्ञानमेव प्रमाणमिति वर्णानां स्वरूपतोऽबाधेऽपि शाब्दबोधदर्शनात् न प्रत्यक्षं शब्दप्रमाणस्योपजीव्यम्। (२) यावद्ब्रह्मज्ञानमसद्विलक्षणस्वरूपानुपमर्दनेन प्रपञ्चसत्यत्वाङ्गीकारात् ज्ञाननिवर्त्यस्वरूपेण प्रपञ्चानुवृत्तावपि दोषाभावात् ज्ञानबाध्यत्वं प्रपञ्चस्य न विरुद्धम्।

(३) पारमार्थिकत्वनिषेधेन श्रुतिप्रामाण्यम्, कल्पिततद्विषयकत्वेन प्रत्यक्षप्रामाण्यमिति न विरोधः। (४) व्यावहारिकपारमार्थिकादिभेदभिन्नसत्तात्रैविध्यं नोरीक्रियते। घटादिषु सत्तावभासोऽधिष्ठानसत्तानुवेधनिबन्धन एव। शुक्तिरूप्यादिस्थले तु रजतप्रत्यक्षतानिर्वाहार्थमनिर्वचनीयरजताभ्युपगम आवश्यक इति न व्यावहारिकरजततादात्म्यानुवेधेन रजतप्रतीतिनिर्वाह इति। परिभाषाकारा अपि सर्वमिदं स्वाभिमतं मन्यन्त इत्यनुपदमेव प्रत्यक्षपरिच्छेदादिगतवाक्योपपत्तेपेषु विवेचितम्।

(१८३) प्रतिबिम्बसत्यत्वासत्यत्वविचारत्रयपरीक्षा।

(१) बिम्बप्रतिबिम्बयोरभेदात् बिम्बमिव प्रतिबिम्बमपि सत्यमिति विवरणानुसारिणो मन्यन्ते। अत्र च मते दर्पणे मुखं नास्तीति मुखदर्पणयोः संसर्गमात्रं निषेधति, न मुखं न वा दर्पणम्। दर्पणे मम मुखं भातीति हि बिम्बाभिन्नमेव प्रतिबिम्बमनुभवामः। उपाधिप्रतिहतनयनरश्मीनां परावृत्त्य बिम्बग्राहकत्वात् न बिम्बातिरिक्तं प्रतिबिम्बं नाम वस्त्वस्ति, येन तदसत्यत्वशङ्काया अवसर इति तदाशयः (२) अद्वैतविद्याकृतस्तु—प्रतिबिम्बं बिम्बातिरिक्तमसत्यमुपाधिसचिवबिम्बज्ञानकल्प्यमवश्यमङ्गीकर्तव्यम्; बालान्तं तद्भेदबुद्धेरनुभवसिद्धत्वात्। प्रबुद्धानां ममैव मुखमित्यनुसन्धानं तु सादृश्यातिशयनिबन्धनमेव। अत एव तेषां दर्पणे न मुखमिति बाधप्रतीतिरुपपद्यते नेदं रजतमितिवत्। संसर्गमात्रविषयकत्वे ह्यस्य (बाधज्ञानस्य) नेदं रजतमितिज्ञानस्यापि तथात्वापत्त्याऽनिर्वचनीयख्यातिरेव बाधिता स्यात्। ब्रह्मप्रतिबिम्बे च जीवेऽन्तःकरणोपहितत्वं प्रतिबिम्बत्वं स्वरूपचैतन्यत्वमिति रूपत्रयं विद्यत इति प्रतिबिम्बत्वेन रूपान्तरेण व्यावहारिकत्वं पारमार्थिकत्वं वा जीवस्य नापह्नवमर्हतीति न जीवस्य मुक्त्यनन्वयापत्त्यादिकमभिमन्यते। तथाच प्रतिबिम्बासत्यतैव युक्तेति मन्यन्ते। सर्वात्मनाऽधिष्ठानज्ञानानन्तरमपि प्रतिबिम्बाध्यासस्तु विक्षेपशक्त्यंशेनाधिष्ठानाज्ञानस्यानुवर्तमानत्वादुपपद्यत एवेति तदाशयः। (३) अन्येतु—मूलाज्ञानमेव प्रतिबिम्बाध्यासोपादानम्। नचैवं व्यावहारिकत्वम्; आगन्तुकदोषजन्यत्वेन प्रातिभासिकत्वोपपत्तेरिति वदन्तीति सिद्धान्तलेशसङ्ग्रहे त्रयः प्रकारा उपन्यस्ताः।

(१८४) परिभाषाभिमतप्रतिबिम्बासत्यत्वपक्षः।

परिभाषाकारास्तु—"एतन्मते गगनसूर्यस्य जलादौ भासमानप्रतिबिम्बस्य

चैव जीवपरयोर्भेदः (page 320) इति वदन्तः प्रतिबिम्बभेदवादं तन्मिथ्यात्ववादमेव चाभ्युपगच्छन्ति। आगन्तुकदोषजन्यत्वं प्रातिभासिकत्वं मूलाज्ञानकार्याणामपीति वादं तु शुक्तिरजतादिविषये वदतां प्रतिबिम्बविषयत्वस्यापि कल्पने तु तृतीयपक्षमपि न ते न परामृशन्ति। प्रथमस्तु पक्षो विवरणानुसारिणामपि न सम्मत इति नेदं निह्नवमर्हति।

(१८५) स्वप्नपदार्थाधिष्ठानविचारः। स्वाप्निकानां प्रातिभासिकत्वसमीक्षा च।

स्वाप्निकाध्यासाधिष्ठानं मूलाज्ञानविषयः शुद्धचैतन्यम्, अहङ्कारोपहितं चैतन्यं वा। मूलाज्ञानकार्याणां ब्रह्मज्ञानमात्रबाध्यानामपि च स्वाप्निकपदार्थानां निद्रारूपागन्तुकदोषजन्यत्वेन प्रातिभासिकत्वमिति केचन मन्यन्ते। (२) अन्येतु —न केवलमागन्तुकदोषजन्यत्वेन, किन्तु जाग्रत्कालिकतद्बाधज्ञानविषयत्वेनापि प्रातिभासिकत्वम्। अधिष्ठानयाथात्म्यज्ञानस्येव ज्ञानान्तरस्यापि निवर्तकत्वेनादोषादिति—मन्यते। अस्मिन् मते बाधज्ञाननिवर्त्यानामपि प्रातिभासिकत्वम्। (३) अपरेतु जानन्ति—स्वाप्निको द्रष्टा जीवोऽपि कल्पितः प्रातिभासिकाः पदार्थाश्च कल्पिताः। सुषुप्ताख्याज्ञानावस्थाविशेषोपहितचैतन्यमेवाधिष्ठानम्। प्रातिभासिकजीवबाधेऽपि व्यावहारिकजीवस्येव स्वप्नेऽपि भातस्य जाग्रद्दशायाम्—सुखमहमस्वाप्समित्यनुसन्धानात् नानुपपत्तिरिति सिद्धान्तलेशसङ्ग्रहे मतत्रयं विवेचितम्।

(१८६) स्वाप्निकप्रातिभासिकत्वादौ परिभाषामतम्।

परिभाषाकारास्तु—आगन्तुकदोषजन्यत्वेन प्रातिभासिकत्वं जाग्रत्कालिकज्ञानान्तरनिवर्त्यत्वेनापि प्रातिभासिकत्वमिति मतद्वयमपि—"अत एव स्वप्नोपलब्धरथादीनामागन्तुकनिद्रारूपदोषजन्यत्वात् प्रातिभासिकत्वम्" (page 124) इत्यादिना समाद्रियन्ते; तृतीयं तु पक्षं न कुत्राप्युपक्षिपन्ति। एतदभिप्रायेणैव "स्वाप्नगजादयः साक्षान्मायापरिणामाः, अन्तःकरणद्वारा तत्परिणामाः" (page 128) इत्यादिग्रन्थप्रवृत्तिः।

(१८७) स्वाप्निकपदार्थानां कथं भानमित्यादिशङ्का।

अनवच्छिन्नचैतन्याधिष्ठानत्वपक्षे स्वाप्नगजादीनां साक्षिसंसर्गाभावात् कथं भानम्? एवमहङ्कारोपहितचैतन्याधिष्ठानत्वपक्षे कथं नाहं गज इति प्रतीतिरिति शङ्काद्वयमत्र समुदेति।

(१८८) स्वाप्निकपदार्थानां भानोपपत्तिः।

अनवच्छिन्नचैतन्यस्य देहान्तरेव स्वाप्नाध्यासाधिष्ठानत्वात् विना चक्षुरादिकं तत्रान्तःकरणपरिणामसंभवः, जागरण एव हि चक्षुरादिद्वारमन्तःकरणमपेक्षते इति केचित्। (२) अन्येतु—अनवच्छिन्नचैतन्यं वृत्तिमनपेक्ष्य स्वत एव प्रकाशमानमेव स्वाप्नाध्यासाधिष्ठानम्। अध्यासं प्रत्यधिष्ठानप्रकाशमात्रं प्रयोजकम्; नतु चक्षुःसंप्रयोगादिकम्। नह्यन्यथा तन्नियमाङ्गीकारे नभसि नैल्यादिभ्रम उपपद्यते। सत्यं वृत्तिं विनाऽनवच्छिन्नं चैतन्यमावृतमेव भवति; परन्तु नेदमविद्याप्रतिबिम्बजीवचैतन्यविषयम्, किन्तु शुद्धचैतन्यविषयम्। अत्र चानवच्छिन्नचैतन्यपदेन न शुद्धचैतन्यम्, किन्त्वविद्याप्रतिबिम्बचैतन्यमेवेति न दोष इति वदन्ति।

(१८९) अहं गज इति प्रतीत्यापत्तिनिरासः।

द्वितीयशङ्काऽपि सिद्धान्तलेशसङ्ग्रहकारैरेवं समाहिता—यत् यद्यप्यहङ्कारोपहितं चैतन्यमधिष्ठानं स्वाप्नपदार्थानाम्; तथाप्यहङ्कारस्तत्र न विशेषणम्, किन्तूपाधिरेवेति नाहं गज इति प्रतीत्यापत्तिरिति केचित्। अत्र "केचित्तु" इति बिम्बचैतन्याधिष्ठानत्वपक्षोऽप्येक उपक्षिप्त इति त्वन्यदेतत्।

(१९०) स्वाप्निकाधिष्ठानादौ परिभाषाकारमतम्।

एतेषु प्रकारेषु परिभाषाकारा अपि—"चैतन्यस्य स्वयंप्रकाशस्याधिष्ठानत्वात्" (page 127) इति वृत्तिमनपेक्ष्य चैतन्यस्य प्रकाशमानस्याधिष्ठानत्वमिति समाधानप्रकारं सङ्गृह्णत एव। अत्र चैतन्यपदेनानवच्छिन्नचैतन्यमविद्याप्रतिबिम्बचैतन्यमेव वा विवक्षणीयम्। "अहं गज इति प्रतीत्यापादनं तु पूर्ववन्निरसनीयम्" (page 128) इति वदन्तस्ते द्वितीयशङ्कापरिहारमपि सूचयन्त्येव। बिम्बचैतन्याधिष्ठानत्वपक्षस्तु न परिभाषाकारैः संगृहीतः।

(१९१) प्रतिकर्मव्यवस्थापक्षेण स्वाप्निकानां चक्षुर्ग्राह्यत्वोपपत्तिः।

यस्त्वेतच्छङ्कापरिहारसमनन्तरं स्वाप्निकानां चक्षुर्ग्राह्यत्वानुभवः कथमिति शङ्कान्तरमङ्कुरयति, तदेवं सिद्धान्तलेशसंग्रहकाराः प्रतिकर्मव्यवस्थापक्षेण परिहरन्ति—यत् चक्षुरादीनामुपरतत्वात् प्रातिभासिकानामिन्द्रियाणां कल्पनासंभवात् चाक्षुषत्वमपि प्रातिभासिकमिति। अयमेव पक्षः परिभाषायामपि—

"रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकम्" (Page 128) इति वाक्येन निर्दिष्टः।

(१९२) दृष्टिसृष्टिवादेन स्वाप्निकचक्षुर्ग्राह्यत्वोपपत्तिः।

दृष्टिसृष्टिवादेन तु दृष्टेः पूर्वं घटाद्यभावेन घटादिदृष्टेश्चक्षुःसन्निकर्षानुविधानायोगेन जाग्रत्कालिकघटादिचाक्षुषत्वानुभवस्यापि चाक्षुषत्वं भ्रान्तिसिद्धमेवेति स्थिते का वा कथा स्वाप्निकानुभवचाक्षुषत्व इति सिद्धान्तलेशसंग्रहे व्यक्तम्। अत्र प्रसङ्गात् दृष्टिसृष्टिवादे जाग्रत्प्रपञ्चकल्पको न निरुपाधिरात्मा, किन्त्वविद्योपहित एव। तत्रापि अविद्याया अपि कल्पितत्वात् पूर्वपूर्वाविद्योपहितस्य कल्पकत्वमित्येकः पक्षः, अपरस्याविद्याया अनादित्वस्यैव स्वीकारात् न तत्र दृष्टिसृष्टिवाद इति पक्षद्वयं संगृहीतम्। तत्र वियदादिसर्गतत्क्रमादिकं श्रुत्यवगतमध्यारोपापवादाभ्यामद्वितीयब्रह्मप्रतिपत्त्यर्थं श्रुतिरेव प्रतिकर्मव्यवस्थापक्ष इव कल्पयति; सृष्ट्यादौ श्रुतीनामतात्पर्यात्। वियत्पादादौ विरोधशङ्कापरिहारादिकं तु न्यायस्वरूपप्रदर्शनार्थमेव। ज्योतिष्टोमादिवाक्यबोधितानुष्ठानात् फलसिद्धिः स्वप्नश्रुतिबोधितानुष्ठानप्रयुक्तसंवादतुल्या। ज्योतिष्टोमादिश्रुतीनां सत्त्वशुद्धिद्वारा ब्रह्मणि तात्पर्यमित्येको दृष्टिसृष्टिवादप्रकारः। अत्र दृष्टिः दृश्यं चोरीक्रियते। अपरस्तु दृष्टिसृष्टिवादः—दृष्टिरेव सृष्टिरिति। अत्र—"ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः। अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः" इति स्मृतिः "चिद्धीदं सर्वमि"ति श्रुतिश्च मूलम्॥

(१९३) दृष्टिसृष्टिवादे परिभाषाकारौदासीन्यम्।

परिभाषाकारास्तु—दृष्टिसृष्टिवादे उदासीना इव प्रतिकर्मव्यवस्थावादेनैव व्यवहरन्ति, यतः प्रतिकर्मव्यवस्थायामपि सृष्ट्यादिवाक्यानां सृष्टौ न तात्पर्यम्, किन्त्वद्वितीये ब्रह्मण्येवेति प्रपञ्चमिथ्यात्ववादादयः सर्वेऽपि सिद्धान्तलेशसंग्रहोपपादिताः परिभाषायामपि "नहि सृष्टिवाक्यानां सृष्टौ तात्पर्यम्" (Page 313) इत्यादिनोपक्षिप्ताः।

(१९४) मिथ्याभूतस्याप्यर्थक्रियाकारित्वे उपपत्तिचयम्।

(१) स्वाप्नवन्मिथ्याभूतानामप्यर्थक्रियाकारित्वम्। इयान् विशेषः—स्वाप्निकाः सर्वे प्रातिभासिकाः, जागरिकास्तु केचन व्यावहारिकाः। (२) प्रातिभासिकस्यापि

स्वाप्रिकाङ्गनासङ्गमादेः सत्यसुखादिजनकत्वमेव वर्तत इति मिथ्याभूतस्य तदधिकसत्ताकार्थक्रियाकारित्वमपि दृष्टमिति न दोषः। (२) कारणस्य कार्यजनकत्वं स्वरूपतः, नतु सत्त्वेन; "पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥" इति वचनादिति।

(१९५) मिथ्याभूतस्याप्यर्थक्रियाकारित्वे परिभाषाकारमतम्।

प्रकारत्रयमपि सप्रश्नं परिभाषायां यद्यपि नोल्लिखितम्; तथाऽपि प्रसङ्गतोऽनुमानपरिच्छेदान्ते आगमपरिच्छेदोपक्रमे चान्तिमं प्रकारद्वयमस्मदीयव्याख्यायां संगृहीतमेव। प्रथमप्रकारानुल्लेखनिमित्तं तु द्वितीयप्रकारप्रदर्शितानुभवविरोध एव।

(१९६) मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चासत्यत्वोपपत्तिः।

(१) धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे धर्मिसमसत्ताकत्वं तन्त्रम्, नतु धर्मस्य पारमार्थिकत्वम्। यथा शुक्तिरजततदभावानां शुक्तिरजताभावयोः समसत्ताकत्वं शुक्तौ रजतस्य सत्यत्वप्रतिक्षेपकम्। ब्रह्मणि तु निष्प्रपञ्चत्वं सप्रपञ्चत्वमुभयं प्रसक्तं न धर्मिसमसत्ताकमिति न तत्रोभयमपि विरुद्धमिति न मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वम्। (२) धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे स्वाश्रयसाक्षात्कारानिवर्त्यत्वं प्रयोजकम्। शुक्तिरजतादिस्थले रजताभावाश्रयशुक्तिसाक्षात्कारानिवर्त्यत्वात् रजतं न रजताभावविरुद्धमिति मिथ्या। ब्रह्मणि तु निष्प्रपञ्चत्वसप्रपञ्चत्वे उभे अपि मिथ्या; निष्प्रपञ्चत्वाश्रयब्रह्मसाक्षात्कारनिवर्त्यत्वात् सप्रपञ्चत्वस्य। अयं भावः—यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवति, तत्रैकतरमिथ्यात्वेऽपरस्य सत्यत्वम्, यत्र तूभयवृत्ति, तत्रोभयमिथ्यात्वम्; यथा स्वप्ने गजतदभावयोरुभयोरपि प्रातिभासिकत्वेन बाध्ययोर्मिथ्यात्वमिति। अयं च विषयः परिभाषायां न कुत्रापि स्पष्टमुपक्षिप्तः, परं त्वनुपलब्धिपरिच्छेदे ध्वंसध्वंसे प्रतियोग्युन्मज्जनप्रसङ्गापरिहारव्याजेन सूचित इति संक्षिप्तरूपेणास्माभिस्तत्र व्याख्यायामुट्टङ्कितः।

(१९७) जीवब्रह्माभेदपरीक्षा।

जीवानामपि चेतनानां वियदादिवन्मिथ्यात्वात्कथं जीवब्रह्माभेदः? इति शङ्का तु सिद्धान्तलेशसंग्रह एवं परिहृता—यत् उपहिताभेदेऽप्युपाधिभेदात्

सुखदुःखादिव्यवस्थोपपत्तेर्न जीवानां परस्परं ब्रह्मणा वा पारमार्थिको भेदः। वेदान्तपरिभाषायां तु भागत्यागलक्षणया जीवब्रह्माभेदनिरूपणमपि विषयपरिच्छेदान्तर्गतमुक्तार्थानुगुणमेव।

(१९८) परमार्थतो जीवैकत्वपक्षे सुखाद्यनुसन्धानव्यवस्थाप्रकाराः, जीवोपाधिनिरूपणं च।

जीवोपाधिरन्तःकरणमेव, यद्भेदेनान्येनानुभूतस्यान्यस्याननुसन्धानमुपपद्यते। सुखादिकमन्तःकरणस्यैव "कामः सङ्कल्पः" इति श्रुत्या धर्म इत्यवगम्यते। चैतन्यस्य संसारित्वादिकं त्वन्तःकरणतादात्म्याध्यासनिबन्धनमेव। एकस्मिन्नेवात्मन्यन्तःकरणानामिव तद्भेदस्याप्यध्यासेन सर्वव्यवस्थोपपत्तिः; (२) "कर्ता शास्त्रार्थवत्त्वात्" इत्यधिकरणानुसारेण चिदाभासस्य व्यावहारिकस्य जीवस्यैव कर्तृत्वात् तस्य चावच्छेदकान्तःकरणभेदेन स्वरूपतो भेदात् व्यवस्था; (३) यद्वा देहेन्द्रियमनांसि सर्वाण्युपाधयः; "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतिः। तथाच देहेन्द्रियादिभेदाद्व्यवस्था; अथवा—एकस्यापि वृक्षस्याग्रमूलाद्युपाधिभेदेन संयोगतदभावाश्रयत्ववदेकस्यापि चैतन्यस्य स्वयं कर्तृत्वेऽपि भिन्नभिन्नान्तःकरणोपाधिभेदात् व्यवस्थोपपत्तिरिति चत्वारः प्रकारा अत्र सिद्धान्तलेशसंग्रहे संगृहीताः।

(१९९) जीवोपाध्यादिविषये परिभाषादृष्टिः।

तत्र परिभाषाकारा अपि—"स्वभावतो निर्गुणस्यैव तस्यान्तःकरणाद्युपाधिककर्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः" (Page 333) इत्यादिना प्रथमं पक्षमेवाभिप्रयन्ति। तत्र स्थूलसूक्ष्मशरीरद्वयं भोगायतनमुपाधिरिति शरीरभेदादननुसन्धानम्; विशिष्टोपाधिभेदोऽननुसन्धानप्रयोजकः, इत्यादिपक्षान्तराण्यपि पूर्वतनपक्षेष्वन्तर्गतान्येव। इयान् विशेषः—यत् अवस्थाज्ञानभेदादननुसन्धानमिति पक्षान्तरमपि सिद्धान्तलेशसंग्रहेऽधिकं संगृहीतम्। यत्तु—"अदृष्टानियमात्" इत्यादिसूत्रैः शरीरभेदेनान्तःकरणभेदेनान्येन वा व्यवस्था न संभवतीति भाष्य उपवर्णितम्, तत् व्यापकस्यैवात्मनः परिच्छिन्नौपाधिकरूपान्तरानङ्गीकारपक्षविषयमेव। तथाचोपाधिभेदनिबन्धनोपहितभेदेन सुखदुःखादिव्यवस्थेत्येव शास्त्रार्थहृदयम्। संमतं चैतत्परिभाषाकाराणामपि—"एतेन—जीवस्याणुत्वं प्रत्युक्तम्" (Page 333) इत्यादि वदताम्। सर्वथातु न लेशतोऽपि परिभाषाकाराः

सिद्धान्तलेशसंगृहीतान् प्रक्रियाविशेषान् परित्यजन्तीति वस्तुस्थितिकथनमिदमिति द्वितीयपरिच्छेदार्थसङ्ग्रहः ।

(२००) कर्मणां विविदिषोपयोगपक्षः ।

ब्रह्मप्राप्तिर्विद्यैकनिबन्धना, न तत्र कर्मापेक्षा । सा तु विविदिषायामेव ब्रह्मविद्योपायभूतायामिति श्रीवाचस्पतिमिश्रा मन्यन्ते । अयमेतेषामाशयः—विद्यासंप्रयोगात् प्रत्यासन्नानि विद्यासाधनानि शमदमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति सर्वापेक्षाधिकरणभाष्यात् विविदिषाया एव प्रत्ययार्थत्वेन प्राधान्येन "तमेतमि"ति वाक्येन विविदिषायामेव यज्ञादीनामुपयोगबोधनाच्च न यज्ञादीनि ब्रह्मविद्यान्तरङ्गसाधनानि, किन्तु विविदिषायामेव तान्युपयुज्यन्ते । तदुपयोगश्च तत्प्रतिबन्धकारुचिनिरसनेन क्षुधाप्रतिबन्धकारुचिविशेषनिरसनेनौषधविधेरिवेति मन्तव्यम् ।

(२०१) कर्मणां विद्योपयोगपक्षः ।

विवरणानुसारिणस्तु—यज्ञादीनां विद्यायामेवेष्यमाणायामुपयोगः, नतु विविदिषायाम् । शाब्दसाधनस्य अश्वेन जिगमिषतीत्यादाविच्छाविषयगमनादावेवान्वयदर्शनेनात्रापि तथैवान्वयो हि योग्यः । तत्र च "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते" इति वचनानुसारेण चित्तप्रवणतापर्यन्तमेव कर्मापेक्षा, नतु तदनन्तरमपि, तदा तु तत्सन्न्यासस्यैवोपयोगः । इयानत्र मतद्वयस्यापि विशेषः—यत् कर्माधीनायां चित्तप्रवणतायां विद्यार्थत्वपक्षे नियमेन विद्यासिद्धिः, विविदिषार्थत्वपक्षे तु न तन्नियम इति मन्यन्ते ।

(२०२) परिभाषाभिमतकर्मोपयोगप्रकारः ।

परिभाषाकारास्तु—तच्च ज्ञानं पापक्षयात् भवति ; स च कर्मानुष्ठानादिति परम्परया कर्मणामुपयोगः । अत एव—"तमेतं वेदानुवचनेन" (page 349) इत्यादि श्रुतिः" इत्यादिवाक्यैः प्रथमपक्षमेव संगृह्णन्तीति प्रतिभाति । वस्तुतस्तु वाचस्पतिमतेऽपि विविदिषापदेन विद्योपधानसमर्थाया एव विविदिषाया ग्रहणात् न कर्मणां परम्परया विद्योत्पत्तावप्यविनियोग इति न फलभेदो मतद्वयेऽपीति परिभाषाकारा अत्र "तच्च ज्ञानं पापक्षयात्, स च कर्मानुष्ठानादिति परम्परये"त्यादिवाक्यैः सूचयन्ति ।

(२०३) कर्मपदेनाश्रमकर्मादीनां ग्रहणविषये मतभेदाः।

(१) अत्र कर्मपदेनाश्रमकर्मणामेव ग्रहणम्; "विहितत्वाच्चाश्रमकर्मापी"ति सूत्रे आश्रमकर्मणामेव विद्यार्थकर्मसु परिगणनादित्येकं मतम्; (२) अपरं मतम्—आश्रमधर्मातिरिक्तानां वर्णधर्मजपविशेषादीनामपि विधुरादिसाधारण्यार्थं विद्यायामुपयोगः, तत्रापि नित्यानामेव पापक्षयफलानामत्र ग्रहणम्, नतु काम्यानाम्; अन्यथा नित्यानां पापक्षयद्वारा काम्यानामन्यथेति कल्पतरुकाराणाम्; (४) संक्षेपशारीरकमतं तु नित्यकाम्यादिसाधारणानां सर्वेषां कर्मणां यज्ञशब्दस्य सर्वसाधारणत्वात् "यज्ञेन दानेने"ति वाक्येन विनियोगः; अन्यथा नित्यानां पापक्षयद्वारा ज्ञानोपयोगस्य स्वत एव सिद्ध्या विनियोगवैयर्थ्यापत्तिः। वस्तुतस्तु नित्यानां पापक्षयमात्रहेतुत्वसिद्धावपि ज्ञानोत्पत्तिप्रतिबन्धकपापक्षयहेतुत्वस्यान्यतोऽसिद्ध्या "यज्ञेन दानेने"ति विनियोग इति वक्तव्यत्वात् काम्यसाधारणत्वेऽपि तत्र यज्ञादिपदस्य न कोऽपि दोष इति। परिभाषाकारास्तु—"सच कर्मानुष्ठानात्" (page 349) इति वाक्ये सामान्यतः कर्मपदप्रयोगादन्तिममेव पक्षं समवलम्बन्त इति प्रतिभाति।

(२०४) त्रैवर्णिकविद्याधिकारपक्षः।

एतेन त्रैवर्णिकाधिकारपक्षोऽपि व्याख्यातः। "तमेतमि"ति वाक्ये हि ब्राह्मणपदं श्रूयमाणमपि नाधिकारिविशेषणम्; उद्देश्यविशेषणत्वायोगात्, "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यादाविव यज्ञादिविधानाभावेन कर्तृविशेषणतायोगाच्च। "तमेतमि"ति वाक्ये ह्यन्यत्र विहितानां यज्ञादीनां फलसम्बन्धमात्रं विधीयते, नतु यज्ञादिकमपि; अतो ब्राह्मणपदं त्रैवर्णिकोपलक्षणम्, शूद्राणां तु विद्यार्थिनामपि न तत्राधिकारः; अध्ययनाद्यनधिकारादिति केचित्। अन्येतु—शूद्रस्यापि सर्ववर्णाधिकारिकपञ्चाक्षरादिजपदानपाकयज्ञादिसंभवात् विधुरादीनामिव विद्याधिकारो भवत्येव; अपशूद्राधिकरणं तु सगुणविद्यायां गुरूपसदनाख्योपनयनसंस्कारविधुरस्य निर्गुणविद्यासाधनवेदान्तश्रवणादिषु च शूद्रस्याधिकारनिषेधपरम्, नत्वितिहासपुराणादिद्वारकनिर्गुणविद्यायामपि तदधिकारनिषेधपरम्; "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इति शूद्रस्यापि पुराणादिश्रवणेऽधिकाराम्नानादिति वदन्ति।

परिभाषाकारास्तु नात्र विषये किमपि सूचयन्त्यपि। वयं तु पश्यामः—शूद्राणामपि पुराणादिश्रवणपूर्वकब्रह्मविद्यायामधिकारो न विरुद्धः। व्यक्तं चैतत् न्यायरक्षामणौ दीक्षितवर्या विवेचयन्त्यपशूद्राधिकरणे।

(२०५) विविदिषायां गृहस्थाद्यधिकारपक्षाः।

केचित् खलु मन्यन्ते कर्मणामिव चित्तशुद्धिद्वारा सन्न्यासस्यापि विद्याया-मुपयोगादसन्न्यासिनां न ब्रह्मविद्याधिकारो गृहस्थादीनामिति। अन्येतु न चित्तशुद्धिद्वारा सन्न्यासस्य, किन्तु शान्तो दान्त इति श्रुतावुपरत इति सन्न्यासस्या-प्यधिकारिविशेषणत्वाम्नानादधिकारिविशेषणतया सन्न्यासस्योपयोग इति मन्यन्ते। अपरेतु श्रवणाङ्गतया सन्न्यासस्य विद्योपयोग इति वदन्ति। अत्र प्रथमपक्षे क्षत्रियाणां गृहस्थानां च विद्यावाप्तिर्जन्मान्तरीयसन्न्यासद्वारेति मतम्। अन्तिमे पक्षद्वये तु क्षत्रियवैश्ययोरपि सन्न्यासविधौ ब्राह्मणपदमुपलक्षणमिति केचिन् मन्यन्ते। अन्ये तु सन्न्यासस्य श्रवणाङ्गत्वं ब्राह्मणविषये, क्षत्रियादिविषये तु तन्निरपेक्षः श्रवणाद्यधिकारः। अयमेव खलु प्रकारो देवानां ब्रह्मविद्याधिकार-निर्वाहार्थं समर्थनीय इति मन्यते। अपरेतु—देवानामनन्यव्यापारत्वस्य स्वतः सिद्धत्वात् सन्न्यासानपेक्षायामपि अन्येषां तं विना न ब्रह्मविद्याधिकारः संभवतीति स्पष्टमेव विवेचितमिति वदन्ति। विधुरादीनाममुख्याधिकार एव सूत्रकारोक्तः, न मुख्याधिकारः। "अतस्त्वितरज्ज्यायो लिङ्गाच्चे"ति स्पष्टं सूत्रणादिति तदाशय इति सिद्धान्तलेशसंग्रहः।

(२०६) संन्यासाधिकारिविशेषणत्वे परिभाषामतविमर्शः।

परिभाषाकारास्तु—सन्न्यासस्याधिकारिविशेषणत्वपक्षमपि उपरतिपदस्य सन्न्यासपरत्वमुपपादयन्तो विवेचयन्तोऽपि विनापि संन्यासं गृहस्थानामपि ब्रह्म-विद्याधिकारं प्रतिपादयन्ति,—"सर्वाश्रमसाधारणं श्रवणादिविधानादि-त्यादिने"ति (Page 363) सर्वविदितमिदम्। तत्रेदमेवास्माकं वक्तव्यम्—यत् सिद्धान्तलेशसंग्रहे—गृहस्थानां ब्रह्मविद्याधिकारो जन्मान्तरे स्वीकृतसन्न्यासाना-मेवेति क्षत्रियेष्वेव विना सन्न्यासं श्रवणाधिकार इति च पक्षस्यैवोपपादनात् तदेकवाक्यतार्थं क्षत्रियविषय एव गृहस्थाधिकारपक्षः परिभाषाकारसम्मत इति। युक्तं चैतत्—अत एव "जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वादि"ति जनकादि-

दृष्टान्तोपादानं (Page 363) परिभाषाकृतामुपपद्यते। त्रयिवैश्ययोः श्रवणादावमुख्याधिकारपक्षस्तु नात्र परिभाषायामुपक्षिप्तः; यतः अविहितशास्त्रान्तरविचारवत् अनिषिद्धत्वेन क्रियमाणं श्रवणादिकं न तत्रैव जन्मनि दृष्टार्थं भवति। तत्रामुख्याधिकारिणा क्रियमाणस्यापि श्रवणादेः "दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात्। गुरुशुश्रूषया चैव कृच्छ्राशीतिफलं भवेत्।" इति वचनात् स्वतन्त्रादृष्टद्वारा जन्मान्तरे फलोत्पादकत्वादिपक्षास्तु सिद्धान्तलेशसंगृहीताः परिभाषाकृतामभिमता एवेति नात्र तेऽपि संगृह्यन्ते।

(२०७) योग-विचारमार्गयोर्भिन्नप्रस्थानत्वादिमतोपक्षेपः, तत्समालोचनं च।

भारतीतीर्थास्तु—ब्रह्मसाक्षात्कारे "द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव। असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिर्णयः" इति वचनानुगुणं ब्रह्मसाक्षात्कारे श्रवणमिव ध्यानमपि निर्गुणोपासनापरपर्यायं साधनं मन्यन्ते। "त्रिमात्रेणोङ्कारेण परपुरुषमभिध्यायीत" "परात्परं पुरिशयं पुरुषमीक्षते" "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादौ ध्येयसाक्षात्कार्ययोरेकत्वान्यथानुपपत्त्या "आनन्दादयः प्रधानस्ये"त्यादिसूत्रैर्भावरूपाणाम् "अक्षरधियां त्ववरोध"इत्यादिसूत्रैरभावरूपाणां चोपासने उपसंहारान्यथानुपपत्त्या च निर्गुणोपासनमपि योग्यमेव। उपास्यत्वनिषेधस्तु पारमार्थिकोपास्यत्वधर्मनिषेधार्थ एवेत्यादि वदन्तः श्रवणादिमार्गो मुख्यः, योगमार्गो गौणकल्प इति विवेचयन्ति ध्यानदीप इति सिद्धान्तलेशसंग्रहे संगृहीतम्। परिभाषाकारास्तु नात्र दृष्टिलेशमपि क्षिपन्ति। वेदान्तसारकारास्तु सत्यमत्रापि दृष्टिं न्यायरत्नावलीकारा इव क्षिपन्ति।

(२०८) ध्यानादिसाक्षात्कारसाधनत्वपक्षाः।

यत्तु पुनः कल्पद्वयेऽपि ब्रह्मसाक्षात्कारकारणं तु ध्यानमेव प्रसङ्ख्यानापरपर्यायम्। तस्याप्रमाणस्यापि प्रमाजनकत्वमीश्वरज्ञानसाधारणप्रसाध्यत्वस्य ब्रह्मसाक्षात्कारे स्वीकारादुपपद्यते इति पक्षः सिद्धान्तलेशे संगृहीतः, सोऽपि न परिभाषाकारैः समुद्धृतः।

ध्यानसहकृतं मन एव साक्षात्कारकारणम्, अथवा तत्सहकृतः शब्द एव तादृश इति पक्षद्वयं तु परिभाषायामपि प्रयोजनपरिच्छेदे (Page 345) संगृहीतमेव।

(२०९) शाब्दापरोक्षताप्रकारविशेषाः।

शाब्दापरोक्षवादप्रसङ्गेन सिद्धान्तलेशसंग्रहकाराः त्रीन् पक्षानुपक्षिपन्ति। (१) श्रवणमनननिदिध्यासनजनितसंस्कारप्रचयलब्धब्रह्मैकाग्रचित्तदर्पणानुगृहीतः शब्दोऽपरोक्षसाक्षात्कारजनकः शास्त्रीयसंस्कारसंस्कृताम्न्यधिकरणक एव होम इवापूर्वम्। (२) निदिध्यासनसहकृतशब्द एवापरोक्षसाक्षात्कारहेतुः बाह्यार्थे भावनाप्रचयसहकृतं मन इव साक्षात्कारहेतुः। (३) अपरोक्षार्थविषयत्वस्यैवापरोक्षत्वात् शब्दजन्यमपि ब्रह्मज्ञानं स्वतोऽपरोक्षब्रह्मविषयत्वादपरोक्षमेव। परिभाषाकारा अपि शाब्दापरोक्षवादं प्रत्यक्षपरिच्छेदे समर्थयन्तः सर्वेषां पक्षाणामनुसरणं कर्तुमर्हन्तीति जानीमः।

(२१०) घटज्ञानेन मूलाज्ञाननिवृत्त्युपपत्तिप्रकाराः।

अथ घटादिज्ञानमात्रेण मूलाज्ञाननिवृत्तिः कथं न भवतीति शङ्कापरिहाराः सिद्धान्तलेशसंगृहीताः संगृह्यन्ते। (१) घटादिज्ञानस्य घटादिविषयत्वम्, नतु ब्रह्मविषयत्वम्, घटाकारवृत्त्युदये आवरणभङ्गेन स्वयंप्रकाशब्रह्मसद्रूपेण सन् घट इति भासते इति ब्रह्मणः सर्वप्रत्ययवेद्यत्वम्। घटस्यापि घटावच्छिन्नचैतन्यस्येवाज्ञानविषयत्वमूरीक्रियते। इयान् विशेषः—यत् घटादेरौपचारिकं चैतन्यस्य तु तन्मुख्यम्। तत्रावस्थाज्ञानमेवेति न दोष इति जडस्याज्ञानाविषयत्ववादेनैकः परिहारः। (२) जडस्यापि त्ववस्थाज्ञानविषयत्वमवश्यमूरीकर्तव्यम्; अन्यथा चन्दनप्रत्यक्षे सौरभप्रत्यक्षापत्तेरिति मुख्यमज्ञानविषयत्वमूरीकृत्यापि परिहारः। (३) वेदान्तविचारजन्यब्रह्मज्ञानमेवापूर्वविशेषसहकृतं ब्रह्माज्ञाननिवर्तकम्, नतु घटादिज्ञानमिति तृतीयः परिहारः। जीवत्वब्रह्मत्वोपस्थितिपूर्वकस्वरूपचैतन्यज्ञानमेव मूलाज्ञाननिवर्तकम्, नतु केवलचैतन्यज्ञानमिति न दोष इति सिद्धान्तलेशसंग्रहे विवेचितम्। परिभाषाकारास्तु—"तच्च ज्ञानं ब्रह्मात्मैक्यगोचरम्; तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित्, (Page 345) इति वाक्येन मन्यामहे तृतीयं परिहारमभिप्रयन्तीति। यत्तु पुनः सिद्धान्तलेशसंग्रहे कार्येण कारणनाशोऽपि भवत्येव अग्निसंयोगेन पटनाशदर्शनादित्युक्तम्, तस्य विषयस्य समुल्लेखः, ब्रह्मज्ञानस्य नाशकं स्वयमेवेति विचारसमुल्लेख इव तत्त्वतः न परिभाषायां समुद्धृतः।

(२११) सिद्धान्तलेशसंगृहीतो ब्रह्मज्ञाननाशकविचारः, तत्र परिभाषामतं च ॥

(१) कतकरजो जलसंयुक्तं जलसंयुक्तरजोन्तरं नाशयत् स्वयमपि यथा नश्यति, तथा ब्रह्मज्ञानमपीति कतकरजोदृष्टान्तमुदाहरन्ति केचित्। (२) अन्येतु दग्धलोहे निक्षिप्तं जलं यथाग्निं नाशयति स्वयं च पश्चान्नश्यति तथेति दग्धलोहपीताम्बु निदर्शयन्ति। (३) अपरेतु—दग्धतृणकूटदहनमुदाहरन्ति। नहि ध्वंसः प्रतियोग्यतिरिक्तजन्य इति नियमः, निरिन्धनदहनादिध्वंसे व्यभिचारात्। अत्र वृत्तिरेवाज्ञाननाशिका, तदुपारूढं चैतन्यमज्ञाननाशकमिति सिद्धान्तलेशसंगृहीतपक्षद्वयमपि परिभाषाकाराः—"परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वाऽऽवरणभङ्गजनकत्वम् (Page 325) इति वाक्येन संगृह्णन्ति।

(२१२) सिद्धान्तलेशपरिभाषयोर्जीवन्मुक्तिनिर्वाहः।

यत्तु सिद्धान्तलेशसंग्रहे—ज्ञानेनाज्ञानस्यैव नाशः, अज्ञाननाश एव कार्यनाशप्रयोजक इति पक्षः तृतीयपरिच्छेदान्ते संगृहीतः, तत्पक्षे ब्रह्मज्ञानस्यापि प्रपञ्चत्वाविशेषात् तन्नाशविषये कतकरजोदृष्टान्तादिगवेषणं नापेक्षितमिति परिभाषाकारा अपि तमेव पक्षम्—ब्रह्मज्ञानात् मूलाज्ञाननिवृत्तौ तत्कार्यप्रारब्धकर्मणोऽपि निवृत्तेः" (Page 368) इति वाक्येन सूचयन्ति। तथाच जीवन्मुक्तिनिर्वाहोऽप्युपपद्यते; अन्यथा ब्रह्मज्ञानेनाज्ञानतत्कार्योभयनिवृत्तिवादे जीवन्मुक्तिनिर्वाहो न स्यात्। अज्ञानलेशानुवृत्त्या जीवन्मुक्तिरिति खलु सिद्धान्तः। तथाच—"प्रारब्धकर्मरूपप्रतिबन्धकदशायामज्ञाननिवृत्तेरनङ्गीकारात्" (Page 269) इति वाक्यगताज्ञानपदस्य सर्वावस्थाऽज्ञानपरत्वमेव युक्तमिति न परिभाषाकारा अपि जीवन्मुक्तिपक्षं न समाद्रियन्ते।

(२१३) जीवन्मुक्तिस्वरूपे मतभेदाः।

जीवन्मुक्तिरस्तीतिवादः केषांचन, सर्वज्ञात्मगुरूणां तु सा नोरीकर्तव्या; श्रवणाद्यर्थवादमात्रं तदाम्नानमिति मतम्। तत्र प्रथममतेऽज्ञानस्य लेशतोऽनुवृत्तिरस्तीत्यनुपदमेव विवेचितम्। सच लेशः विक्षेपशक्त्यंश इति केचित्। अन्येऽविद्यासंस्कार इति, परेतु दग्धपटन्यायेनानुवृत्ता मूलाविद्यैवेति मन्यन्ते। परिभाषाकारास्तु पूर्वोद्धृततद्वाक्यतः सर्वेषु पक्षेषु सममादरं मन्यन्त इति प्रतिभाति।

(२१४) अविद्यानिवृत्तेरात्मरूपत्वम् ।

अविद्यानिवृत्तिरियमात्मरूपैवेति ब्रह्मसिद्धिकारा मन्यन्ते । नित्यसिद्धाया अपि तस्या अविद्यासाहचर्यनिराकरणार्थं तत्त्वज्ञानान्वेषणम् । तथाचाविद्याऽसहकृतात्मरूपाविद्यानिवृत्तिरेव मोक्ष इति पर्यवस्यति । अविद्यासहकारेऽविद्यारूपाऽविद्यानिवृत्तिः, तन्निवृत्तावात्मरूपाविद्यानिवृत्तिरिति फलतीति तदाशयः ।

(२१५) अविद्यानिवृत्तेः पञ्चमप्रकारत्वम् ।

अविद्यानिवृत्तिर्नात्मरूपा, न वा सती, असती, सदसती, सदसद्विलक्षणा वा, किन्तु पञ्चमप्रकारैवेत्यानन्दबोधाचार्या मन्यन्ते । सत्त्वेऽद्वैतहानिः, असत्त्वे ज्ञानसाध्यत्वायोगः, सदसत्त्वे विरोधः, अनिर्वाच्यत्वे मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापात इति तदाशयः ।

(२१६) अविद्यानिवृत्त्यनिर्वचनीयत्वमतम् ।

अविद्यानिवृत्तिरप्यनिर्वाच्यैव ; सत्यप्येवं न मुक्तावनुवृत्त्यापत्तिः, उत्पत्तेरिव ध्वंसस्यापि प्रतियोगिगतभावविकारविशेषरूपत्वस्यैव स्वीकारेण प्रतियोगिन इव तस्यापि मुक्तावननुवृत्तावज्ञानानुवृत्त्यापातायोगादित्यद्वैतविद्याचार्याः । अस्मिन्मतेऽविद्यानिवृत्तिर्न स्वयं पुरुषार्थः, किन्तु सुखदुःखाभावान्यतरहेतुत्वेनेति मन्तव्यम् ।

(२१७) अविद्यानिवृत्तौ चित्सुखीमतं परिभाषा च ।

(४) चित्सुखाचार्यमते तु—दुःखाभावस्यापि न स्वतः पुरुषार्थत्वम्, किन्तु सकलसंसारनिवृत्तिमत्सुखविशेषस्यैव पुरुषार्थत्वमिति तु विशेष इति सिद्धान्तलेशसंग्रहे मतचतुष्टयं दीक्षितवर्याः संगृह्णन्ति । परिभाषाकारास्त्वेतेषु पक्षेषु प्रथमं पक्षमनुमोदन्ते—"अनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मरूपतायां सिद्धैवे"ति (Page 337) वदन्तः ।

(२१८) मुक्तिप्राप्यत्वे मतचतुष्टयम्, परिभाषामतं च ।

(१) आत्मरूपो मोक्षो नित्यप्राप्तोऽपि संसारदशायामप्राप्तत्वमविद्यया नीत इति स्वकण्ठगतविस्मृतचामीकरवत् तत्त्वज्ञानतः प्राप्त इव भवतीति प्राप्त इति व्यवह्रियत इति केचित् । (२) अन्येतु संसारदशायां नास्ति न प्रकाशत

इति व्यवहारयोग्यत्वरूपाज्ञानावरणनिबन्धनस्य ममानन्दो नास्तीति प्रत्ययस्य विद्यमानत्वात् तत्प्रत्ययविषयः कल्पितो ब्रह्मानन्दाभावो ज्ञानेन निवर्तत इति तत्त्वज्ञानोपयोग इति वदन्ति। (३) अपरेतु—अपरोक्षस्यैव सुखस्य पुरुषार्थत्वात् संसारदशायां च ब्रह्मानन्दस्य परोक्षत्वात् पुरुषार्थत्वेन रूपेण ब्रह्मानन्दोऽप्राप्त इति प्राप्यत इति मन्यन्ते। (४) इतरेतु—संसारदशायां चिदानन्दभेदस्याध्यस्तस्याविद्यानिबन्धनस्य निरासपूर्वकं चिदभिन्नानन्दरूपप्राप्तिरसिद्धैव पूर्वं तत्त्वज्ञानेन साध्यत इति चत्वारः प्रकाराः सिद्धान्तलेशसंग्रहे संगृहीता मुक्तिप्राप्तिमधिकृत्य। परिभाषाकारास्तु तत्र "सिद्धस्यैव मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेरि"-त्यादिना (Page 341) प्रथमं पक्षमुपक्षिपन्ति प्रयोजनपरिच्छेदे।

(२१९) एकानेकजीववादभेदेन मुक्तेर्निर्गुणेश्वरभावरूपत्वव्यवस्था।

मुक्तावीश्वरभाव उत शुद्धचैतन्यभाव इति विचारप्रसङ्गेन सिद्धान्तलेशसंग्रहकाराः जीवैकत्वपक्षे शुद्धचैतन्यभावः, तदनेकत्वपक्षेतु यावत्सर्वमुक्ति ईश्वरभावः। इदमीश्वरो बिम्बभूतः, जीवः प्रतिबिम्बभूत इति पक्षेण। जीव ईश्वरयोभावपि प्रतिबिम्बभूताविति पक्षेतु प्रतिबिम्बस्य प्रतिबिम्बान्तरभावायोगात् बिम्बस्थानीयशुद्धब्रह्मप्राप्तिरनेकजीववादेऽपि संभवति। अत्र प्रसङ्गतोऽनेकजीववादोऽवच्छेदपक्षे न संभवतीति विषयोऽपि विचारमर्हति। तत्रानेकजीववादे ईश्वरस्यापि संसारित्वापत्त्या ईश्वरप्रतिबिम्बवादस्यायोग्यत्वात् ईश्वरबिम्बस्थानीयतापक्षस्यैव च योग्यत्वात् ईश्वरभावो मुक्तिरेव श्रुतिसूत्रभाष्याद्यनुगुणेति प्रतिभाति।

(२२०) ईश्वरभावस्यैव मुक्तित्वे श्रुतिसूत्रभाष्यादिसमन्वयः।

(१) इन्द्रप्रजापतिसंवादे—य आत्मा अपहतपाप्मा विजरो विशोको विमृत्युः सत्यकामः सत्यसंकल्प इत्युपदेश्यमात्मानमुपक्षिप्य तस्य "य एषोऽक्षिणि पुरुषो दृश्यते, य एष स्वप्ने महीयानश्चरति" यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा," "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति जाग्रदाद्येकैकावस्थोपन्यासमुखेनैवोपदेशेन जीवस्यापि मुक्तदशायामीश्वरभावेन सत्यकामत्वमित्यवगम्यते। अयमेव चैषां वाक्यानामाशय इति—"उत्तराच्चेदाविर्भूतस्वरूपस्तु इति सूत्रेण "तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकम् जैवरूपम्, तद्विलयनेन च

तद्विपरीतमपहतपाप्मत्वादिगुणकं [पारमेश्वरं रूपं विद्यया प्रतिपद्यते" इति तद्भाष्येण चावगम्यत इति मुक्तस्येश्वरभाव इत्यत्रोक्तश्रुतिसूत्रादीनि प्रमाणानि। (२) "अंशो नानाव्यपदेशादि"ति जीवस्येश्वरांशत्वमपि बिम्बप्रतिबिम्बभावेन बोध्यमानं जीवस्य मुक्तावीश्वरभावं गमयतीति तदपि सूत्रमत्र गमकम्। (३) "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति सूत्रमपि जीवस्य सत्यकामत्वादिकं संसारदशायां तिरोहितमिति बोधयत् मुक्तिदशायां सत्यकामत्वाद्याविर्भावं गमयन्नोक्तार्थेऽनुगुणमेव। भाष्यमप्यत्रत्यम्—"तत्पुनस्तिरोहितं सत् परमभिध्यायतो यतमानस्य जन्तोर्विधुतध्वान्तस्येश्वरप्रसादात्कस्यचिदेवाविर्भवती"ति प्रकृतोपष्टम्भकमेव। (४) एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः" इति सूत्रमपि मुक्तस्य चैतन्यमात्रत्वमिव सत्यकामत्वादिकमपि गुण इति बोधयत् तद्भाष्यभामत्यादिनिबन्धेस्साकमत्र प्रमाणम्। तथा चानेकजीववादे ईश्वरबिम्बत्वपक्षे चेश्वरभाव एव मुक्तिरिति निष्कर्ष इति विवेचयन्ति।

(२२१) अनेकजीववादे ईश्वरभावरूपमुक्ताविव च परिभाषामतम्।

परिभाषाकारा अपि—"एतस्मिन्नेऽविद्याकृतदोषा जीव इवेश्वरेऽपि स्युः, उपाधेः प्रतिबिम्बपक्षपातित्वादित्यस्वरस्यात् बिम्बात्मकमीश्वरचैतन्य"मिति (Page 320) ईश्वरप्रतिबिम्बवादे दोषोद्भटनपूर्वकं तद्बिम्बवादमेव विषयपरिच्छेदे समाद्रियमाणाः, एकमुक्तौ सर्वमुक्तिशङ्कानिराकरणप्रसङ्गे—"इष्टत्वादित्येके, अपरेतु एतद्दोषपरिहारायैवेन्द्रो मायाभिरिति बहुवचनश्रुत्यनुगृहीतमविद्याया नानात्वमङ्गीकर्तव्यमाहुरि"ति (Page 370) तत्त्वज्ञानेनावस्थाज्ञानस्यैव नाश इति प्रतिपादयन्तश्च मुक्तिविषये सिद्धान्तलेशसंग्रहसङ्गृहीतं पक्षमेव समवलम्बन्त इति प्रायेण सर्वानपि विषयान् यथासम्भवं मतभेदांश्च सङ्गृह्णन्ति।

(२२२) आकरादिगतबह्वर्थसंग्रहणेन परिभाषावैशिष्ट्यम्।

न केवलमियदेव; किन्त्वाकरार्था अपि बहवः परिभाषायां स्पष्टमेव सङ्गृहीताः प्रयोजनपरिच्छेदेऽर्चिरादिमार्गनिरूपणप्रसङ्गेन जीवोत्क्रमणानुत्क्रमणादिपक्षसंसूचनेन, एकजीववादेऽनेकजीववादे वा मुक्तिस्वरूपनिरूपणप्रसङ्गेन चेति श्रीभाष्यसिद्धान्तसमालोचनपूर्वकं प्रयोजनपरिच्छेदव्याख्यायां विशदमिदं विवेचितम्। बहूनेव मीमांसान्यायान् यथाश्लोकवार्तिकसिद्धान्तं प्रमाण-

विभागान् श्रोत्रस्य बहिर्निर्गमनवादादीन्, यथाविवरणसिद्धान्तं मनोऽनिन्द्रियत्व-वादादीन् बहूनेव विषयान् निष्कृष्य संक्षिप्य च विशदयन्तः परिभाषाकारा न लेशतोऽपि दूरे कुर्वन्ति—"तेन बोधाय मन्दाना"मिति लक्ष्यमपि स्वीयमिति वस्तुस्थितिकथनमिदम्।

(२२३) वेदान्तसारार्थसंग्रहः।

वेदान्तसारे तु—समष्ट्यज्ञानसूक्ष्मस्थूलशरीरोपहितानां विराड्हिरण्य-गर्भान्तर्यामिणाम्, व्यष्ट्यज्ञानोपहित-सूक्ष्मस्थूलशरीरोपहितानां विश्वतैजसप्राज्ञानां च तत्तदुपाधिविलयेऽनवच्छिन्नशुद्धचैतन्याभेद इत्यध्यारोपापवादाभ्यां ब्रह्मस्वरूप-व्यवस्थापनप्रसङ्गेन सूक्ष्मशरीरोपहिततैजसोपपादकतया प्राणमयमनोमयविज्ञान-मयाख्यकोशत्रयस्य सूक्ष्मशरीरावयवानां समदशानामपञ्चीकृतव्यस्तसमस्त-सात्त्विकराजसादितन्मात्रकार्यत्वेन यथासम्भवं स्वरूपम्, स्थूलशरीरोपहितविश्वादि-स्वरूपोपपादकतया पञ्चीकरणप्रक्रियामुखेन चतुर्विधजीवादिविभागादिकम्, कोश-पञ्चकोपपादनप्रसङ्गेन जाग्रत्स्वप्नसुषुप्त्यवस्थास्वरूपम्, सामानाधिकरण्यविशेषण-विशेष्यभावलक्ष्यलक्षणभावाख्यसंबन्धत्रयेण तत्त्वमसीत्यादिवाक्यस्य शुद्धचैतन्यपर्य-वसानम्, तत्साक्षात्कारसाधनतया श्रवणादिस्वरूपम्, तात्पर्यग्राहकलिङ्गविवेचनम्, सविकल्पकनिर्विकल्पकसमाधिस्वरूपम्, समाध्यङ्गसमाधिध्यानयोर्मुख्यसमाधि-निदिध्यासनाभ्यां विवेकः, सुषुप्तिमूर्च्छासम्प्रज्ञातासंप्रज्ञातसमाधीनां वृत्तिसद्भा-वादिना विशेषः, जीवन्मुक्तावस्थेत्यादयश्च पदार्थाः स्पष्टं सङ्गृहीता अपि माण्डूक्योपवर्णितप्रकारेणैव तत्त्वमस्यादिवाक्यादावखण्डार्थत्वं व्यवस्थाप्यते।

(२२४) वेदान्तसारपरिभाषयोर्विषयविशेषे विशेषादिसमालोचनम्।

परिभाषाकारास्तु—जाग्रदाद्यवस्थाम्, स्थूलसूक्ष्मभूतसृष्टिप्रक्रियाम्, जीवब्रह्मा-भेदञ्च वेदान्तसाराद्धतभागलक्षणादिपक्षेणैव निरूपयन्तोऽपि न महावाक्यार्थ-साक्षात्कारानन्तरमपि समाधेरुपयोगं मन्यन्ते इति तु विशेषः स्फुटमत्र प्रतिभाति। अयमत्र निष्कर्षः—यद्वेदान्तसारकाराः तत्त्वसाक्षात्कारं प्रति समाधिः कारणमिति समाधिसाधनतावादं नोरीकुर्वन्ति,—किन्तु अनुवर्तमानतत्त्व-साक्षात्कार एव समाधिरिति समाध्यवस्थायां प्रारब्धकर्मणोऽपि न बन्धप्रयोजकत्व-मिति च योगस्य तत्त्वसाक्षात्कारोपक्षयाऽपि प्रारब्धकर्मनाशकतांशे प्राबल्यपक्ष-



मेवाद्वैतचिन्ताकौस्तुभकारा इव मन्यन्ते। तथाच कर्मानुष्ठानादिना चित्तशुद्ध्यादौ साधनचतुष्टयसंपत्त्याद्यनन्तरं वेदान्तविचारादिना संपन्नेऽपि तत्त्वसाक्षात्कारे निर्विकल्पकसमाध्यवस्थां निरन्तरां विना न मुक्तिरिति नात्र मोक्षे योगस्यापि ज्ञानात् पृथक्प्रस्थानतास्वीकारः। परिभाषाकारास्तु—वृत्तेऽपि तत्त्वसाक्षात्कारे प्रारब्धकर्मानुवृत्तेः परमूरीकारात् तत्त्वसाक्षात्कारानन्तरमपि तस्य समाध्यवस्थादि-विभागानूरीकारात् समाधिस्वरूपादीनामनुल्लेखेन विनाऽपि समाधिं ज्ञानमार्गेण मुक्तिरिति पक्षस्यैव स्वीकारेण योगमार्गोऽन्यः, ज्ञानमार्गोऽन्य इति "द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानञ्च राघव। असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिर्णयः" इति वचनानुसारेण योगज्ञानप्रस्थानयोः स्वतन्त्रयोरङ्गीकाराच्च न वेदान्तसारपक्ष-मेव सर्वथा समभिप्रयन्ति। अयमत्र सारांशः—यत् परिभाषाकाराः मधुसूदन-सरस्वत्य इव चित्तवृत्तिनिरोधमात्ररूपस्य योगस्य नात्मज्ञानरूपत्वम्, किन्तु तस्य तत्साधनत्वमेवेति मन्यन्ते। सुषुप्तिस्वरूपविषये तु वेदान्तसार उपसंहारे निर्वि-कल्पकसमाधिसुषुप्त्योर्भेदविवेकप्रकरणे सुषुप्तौ न वृत्तिरिति, प्राज्ञान्तर्यामिणो-रवस्थाविवेचनप्रकरणेतु "ईश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभि-रानन्दमनुभवतः" इत्यत्र सुषुप्तावपि अज्ञानवृत्तिर्वर्तत इति च निरूपणेन पूर्वापरविरोध इव प्रतिभाति, ततश्च परिभाषाकाराणां यैः "सुषुप्तिर्नामाविद्या-गोचराविद्यावृत्तिरि"ति सुषुप्तौ वृत्तिः स्वीकृता, तेषामपि वेदान्तसारसिद्धान्तेऽ-नभिमतिरिव प्रतिभाति ; तथापि वेदान्तसारकाराणां मनोवृत्तिनिषेध एवोप-संहारप्रकरणतात्पर्यात् न पूर्वापरविरोधः, न वा परिभाषाकाराणामपि तत्र वैमत्यमिति स्पष्टमिदमवगम्यते। अधिकारिनिरूपणप्रसङ्गेन नित्यानित्यवस्तु-विवेकेहामुत्रार्थफलभोगविरागशमदमोपरतितितिक्षाश्रद्धादिस्वरूपाणि यथावेदान्त-सारं परिभाषायामपि विवेचितानीति ग्रन्थद्वयसमालोचकानां न तिरोहित-मिदम्। विश्वतैजसप्राज्ञभेदेन जीवस्य, वैश्वानरहिरण्यगर्भान्तर्यामिभेदेनेश्वरस्य च भेदकल्पनापूर्वकं तुरीयशुद्धचैतन्येन सर्वेषां परस्परं चाभेदव्यवस्थापनप्रक्रिया तु यथामाण्डूक्यश्रुति वेदान्तसार इव सत्यं वेदान्तपरिभाषायां न समालोचिता, यतः परिभाषाकारा विवरणप्रस्थानपक्षपातिनः छान्दोग्योपवर्णिततत्त्वमसिमहा-वाक्यार्थनिरूपणमेव कुर्वते। यथाच तत्त्वमसीतिमहावाक्यस्यापि माण्डूक्योप-वर्णितत्रिविधजीवेशाभेदबोधनेऽपि तात्पर्यम्, तथा न्यायरत्नावलीकृद्भ्यां पदद्वय-

सार्थक्यविवेचनपूर्वकं "यदविद्याविलासेने"ति मङ्गलश्लोकव्याख्यावसरे सत्यं विवेचितम्, परन्तु नेदं विवरणकाराः विवेचयन्तीति परिभाषाकारा अपि न तत्पक्षमत्रोपपादयन्ति।

(२२५) निर्गुणब्रह्मण्येव कठवल्लीस्वारस्यम्।

कठवल्ल्यां "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति प्रश्नोत्तरत्वेन "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति गुहाहितत्वदेवत्वादिनेश्वराभेदं जीवस्योपपाद्य सुखदुःखादिसंबन्धराहित्यप्रतिपादनानन्तरं येनेश्वरेण जीवस्याभेदोऽनुसंहितः, तस्येश्वरस्वरूपस्य जिज्ञासायाम्—"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" इति प्रस्तुतायाम्—"एतद्ध्येवाक्षरं परम्" इत्यादिना "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इत्यन्तेनेश्वरस्वरूपविवेचनपूर्वकं "यत्र सः" इति तस्यापीश्वरस्याधिष्ठानदुर्विज्ञेयशुद्धचैतन्यस्वरूपस्याप्युल्लेखेन हि विशदमिदं भायते—यत् एकस्यैव शुद्धचैतन्यस्य कारणत्वोपपादकाविद्योपाधिवशेनेश्वरत्वम्, संसारित्वोपपादकगुहाहितत्वादिना च जीवत्वम्, वस्तुगत्या तु न भेद इत्येव कठस्वारस्यं इति ज्ञेयनिर्गुणपर्यवसानैव कठवल्ली, नतूपास्यसगुणपर्यवसाना। "अन्यत्र धर्मादन्यत्राधर्मात्" इतीश्वरस्वरूपविषयकं न स्वतन्त्रप्रश्नान्तरम्, किन्तु जीवविषयकस्यैव "येयं प्रेते विचिकित्सा" इति प्रश्नस्यावान्तरप्रश्न इति प्रतिज्ञातवरत्रयमात्रप्रश्नो नचिकेतसोऽपि न विरुद्धो भवति। अन्यथा हि न केवलम्—"अन्यत्र धर्मा"दित्यप्रसक्तस्वतन्त्रप्रश्नान्तरकल्पनायोगः किन्तु "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति प्रश्नद्वयस्याप्येकीकारेणैकस्मिन् वाक्ये पुनरनुसन्धानं व्यर्थमेव स्यात्। अत्र हि वाक्ये छायातपशब्देन विलक्षणत्वं यदभिमतम्, तदिदं यदि मतान्तरदृष्ट्या स्वरूपत एव, तर्हि जीवेश्वरयोरभेदस्याप्रसक्तत्वात् तद्वैयर्थ्यम्। अतो धर्मत एव तयोर्भेदः, न तु स्वरूपत इति जीवत्वेश्वरत्वयोः कल्पितत्वव्यवस्थापनार्थमेवेदं प्रकरणमित्यवगम्यते। सति चैवम् "आत्मानं रथिनं विद्धि शरीरं रथमेव तु" इत्यादिना रथ्यादिकल्पनेन गन्तृगन्तव्यादिनिरूपणमपि कल्पितं भेदमादायैवेति सुष्ठु लगतीति कठवल्ली-

तात्पर्यमप्यद्वैतमत एव। अन्यथा—"यस्य ब्रह्म च क्षत्रं च उभे भवतः ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति वाक्ये "क इत्था वेद यत्र सः" इत्यनन्वितमेव स्यात् श्रीभाष्यादिमते यत्राप्युक्ता परमात्मैवेति सिद्धान्तः।

(२२६) "त्रयाणामेव चैवमुपन्यासः" इति सूत्रस्याद्वैतमत एव स्वारस्यम्।

यद्यपि "आनुमानिकमप्येकेषाम्" इति सूत्राद्ये आनुमानिकाधिकरणे "त्रयाणामेव चैवमुपन्यासः प्रश्नश्च" इति सूत्रविवरणावसरेऽद्वैतभाष्यकाराः त्रयाणामग्निजीवपरमात्मनामिति विवरणेन "अन्यत्र धर्मादन्यत्राधर्मात्" इत्यस्येश्वरविषयकप्रश्नान्तरत्वमिव श्रीभाष्यकारादय इव मन्यन्ते, तथाऽपि द्वयोरेव प्रश्नयोरग्निजीवस्वरूपविषयकयोर्जीवाग्नी धर्मभेदमादाय प्रश्नद्वयं गृहीत्वैव सूत्रे त्रयाणांपदप्रयोग इत्यपि विवेचयन्तीति न विरोधः।

सति चैवम्—"त्रयाणा"मितिपदस्वारस्यमद्वैतमते भग्नमिति शङ्का तु नियतमियं परिहरणीया। अत्रेदमेवास्माकं प्रतिभाति—साङ्ख्यमतनिराकरणस्यैवात्र प्रस्तुतत्वात्तस्य च प्रधानविषयकप्रश्नान्तराभावबोधनमात्रसाध्यत्वात् "अन्यत्र धर्मादन्यत्राधर्मात्" इत्यस्येश्वरविषयकप्रश्नान्तरत्वेऽपि प्रकृतार्थसिद्ध्याऽदोषमभिप्रेत्यैवाद्वैतभाष्यकाराः "त्रयाणा"मित्येतदग्निजीवपरमात्मपरमिति विवृण्वते। परमार्थतस्तु—पितृसौमनस्याग्निविद्याजीवस्वरूपाणामेव "त्रयाणां" पदेन विवरणेऽपि प्रकृतार्थनिर्वाहात् क्त्वाचिन्तयैवात्र भाष्यकाराणां "त्रयाणां"-मित्यस्याग्निजीवपरमात्मनामिति विवरणमिति न दोषलेशोऽपि। सर्वथा तु कठवल्लीतात्पर्यं सूत्रकाराः साङ्ख्यप्रक्रियायामेव प्रतिक्षिपन्तः पूर्वोक्तप्रकारेणाद्वैतमत एव स्वरसं मन्यन्ते।

(२२७) अन्तर्यामिब्राह्मणादीनामप्यद्वैतमत एवोपक्रमादितः स्वारस्यव्यवस्था।

यथाचान्तर्यामिब्राह्मणादीनां द्वासुपर्णादिवाक्यानामन्येषां च नाद्वैतसिद्धान्तविरोधित्वमुपक्रमपरामर्शोपसंहारपर्यालोचनेनावगम्यते, तथा परिभाषाव्याख्यायां विशदं प्रकाशितं प्रत्यक्षपरिच्छेदे (page 86)। अश्वलार्तभाग-भुज्यु-चाक्रायण-कहोल-वाचक्नव्युद्दालक-वाचक्नव्यादिप्रश्नोत्तरेषु स्वतन्त्रेषु बहुषूद्दालकस्यापि सूत्रान्तर्यामिप्रश्नोत्तरयोः स्वतन्त्रयोर्द्वयोस्सतोः, स्वतन्त्रमात्मस्वरूपनिरूपणार्थे उपक्रमोपसंहारादितात्पर्यग्राहकप्रमाणोपबृंहिते षष्ठे च प्रपाठके सति कथमक-

त्वादन्तर्यामिब्राह्मण एव बृहदारण्यकोपनिषत्पर्यवसानम्, येन शरीरशरीरिभावेन सप्रपञ्चब्रह्मैव शास्त्रार्थं इति श्रीभाष्यकार मन्यन्ते इति न वयं जानीमः। यथाचान्तर्यामिब्राह्मणेऽप्युपसंहारे—"अतोऽन्यदार्तमि"ति अन्तर्याम्यतिरिक्तमित्यशावस्तुबोधनं तन्मतेऽनुपपन्नं तथा सर्व एव विजानन्ति। अधिकन्तु समयान्तरे विवेचयिष्यते। एतावदेवात्र विवेचितम्—यत् कुत्रचन जीवब्रह्मणोरभेदमात्रम्, कुत्रचन जीवस्येश्वरस्य चावस्थादिभेदनिर्देशपूर्वकं तयोरभेद इत्याद्युपपादनवैषम्यात् वेदान्तसारे विश्वतैजसप्राज्ञादिभेदनिरूपणपूर्वकमद्वितीयशुद्धचैतन्यं व्यवस्थापितम्, परिभाषायान्तु तादृशभेदाननुसन्धानपूर्वकं तत्त्वं विशदीकृतम्। फलतस्तु नोभयोरपि सिद्धान्तभेदः।

(२२८) वेदान्तपरिभाषाध्ययनावश्यकता।

सर्वथा तु नेदं विवादास्पदम्—यत् सिद्धान्तलेशसंग्रहादिबहुतरग्रन्थाध्ययनजं प्रयोजनं सम्यक् वेदान्तपरिभाषाध्ययनेनैव सुचारु संपद्यतेति सत्यमुक्तमर्णाः पण्डितकुलस्य वेदान्तपरिभाषाकाराः॥

(२२९) परिभाषाकारग्राम-कुल-कालादिनिर्णयः।

वेदान्तपरिभाषाग्रन्थसम्पादकाः स्वनामधन्यश्रीधर्मराजाध्वरीन्द्राः श्रीकुम्भघोणसमीपस्थवे (व) लाङ्गुडिग्रामाभिजनाः सांप्रतं मद्रपुरमधिवसतां ज्योतिर्विदग्रेसरपण्डितप्रवरश्रीयुक्तकडलङ्गुडिनटेशशास्त्रिणां मूलपुरुषाः (वृद्धप्रपितामहाः) श्रीवेङ्कटनाथानां जगद्गुरुत्वेन परिभाषायामुल्लिखितानामात्मजा इति सामान्यतः परिभाषोपक्रमगतश्लोकतः, विशिष्य श्रीनटेशशास्त्रिणां च मुखादवगच्छामः।

एते हि—"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥"

इति श्लोकसङ्ग्रहणात् कल्पतरुतः,। अस्मदीयव्याख्यानप्रदर्शितया प्रणाल्या सिद्धान्तलेशसङ्ग्रहमवष्टभ्यैव—"किं च धारावाहिकज्ञानस्थले" इत्यादिपरिभाषाग्रन्थप्रवृत्त्या ततोऽर्वाचीनाः; विठलमिश्रीये लघुचन्द्रिकाव्याख्याने यथाऽस्मदाख्यानर्निर्देशं (page 71) परिभाषानामानुवादात्ततः श्रीमद्भागवततोषणीसार भूमिकोक्तरीत्या सार्धशतसंवत्सरतः; श्रीपुरुषोत्तमगोस्वामिभिः येषां श्रीवल्लभ-

संप्रदायाचार्याणां प्रादुर्भावकालः १६६८ खृस्ताब्द इति तदीया मन्यन्ते, स्वीये प्रस्थानरत्नाकरे परिभाषानामोपन्यासात् ततः; गङ्गाधरेन्द्रसंयमीन्द्रैः स्वीय स्वाराज्यसिद्धिव्याख्यायां ४१ तमे श्लोके परिभाषानामोल्लेखात् येषां तद्ग्रन्थविरचनकालः तदीयनिर्देशानुसारमेव १६९२ तमः खृस्ताब्द इति पण्डितप्रवरश्रीकडलङ्गुडिनटेशशास्त्रिवर्याः तदीयभूमिकायां विलिखन्ति ततः; आचार्यश्रीनिवासदासकृतियतीन्द्रमतदीपिकायां "केचित्तु" इत्यादिना प्रमालक्षणप्रत्यक्षविचाराद्यवसरे परिभाषाया एवानूद्य निरसनात्ततः; फलतः, मार्कि विग्रतवत्सरेभ्यः पूर्वतना इति निश्चिनुमः। यतीन्द्रमतदीपिकाकारास्तु तदीयद्वितीयमङ्गलश्लोकसंप्रदायाद्यनुसारेण श्रीमहाचार्याणां श्रीदोड्डाचार्याणां पाराशर्यविजयादिग्रन्थप्रणेतॄणाम्, ये खलु पाराशर्यविजये न्यायरत्नमणीरेव शब्दतोऽनूद्य निरसनात् ऐतिह्यविशेषादिभिश्च श्रीमदप्पय्यदीक्षितसमकालिकाः, तेषामन्तेवासिनः, खैस्तवसप्तदशशतकस्यारम्भकालमलमकार्षुरिति मैसूरनगरनिवासिनः श्रीयुक्तगोविन्दाचार्यस्वामिनः स्वीयाङ्गभाषामये यतीन्द्रमतदीपिकानुवादे भूमिकायां विवेचयन्ति। ततश्च वयमत्रेदं विश्वसिमः—यत् श्रीधर्मराजाध्वरीन्द्राः श्रीमदप्पय्यदीक्षितसमकालिकाः, अथवा यतीन्द्रमतदीपिकालेखनसमये वृद्धा आसन्निति, सप्तदशशतकस्योपक्रमसमय एवैतेषामपि समय इति। श्रीनटेशशास्त्रिणां पितृपितामहौ मार्कि नवतिवर्षजीविन आस्ताम्। श्रीनटेशशास्त्रिणस्तु विपञ्चाशद्वयस्सु सांप्रतं वर्तन्ते। श्रीरामकृष्णदीक्षितानां श्रीधर्मराजाध्वरीन्द्रात्मजानामप्यन्ततो गत्वा सप्ततिर्वयसां नासंभाविता। ततश्च मार्कि विग्रतवत्सरेभ्यः पूर्वमेतेषां जीवनमासीदिति संभावनायाः पूर्वतनसंभावनायाश्चैकरूप्यमपि सिद्धं भवति। इतः परं तु चरितविमर्शनचक्षुष ऐतिहासिका एव प्रमाणम्।

(२२०) परिभाषाकाराणां विवरणसिद्धान्तपक्षपातित्वादिकम्।

एतावन्मात्रमत्र वयमुल्लिखामः—यत् एते खलु न केवलं वेदान्तशास्त्रमधिकृत्य वेदान्तपरिभाषादिकम्, किन्तु न्यायशास्त्रमप्यधिकृत्य तर्कचूडामणिनामानं प्रबन्धमेकमलिखन्निति परिभाषोपक्रमश्लोकत एवाधिगम्यते। सत्यपि प्रस्थानभेदे विवरणभामतीप्रस्थानाभ्याम्, श्रीधर्मराजाध्वरीन्द्रा विवरणप्रस्थानमेव विशिष्य समाद्रियन्त इति, मनोऽनिन्द्रियत्व-शाब्दापरोक्षवाद-जीवादिप्रतिबिम्बभाव-

श्रवणादिविधेयक्रियारूपत्वादीनामिव विशिष्य परिभाषायां समर्थनात् न तिरोहितमिदम्। किं बहुना ? सर्वतन्त्रस्वतन्त्रा अनितरसाधारणपाण्डित्यप्रकर्षशालिनश्च श्रीधर्मराजाध्वरीन्द्रास्समासन्निर्ल्यत्र वेदान्तपरिभाषाग्रन्थ एकमत्रं प्रकटं प्रमाणम्।

(२३१) प्रकृतव्याख्यानावश्यकता।

परिभाषाग्रन्थो हि भाष्यादिवदतिप्रसन्नगम्भीरः तत्कर्तृतनूजन्मभिः श्रीरामकृष्णादीक्षितैः विशिष्य नैयायिकप्रक्रियाणामवलम्बेन सम्यगेव व्याख्यातः; यत्तु किल व्याख्यानमिदानीमप्यध्ययनाध्यापनपरम्परया सर्वतः प्रचरति॥ वेदान्तप्रक्रियाणां तत्तादृशीनां बहूनां योजनेन श्रीकृष्णनाथन्यायपञ्चाननकृतेराशुबोधिन्याः समालोचनपूर्वकमेकं व्याख्यानं विरचनीयमिति बहुशोऽनुरुद्धमस्मत्प्रियमित्रैः श्रीयुक्तराजेन्द्रनाथघोषमहोदयैः, ये खलु वङ्गभाषायां भामत्याद्यनुवादप्रकाशनेन, २० वत्सरतः पूर्वमेव बोधायनाचार्या एवोपवर्षाचार्या इत्यादिबहुतराचार्यादिस्वरूपकालग्रन्थादिनामसंग्रहणेन च विशेषत एव वङ्गदेशस्योत्तमर्णा इति, अल्पज्ञेनापि मयाऽस्मदाचार्यचरणेषु केवलेषु निरतिशयां भक्तिमवष्टभ्य यथाशक्ति यथामति च तद्व्याख्यैषा समपादि।

(२३२) उपकर्तृणां धन्यवादादिदानम्।

एतद्व्याख्याविरचनावसरे ततः प्रकाशनोद्यमनावसरे च विशेषतोऽस्मदुत्साहप्रतिरोधक्षमावहा एवान्तराया बहवोऽङ्कुरिता अप्यस्मदाचार्यचरणानामनुग्रहवशात् न ते कार्यक्षमा अभवन्निति नेदमभिमानविजृम्भितम्। प्रत्यहं मदीयानां लेखानां स्वयं बहुकालव्ययेन समालोचनेन ममोत्साहवर्धनेन च स्वनामधन्य पूज्यपाद श्रीलक्ष्मणशास्त्रिचरणाः महामहोपाध्याय श्रीप्रमथनाथतर्कभूषणमहाशयाश्च सर्वात्मनोत्तमर्णा इति वस्तुस्थितिकथनमिदम्॥

(२३३) प्रकृतव्याख्याया स्वनामधन्यशास्त्रवाचस्पत्यादि श्रीमदाशुतोष मुखोपाध्यायकरकमलयोः सादरं समर्पणम्।

अन्ते चानुपदमेवोल्लिखितानां सुगृहीतनामधेयानां पण्डितप्रकाण्डानामनुमोदनेन व्याख्याया अस्याः कलकत्ताविश्वविद्यालये प्रकाशनप्रबन्धमतिकठिनेऽपि काले व्यवस्थापितवताम्, शास्त्रवाचस्पत्यादिविविधविरुदावलीभूषणानाम्, प्राच्यविद्याप्रचारे विशेषतः प्राच्यपण्डितेष्वस्मादृशेषु च देशान्तरे कालान्तरे पुरुषान्तरेषु वात्सल्यं प्रेमातिशयं परिपालितवताम्, यथार्थसरस्वतीनामिदानीं वैकुण्ठमधि-

तिष्ठतामपि स्वीययशःकायेन, आत्मनो व्याख्यानप्रतिध्वनिना सर्वदाऽ-स्मद्हृदयं कलकत्ताविश्वविद्यालयम्, किं बहुना ? सर्वं भारतवर्षमधिवसतां श्रीयुक्ताशुतोषमुखोपाध्यायानाम्, एतद्व्याख्यासमर्पणमिदं कार्यं कृत्वाऽऽत्मानं धन्यधन्यं संपादयन्निदमेव सर्वेषां पण्डितप्रकाण्डानां पुरतः साञ्जलिबन्धं प्रार्थये— यत् अल्पज्ञेन मया संपादितायामस्यां व्याख्यायां यदि केऽपि गुणाः, तर्हि ते शान्तिमूर्तीनामज्ञातकोपप्रभावाणां सर्वदा मयि वत्सलानां च श्रीमदस्मदाचार्य-चरणानाम्, यदि तु केऽपि बहवो वा दोषाः, तर्हि ते ममेति गृह्यतामिति ।

(२३४) त्रुटिमार्जनप्रार्थना

कृतेऽपि विशिष्टे प्रयत्ने मूले १५ श्रुतिसाधारणत्वबाधोति, भूमिकायां ६८तमे पृष्ठे १७ पङ्क्तौ "देवतानां न" इत्यत्र न शब्दस्य अधिकम्, तथा २३४ पृष्ठे सजातीयेति पदात्पूर्वम् २२८ व्याख्यायामूनविंश पङ्क्तौ स्वतन्त्रमिति पदतः पूर्वं च नशब्दः, २४५ पृष्ठे तृतीयपङ्क्तौ संबन्धा इत्यस्यानन्तरं प्रत्यक्षत्वे पदं च न्यूनं मुद्रापणावसरे सञ्जातम्, तथाऽन्येऽपि वर्णप्रमादाः मूलव्याख्यानयोः यन्त्रेऽक्षराणां योजनेन एकारोकाररेफादीनाम्, मकारभकारयोस्थकारयकारयोः, वकारबकारयोः पकारयकारयोः शीकारेकारौ-काराणां चात्यन्तसदृशानां प्राथमिकाध्ययनत्वनिष्कासितशोधनार्थपत्रेषु सम्यग-परिचयादिना ये किलानवधानादिदोषतो वाऽत्र परिदृश्यन्ते तान् गुणैकपक्ष-पातिनः सहृदयाः स्वयं संशोध्य "गच्छतः स्खलनं न दोषाय" त्यपुरोभागदृष्ट्या सर्व एवास्माननुग्रहीष्यन्तीति सुदृढोऽयमस्माकं विश्वासः । सर्वथा तु शक्तिमति-क्रम्यापि स्वां संशोधनभारः स्वीयः पण्डितवरमीमांसाशिरोमणिमीमांसातीर्थादि-श्रीसोमसुन्दरशास्त्रिणाऽस्मदत्यन्तप्रीतिपात्रेण कथञ्चन निरूढ इति नात्र तदधमर्णताप्रकाशनमस्माकमनवसरम् ॥

(२३५) मुद्रापकादीनामाधमर्ण्यप्रकाशनेनोपसंहारः ।

अन्ते सबहुमानं सादरातिशयं चैतद्ग्रन्थमुद्रापणार्थमपेक्षितसर्वविधसाहाय्यप्रदा-नेनात्यन्तमुपकृतवतां श्रीयुक्तातुलचन्द्रघटकमहोदयानां कलकत्ताविश्वविद्यालय-मुद्रणालयाध्यक्षाणामन्येषां च कार्यकारिणां केवलमाधमर्ण्यप्रकाशनेन प्रकृतो लेखोऽत्रैवोपसंह्रियत इति शिवम् ।

---

# अथ विषयानुक्रमणिका ।

## (१) प्रत्यक्षपरिच्छेदः ।

पृष्ठसंख्या


१ विवरणभामत्याद्यनुसारेणाविद्याश्रयविषयजगत्कारणस्वरूपादि विवेचनपूर्वकं मङ्गलश्लोकादिविवरणम् ... ... १

२ धर्मार्थकामादिपदार्थविवेचनपूर्वकं तदनित्यत्वाध्यवसायप्रकारः ८

३ स्मृतिव्यावृत्तप्रमात्वोपपादनपूर्वकं प्रमालक्षणघटकानधिगतत्वस्य शिखामण्याहृतपक्षविमर्शनेन प्रकारान्तरेण निर्वचनम् ... १३

४ नैयायिकसम्मतप्रमालक्षणपरित्यागे बीजम्, प्रमालक्षणघटकदल-प्रयोजनं च ... ... १८

५ जन्याजन्यप्रत्यक्षस्वरूपनिष्कर्षेण वृत्त्यवतारणम् ... २७

६ वृत्तेर्मनोऽवयवविशेषत्वं न मनःपरिणामत्वम् ... ... ३१

७ आगमस्य प्रत्यक्षापेक्षया प्राबल्यनिरूपणपूर्वकं कर्तृत्वाद्यध्यासस्य सोपाधिकत्वादिपरीक्षणम् ... ... ३५

८ मनोऽनिन्द्रियत्वसमर्थनम्, तत्प्रयोजनपरीक्षणं च ... ३८

९ वृत्तेर्मनोविकारत्वे मौलिकवाक्यसमीक्षा ... ... ४५

१० अतिव्याप्त्यादिनिरासपूर्वकं ज्ञानप्रत्यक्षप्रयोजकनिष्कर्षः ... ४७

११ शाब्दापरोक्षवादसमर्थनम् ... ... ५५

१२ सौरभस्य चक्षुरिन्द्रियायोग्यतयेति मूलाशयपरीक्षणम् ... ५७

१३ ज्ञानप्रत्यक्षनिष्कर्षः, तत्र शिखामणिपरीक्षणं च ... ५८

१४ जातिखण्डनम् ... ... ६०

१५ निष्कृष्टलक्षणे इन्द्रियपदप्रयोगोपपत्तिविचारः ... ... ६२

१६ विषयप्रत्यक्षत्वप्रयोजकपरीक्षणम् ... ... ६३

१७ विषयप्रत्यक्षलक्षणस्य सत्त्वैक्यवादेन सत्ताद्वैविध्यवादेन च समन्वयः ... ... ६५

१८ विषयप्रत्यक्षनिष्कर्षे शिखामण्यादिपरीक्षणम् ... ... ६७

| | | पृष्ठसंख्या |
|---|---|---|
| १८ | वृत्तिस्वप्रकाशत्वपरीक्षा ... ... | ७० |
| २० | वृत्तिविभागपर्यन्तमूलार्थसंग्रहः ... ... | ७४ |
| २१ | यतीन्द्रमतदीपिकासमीक्षापूर्वकं स्वरूपमात्रविषयकनिर्विकल्पसमर्थनम् ... ... | ७७ |
| २२ | वाक्यस्याखण्डार्थत्वे लक्षणप्रमाणादिसमीक्षा ... ... | ७८ |
| २३ | "द्वा सुपर्णा" वाक्यान्तर्यामिब्राह्मण तत्त्वमस्यादिवाक्यानां द्वैततात्पर्यनिषेधेनाद्वैते तात्पर्यसमर्थनम् ... ... | ८४ |
| २४ | सत्यादिपदेन ब्रह्मोपस्थितिसंभवसमर्थनम् ... ... | ८८ |
| २५ | अखण्डार्थत्वलक्षणपरिष्करणम् ... ... | ९० |
| २६ | जीवतत्साक्ष्यादिस्वरूपपरीक्षणम् ... ... | ९३ |
| २७ | ख्यातिचतुष्टयनिरासेनानिर्वचनीयख्यातिसमर्थनम् ... | १०१ |
| २८ | सामान्यलक्षणादिप्रत्यासत्तिनिरासः ... ... | १०७ |
| २९ | अधिष्ठाननिष्कर्षणपूर्वकं रूप्याद्यनिर्वचनीयत्वसमर्थनम् ... | १०८ |
| ३० | रूप्यादीनामहंप्रत्ययविषयत्वपरीक्षणम् ... ... | ११५ |
| ३१ | स्वाप्नानिर्वचनीयत्वतदधिष्ठानसमर्थने ... ... | १२४ |
| ३२ | रजतादिमित्थ्यात्वोपपत्तिः ... ... | १३१ |
| ३३ | इन्द्रियादिविभागः श्रोत्रस्य विषयदेशगमनपरीक्षा च ... | १३७ |
| ३४ | शब्दनित्यत्वसमर्थनम्, प्रत्यक्षप्रमाणोपयोगश्च ... ... | १३८ |


## (२) अनुमानपरिच्छेदः ।


| | | |
|---|---|---|
| ३५ | लिङ्गपरामर्शहेतुत्वनिरासपूर्वकमनुमितिकरणनिर्वचनम् ... | १४३ |
| ३६ | अनुमितेः स्मृतित्वापत्तिशङ्कापरीक्षणम् ... ... | १४७ |
| ३७ | व्याप्तिस्मृतिस्थलेऽपि संस्कारहेतुत्वोपपत्तिः ... ... | १४८ |
| ३८ | व्याप्तिस्वरूपविवेचनम् ... ... | १५१ |
| ३९ | केवलान्वय्यादिनिरासः ... ... | १५२ |
| ४० | परार्थानुमानपरीक्षा ... ... | १५७ |
| ४१ | अनुमानप्रमाणेन मित्थ्यात्वसिद्धिपरीक्षणम् ... ... | १५८ |

पृष्ठसंख्या

४२ मिथ्यात्वलक्षणे ग्रावत्पदसार्थक्यस्य ग्रिखामण्याद्याहृतस्य निरासेन प्रकारान्तरेण समर्थनम् ... ... १६४
४३ अंशित्वहेतुकानुमानपरीक्षा ... ... १६७
४४ नीरूपस्यापि ब्रह्मणः प्रत्यक्षत्वसमर्थनम् ... ... १६८

(३) उपमानपरिच्छेदः ।

४५ उपमानप्रमाणान्तरत्वसमर्थनम् ... ... १७४
४६ अद्वैतमते तदुपयोगप्रकारः ... ... १७६

(४) आगमपरिच्छेदः ।

४७ शब्दस्यानुमानातिरिक्तसमर्थनम् ... ... १७८
४८ अन्विताभिधानाभिहितान्वयवादयोर्वाक्यस्य संसर्गविषयकत्वनियमनिरासः ... ... १८१
४९ आकांक्षास्वरूपनिष्कर्षः, प्रमाणवाक्ये तत्समन्वयश्च १८४
५० बलाबलाधिकरणारम्भ, वाजिनन्यायस्यापि तत्प्रवेशश्च ... १८७
५१ योग्यताऽऽसत्तिस्वरूपनिष्कर्षः ... ... १९३
५२ आकृतिशक्त्यादिविचारः ... ... १९६
५३ उक्तार्थे परिभाषाकारमतपरीक्षा ... ... २०१
५४ लक्षणासामान्यस्वरूपप्रयोजनादिनिष्कर्षः ... ... २०३
५५ तत्त्वमसिवाक्ये जहदजहल्लक्षणापरीक्षा ... ... २०६
५६ लक्षणाबीजसमीक्षा ... ... २०९
५७ वाक्यलक्षणासमर्थनम् ... ... २१०
५८ तात्पर्यस्वरूपनिष्कर्षः ... ... २१५
५९ तात्पर्यग्राहकनिर्णयः, लौकिकालौकिकवाक्यवैलक्षण्यपरीक्षा च २२२
६० वेदान्तानां ब्रह्मणि प्रामाण्यसमर्थनम् ... ... २२४
६१ वेदापौरुषेयत्वपरीक्षणम् ... ... २२७

(५) अर्थापत्तिपरिच्छेदः ।

६२ अर्थापत्त्यतिरिक्तप्रमाणत्वस्य वेदान्तिनां तदुपयोगस्य च समर्थनम् २३६

| | | पृष्ठसंख्या |
|---|---|---|
| ६३ | अर्थापत्तिविभागः ... ... | २३८ |
| ६४ | व्यतिरेकानुमाननिरासः ... ... | २४१ |
| | (५) अनुपलब्धिपरिच्छेदः । | |
| ६५ | प्रत्यक्षातिरिक्तानुपलब्धिस्वीकारप्रयोजनम् ... ... | २४३ |
| ६६ | सदलप्रयोजनमनुपलब्धिलक्षणपरीक्षणम् ... ... | २४६ |
| ६७ | प्रमाणपञ्चकाभावस्यानुपलब्धित्वनिरूपणम् ... ... | २४७ |
| ६८ | योग्यानुपलब्धिस्वरूपनिष्कर्षः ... ... | २४८ |
| ६९ | अभावस्य प्रत्यक्षत्वपरीक्षा ... ... | २५२ |
| ७० | अभावमायिकत्वसमीक्षणम् ... ... | २५५ |
| ७१ | अभावविभागः ... ... | २५८ |
| ७२ | ध्वंसानित्यत्वसमालोचनम् ... ... | २६० |
| ७३ | भेदस्वरूपविभागादिकम् ... ... | २६१ |
| | (६) स्वतःप्रामाण्यवादः । | |
| ७४ | स्वतोग्राह्यप्रमात्वस्य स्मृतिसाधारण्यपरीक्षणम् ... ... | २६५ |
| ७५ | स्वतःशब्दार्थनिष्कर्षः ... ... ... | २६८ |
| ७६ | स्वतःप्रामाण्यान्तविषयसंक्षेपः ... ... ... | २७१ |
| | (७) विषयपरिच्छेदः । | |
| ७७ | प्रामाण्यस्य व्यावहारिकत्वादिविभागपरीक्षणम् ... ... | २७४ |
| ७८ | ब्रह्मतटस्थस्वरूपलक्षणपरीक्षा ... ... ... | २८१ |
| | ब्रह्मणः प्रपञ्चोपादानत्वपरीक्षा च ... ... | २८४ |
| ७८ | दुःखस्येष्टत्वापत्तितत्परिहारौ ... ... ... | २८८ |
| ७९ | जगतो जन्मक्रमपरीक्षा ... ... ... | २९० |
| ८० | इन्द्रियभौतिकत्वसमीक्षा ... ... ... | २९४ |
| ८१ | पञ्चीकरणप्रक्रिया ... ... ... | २९७ |
| ८२ | सूक्ष्मशरीरोत्पत्तिक्रमः ... ... ... | २९८ |
| ८३ | लोकाद्युत्पत्तिक्रमः ... ... ... | ३०१ |

पृष्ठसंख्या

८५ ईश्वरसाक्षात्कर्तृत्वपरम्पराकर्तृत्वनिष्कर्षः ... ... २०२
८६ चतुर्विधप्रलयादिनिष्कर्षः ... ... ... २०३
८७ सृष्टिवाक्यानां सगुणवाक्यानां च ब्रह्मणि समन्वयः ... २१३
८८ जीवेश्वरयोरन्तःकरणादिबिम्बप्रतिबिम्बभावसंग्रहः ... २१८
८९ सलक्षणजीवस्वरूपनिष्कर्षः ... ... ... २२२
९० वृत्तेरावरणाभिभवाद्यर्थत्वसंग्रहः ... ... ... २२३
९१ जीवावस्थात्रयाणुत्वादिपरीक्षणम् ... ... ... २२८
९२ जीवब्रह्माभेदोपपादनम् ... ... ... २३४

(८) प्रयोजनपरिच्छेदः ।

९३ प्रयोजनलक्षणम्, कर्मफलात् ज्ञानफले विशेषश्च ... २३६
९४ मुक्तेरुत्क्रमणनिरपेक्षत्वसमर्थनम् ... ... ... २३९
९५ सिद्धेऽपि मोक्षे प्रवृत्त्युपपत्तिः ... ... ... २४१
९६ मोक्षे ज्ञानसाध्यत्वोपपत्तिः ... ... ... २४४
९७ विवरणभामतीमताभ्यां प्रत्यक्षस्य शाब्दत्वमानसत्वविवेचनम् २४५
९८ श्रीभाष्यसमालोचनपूर्वकं ज्ञाने कर्मणामुपयोगपरीक्षा ... २४९
१०० अन्तरङ्गसाधनानां श्रवणादीनां स्वरूपाङ्गाङ्गिभावादिनिष्कर्षः २५९
१०१ श्रवणाद्यधिकारिनिर्णयः ... ... ... २५४
१०२ सगुणोपासनस्य ब्रह्मसाक्षात्कारोपयोगः ... ... २६२
१०३ अर्चिरादिमार्गपरीक्षणम् ... ... ... २६४
१०४ मुक्तेरुत्क्रमणानपेक्षत्वे श्रीभाष्यपरीक्षणम् ... ... २६७
१०५ ज्ञानस्य प्रारब्धेतरविनाशकत्वम् ... ... ... २६९
१०६ एकमुक्तौ सर्वमुक्त्यापत्तिपरिहारपरीक्षा ... ... २७०
१०७ अनेकजीववादे ईश्वरभावस्यैव मुक्तित्वसमर्थनम् ... २७१
१०८ विपरीतक्रमेण प्रयोजनपरिच्छेदार्थसंग्रहः ... ... २७४
१०९ श्रीभाष्यापादित-दूषणपरिहारपूर्वकमुपनिषदामद्वैतस्वारस्यव्यवस्थानम् ... ... ... ... ... २७५

ॐ

श्रीश्रीहरिः शरणम् ।

# वेदान्तपरिभाषा ।

परिभाषाप्रकाशिका-नाम-व्याख्यासमेता ।

## प्रत्यक्षपरिच्छेदः ।

यदविद्याविलासेन भूतभौतिकसृष्टयः ।
तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥ १ ॥
वेदान्तपरिभाषाया निगूढार्थप्रकाशिनी ।
क्रियतेऽनन्तकृष्णेन परिभाषाप्रकाशिका ॥ २ ॥

प्रारिप्सितानां हि कर्मणामविघ्नेन परिसमाप्तिं कामयमाना ह्यास्तिका मङ्गलमाचरन्तीति सम्प्रदायसिद्धमिदम् । अत एव "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते शास्त्राणी"ति महाभाष्यकारा वदन्ति । तत्र मङ्गलं कायिकवाचिकमानसभेदेन त्रिविधम् । कायिकं साष्टाङ्गपतनादिकम् । वाचिकं स्तुत्यादिकम् । मानसं स्वस्मादयमुत्कृष्ट इत्याकारकं ज्ञानम् । तत्र मङ्गलम्—

"आदित्यस्य सदा पूजां तिलकस्वामिनस्तथा ।
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात्" ॥

इति याज्ञवल्क्यवचनेन यद्यपि आदित्यादिविषयमेव समाचरणीयम्; तथापि "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" इति बृहदारण्यक वचनानुसारेणादित्यादीनामुपासनमप्यपरिच्छिन्नपरमात्मस्वरूपेणैव कर्तव्यम्, नादित्यादिस्वरूपेणेति सूचयन् परमात्मस्वरूपविषयकमङ्गलमातनुते— **यदविद्याविलासेनेति** ॥

यस्याविद्या यदविद्या; तस्या विलासः परिणामः। अभेदे तृतीया। अविद्यापरिणामरूपा इत्यर्थः। **भूतभौतिकसृष्टयः। भूतानि** आकाशादीनि, **भौतिकानि** घटादीनि, तदभिन्नाः **सृष्टयः**; सृज्यमाननामरूपात्मकसर्वविधप्रपञ्चा इति यावत्। तं परमात्मनं सच्चिदानन्दविग्रहं सत्यज्ञानानन्दस्वरूपं ब्रह्म नौमि स्तौमीत्यर्थः। यस्याविद्या यदविद्येत्यत्र षष्ठ्यर्थः विवरणाचार्याणां मत आश्रयाश्रयिभावः;

"आश्रयत्व-विषयत्व-भागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥"

इति संक्षेपशारीरक-वचनानुसारेण तैरज्ञानस्याश्रयो विषयश्च ब्रह्मेत्यङ्गीकारात्, वाचस्पतिमिश्राणां तु अज्ञानस्याश्रयो जीवः, विषयस्तु ब्रह्मेति मतम्, अहमज्ञ इत्याद्यनुभवात्, तन्मते तु षष्ठ्यर्थो विषयत्वम्। यद्यपि मतद्वयेऽपि ब्रह्मणोऽज्ञानविषयत्वमङ्गीकृतमिति विषयत्वमेव षष्ठ्यर्थ इति शिखामणिगतं द्वितीयव्याख्यानमपि युक्तम्; तथापि सकलजगत्कारणत्वं ह्यज्ञानाश्रयत्वेनेति विवरणानुसारिमतेऽज्ञानविषयत्वेन ब्रह्मविवक्षा निष्प्रयोजना भवेदिति मतभेदेनार्थद्वयमत्र निरूपितम्॥

यद्यपि वाचस्पतिमिश्रमतेऽपि सिद्धान्तबिन्दुटीकायां ब्रह्मानन्दसरस्वतीभिरज्ञानाश्रयत्वमेव जगत्कारणत्वप्रयोजकमिति जीव एव जगदुपादानकारणमिति निरूपितम्; तथापि भामतीकल्पतरुग्रन्थे तस्य मतस्य निरसनपूर्वकं जगद्वाचित्वाधिकरणे ब्रह्मकारणत्वपक्ष एव समर्थित इति नानुपपत्तिः। तदुक्तम्—

"जगत्कर्तृत्वमन्यत्र ब्रह्मणो नेति दुष्यति।
वाचस्पतावुपालम्भमनालोच्योचिरे परे॥
जीवाज्जन्म जगत्सर्वं सकारणमिति ब्रुवन्।
क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम्॥" इति॥

यदि तु उभयमतसाधारणमेक एव षष्ठ्यर्थो वाच्य इत्याग्रहः, तर्हि आश्रयत्वमेव षष्ठ्यर्थोऽङ्गीक्रियताम् । परमात्मानमित्यत्र तु विवरणमते परमात्मानमिति एकपदम् । मतान्तरे परम्, आत्मानम्, इति विभजनीयम् । न च जीवजगत्कारणत्वे कारणत्वं ब्रह्मलिङ्गमिति सिद्धान्तविरोधः, "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ती"ति श्रुतिविरोधः, जीवज्ञानादेव मोक्षापत्तिश्चेति वाच्यम् ; अत्र हि मते जीवपदेन नान्तःकरणविशिष्टं चैतन्यं विवक्ष्यते ; अन्योन्याश्रयापत्तेः, किन्तु स्वरूपचैतन्यमेव । तच्च स्वरूपम्, अज्ञानाश्रयत्वेन जीव इति व्यवहारमाप्नोति, आवृतत्वेन ब्रह्मचैतन्यमिति न जीवब्रह्माविवेकः । अस्मिंश्च मतेऽज्ञानावच्छिन्नं चैतन्यं जीवः । अयमेवैकजीववादः । तथाच जगत्कारणत्वं न जीवलिङ्गमित्यादिग्रन्थाः अस्मदादिपरिच्छिन्नजीवविषयाः । अविद्यावच्छिन्नचैतन्यरूपस्तु जीवः स्वत उपाधिना च व्यापकत्वात् ब्रह्मपदार्थं इति न "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिविरोधः, नवाऽहमिति ज्ञानात् मोक्षापत्तिश्चेति मन्तव्यम् ॥

अयमत्र निष्कर्षः—विवरणमते—अन्तःकरणप्रतिबिम्बम्, अविद्याप्रतिबिम्बं वा चैतन्यं जीवः । वाचस्पतिमते तु अन्तःकरणावच्छिन्नम्, अविद्यावच्छिन्नं वा चैतन्यं जीव इति । अन्तःकरणोपाधित्वपक्षः अनेकजीववादेन, अविद्योपाधित्वपक्षः एकजीववादेनेति मतद्वयेऽपि तुल्यम् । एकजीववादेऽपि विवरणाचार्यमते जगत्कारणत्वं ब्रह्मण एव, वाचस्पतिमते तु जीवस्यैवेति विशेषः । मोक्षसाधनत्वं तु मतद्वयेऽपि ब्रह्मज्ञानस्यैव, ज्ञानाज्ञानयोः समानविषयत्वात् । सर्वथा च यदविद्येत्यत्र यदाश्रयेति व्याख्यानमपि न दुष्टमिति मन्तव्यम् ॥

वस्तुतस्तु—वेदान्तिनां मते ब्रह्म विवर्तोपादानकारणमित्येव सम्मतम् । तत्त्वञ्च ब्रह्मणोऽज्ञानविषयत्वेनैव । आवरणमेव खल्वज्ञानविषयत्वम् । अत एव हि प्रातिभासिकशुक्तिरूप्यादिस्थले मतद्वयेऽपि शुक्त्यवच्छिन्नचैतन्यमेवोपादानकारणम् ; अन्यथा पक्षद्वयेऽप्यविद्याया मतद्वयेऽपि जीवाश्रिततया जीवस्यैव कारणत्वापत्तेः । एवञ्च विषयत्वं षष्ठ्यर्थं इत्यङ्गीकारेऽपि विवरणमते न निष्प्रयोजनत्वमिति यद्विषयकाविद्येति एक एव षष्ठ्यर्थं उपपन्न इति मन्तव्यम् ॥

अस्मिंश्च पक्षे मायाया नोपादानकारणत्वम्, किन्तु दोषविधया निमित्तकारणत्वमिति विन्दुटीकायां व्यक्तम् । नचास्मिन् मते ब्रह्मसाक्षात्कारेणाविद्याविनाशेऽपि न प्रपञ्चविलयापत्तिः, निमित्तकारणस्य विनाशेऽपि कार्याविनाशात्,

एवं च—"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति" ॥

इति वार्तिकवचनविरोध इति वाच्यम् ; अविद्योपादानत्वपक्षे संस्काररूपेणाविद्यानुवृत्त्या जीवन्मुक्तिरिवास्मिन् मते अविद्याकार्यानुवृत्त्या जीवन्मुक्तिरित्यङ्गीकारेण रज्जुतत्त्वसाक्षात्कारेऽपि मिथ्यात्वेन सर्पानुवृत्तिरिव मिथ्यात्वेन प्रपञ्चानुवृत्तिरित्यङ्गीकारे बाधकाभावात् । अयं भावः—रज्जुतत्त्वसाक्षात्कारेऽज्ञानविषयताविलयेन विवर्तोपादनताविलयात् सर्पादीनामिदमात्मताबुद्धिर्विनश्यतीत्यनुभवसिद्धम्, एवं ब्रह्मसाक्षात्कारानन्तरं प्रपञ्चे सदात्मताबुद्धिर्निवर्तते । इदमेव प्रपञ्चस्य मिथ्यात्वं नाम ।

एतेन अविद्याया ब्रह्माश्रिताया जगत्परिणामित्वेऽविद्याकार्यतयेव प्रपञ्चप्रतीत्याद्युपपत्तौ ब्रह्मणि विवर्तोपादानकारणत्वकल्पनं वितथमिति शङ्कापि नात्र प्रसरति ; "बहु स्यां प्रजायेये"त्यादिश्रुतीनां तादृशब्रह्मकारणताबोधकत्वादिति सूचितम् । एतेन—मायाशरीरः परमात्मा जगदुपादानकारणम् । तत्र च शरीरशरीरिणोस्तादात्म्यात् अपृथक्सिद्धिसम्बन्धाद्वा भगवच्छरीरकार्याणामिव सतां जगतां परमात्मकारणत्वेन श्रुतिस्मृत्यादिषु व्यवहार इति—मतमपि प्रत्युक्तम् । "नेह नानास्ति किञ्चने" त्यादिश्रुतिभिः प्रपञ्चमिथ्यात्वावगमेन तस्य च प्रपञ्चस्य बाध्यत्व एव सम्भवेन जगत्सत्यतावादासम्भवात् । एतेन—जगत्सत्यतावादोऽपि—परास्तः तदिदं सर्वमभिप्रेत्याह—यदविद्याविलासेनेति ॥

यदविद्यापरिणामा एव, नतु वस्तुतो यत्परिणामाः ; यद्विवर्ता इति भावः । तदुक्तमद्वैतब्रह्मसिद्धौ—

"ब्रह्माज्ञानाज्जगज्जन्म ब्रह्मणोऽकारणत्वतः ।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते" ॥ इति ॥

वार्तिकेऽप्युक्तम्—

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥" इति ॥

एतेन—"यतो वा इमानि भूतानि जायन्ते" इति श्रुतिरपि अविद्याद्वारा ब्रह्मणो जगत्कारणत्वनिरूपणार्थैवेति—सूचितम्। तान्त्रिकाणां हि मते स्थूलाचिद्रूपकार्याणां प्रकृताविव लयः, नतु ब्रह्मणि। एवञ्च यत् प्रयन्तीति ब्रह्मण्येव लयवर्णनं तेषां नोपपद्यते। अस्मन्मते तु ब्रह्मविवर्त्तकार्याणां ब्रह्मणि लय इति सर्वमुपपद्यते। अत एव तटस्थलक्षणपरं "जन्माद्यस्य यत" इति सूत्रमिति सिद्धान्तोऽप्युपपद्यते। यत् यदसम्बन्धि यत्सम्बन्धितया कल्पितम् वा यल्लक्षयति तत्तटस्थलक्षणम्। यथा शाखा चन्द्रासम्बन्धिनी कल्पितचन्द्रसम्बन्धिनी वा चन्द्रं लक्षयतीति ब्रह्मासम्बन्धि कल्पितब्रह्मसम्बन्धि वा जगत् ब्रह्मणो लक्षणमिति युक्तम्॥

अत्रैवमाशङ्का—मिथ्याभूतेन जगता सत्यस्य ब्रह्मणः कथं लक्षणमिति? तत्रैवं न्यायरत्नमणौ समाहितम्; सेयं शुक्तिर्येदं रजतमभादिति शुक्त्यविद्याकार्यं रजतं शुक्तेर्यथा लक्षणम्, एवं ब्रह्माविद्याकार्यं जगत् ब्रह्मणो लक्षणमिति, तदिदं परिभाषाकारा अपि सूचयन्ति—**यदविद्याविलासेनेति**। भूतभौतिकसृष्टय इति बहुवचनेन सर्वाण्यपि सृष्टिवाक्यानि उपलक्षितानि, तेन यत्र केवलसृष्टिकारणत्वमात्रमुपक्षिप्तं न तु लयकारणत्वमपि, तत्रापि अविद्याद्वारकमेव तद्विवक्षितमिति सूचितम्। एतेन—"जन्माद्यस्य यत" इति न तटस्थलक्षणपरम्, किन्तु स्वरूपलक्षणपरमेव; तटस्थलक्षणापेक्षया स्वरूपलक्षणमुत्कृष्टमिति साम्प्रदायिकः सिद्धान्तः, यदि "सत्यं ज्ञान"मित्येव स्वरूपलक्षणमिति स्यात्, तर्हि सत्यादीत्येव सूत्रेत्तेति शङ्कापि—परास्ता; न्यायरत्नामणिकारादिभिः भाष्यकारैयास्येव सूत्रस्य स्वरूपलक्षणपरत्वस्यापि ज्ञापितत्वात्। तमिममर्थं मनसि निधायाह—**तं सच्चिदानन्दविग्रहमिति**॥

अत्रेदं भगवत्पादीयं जन्माधिकरणगतं भाष्यम्—"भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मे" त्युपक्रम्याह—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्मेति"। तस्य च निर्णयवाक्यम्—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ती"ति। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारण-

विषयाण्युदाहर्तव्यानी"ति। इदं हि भाष्यं "जन्माद्यस्य यत" इति सूत्रं "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिस्वरूपलक्षणस्याप्युपलक्षणमिति निरूपयतीति बहवो व्याख्यातारो मन्यन्ते। सच्चिदानन्दविग्रहमिति एकमेव स्वरूपलक्षणं विवक्षितम्, न तु स्वरूपलक्षणत्रयम्। यद्यपि सत्त्वचित्त्वादिकं नाति प्रसक्तम्; तथापि ब्रह्मत्रितयशङ्कानिवृत्तिर्लक्षणत्रितयाविवक्षाया: प्रयोजनमिति बोध्यम्॥

एतेन—जगज्जन्मस्थितिप्रलयत्रितयकारणत्वविवक्षाया अपि प्रयोजनं सूचितम्। विस्तरश्चास्य सिद्धान्तबिन्दुटीकायाम्, अस्मदीयाद्वैतदीपिकायां च द्रष्टव्य:। इदञ्च प्रयोजनं परमात्मानमित्येकं पदमित्यभिप्रायेण। यदि तु परम् आत्मानमिति पदविभागोऽभिप्रेयते, तदा सच्चिदानन्दविग्रहमित्यनेन विश्वतैजसप्राज्ञात्मानमित्यर्थो विवक्षित:। यदविद्याविलासेनेति पूर्वार्धेन तु विराट्हिरण्यगर्भान्तर्याम्यात्मक: परमेश्वरोऽभिप्रेत:। एवञ्च विश्वतैजसप्राज्ञाभिन्नमाण्डूक्योपवर्णितजीवस्वरूपाभिन्नं विराट्हिरण्यगर्भान्तर्याम्यभिन्नं तादृशपरमात्मानं नौमीति तात्पर्यार्थ: पर्यवसन्न इत्यपरापि योजना सम्भवति। एतेन—"तत्त्वमसी"त्यत्र सर्वेषामपि पदानां स्वरूपचैतन्यपरत्वे पदत्रयवैयर्थ्यमिति शङ्कापि—परास्ता; त्रिविधजीवेन त्रिविधेश्वराभेदबोधनेन सार्थक्यादित्यन्यत्र विस्तर:। अस्मिंश्च पक्षे आत्मपदेन तुरीयं विवक्षितमिति बोधयितुं परमिति विशेषणं सार्थकं द्रष्टव्यम्॥

अनेन च श्लोकेन प्रेक्षावत्प्रवृत्त्यङ्गमनुबन्धचतुष्टयमपि सूचितम्। यथा विषय: परमात्मा, आनन्दात्मकतत्प्राप्ति: फलम्, साधनचतुष्टयसम्पन्नोऽधिकारी, सम्बन्ध: प्रतिपाद्यप्रतिपादकभाव इति। अत्रायमधिकारिलाभप्रकार:—यदविद्याविलासेनेति हि वाक्यं सर्वस्यापि प्रपञ्चस्याविद्यकत्वं बोधयत् नित्यानित्यवस्तुविवेकमधिकारिविशेषणं सूचयत्तदविनाभूतानि साधनान्तराण्यपि ब्रह्मविद्याधिकारिविशेषणानि ज्ञापयति। इदञ्च परिभाषादिग्रन्थानामद्वैतसिद्ध्यादीनामिव मननरूपत्वमङ्गीकृत्योक्तम्। उक्तं हि लघुचन्द्रिकायाम्—"मायाकल्पिते"त्यद्वैतसिद्धिमङ्गलश्लोके मायाकल्पितपदेनाधिकारी यथोक्त: सूचित इति॥

वस्तुतस्तु—नेयं वेदान्तपरिभाषा मननम्, किन्तु श्रवणाद्यपेक्षिततत्तत्प्रक्रियाविशेषनिरूपणार्थं प्रवृत्ता श्रवणाद्यङ्गमेव। एवञ्च वेदान्तार्थजिज्ञासव एवात्राधिकारिण:। अत एव "तेन बोधाय मन्दानाम्" इति उत्तरग्रन्थ उपपद्यते।

यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥२॥

सर्वथाऽनुबन्धचतुष्टयस्य ब्रह्म-मोक्ष-साधनचतुष्टयसम्पन्नादिरूपस्य वेदान्तप्रक्रिया-तज्ज्ञान-जिज्ञास्वादिरूपस्य वा सम्भवात् सर्वमनवद्यम् ॥

यत्त्वत्र शिखामणौ "यदविद्याविलासेन भूतभौतिकसृष्टयः" इति ईश्वरेऽनुमानप्रमाणप्रदर्शनार्थमित्युक्तम्, तद् जन्मादिसूत्रे भाष्यकृतैव निरस्तमिति न तदभिप्रायोऽयं सन्दर्भो योजनीयः। तदुक्तम्—"वेदान्तकुसुमग्रथनार्थत्वात् सूत्राणामि"ति। नचेदं भाष्यं सूत्राणामिवानुमानपरत्वं निषेधति, न चेदं श्लोकार्धं सूत्रम्, अतोऽस्य सन्दर्भस्यानुमानप्रदर्शनपरत्वमपि नानुपपन्नमिति वाच्यम्; निर्विशेषब्रह्मणोऽनुमानाद्यविषयत्वेन श्रुतिमात्रगम्यत्वस्य भाष्यकारादिभिः साधनेन तत्रानुमानप्रमाणप्रदर्शनस्यायोगात्। यद्यपि श्रुतिमूलमनुमानं वेदान्तिनामपि प्रमाणम्, तथापि प्रथमतः श्रुतिप्रमाणमप्रदर्श्यानुमानप्रमाणस्य प्रदर्शनम्, ततः श्रुतिप्रमाणनिर्देश इति नैयायिकप्रक्रियादरणमत्र न शोभत इति केचिन्मन्यन्ते ॥

अयमाशयः—अनुमानं हि मननरूपं श्रुतस्यैव भवति, न तु श्रवणात् प्राक्। अतः श्रुतेरेव प्रथमतो निर्देशो युक्त इति।

अन्येतु शिखामणिकृतामपि श्रुत्यविरोधेनानुमानप्रामाण्यमेवाभिप्रेतम्। अत एव "भूतभौतिकसृष्टयः" इत्यस्य व्याख्यावसरे "तदैक्षते"त्यादिश्रुतिसिद्धा इति विवृतमिति न विरोध इति मन्यन्ते।

परे तु—"नचाप्रयोजकत्वम्; लाघवेनैकस्यैव कर्तुः सर्वज्ञस्य सकर्तृकत्वानुमितौ विषयत्वादि"ति ग्रन्थविरोधेन नान्येषां मतं युक्तमिति। युक्तं चैतत्—यदविद्येत्यत्र हि अभिन्ननिमित्तोपादानं खलु स्वरूपं विवक्षितम्, न चोक्तानुमानेनैतत् सिद्ध्यतीत्यलं विस्तरेण ॥१॥

**यदन्तेवासीति ॥** यस्य गुरोरन्तेवासिरूपैः सिंहैः भेदवादिरूपा गजाः परास्ताः, तं नृसिंहाभिधं परमं यतीन्द्रं प्रकर्षेण स्तौमीति विशिष्टवाक्यार्थः। सिंहवंशे हि सिंह एव भवति, नतु ग्रामसिंहः। अतः नृसिंहवंश्यानामन्तेवासिनां सिंहत्वमुपपन्नम्। वंशो हि द्विधा विद्यया जन्मना चेति भावः ॥

श्रीमद्वेङ्कटनाथाख्यान् वेलाङ्गुडिनिवासिनः ।
जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्तकान् ॥३॥
येन चिन्तामणौ टीका दशटीकाविभञ्जनी ।
तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा ॥४॥
तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी ।
धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते ॥५॥

अन्तेवासिपदेनात्र स्वगुरव एव विवक्षिताः, ये उत्तरश्लोके नमस्क्रियन्ते ग्रन्थकारैः। तेषां च सिंहत्वमभयत्वातिरस्कृतत्वादिना सर्वश्रेष्ठत्वादिना च। अत एवोक्तमुत्तरश्लोके—"जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्तकानि"ति ॥२॥

परमगुरुं नमस्कृत्य "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति सुबालोपनिषदं मनसि निधाय स्वस्य साक्षात् विद्याचार्यान् वेलाङ्गुडिग्रामनिवासिनः श्रीमद्-वेङ्कटनाथाख्यान् जगद्गुरुत्वादिना प्रसिद्धान् नमस्करोति—श्रीमदिति ॥३॥

स्वग्रन्थस्य सर्वोपादेयतासिद्धये स्वस्य तर्कचूडामण्यादिबहुविधग्रन्थकर्तृत्वमुपक्षिपति—येनेत्यादिना ॥४॥

प्रेक्षावतां प्रतिभाशालिनां शारीरकमीमांसादिश्रवणेनैव ब्रह्मज्ञानसिद्धावपि मन्दमतीनां वेदान्तार्थज्ञानम् एतद्ग्रन्थायत्तमेव, प्रमाणमालादिग्रन्थे तु न सर्वेऽपि विषयाः प्रतिपादिताः; अतोऽस्माकं वेदान्तपरिभाषात्मकग्रन्थकरणप्रवृत्तिरुपपन्नैवेत्याह—तेन बोधाय मन्दानामिति ।

परिभाषेति । वेदान्तप्रक्रियासिद्धसङ्केतविशेषबोधकशब्दप्रयोग इत्यर्थः ॥५॥

शारीरकमीमांसाश्रवणादिकं यथा निःश्रेयसफलम्, एवं एतद्ग्रन्थार्थपरिशीलनमपीति दर्शयितुम् शारीरकमीमांसाया निःश्रेयसप्रयोजनत्वं "अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये च सर्वे वेदान्ता आरभ्यन्ते" इति भाष्यसिद्धम्, "स च ब्रह्मज्ञानादि"त्यन्तेनाह—इहेति । अस्मिन् जगति ।

सर्वैरपि पुरुषैरभिलष्यमाणाः पुरुषार्था नाम। यद्यपि चार्वाकाः अर्थकामाविव सर्वाभिलाषगोचराविति वर्णयन्ति, यद्यपि च "स स्वर्गः स्यात्

**इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष**

सर्वान् प्रत्यविशिष्टत्वादि''ति विश्वजिन्न्यायसूत्रं जैमिनीयं धर्म एव पुरुषार्थ इति सूचयति, अथापि वैदिकानामास्तिकानां सर्वस्य वेदस्य विनान्यथा-योजनं प्रामाण्यरक्षणार्थम्, अधिकारिभेदेनावस्थाभेदेन वा धर्मार्थकाममोक्षाः चत्वारः पुरुषार्था अङ्गीकरणीया इत्यभिसन्धायाह—**धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेष्विति।** यद्यपि धर्मशब्देन—

''फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते।
केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते'' ॥ इति

वार्तिकानुसारेण ''चोदनालक्षणोऽर्थो धर्म'' इति सूत्रानुसारेण च स्वर्गाद्यु-द्देशेन विधीयमानो यागादिरेव प्रतीयते, यद्यपि च ''धर्मः क्षरति कीर्तनादि''ति वाक्येन यागजन्यापूर्वविशेष एव स इति प्रतिभाति, तथापि यागादिजन्यं स्वर्गादिकमेवात्र धर्मपदार्थः। पुरुषार्थत्वं हि फलत्वेन मुख्यम्, फलसाधनत्वेन गौणम्। गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययो युक्तः। मोक्षे हि सर्वैरपि फलत्वेनैव पुरुषार्थत्वमङ्गीकरणीयम्। एवमर्थकामयोरपि। यद्यपि पुरुषेच्छाविषयत्वं सुखस्यैव मुख्यम्; तथापि षष्ठाद्याधिकरणे पशुपुत्रादिसुखान्तरङ्गसाधनानामेव पुरुषार्थपदेन व्यवहारात् नात्र सुखमात्रं पुरुषार्थः। एवं च ''तत्सामान्यादितरेषु तथात्वमि''ति न्यायेन धर्मेऽपि फलत्वेनैव तद्ग्रहीकरणीयमिति, सिद्धमिदं धर्मशब्देन स्वर्ग एवाभिधीयत इति। अत एव धर्मानित्यतायां ''तद् यथेह कर्मचितो लोकः क्षीयते'' इति श्रुतिप्रमाणोपन्यास उपपद्यते। नहि कर्मरूपं यागादि कर्मचितम्, नापि यागादिजन्यमपूर्वं लोक इति।

अत्र हि ''तद् यथेह कर्मचितो लोकः क्षीयते''इति दृष्टान्तेऽर्थकामयोरु-पादानम्, दार्ष्टान्तिके तु धर्मस्य ग्रहणमिति स्वारस्यात् अर्थकामपदाभ्यां धनादेरेव विवक्षा, नतु सुखविशेषस्य। एतेन—धर्मस्तावत् विहितक्रियासाध्यो गुणविशेषः, काम्यते इति व्युत्पत्त्या विषयेन्द्रियसन्निपातजन्यसुखविशेषः काम इति आशुबोधिनीविवरणं—प्रत्युक्तम्, पुरुषेच्छाविषयत्वस्य सुखतत्साधनसाधारण्ये-

एव परमपुरुषार्थः। "न च पुनरावर्त्तते" (छा: उ: ४।२।३) इति श्रुत्या तस्य नित्यत्वावगमात्। इतरेषां त्रयाणां प्रत्यक्षेण

ऽपि सुखान्तरङ्गसाधनत्वस्यैवात्र पुरुषार्थत्वप्रयोजकत्वेन धर्मादिपदेन स्वर्गादिविवक्षाया एव युक्तत्वात्। मन्त्रार्थवादादिप्रामाण्येन देवताधिकरणन्यायेन च स्वर्गादिलोकान्तराभ्युपगमात् न मीमांसकसम्मतः सुखविशेष एव स्वर्ग इति वादो युज्यत इति नानुपपत्तिः। पुरुषार्थेष्विति निर्द्धारणे सप्तमी। धर्मार्थकाममोक्षाख्येष्विति स्वरूपकथनम्, चतुर्विधपदघटकविधापदार्थनिरूपणपरं वा। यत्त्वत्र शिखामणौ आकाशादीनामपि नित्यत्वात् मोक्ष एवेत्येवकारानुपपत्तिशङ्कावारणार्थं धर्मार्थकाममोक्षाख्येष्विति पदमित्युक्तम्; तदाकाशत्वस्य पुरुषार्थाविभाजकत्वान्नोक्तशङ्काप्रसर इति चिन्त्योपपत्तिकम्।

केचित्तु—धर्मार्थकाममोक्षेष्विति शिखामणिवाक्यस्य धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेष्वित्युक्तमित्यभिप्राय इति, पुरुषार्थविभाजकधर्मपुरस्कारेण मोक्षप्रतीत्यभावात् मोक्षस्येवाकाशस्यापि नित्यत्वे परमपुरुषार्थत्वशङ्काप्रसङ्गात् नानुपपन्नं शिखामणिविवरणमिति—मन्यन्ते।

अन्येतु—मोक्ष एव परमपुरुषार्थ इत्यत्र एवकारेणान्यस्य परमपुरुषार्थत्वनिराकरणात् व्यावर्त्यानां पुरुषार्थानामिव स्वरसत उपस्थित्या नाकाशपरमपुरुषार्थताप्रसङ्गः। मोक्ष एव परमपुरुषार्थ इत्यत्र हि न केवलं नित्यत्वं मोक्षस्य साधितम्, किन्तु नित्यपुरुषार्थत्वम्। एवं चाकाशस्य नित्यतामात्राङ्गीकारेऽपि पुरुषार्थत्वस्यानङ्गीकारात् शिखामणिविवरणमिदं चिन्त्योपपत्तिकमेवेति—वदन्ति।

अत्र च धर्मार्थकामाः नश्वराः; नित्यस्तु मोक्ष एवेति सप्रमाणं निरूपयति—

मोक्ष एवेत्यादिना। न च पुनरावर्त्तत इति।

यद्यपीयं श्रुतिरर्चिरादिना ब्रह्मलोकं प्राप्तस्य पुनरावृत्तिं निषेधति, न तु मुक्तस्य; तथापि "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति वचनात् तस्य भाविनं ब्रह्मभावमपि गमयतीति नायं ब्रह्मलोकनित्यत्वाभिप्रायः; ब्रह्मव्यतिरिक्तस्य मिथ्यात्वात्॥

"तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादिश्रुत्या चानित्यत्वावगमात् ॥

इतरेषां त्रयाणां प्रत्यक्षेण। श्रुत्या चेति।यथायोगमिति शेषः। एवंचार्थकामयोः प्रत्यक्षेण, धर्मस्य श्रुत्या चानित्यत्वावगमात् इत्यर्थः ; अन्यथा प्रत्यक्षेण धर्मानित्यत्वस्य श्रुत्याऽर्थकामानित्यत्वस्य चानवगमेनोक्तवाक्यासाधुताप्रसङ्गात्। तद्यपि "तद् यथेह कर्मचितो लोकः क्षीयते" इति श्रुत्याऽर्थकामयोरप्यनित्यत्वमवगम्यते ; तथापि नास्याः श्रुतेस्तत्र तात्पर्यम्, लोकसिद्धस्यैवास्य दृष्टान्ततयोपादानात्। त्रयाणां मध्ये द्वयोरर्थकामयोः प्रत्यक्षेण, धर्मस्य श्रुत्या चानित्यत्वावगमादिति शिखामणिविवरणं तु यद्यपि नार्थतो दुष्टम्, तथापि शाब्दानुपपत्तिः बह्वध्याहारक्लेशश्च तत्र भवेदेवेति मन्तव्यम्। एतेन—यद्वा प्रत्यक्षेण प्रत्यक्षसिद्धकार्यत्वलिङ्गेनेति विवरणमपि शिखामणिगतं क्लिष्टमिति सूचितम्।

अत्राशुबोधिनीकाराः—इतरेषां त्रयाणामित्यस्य धर्मार्थजन्यफलयोः कामस्य चेति व्याख्येयम्, अन्यथा धर्मार्थयोरनित्यत्वसिद्धावपि तत्फलयोरनित्यत्वानापत्त्या मोक्षाविशेषापत्तेरिति—व्याचक्षते, तत्तु वैषयिकादिसुखानां तेन रूपेणानित्यत्वस्य प्रत्यक्षन्यायसिद्धत्वात्, मोक्ष एव नित्य इत्यवधारणसूचितस्य धर्मादिव्यावृत्तं नित्यत्वमित्यस्यानुपपादनाच्च न मनोरमम्। वस्तुतस्तु—आकाशादिनित्यत्वशङ्काया इव श्रुतिप्रामाण्यादेव धर्मार्थफलादिनित्यत्वशङ्काया अपि निराससम्भवाचात्र मोक्षमात्रं नित्यं न धर्मादित्रितयमित्यवसरे तदर्थः प्रयत्नोऽपेक्षितः।

यदत्र—धर्मपदेनैहिकसुखमामुष्मिकसुखमुभयं विवक्षितम्, तत्रैहिकधर्मसाध्यसुखापायस्य प्रत्यक्षसिद्धत्वेऽपि आमुष्मिकसुखापायस्य श्रुतिं विनाऽसिद्धेः तत्प्रमाणतया "तत् यथेहे"ति छान्दोग्यश्रुतिराशुबोधिन्यामवतारिता, तत्र धर्मपदस्यामुष्मिकसुखविशेषमात्रपरत्वात् "तद्यथेहे"ति श्रुतावमुत्रपुण्यचित इत्यमुत्रपदसमवधानस्य तद्यथेहेति दृष्टान्तभागश्रुतेहपदप्रतिद्वन्द्विमात्रतयोपपत्तेश्चायुक्तम्। एवंचोक्तश्रुतावमुत्रपदं स्वरूपकथनमात्रपरम्, अन्यथा दृष्टान्तेऽपीहपदसमवधानान्यथानुपपत्त्या पशुपुत्राद्यर्थस्यापि ऐहिकामुष्मिकत्वादिना भेदकल्पनाप्रसङ्गात् नार्थकामयोः पृथक् पुरुषार्थत्वनिर्वाहसम्भव इति बोध्यम्।

स च ब्रह्मज्ञानादिति, ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते।

अन्येतु—दुःखव्याप्यमपि हि लोकैरिष्यत इति सर्वानुभवसिद्धम्। अत एव विपदोऽपि स्वार्थं कृष्णदर्शनव्याप्यतया कामिताः कुन्त्या। तदुक्तं भागवते—

"विपदः सन्तु नः शश्वत् तत्र तत्र जगद्गुरो" इति।

एवञ्च सुखत्वविशिष्टत्वेनैव पुरुषार्थत्वमिति न भवत्येव। अत एव—"मोक्षः" इत्युक्त्वा "काम्यश्च दुःखाभावः, दुःखस्य स्वभावतो हेयत्वात्, सुखार्थं तथाऽयमिति चेत्, न; दुःखाभावस्य सुखाहेतुत्वात्। अथ सुखव्याप्यत्वात् स तथेति चेत्, न; तस्य तद्व्याप्यत्वात्" इत्युदयनाचार्य्यैरुक्तम्; सुखव्याप्यत्वस्य काम्यत्वाप्रयोजकत्वेऽथेत्यादिशङ्काया एवानुपपत्तेः।

एवञ्च धर्मार्थकाममोक्षाणामपि न सुखत्वेन पुरुषार्थत्वम्। तदुक्तं बिन्दुटीकायाम्—"मुक्तिरूपस्यानन्दस्यात्मनो न स्वरूपेण काम्यत्वम्; तस्य सिद्धत्वात्, नापि भानविषयत्वेन; तस्य स्वप्रकाशत्वेन भानाविषयत्वात्, किन्तु आवरणविरोधिमनोवृत्तिविशिष्टतया। अतश्चन्दनादियोगजन्यवृत्तिविशिष्टतयैव काम्यत्वम्" इति।

एवञ्च—स्वर्गादीनामपि सुखविशेषसम्पादकलोकविशेषावस्थानप्रयुक्तवृत्तिविशेषविशिष्टत्वेनैव काम्यत्वम्। एवमर्थादावपि अर्थादिशब्देन तज्जन्यवृत्तिविशेष एव विवक्षितः; अर्थादिजन्यवृत्तिविशेषस्यैवार्थादिपदेन लक्षणयोपादानात्।

यत्तु वस्तुतस्त्वित्यादिना—बिन्दुटीकायां सुखत्वविशिष्टत्वेनैवात्मनोऽपि काम्यतेत्युक्तम्, तदपि तत्रैवोक्तवृत्तिविशेषविशिष्टात्मन्येव सुखत्वजातिस्वीकारात् वृत्तिविशेषोपाधिनिबन्धनमेव। सर्वथा तु सुखे स्वरूपतः तारतम्याभावात् धर्मार्थकाममोक्षा इति विभाग उपाधितारतम्यप्रयुक्त एवेत्युपाधीनामेव धर्मार्थादिपदैरुपादानम्। एवञ्च मोक्षपदेनापि वृत्तिविशेषस्यैव ग्रहणमिति न वैषम्यमिति मन्यन्ते।

ननु किंसाधनस्स मोक्ष इत्यत आह—**स च ब्रह्मज्ञानादिति।** इदानीं एतद्ग्रन्थस्यापि ब्रह्मविद्यात्वं सूचयन् प्रतिपाद्यविषयान् संगृह्णाति—

**ब्रह्मेत्यादिना। सप्रपञ्चमिति।** विषयप्रयोजनपरिच्छेदाभ्यां सह षड्विधप्रमाणनिरूपणं क्रियत इत्यर्थः। एतेन परिच्छेदाष्टकार्थोऽपि प्रतिज्ञातः।

यद्वा सप्रपञ्चमिति ब्रह्म तज्ज्ञान-तत्प्रमाणानां त्रयाणामपि विशेषणम्। एवञ्च अविशेषत्व-निर्विशेषत्व-जीवोपास्यत्व-तदभिन्नत्वादिरूपेण ब्रह्मनिरूपणम्, कर्मनिरपेक्षमोक्षसाधनत्व-श्रवणादिजन्यत्वादिना ब्रह्मज्ञाननिरूपणम्, अपरोक्ष-ज्ञानजनकत्वादिना वेदान्तादिप्रमाणनिरूपणं च नासङ्गतमिति शिखामणिगतं द्वितीयव्याख्यानमपि युक्तमेव।

तत्रादौ लक्षणस्वरूपाभ्यां प्रामाण्यं सामान्यतो निरूपयति—**प्रमाकरणमिति।** व्यापारवदसाधारणकारणं करणम्। प्रमां प्रति तु चक्षुरादि करणम्; विषयेन्द्रिय-सन्निकर्षरूपव्यापारवत्त्वे सति प्रमाऽसाधारणकारणत्वात्। प्रमाऽसाधारण-कारणत्वञ्च प्रमात्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम्। विषयेन्द्रिय-सम्बन्धादावतिव्याप्तिवारणाय व्यापारवत्तासम्बन्धेन प्रमाकरणत्वस्य लक्षणत्वात् न दोषः॥

यथार्थानुभवः प्रमेति नैयायिकमते हि स्मृतेरनुभवभिन्नाया न प्रमात्वमभि-संहितम्। यत्तु यतीन्द्रमतदीपिकायाम्—यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा, स्मृतिरपि तादृशज्ञानरूपत्वात् प्रमेत्युक्तम्, तदेतेन परास्तम्।

उक्तं हि न्यायवार्तिकतात्पर्यटीकापरिशुद्धौ—"न तावत् ज्ञानत्वादिकं प्रमा-शब्दप्रवृत्तिनिमित्तम्, येन स्मृतिरपि प्रमा स्यात्, विपर्ययस्यापि तथात्वप्रसङ्गाच्च। न हि प्रमात्वं नाम सामान्यविशेषभावसमस्ति। प्रमात्वं यदि विशेषस्तर्हि अनुभवत्वं सामान्यमिति वर्णनीयम्। एवञ्च कथं स्मृतिः प्रमा? किञ्च स्मृते-र्याथार्थ्यमपि कुतः? नहि यादृशार्थो यदा स्मर्यते, तादृश एवासौ तदा; पूर्वावस्थाया वर्तमाने निवृत्तत्वात्, अनिवृत्तौ हि पूर्वेव न स्यात्। नच निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बते, पूर्वावस्थानिवृत्तेरननुभूतत्वात्, अननुभूते चार्थे स्मृतेरसम्भवात्। ननु समानविषयत्वेऽपि स्मृत्यनुभवयोरनुभवो यथार्थो न स्मृतिरिति कुत एतत्? अनुभवकाले तस्यार्थस्य तादवस्थ्यात्, स्मृतिकालेऽतादवस्थ्यात्। यदि कदाचिद वर्तमानत्वमात्रेणातीतस्यापि

वर्तमानत्वप्रतीतिर्यथार्था स्यात्, तर्हि पाकरक्तेऽपि श्यामप्रत्ययो यथार्थः स्यादि"ति।

परिशुद्धिप्रकाशेऽप्युक्तम्—"स्मृतिः, स्वविषयवर्तमानत्वविषया, अतीतानागताविषयत्वे सति प्रतीतित्वात्, प्रत्यभिज्ञावत् ; प्रतीतेः समयविशेषविषयत्वनियमात्, पाकरक्ते श्यामोऽयमिति तु प्रत्ययोऽयथार्थः ; श्यामत्वे वर्तमानत्वेनानवगमात्" इति। एवञ्च स्मृतिर्न प्रमा। अत एव प्रमाणषट्कव्यवहारोऽप्युपपद्यते। एवमपि यथार्थत्वेन यः स्मृतिव्यवहारः, स यथार्थानुभवनिबन्धनत्वप्रयुक्त एव।

उक्तं हि परिशुद्धौ—"तत्रानुभवस्य यथार्थत्वात् तदेकविषया स्मृतिरपि यथार्थेत्युच्यते" इति। अत एवायथार्थानुभवनिबन्धनस्मृतेरयथार्थत्वेन व्यवहारः। अन्यथाऽयथार्थानुभवनिबन्धनस्मृतावपि तद्रजतमित्यादौ यथार्थताया एव प्रसङ्गात्। एतेन—पूर्वावस्था स्वकाले स्मृत्या वर्तमानत्वेन न विषयीक्रियते, येनायथार्थं स्यात्, किन्तु अतीतस्यातीतत्वेनाविषयत्वेन यो वस्तुगत्याऽतीतः स एव स्मृतेर्विषयः। तथा चेदानीमतीतावस्थाविशिष्ट इति स्मृतेरभावात् क्वायथार्थत्वमिति शङ्का—निरस्ता ; भ्रमनिबन्धनस्मृतेरपि यथार्थत्वापत्तेः। एवञ्च स्मृतिव्यावृत्तमेव प्रमात्वम्॥

युक्तं चैतत्—"गृहीतग्रहणस्वभावा स्मृति"रिति अध्यासभाष्ये भामतीकारा वदन्ति। एवञ्च स्मृतिमात्रस्य ज्ञातत्वविशिष्टविषयकत्वात् ज्ञातत्वस्य भ्रमप्रमान्यतरविषयत्वरूपस्य स्वविषयस्मृत्या ग्रहणेन स्मृतेर्भ्रमत्वमेवाङ्गीकरणीयम्। प्रमाविषयत्वेन स्वविषयग्राहिण्या अपि संस्काररूपदोषजन्यत्वेन स्वतोग्राह्यं प्रमात्वं न तत्राङ्गीक्रियते, किन्तु परतो ग्राह्यमेव प्रमात्वं स्मृतौ विद्यते।

तदुक्तं सिद्धान्तबिन्दुटीकायाम्—"स्मृत्या नाव्यवहितोत्तरक्षणे प्रवृत्तिनियमः, किन्तु द्वितीयक्षणे तत्प्रमात्वेऽनुमिते सत्येव प्रवृत्तिः तत्समानविषयत्वेनानुमीयमानप्रमातः स्मृत्यन्तराद्वेति सर्वानुभाविकमि"ति।

यत्तु सिद्धान्तबिन्दुटीकायाम्—मिथ्यात्वेनानिर्णीयमानवस्तुविषयकज्ञानत्वरूपप्रमात्वं स्मृतिभ्रमानुभवसाधारणं निरुक्तम्, तत् केवलप्रवृत्तिप्रयोजकम्, सफलप्रवृत्तिप्रयोजकं तु अबाधितार्थविषयकत्वं स्मृत्यनुभवसाधारणमपि न स्मृतौ स्वतो ग्राह्यं प्रमात्वम्, स्वतो ग्राह्यमेव प्रमात्वमस्माकमत्र निरूपणीयम्। तच्चानधिगतत्वघटितमेव ; अद्वितीये ब्रह्मणि वेदान्तानां तदेव पर्यवसानसम्भवात्।

**तत्र प्रमाकरणं प्रमाणम्। तत्र स्मृतिव्यावृत्तं प्रमात्वम्—अनधिगताबाधितार्थविषयकज्ञानत्वम्, स्मृतिसाधारणं त्वबाधि-**

उभयसाधारणनिरूपणे तु ब्रह्मज्ञानमपि स्मरणं वानुभवो वेति शङ्कादिकं स्यादित्यभिसन्धायाऽह—**स्मृतिव्यावृत्तमिति।**

एतेन—यद्यपि स्मृत्यनुभवभेदेन द्विविधमपि ज्ञानं भ्रमप्रमाभेदेन द्विविधम्। तत्र पूर्वानुभवस्यायथार्थत्वे स्मरणमपि भ्रमात्मकप्रत्यक्षादिवत् भ्रमात्मकम्। पूर्वानुभवस्य यथार्थत्वे तु प्रत्यक्षप्रमादिवत् प्रमात्वं स्मृतिसाधारणमेव; तथापि प्रमाणपदार्थघटकप्रमात्वं न स्मृतिसाधारणम्, किन्तु अनुभवत्वव्याप्यमेवेति आशुबोधिनीविवरणम्—व्याख्यातम्।

**अनधिगतेति।** अनधिगतः, अबाधितश्च योऽर्थः, तद्विषयकं यत् ज्ञानम्, तत्त्वमित्यर्थः। अयं घट इत्यत्र तद्ज्ञानतः पूर्वमनधिगतः, अबाधितः, नायं घट इति ज्ञानाविषयश्च घट इति लक्षणसमन्वयः। भ्रमज्ञाने इदं रजतमित्याकारके तु यद्यपि रजतं न पूर्वं ज्ञातम्, प्रातिभासिकत्वात्; तथापि बाधितमेव; नेदं रूप्यमित्याकारज्ञानगोचरत्वात्; अतस्तत्र नातिव्याप्तिः। अत एव स्मृतावपि नातिव्याप्तिः; स्मृतिविषयस्याबाधितत्वेऽपि अनधिगतत्वाभावात्।

अनधिगतत्वं च स्वाव्यवहितपूर्वक्षणावच्छिन्नज्ञानविषयभिन्नत्वं स्मृत्यव्यवहित-पूर्वक्षणे च संस्कारोद्बोध एव नियतः, नतु ज्ञानमिति स्वाव्यवहितपूर्वक्षणावच्छिन्न-ज्ञानाप्रसिद्ध्या तद्घटितप्रमात्वासम्भवादिति केचन मन्यन्ते।

इदन्तु—प्राथमिकज्ञानेऽव्याप्तम्; तत्रापि स्वाव्यवहितपूर्वक्षणावच्छिन्नज्ञान-विषयाप्रसिद्धेः, अतः स्वाव्यवहितपूर्वक्षणावच्छिन्नत्वसमानाधिकरणधर्माविषयत्व-मनधिगतत्वं विवक्षणीयम्। कल्पाद्यकालीनज्ञाने तु स्वाव्यवहितपूर्वक्षणे संस्कार-सत्त्वात् एतत्कल्पीयानां तद्विषयभिन्नत्वमेव विद्यत इति न दोषः। स्मृतावपि-नातिव्याप्तिः, तत्पूर्वक्षणावच्छिन्नोद्बुद्धसंस्कारविषयत्वादितीतरे शिखामण्यनु-सारिणो—वर्णयन्ति।

अन्येतु—अद्वैतिनां मते ब्रह्मव्यतिरिक्तसर्वप्रपञ्चज्ञानस्य भ्रमत्वेन संस्कारजन्य-त्वात् ज्ञानसंस्कारयोश्च समानविषयत्वेनैव कार्यकारणभावादव्याप्तमिदं लक्षणम्।

प्रातिभासिकस्थले तु तूलाविद्यारूपोपादानभेदात् सजातीयसंस्कारात् सजातीय-रजतान्तरोत्पाद इति युक्तम्, व्यावहारिकस्थले तु मूलाविद्याया एकत्वात् दण्डा-दिपातेन कारणात्मतामात्रापादनेऽपि पुनर्व्यापारादिभिस्तस्यैवाभिव्यञ्जनात् सोऽयं घट इति प्रत्यभिज्ञानाच्च संस्कारज्ञानयोरेकविषयत्वमपेक्षितमेवेति कल्पभेदेन पदार्थभेदकल्पनं न युक्तमिति स्वान्यूनविषयकानुभवाजन्यज्ञानविषयत्वमनधि-गतत्वम्। इदं कल्पाद्यकालिकज्ञानसाधारणमेव। अव्यवहितत्वांशानिवेशाच्चा-प्रसिद्धिदोषः, स्मृतेः स्वान्यूनविषयकानुभवजन्यत्वाच्च प्रमात्वापात इति—वदन्ति।

तत्र स्वान्यूनविषयकत्वं यदि स्वविषययावद्विषयकत्वम्, तर्हि स्वविषयन्यून-विषयानुभवजन्यायां प्रत्यभिज्ञायामव्याप्तिः। यदि स्वान्यूनविषयकानुभवाजन्य-पदेन स्वान्यूनविषयकानुभवजन्यं यत् यत् तद्भिन्नत्वमेव विवक्षितम्, तत्रच स्वपदेन भेदप्रतियोगिन एव विवक्षा नानुयोगिन इति प्रत्यभिज्ञायाः स्वान्यूनविषयका-नुभवस्याप्रसिद्धत्वान् न स्वपदेन ग्रहणमिति तादृशस्मृत्यादेरेव तेन ग्रहणात्तद्भिन्न-त्वमादाय प्रत्यभिज्ञायां लक्षणसमन्वयः, एवमपि सर्वस्यापि ज्ञानस्य स्वान्यून-विषयकेश्वरज्ञानजन्यत्वेनासम्भवः समापद्यते।

न च—स्वान्यूनविषयकानुभवत्वेन तज्जन्यत्वस्यैवात्र विवक्षणान्नोक्तासम्भवः, ईश्वरज्ञानस्य ज्ञानत्वेनैव कारणत्वात्। तदुक्तं शिखामणौ "तत्त्वेन तज्जन्यत्व-विवक्षणात्सर्वदोषनिरासः" इतीति—वाच्यम्; एवमपि धारावाहिकद्वितीयादि-ज्ञानं प्रति प्रथमादिज्ञानस्य विशेषणज्ञानत्वेनैव कारणत्वेन स्वान्यूनविषयकानु-भवत्वेनाकारणत्वाद्धारावाहिकद्वितीयादिज्ञानेऽव्याप्तिशङ्कापरिहारयोर्मूल उपपा-दितयोरसम्बद्धप्रलापित्वापत्तेः।

यदि तु विशिष्टज्ञानं प्रति विशेषणज्ञानं न कारणमित्यद्वैतसिद्धान्ताद्युपपादितः सिद्धान्तः पर्यालोच्यते, तदा धारावाहिकद्वितीयादिज्ञाने प्रथमादिज्ञानस्य न कारणत्वमिति नाव्याप्तिशङ्कापि। एवञ्च स्वान्यूनविषयकानुभवाजन्यज्ञानविषयत्व-मनधिगतत्वमिति निर्वचनमपि चिन्त्योपपत्तिकम्।

आशुबोधिनीकारास्तु—संस्कारमात्रोपस्थापितत्वमधिगतत्वं तद्भिन्नत्वमनधिगत-त्वम्, घटादिज्ञानस्य अविद्यासंस्कारजन्यत्वेऽपि संस्कारमात्रजन्यत्वाभावात् स्मृतेः संस्कारमात्रजन्यत्वाच्च नासम्भवो नाप्यतिव्याप्तिरिति—निरूपयन्ति।

**ननु—कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः ? अहमिमं पश्यामीति भेदानुभवविरोधादिति—चेत्, उच्यते ; प्रमात्रभेदो नाम न तावत्तदैक्यम्, किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः ।**

न च—घटावच्छिन्नचैतन्यगता सत्ता घटादावारोप्यत इति आरोपितसत्त्वं घटादीनामपि विद्यत इति तादात्म्याध्यासोपपत्तिरिति—वाच्यम् ; घटादीनां स्वावच्छिन्नचैतन्याश्रिताविद्यापरिणामत्वेन स्वावच्छिन्नचैतन्याभेदेऽपि साक्षिचैतन्येऽनध्यासेनैवमपि तदभेदासम्भवात् ॥

अतएव हि घटमहं जानामीति घटस्य कर्मत्वमुपपद्यते । एतेन—कात्स्न्येनिकाभेदो नात्र विवक्षितः किन्तु वस्तुसदैक्यमेव विवक्षितमिति शङ्कापि—परास्ता ; बाधात् ॥ एवञ्च प्रमात्रभिन्नत्वं विषयप्रत्यक्षत्वप्रयोजकमिति न सङ्गतमित्याशयेन शङ्कते—**नन्विति** ॥ **अन्तःकरणावच्छिन्नचैतन्याभेद इति ।** अन्तःकरणोपहितचैतन्याभेद इत्यर्थः । समाधत्ते—**उच्यते इति** ॥

यद्यपि विषयचैतन्यमेवाधिष्ठानं विषयस्य ; तथापि विषयचैतन्यं प्रमितिचैतन्यं प्रमातृचैतन्यं चापरोक्षस्थले पूर्वोक्तरीत्याभिन्नमिति प्रमातृचैतन्याध्यस्तत्वरूपतदभेदासंभवेऽपि प्रमातृसत्तातिरिक्तसत्ताविरहरूपस्तदभेदः सम्भवत्येव । एवञ्च घटमहं जानामीति प्रतीतौ खलेकपोतन्यायेनैकस्मिन् चैतन्ये घटतत्प्रमितिप्रमातॄणां भानात् सर्वोपपत्तिः, घटकर्मत्वं हि वृत्तिनिरूपितं न साध्यभेदं विरुणद्धि ॥

अतएव विवरणाचार्याणां मते अहमज्ञ इति प्रतीतिरुपपद्यते । तन्मते हि अज्ञानाश्रयो ब्रह्मेति पूर्वमेव निरूपितम् । अहमज्ञ इति प्रतीतिस्तु एकत्र द्वयमिति रीत्याऽज्ञानाहङ्कारोभयाध्यासस्यैकस्मिन् चैतन्ये विषयत्वादुपपद्यत इति विवरणे उक्तम्, एवञ्च प्रमातृसत्तातिरिक्तसत्ताविरहः प्रमात्रभिन्नत्वमिति विवक्षणे न कोऽपि विरोध इत्याशयेनाह—**प्रमात्रभेदो नामेति । प्रमातृसत्तेति** ॥

ननु त्रिविधा सत्ता प्रातिभासिकी व्यावहारिकी पारमार्थिकी च । आद्या व्यवहारकालबाध्यानां शुक्तिरूप्यादीनाम्, द्वितीया ब्रह्मप्रमामात्रबाध्यानां मूलाविद्या-

तथाहि—घटादेः स्वावच्छिन्नचैतन्याध्यस्ततया विषयचैतन्य-

तत्प्रयोज्यादीनाम् तृतीया तु ब्रह्मण इति वेदान्तिनां मर्यादा। तत्र साक्षिणोऽन्तः-करणोपहितस्वरूपस्य व्यावहारिकैव सत्तेति प्रमातृसत्तातिरिक्तसत्ताविरहस्य प्रमात्रभेदरूपत्वे गुरुत्वादेरपि प्रत्यक्षत्वापत्तिः, शुक्तिरूप्यादीनां प्रातिभासिकसतां प्रत्यक्षत्वानापत्तिरित्याशङ्कामेकसत्तावादिनाव परिहरति—तथाहीति॥

यथा च प्रमात्रभेदस्य प्रमातृसत्तातिरिक्तसत्ताविरहरूपता तथा निरूपयतीत्यर्थः। घटादेरिति। अधिष्ठानसत्तैवारूप्येऽपि भासते इदन्त्वमिव रजते, न तु व्यावहारिकप्रातिभासिकादिभेदस्तत्राङ्गीक्रियते। एवञ्च परोक्षतादशायां केवलघटावच्छिन्नसत्तैव घटादेर्विद्यते, न त्वन्यचैतन्यसत्ता, अपरोक्षतादशायां तु विषयान्तःकरणपरिणामावच्छिन्नमेकं चैतन्यं भवतीति विषयचैतन्यसत्तैव प्रमातृसत्तेति प्रमातृसत्तातिरिक्तसत्ताविरहात् घटादीनां प्रत्यक्षत्वव्यवहारः उपपन्नः, वह्न्यादेस्तु स्वावच्छिन्नसत्तातिरिक्तसत्ताविरहेऽपि स्वावच्छिन्नचैतन्यस्य साक्षिणाऽभेदाभावात् न प्रमातृसत्तातिरिक्तसत्ताविरह इति नातिव्याप्तिः, शुक्तिरूप्यादीनामपि इदमवच्छिन्नचैतन्याधिष्ठानकत्वात् इदमाकारान्तःकरणपरिणामद्वारेदमवच्छिन्नचैतन्यप्रमातृचैतन्ययोरभेदात् प्रमातृसत्तातिरिक्तसत्ताविरहात् संग्रहो भवत्येव।

सत्तात्रैविध्यमतानुसारे तु प्रमात्रभिन्नत्वं साक्षिचैतन्याध्यस्तत्वम्, साक्षी चाविद्यान्तःकरणान्यतरोपहितं चैतन्यम्, घटादौ प्रत्यक्षतादशायां घटोपहितचैतन्यस्य साक्षिणाऽभेदात् साक्षिचैतन्याध्यस्तत्वं विद्यते, एवं शुक्तिरूप्यस्वाप्नगजादीनामपि बोध्यम्। अविद्यान्तःकरणयोरपि साक्ष्यभिन्नत्वान्न दोषः। रूपप्रत्यक्षतादशायां रूपोपहितचैतन्यसाक्षिणोरभेदात् रूपोपहितचैतन्य एव परिमाणस्यापि कल्पितत्वात् परिमाणप्रत्यक्षतापत्तितत्परिहारपरो ग्रन्थोऽपि नात्रासङ्गतः। प्रमातृसत्तातिरिक्तसत्ताविरह इत्यादिग्रन्थानामपि प्रमातृचैतन्याध्यस्तत्वपरतयैव योजनं कर्तव्यम्॥

ब्रह्म तु फलाव्याप्यत्वात् न लक्ष्यमिति नाव्याप्तिदोषः, लक्ष्यैकदेशावृत्तित्वस्यैवाव्याप्तिरूपत्वात्॥ यदि तु अभानापादकाज्ञानाविषयत्वतादृशचित्तादात्म्यान्यतरवत्त्वमेव प्रमात्रभिन्नत्वपदेन विवक्षितम्, तदा ब्रह्मलक्ष्यतायामपि न दोषः।

यत्तु—शिखामणौ प्रमातृचैतन्याध्यस्तत्वं न प्रमातृभिन्नत्वम्, प्रमातृपदेनान्तः-करणोपलक्षितचैतन्यविवक्षणे पर्वतो वह्निमानित्यत्र वह्नेरपि प्रत्यक्षत्वापत्तिः, अन्तःकरणविशिष्टचैतन्यविवक्षणे परिमाणादीनामन्तःकरणविशिष्टचैतन्याध्य-स्तत्वाभावेनैवातिप्रसङ्गनिवारणेन स्वाकारवृत्त्युपहितेति विशेषणवैयर्थ्यापत्तिः, अन्तःकरणादावव्याप्तिश्चेति, प्रमातृभिन्नत्वप्रकारकज्ञानविषयत्वे सति योग्यत्वं प्रमातृभिन्नत्वमिति निष्कर्षः कृतः, सोऽपि घटादेरन्तःकरणावच्छिन्नचैतन्याभेद-ज्ञानविषयत्वाभावात् चिन्त्योपपत्तिकः। अविद्यायां तु शुक्तिरूप्यादाविव वक्ष्य-माणरीत्या लक्षणसमन्वय इति न दोषः।

न च—घटमहं जानामीति भेदग्रहेऽपि सन् घट इत्यभेदज्ञानात् घटादौ लक्षणसमन्वय इति—वाच्यम्, न हि सन् घट इति ज्ञानमन्तःकरणावच्छिन्न-चैतन्याभेदविषयम्; अन्यथा "न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इति ज्ञानसामान्यस्य तदभेदविषयत्वेन गुरुत्वादेरपि प्रत्यक्षत्वापत्तिः॥

**एतेन**—परिमाणादेरन्तःकरणावच्छिन्नचैतन्याभेदज्ञानविषयत्वाभावेनैवा-तिप्रसङ्गनिवारणमिति शिखामणिवाक्यम्—**परास्तम्**॥

यदि घटः सन् इत्यत्र सतोऽन्तःकरणावच्छिन्नचैतन्यत्वेनान्तःकरणावच्छिन्न-चैतन्यस्यैव सद्रूपेण भानमिति प्रत्यक्षत्वनिर्वाहः, तर्हि परिमाणादेरपि मूल-कारोक्तरीत्याऽन्तःकरणावच्छिन्न एवाध्यासेन सद्रूपाभेदज्ञानविषयत्वेन प्रत्यक्षत्व-प्रसङ्गेन "परिमाणादेश्चान्तःकरणावच्छिन्न-चैतन्याभेदज्ञानाविषयत्वान्नातिप्रसङ्ग" इति ग्रन्थानुपपत्तिरिति केचित् मन्यन्ते॥

**वस्तुतस्तु**—अत्रत्यः सर्वोऽपि शिखामणिग्रन्थः शिष्यबुद्धिवैशद्यार्थमेव। अतएव शिखामणौ अन्ततोऽस्मिन् प्रकरणे यद्वेति—प्रमातृपदेनान्तःकरणोपहित-चैतन्यविवक्षणेन "योग्यत्वे सति स्वाकारवृत्त्युपहितसाक्षिचैतन्याध्यस्तत्वं विषयस्य प्रत्यक्षत्व"मित्युक्तम्॥

यत्तु अत्र तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्यत्वं विषयप्रत्यक्षत्वप्रयोजकं निरूपितम्, तत्राप्यनुपपत्तिः पूर्वमेव प्रदर्शितेति तदपि शिष्यबुद्धिवैशद्यार्थमेव। न हि साक्षिचैतन्याध्यस्तत्वमात्रेणाहं घट इत्यादिप्रतीतिर्भविष्यतीति परिभाषाया-मेवोत्तरत्र स्फुटीभविष्यति॥

**स्वावच्छिन्नचैतन्याध्यस्ततया।** स्वोपहितचैतन्याध्यस्ततया।

सत्तैव घटादिसत्ता ; अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्। विषयचैतन्यस्तु पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता, नान्येति सिद्धं घटादेरपरोक्षत्वम्. अनुमित्यादिस्थले त्वन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः।

नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वापत्तिः, धर्माधर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्माधर्मादिसत्तायाः प्रमातृसत्तानतिरेकादिति चेन्न ; योग्यत्वस्यापि विषयविशेषणत्वात्।

अनङ्गीकारादिति। एकसत्तावादाङ्गीकारेण प्रातिभासिकसत्तादिवादानङ्गीकारादित्यर्थः। सत्तात्रैविध्यमते तु अधिष्ठानव्यतिरेकेणारोपितस्याभावादित्यर्थः।

ननु घटादेः स्वावच्छिन्नचैतन्यमेवाधिष्ठानमित्यधिष्ठानसत्ताया एवारोपितसत्तात्वेऽपि प्रमातृसत्तातिरिक्तसत्ताविरहो घटादौ कथम्? नहि प्रमातृचैतन्यं घटाद्यधिष्ठानमित्यत आह—विषयचैतन्यं चेति। प्रमातृचैतन्यमेवेति॥ एवकारः उपाधिभेदप्रयुक्तभेदनिरासेन प्रमातृचैतन्याभेदायोगं घटोपहितचैतन्ये व्यावर्तयितुम्। इतिर्हेतौ। उक्तं प्रत्यक्षत्वप्रयोजकं वह्न्यादिव्यावृत्तमेवेति दर्शयति—अनुमित्यादिस्थले इति॥

ननु—धर्माधर्मादेरप्यन्तःकरणोपहितसाक्षिचैतन्य एवाध्यासात् तत्रातिप्रसक्तमिदं प्रयोजकमिति शङ्कते—नन्वेवमपीति। अनुमितिस्थले वह्नौ प्रत्यक्षत्वानापत्तावित्यर्थः। योग्यत्वस्यापि। अनावृतत्वस्यापीत्यर्थः॥

यद्यपि चैतन्यमेवावृतं न घटादि, तथापि आवृतचैतन्यावच्छेदकत्वाद्विषयस्याप्यावृतत्वादिव्यपदेशः। विषयविशेषणत्वात्। न केवलं प्रमात्रभिन्नत्वं विषयप्रत्यक्षत्वप्रयोजकं ज्ञानप्रत्यक्षेऽतिप्रसङ्गादिति विषयगतं तत् विषयप्रत्यक्षत्व-

**नन्वेवमपि रूपी घट इत्यादिप्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः; रूपावच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य चैकतया रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावादिति चेन्न; तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात्, रूपाकारवृत्तिदशायां**

प्रयोजकमिति विवक्षणीयम् ॥ एवञ्च प्रमात्रभिन्नत्वे सति विषयत्वं विषयप्रत्यक्षत्वप्रयोजकमिति तद्घटकविषयस्य योग्यत्वमपि विशेषणं दीयत इति न धर्माधर्मादावतिप्रसङ्गः । साक्षितादात्म्यापन्नस्यापि तस्यानावृतत्वं न स्वभाव इति पूर्वमेवोक्तम् ॥

ननु योग्यत्वं नामानावृतत्वं यदि यदाकदाचित् विवक्षितम्, तर्हि रूपी घट इति प्रत्यक्षदशायां परिमाणस्यापि तदाकारवृत्त्यनिर्गमेऽपि प्रत्यक्षत्वव्यवहार आपद्येत । परिमाणं हि यदाकदाचित् भातीति व्यवहारयोग्यमेव । एवं च रूपपरिमाणयोरेकस्मिन् चैतन्येऽध्यस्तत्वेन रूपावच्छिन्नचैतन्यप्रमातृचैतन्ययोरभेदे प्रमातृसत्तातिरिक्तसत्ताविरहः प्रमातृचैतन्याध्यस्तत्वं वा परिमाणस्यापि हि संभवति, इत्याशङ्कते—**नन्वेवमपीति** ।

**एवमपि** योग्यत्वमिति विषयविशेषणे दत्तेऽपि । **प्रत्यक्षत्वापत्तिः** । यदाकदाचित् भातीति व्यवहारविषयत्वरूपयोग्यत्वस्य प्रमात्रभिन्नत्वस्य च परिमाणेऽपि सत्त्वादिति शेषः । परिमाणाकारवृत्तिं विना कथं परिमाणस्य प्रमात्रभेद इत्यत आह—**रूपावच्छिन्नेति** ।

समाधत्ते—**नेति** । तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वादिति । परिमाण उक्तविशेषणविशिष्टप्रमातृसत्ताऽतिरिक्तसत्ताविरहमुपपादयति—**रूपाकारेति** । **अतिव्याप्त्यभावादिति** ।

प्रत्यक्षव्यवहारापत्त्यभावादित्यर्थः । यदितु सुखादिविषयपरोक्षज्ञानेऽतिव्याप्तिवारणार्थं प्रतीतिकालिकमेवानावृतत्वं पूर्वोक्तरीत्या विवक्ष्यते, तर्हि परिमाणेऽपि

परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात् ।

ननु—एवं वृत्तावव्याप्तिः ; अनवस्थाभिया वृत्तिगोचर-

रूपाकारवृत्तिदशायां उक्तयोग्यत्वाभावेनैवातिप्रसङ्गवारणात्तदाकारवृत्त्युपहितेति विशेषणमनर्थकमेव । एवं च वृत्तिं विना साक्षिवेद्यत्वं केवलसाक्षिवेद्यत्वमिति मतेऽपि प्रातिभासिकसुखादौ प्रत्यक्षत्वव्यवहार उपपन्न एव । तथाच वृत्त्यपेक्षयैव साक्षिभास्यत्वमिति मतोपपादनार्थमेव योग्यत्वपदेन यदाकदाचित् योग्यत्वविवक्षयोक्तग्रन्थप्रवृत्तिरिति मन्तव्यम् ।

ननु—घटमहं जानामीत्यत्र घटप्रमाणोरिव वृत्तेरपि प्रत्यक्षत्वमनुभवसिद्धम्, तत्र घटाकारवृत्तेः प्रमात्राकारवृत्तेश्चाभ्युपगमेन स्वाकारवृत्त्युपहितत्वघटितप्रत्यक्षत्वप्रयोजकसत्त्वेन घटप्रमात्रोः प्रत्यक्षत्वमुपपद्यते, वृत्तेस्तु प्रत्यक्षत्वं न संभवति, वृत्तिगोचरवृत्त्यङ्गीकारे तदाकारवृत्तिरन्या तदाकारवृत्तिरन्याऽङ्गीकरणीयेत्यनवस्थापत्त्या वृत्त्यस्वीकारे वृत्त्युपहितत्वघटितप्रयोजकसमन्वयासंभवात् । न च वृत्तेरेव स्वविषयत्वमङ्गीक्रियत इति स्वाकारवृत्तिः स्वयमेव विवक्ष्यत इति नोक्तदोष इति—वाच्यम् ; "अहं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वोपहितं गृह्णाति स्वाविषये"ति कल्पतरौ वृत्तेरेव वृत्तिविषयत्वनिराकरणात् । उक्तं हि अद्वैतसिद्धौ "न वृत्तिर्विषयकोटौ प्रविशति ; स्वस्याः स्वविषयत्वानुपपत्तेरि"ति । व्याख्यातं च लघुचन्द्रिकायां अत्यन्ताभेदे संबन्धाभावात् न वृत्तिर्वृत्तिविषयेति । न चोक्तकल्पतर्वाद्यनुसारेण वृत्तेः प्रत्यक्षत्वव्यवहारो नेष्ट इति वाच्यम् ; उक्तग्रन्थस्य तत्त्वमस्यादिमहावाक्यजन्याखण्डाकारवृत्तिविषयत्वेन घटादिवृत्त्यप्रत्यक्षतायामतात्पर्यात् । अत एवाखण्डाकारवृत्त्यतिरिक्तस्थले नियमेन त्रिपुटीभानमुपेयते, अखण्डाकारवृत्तेः स्वविषयत्वाभावे या युक्तिरुपपादिता सा घटादिवृत्तावपि स्वविषयत्वं निषेधत्येवेति कथं वृत्तौ लक्षणसमन्वय इत्याशयेन शङ्कते—नन्वेवमिति ।

एवं स्वाकारवृत्त्युपहितत्वविशेषणनिवेशे । अव्याप्तिः, प्रत्यक्षत्वव्यवहाराभावप्रसङ्गः । समाधत्ते—नेति ।

**वृत्त्यन्तरानङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितलक्षणाभावादिति—चेत्, न; अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्यसत्ताभिन्नसत्ताकत्वस्य तत्रापि सम्भवात्।**

घटादौ वृत्त्यङ्गीकारो हि साक्षिचैतन्यस्य घटादौ प्रतिबिम्बसंपादनार्थमेव, अत एव स्वच्छत्वात् सुखादौ वृत्तिं विनैव प्रतिबिम्बसंभवात् वृत्तिं विनापि साक्षिवेद्यत्वसिद्धान्तोपपत्तिः। एवंच स्वच्छत्वात् वृत्तेः स्वत एव प्रतिबिम्बसंभवात् न वृत्तिगोचरवृत्त्यन्तरमङ्गीकरणीयम्। यथा सुखादौ वृत्त्यभावपक्षे सुखं जानामीति साक्षिप्रतिबिम्बवत्त्वेन कर्मत्वम्, मम सुखमित्यादौ कर्तृत्वम्, एवं वृत्तिं जानामीत्यादौ कर्मत्वं घटं जानामीत्यादौ क्रियात्वं च रूपभेदेनोपपद्यते। वृत्तेः स्वाकारत्वं स्वेन सम्बन्धविशेष एव।

न च लघुचन्द्रिकोक्तरीत्याऽत्यन्ताभेदे सम्बन्धासंभव इति वाच्यम्; अस्य ग्रन्थस्यात्यन्ताभेदेऽपि सम्बन्धाङ्गीकारेणैव प्रवृत्तेः। उक्तं हि विट्ठलेशीये पूर्वतनलघुचन्द्रिकावाक्यव्याख्यानसमये "परिभाषाकारमते तु शाब्दवृत्तेः स्वविषयत्वाभावेऽत्यन्ताभेदो न युक्तिः, किन्तु शब्दानुपस्थाप्यत्वमेवे"ति।

एतेन शुद्धं ब्रह्मेति भामतीकल्पतरुवाक्यमपि व्याख्यातम्; तस्य घटादिवृत्तिपरत्वाभावात्। एवं च वृत्तेः स्वविषयत्वाङ्गीकारेण स्वाकारवृत्त्युपहितत्वविशेषणनिवेशेऽपि वृत्तिप्रत्यक्षत्वनिर्वाहो भवत्येवेति नोक्ताव्याप्तिः। एतत् सर्वं मनसि निधायाह—**अनवस्थाभियेति**।

**स्वविषयत्वाभ्युपगमेन** स्वसंबन्धाभ्युपगमेन, वृत्त्यन्तरानपेक्षस्वव्यवहाराभ्युपगमेन; सत्तादात्म्ये सत्तादात्म्यवत् वृत्तावपि स्वसम्बन्धो न दोषायेति भावः।

**वस्तुतस्तु**—स्वाकारवृत्त्युपहितेति विशेषणघटितं घटादिबाह्यप्रत्यक्षत्वस्यैव प्रयोजकम्, आन्तरप्रत्यक्षत्वे तु प्रमात्रभिन्नत्वमेव प्रयोजकमित्यङ्गीकारान्नोक्तापत्त्यादि। उक्तं च विट्ठलेशीये—"अत्रायमाशयः—स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वं बाह्यघटादिप्रत्यक्षत्वस्य प्रयोजकम्। तत्र स्वाकारवृत्त्युपहित-

एवञ्चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्त-दाकारवृत्त्यभ्युपगमेनोक्तलक्षणस्य तत्रापि सत्त्वात् नाव्याप्तिः।

नच—अन्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवल-साक्षिवेद्यत्वाभ्युपगमविरोध इति वाच्यम्; न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वम्, किन्तु इन्द्रियानु-मानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्; अत एव अहङ्कार-टीकायामाचार्य्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता।

पदनिवेशात् रूपप्रत्यक्षकाले न परिमाणस्य प्रत्यक्षतापत्तिः। आन्तरान्तः-करणधर्मसुखादिवृत्तिरूपज्ञानादेः प्रत्यक्षत्वं तु स्वाकारवृत्त्युपहितत्वाविशेषित-प्रमातृचैतन्याभिन्नत्वमित्यन्तःकरणधर्मसुखादिवृत्तिस्वीकारे प्रयोजनाभावः" इति।

युक्तं चैतत्—अतएव चरमवृत्तिप्रत्यक्षतानिर्वाहो भवति। अन्यथा शब्दा-नुपस्थाप्यस्य शाब्दबोधे भानाभावस्य परिभाषाकृतोऽप्यभिमतत्वेनैव "शुद्धं ब्रह्मे"ति भामत्याशयस्य वर्णनीयतया वृत्तेः शब्दानुपस्थापितायाः स्वविषयत्वायोगेन तत्र प्रत्यक्षतानिर्वाहासंभवात्। अखण्डाकारवृत्तौ प्रत्यक्षत्वं न संमतमिति-कल्पनाऽसंभावात्। प्रमातृभिन्नत्वं तु अखण्डाकारवृत्तेरपि साधारणमिति न कोऽपि दोषः—इति।

**ननु**—अन्तःकरणधर्मसुखादीनां केवलसाक्षिवेद्यत्वमते सुखाद्याकार-वृत्तेरनभ्युपगमात् तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादव्याप्तिः। यथाहि वृत्तिगोचरवृत्त्यन्तरास्वीकारेऽपि वृत्तावतिस्वच्छत्वात् चैतन्यप्रतिफलनोपाधित्व-मङ्गीकृतम्, एवं सुखादावपि तदङ्गीकरणीयमित्याशङ्कां वृत्तेः स्वच्छत्वेन प्रतिबिम्बो-पाधित्वेऽपि घटादिवदस्वच्छत्वेन स्वत एव सुखादेः प्रतिबिम्बोपाधित्वा-संभवात् तदाकारवृत्त्यङ्गीकार आवश्यक एव। एवं च सुखाकारान्तःकरणवृत्त्य-भ्युपगमात्स्वाकारवृत्त्युपहितत्वघटितोक्तप्रयोजकसत्त्वमव्याहतमित्यादिनाऽनवसरां सूचयन् सुखादावपि प्रत्यक्षत्वव्यवहारमुपपादयति—**एवं चेति**।

स्वाकारवृत्त्युपहितत्वघटितोक्तप्रयोजकस्यादुष्टत्वे च। अन्तःकरणतद्धर्माणां

अत एव च प्रतिभासिकरजतस्थले रजताकाराऽविद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता। तथाच अन्तःकरणतद्धर्मादिषु केवल-साक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वात् नाव्याप्तिः।

तदयं निर्गलितोऽर्थः—स्वाकारवृत्त्युपहितप्रमातृचैतन्य-सत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम्।

केवलसाक्षिविषयत्वसिद्धान्तोऽपि न प्रकृतविरोधीति, शङ्कानिरसनेनोपपादयति—**न चेति।**

स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वं प्रमातर्यपि विद्यते; अहमाकारान्तः-करणवृत्त्यङ्गीकारादित्याह—**अत एवेति।** साक्षिभास्यानामपि तदाकारान्तः-करणवृत्त्यभ्युपगमादेवेत्यर्थः। **अङ्गीकृतेति।** उपपद्यते इति शेषः।

ननु—प्रातिभासिके शुक्तिरूप्यादौ स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वं नास्ति। नहि प्रातिभासिकाकारान्तःकरणवृत्तिः काप्यङ्गीकर्तुं युज्यते, यद्यपि तदाकाराविद्यकवृत्तिरुरीक्रियते; एवमपि रजताकाराविद्यकवृत्त्युपहितत्वं प्रमातुर्न संभवतीत्याशङ्का इदमाकारवृत्त्यवच्छेदेनैव रजताकाराविद्यकवृत्त्यङ्गी-कारेणेदमाकारवृत्तेरिवाविद्यावृत्तेरपि प्रमातृपाधित्वात् संभवत्येव तत्र लक्षण-समन्वय इति प्रातिभासिकसाक्षिभास्यत्वव्यवहारोऽपि वृत्त्यङ्गीकारेणैवेत्याह—**अत एवेति।** उपसंहरति—**तदयमिति।**

**स्वाकारेति।** विषयाकारेत्यर्थः। **प्रमातृसत्तेति।** साक्षि-सत्तेत्यर्थः। **विषयस्य** विषयगतम्। सौत्रान्तिकास्तावत् ज्ञानगतो विषयाकार-प्रतिबिम्बः, तथाविधबिम्बपूर्वकः, प्रतिबिम्बत्वात् दर्पणादिगतमुखप्रतिबिम्ब-वदिति विषयस्यानुमेयत्वं वर्णयन्ति, तत्रान्वयव्यतिरेकाभ्यां घटज्ञानविशेषे इन्द्रिय-सन्निकर्षहेतुत्वं यदवगतं तद्बाधापत्तिः।

न च अद्वैतिनामपि चैतन्यस्यैव प्रत्यक्षत्वात्तस्य चाजन्यत्वात्सन्निकर्षवैयर्थ्य-मिति समानोऽयं दोष इति न वयं पर्यनुयोज्या इति—वाच्यम्; चैतन्याभिव्यञ्जक-

तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः।

वृत्तिजननेनास्माकं मते तत्सार्थक्यात्। एवंच तन्मतं न युक्तमिति सूचयन् सन्निकर्षस्वरूपं तद्विनियोगं च दर्शयति—तत्र संयोगेति। तत्र प्रत्यक्षत्वघटकेत्यर्थः। वृत्तिपदार्थेनान्वयः। एवं च प्रत्यक्षत्वघटकवृत्तिजनने संयोगादिरूपसन्निकर्षोपयोग इति मन्तव्यम्।

तदयं संग्रहः—प्रमाकरणं प्रमाणम्, प्रमासामान्यलक्षणं चैतन्यत्वम्। अनुमित्यादावपि चैतन्यांशे प्रत्यक्षप्रमात्वं संमतमेव। प्रत्यक्षादिप्रमाणजन्या तु प्रमा विषयावच्छिन्नचैतन्याभिव्यञ्जकवृत्त्यवच्छिन्नचैतन्यं ज्ञानम्, नतु प्रमात्वचैतन्याभिन्नप्रमाणचैतन्यम्।

तत्र वृत्तेः अन्तःकरणपरिणामरूपाया जननेन चक्षुरादीनां विशिष्टचैतन्यप्रमाणत्वेन व्यपदेशः, सा च वृत्तिर्मनःपरिणामरूपेत्यत्र कामः संकल्प इति श्रुतिर्मानम्।

न चास्याः प्रत्यक्षबाधः, अहमिच्छामीति प्रत्यक्षेणात्मधर्मत्वावगमादिति वाच्यम्; अहंपदार्थस्य चिदचिद्ग्रन्थिरूपत्वेनान्तःकरणधर्मत्वेऽपि कामादीनामुक्तानुभवाविरोधात्।

इन्द्रियस्यान्तःकरणस्य कथमहमनुभवे भानमिति चेत्, नान्तःकरणमिन्द्रियम्, प्रमाणाभावात्। "इन्द्रियेभ्यः परा ह्यर्था" इति इन्द्रियात् पृथक् मनसो निर्देशात्।

मनःषष्ठानीन्द्रियाणीति स्मृतिर्न मनस इन्द्रियत्वं बोधयति। "यजमानपञ्चमा इडां भक्षयन्ती"त्यत्रार्त्विजाऽपि यजमानेनर्त्विग्गतसंख्यापूरणवदत्राप्यनिन्द्रियेणापि मनसेन्द्रियगतसंख्यापूरणाविरोधात्। यत् यत्पदाभिधेयगतसंख्यापूरकं तत् तज्जातीयमित्युत्सर्गो नतु नियमः।

नह्येन्द्रियजन्यत्वं प्रत्यक्षत्वप्रयोजकम्; ईश्वरज्ञानेऽव्याप्तेः, येन सुखादिसाक्षात्कारस्य साक्षात्कारत्वान्यथानुपपत्तिर्मनइन्द्रियत्वे प्रमाणं स्यात्। यदी-

न्द्रियजन्यज्ञानत्वं न प्रत्यक्षत्वप्रयोजकम्, तर्हि सिद्धान्ते वा किं तदिति भवतां मतमिति चेत्, चैतन्यमेकमपि विषयवृत्तिमनोरूपोपाध्युपहितत्वेन विषयचैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यमित्यौपाधिकं व्यपदेशभेदमाप्नोति ।

तत्रान्तःकरणस्य विषयदेशगमनेन विषयव्याप्तिर्यदा भवति, तदा विषयवृत्त्योरेकचैतन्योपाधित्वात् विषयावच्छिन्नं चेतनं वृत्त्यवच्छिन्नं चैतन्यं चैकं भवति ।

एवं च विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वं ज्ञानप्रत्यक्षत्वप्रयोजकम्, पर्वतो वह्निमानिति परोक्षस्थले तु विषयवृत्त्योर्भिन्नदेशस्थत्वात् न वह्न्यंशेऽपरोक्षत्वम् । सुखस्मरणे धर्माधर्मादिज्ञाने चातिव्याप्तिवारणार्थं विषयस्य वर्तमानत्वं योग्यत्वं च विशेषणं दीयते । त्वं सुखीति वाक्यजन्यमपि ज्ञानमपरोक्षमेव ; दशमस्त्वमसीति दशमाज्ञानदशायां प्रयुक्तेन वाक्येन दशमोऽहमित्यपरोक्षसाक्षात्कारानुभवात् । एतेन—तत्त्वमसीति वाक्यस्याप्यपरोक्षज्ञानजनकत्वम्—व्याख्यातम् ।

एकस्मिन् ज्ञाने अंशभेदेन नैयायिकमते यथा लौकिकप्रत्यक्षत्वमलौकिकप्रत्यक्षत्वं च सुरभि चन्दनमित्यत्र विद्यते, एवमस्मन्मतेऽपि पर्वतो वह्निमानित्यत्र पर्वतस्य सन्निकृष्टत्वे पर्वतांशे प्रत्यक्षत्वं वह्न्यंशे परोक्षत्वमिति न दोषः । पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवोऽप्यत एवोपपद्यते । पर्वतस्यासन्निकृष्टत्वे तु सर्वांशेऽपि ज्ञानं परोक्षमेव ।

न चैवं प्रत्यक्षत्वपरोक्षत्वयोरेकत्राभ्युपगमे साङ्कर्यादुभयोर्जातित्वं न स्यादिति—वाच्यम् ; इष्टत्वात्, ब्रह्मभिन्नस्यानित्यत्वेन समवायाप्रसिद्ध्या च नित्यत्वसमवेतत्वघटितजातिपदार्थस्यालीकत्वात् ।

विषयप्रत्यक्षत्वं तु प्रमात्रभिन्नत्वं साक्षिसत्तातिरिक्तसत्ताविरहरूपमेकसत्तावादेन घटादौ प्रत्यक्षतादशायां घटावच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य चाभेदात् भवति, वह्न्यादौ तु न भवति, सत्तात्रैविध्यमते तु प्रमातृचैतन्याध्यस्तत्वं तदिति ज्ञेयम् ।

धर्माधर्मयोरतिव्याप्तिवारणार्थं विषयस्य योग्यत्वं विशेषणं दीयते । योग्यत्वं ज्ञानाहृतत्वं प्रतीतिकालिकं कादाचित्कं वा, रूपाकारवृत्तिदशायां रूपपरिमाणयोरेकचैतन्योपाधित्वाद्रूपस्येव परिमाणस्यापि प्रत्यक्षतावारणार्थं स्वाकारवृत्त्युपहितेति प्रमातृविशेषणं विवक्ष्यते, इदं तु बाह्यप्रत्यक्षस्यैव । आन्तर-

सा च वृत्तिश्चतुर्विधा—संशयो निश्चयो गर्वः स्मरणमिति।

एवंविधवृत्तिभेदेन एकमपि अन्तःकरणं मन इति बुद्धिरिति अहङ्कार इति चित्तमिति चाख्यायते। तदुक्तम्—

"मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया इमे॥"—इति॥

तच्च प्रत्यक्षं द्विविधम्—सविकल्पकनिर्विकल्पकभेदात्। तत्र

प्रत्यक्षसाधारण्ये तु वृत्तेरेव स्वविषयत्वाङ्गीकारात् स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वम्। स्वविषयत्वं चात्र स्वव्यवहारापेक्षणीयस्वेतरवृत्तिशून्यत्वम्।

अन्तःकरणतद्धर्मसुखादीनां साक्षिभास्यानामप्यस्वच्छत्वात् वृत्तिरङ्गीकरणीयेति न तत्राव्याप्तिः।

एवं च ज्ञानप्रत्यक्षत्वस्य विषयप्रत्यक्षत्वस्य च मनइन्द्रियत्वं विनैव संभवात् न मन इन्द्रियमिति विवरणानुयायिनां मार्गः। भामतीमते तु इन्द्रियमपि प्रत्यक्षम्, मनोऽपीन्द्रियमेवेति नानुपपत्तिः।

सर्वथा चाहमनुभवेऽन्तःकरणभानोपपत्त्या कामादेरात्मधर्मत्वेऽहमिच्छामीत्यादीनामप्रमाणत्वात् कामः संकल्प इति श्रुत्यनुसारेण कामादीनामिव धीपदवाच्यवृत्तेरपि मनःपरिणामत्वात् तद्विशिष्टचैतन्यजनकतया चक्षुरादिप्रमाणत्वव्यवहार उपपद्यते। तादृशवृत्तिजनन एव चक्षुःसंयोगसंयुक्तसमवायादिसन्निकर्षाणामुपयोग इति।

यथैकमप्यन्तःकरणं चतुर्विधवृत्तिभेदात् मनो बुद्धिरहंकार इति व्यपदेशमाप्नोति, एवम् एकमपि ज्ञानं वृत्तिभेदात् नानारूपं जन्यं च भवतीति सन्निकर्षाणां तज्जनन उपयोगो युक्त एवेत्याह—सा च वृत्तिरिति। चो ह्यर्थे प्रसिद्धिद्योतकः। एवंच वृत्त्यवच्छिन्नचैतन्यरूपप्रत्यक्षप्रमाजनकतया चक्षुरादीनां प्रमाणत्वव्यवहार उपपन्न एव।

अयमाशयः—चैतन्यमेव प्रत्यक्षप्रमा, चक्षुरादिप्रमाणत्वं तु घटादिवृत्त्या विषयांशे प्रमात्वमादायैव, न स्वांशे प्रमात्वमादायेति। सर्वथा तु प्रत्यक्षप्रमा तु

**सविकल्पकं वैशिष्ट्यावगाहि ज्ञानम्, यथा घटमहं जानामी-**

चैतन्यमेवेति यदुक्तं तदुपपन्नमेवेति। अन्तःकरणस्य वृत्तिभेदेन नामभेदे प्रमाणमाह—**तदुक्तमिति।** संशयवृत्त्युपाधिकमन्तःकरणं मनः, निश्चयवृत्त्युपाधिकं बुद्धिः, गर्ववृत्त्युपाधिकम् अहङ्कारः, स्मरणवृत्त्युपाधिकं तु तत् चित्तमिति। तदिदं प्रत्यक्षं विभजते—**तच्च प्रत्यक्षमिति।** घटाद्यंशे प्रत्यक्षमित्यर्थः। द्विविधमिति। सविकल्पकत्वनिर्विकल्पकत्वाभिन्नद्वित्वविशिष्टविभाजकधर्मान्यतरवत् प्रत्यक्षमित्यर्थः। **वैशिष्ट्यावगाहीति।** घटाद्यनुयोगिनस्तत्प्रतियोगिनो वा संसर्गस्य यत्र ज्ञाने भानं तत्सविकल्पकमित्यर्थः।

अत्र यतीन्द्रमतदीपिकाप्रकाशकाराः—"केचित्तु जातिगुणद्रव्यादीनामन्योन्यसम्बन्धं विना पृथक् पृथक् उपलंभो निर्विकल्पप्रत्यक्षम्, विशिष्टज्ञाने विशेषणस्य कारणत्वात्, गुणादिविशिष्टज्ञानं तु सविकल्पकमित्याहुः, तन्न; दण्डदेवदत्तयोः पृथक्ग्रहस्य विशेषणविशेष्यभावप्रयुक्तत्वाभावात्। दण्डदेवदत्तयोः सम्बन्धात् प्राक् यत्तयोः पृथग्ग्रहणं तत्तयोः सम्बन्धाभावादेव। सम्बन्धोत्तरं तु पृथग्ग्रहणमेव नास्ति; तदानीं विशेषणविशेष्यभावेनैव तयोः प्रतीतत्वात्। जातिव्यक्त्योर्हि नियमेन जातेर्व्यक्तिसम्बन्धादेकसामग्रीवेद्यत्वाच्च तयोः पृथग्ग्रहणं नैव संभवति। तस्मान्निर्विकल्पेऽपि संस्थानमेव वस्तु इत्थमिति प्रतीयते। द्वितीयादिप्रत्ययेषु तस्यैव संस्थानस्यानेकवस्तुनिष्ठतामात्रं प्रतीयते। संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयाऽनेकवस्तुविशेषणत्वं द्वितीयादिप्रत्ययगम्यमिति द्वितीयादिप्रत्ययाः सविकल्पका इत्युच्यन्ते। यद्यपि प्रथमपिण्डग्रहणे वस्त्वनुवृत्तिर्न प्रतीयते; तथापि आकृतिः प्रतीयत एव। नह्यनुवृत्तिराकृतिः, किन्तु अनुवृत्तं संस्थानमेवेति वेदार्थसंग्रहे स्पष्टम्। ननु प्रथमपिण्डग्रहणजन्यसंस्कारनाशोत्तरं जायमानस्य द्वितीयपिण्डग्रहणस्य निर्विकल्पकत्वं स्यात्, तदानीमनुवृत्तेरग्रहणादिति चेदिष्टमेवेति—वर्णयन्ति।

तदिदं न सङ्गतम्; अयं घट इति प्रत्यक्षात् पूर्वं स्वरूपमात्रविषयकं यत् ज्ञानमनुभूयते तस्य निर्विकल्पकत्वात् जात्यादीनामपि तादृशं ज्ञानमनुभूयमानं नापलपितुं शक्यते। नहि संस्थानस्येदमित्थमिति ज्ञानं निर्विकल्पकं भवितुमर्हति, सविकल्पकज्ञानोच्छेदप्रसङ्गात्। द्वितीयादिज्ञानानामपि इदमित्थमिति संस्थान-

त्यादिज्ञानम्, निर्विकल्पकं तु संसर्गानवगाहि ज्ञानम्, तथा

स्वरूपावगाहित्वेन निर्विकल्पत्वापत्तेः। नह्येकवस्तुज्ञानमन्तरा तत्र संस्थानानुवृत्तिर्ज्ञातुं शक्यते। एवं प्रथमज्ञानेनैकस्मिन् संस्थानानुवृत्तिर्द्वितीयज्ञानेनापरस्मिन्निति सर्वस्यापि ज्ञानस्य प्रथमज्ञानजातीयत्वात् सविकल्पकथाया एवोच्छेदप्रसङ्गः। नचेष्टापत्तिः; यतीन्द्रमतदीपिकायामपि सविकल्पकनिर्विकल्पभेदेन प्रत्यक्षद्वैविध्यस्य वर्णनात्। अतः संसर्गानवगाहिस्वरूपमात्रविषयकं ज्ञानं निर्विकल्पकमित्येवाङ्गीकरणीयम्। तदुक्तमद्वैतसिद्धौ—"नच संसर्गागोचरप्रमितिजनकत्वमसिद्धम्, प्रत्यक्षादिनापीदमित्थमिति विशेषसंसर्गगोचराया एव प्रतितेर्जननादिति वाच्यम्; निर्विकल्पस्वीकर्तॄणां तस्मिन्नेव प्रसिद्धेः। "वस्तुतस्तु प्रकृष्टप्रकाशश्चन्द्रः" इति वाक्ये स्वरूपमात्रविषयत्वं प्रदर्शितमेव; स्वरूपमात्रविषयप्रश्नोत्तररूपस्य तस्य स्वरूपमात्रविषयत्वस्यैवावश्यकत्वादि"ति। लघुचन्द्रिकायामपि—सत्यादिवाक्यजन्यप्रमा, संसर्गागोचरा लक्षणवाक्यजन्यज्ञानत्वात्, व्यतिरेकेण घटमानयेति वाक्यवदिति संसर्गागोचरज्ञानमेव निर्विकल्पज्ञानमिति साधितम्। सर्वथाच वैशिष्ट्यानवगाहिज्ञानमेव निर्विकल्पकमित्यङ्गीकरणीयमित्याशयेनाह—**निर्विकल्पकं तु संसर्गानवगाहीति**। ननु विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणत्वानुपपत्तिः खलु निर्विकल्पज्ञानसत्त्वे मानम्, एवं च विशेषणज्ञानत्वमेव निर्विकल्पज्ञानस्य लक्षणं भवतु, एवं च तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य विशेषणज्ञानत्वाभावाच्चाखण्डार्थत्वसिद्धिर्नवा निर्विकल्पकत्वसिद्धिरित्याशङ्काम्, नहि विशेषणत्वेन विशेषणज्ञानं निर्विकल्पज्ञानम्, किन्तु विशेषणस्वरूपमात्रविषयकज्ञानम्, एवं च स्वरूपमात्रविषयकत्वस्यैव निर्विकल्पकज्ञानत्वान्न तत्त्वमस्यादिवाक्यजन्यज्ञानस्य निर्विकल्पकत्वासिद्धिरित्यभिप्रायेणानवसरां सूचयन् निर्विकल्पकज्ञानलक्ष्यं लौकिकं वैदिकं चोपनिबध्नाति—**यथेति**। यद्यपि सोऽयं देवदत्त इति वाक्यप्रयोगः प्रत्यभिज्ञाऽभिलापक एव, प्रत्यभिज्ञायां च देशकालोपलक्षितदेवदत्तस्वरूपमेव भासत इतीन्द्रियजन्यमपि प्रत्यक्षं विद्यते; तथापि इन्द्रियजन्यप्रत्यक्षे सन्निकर्षवशादुपलक्षणदेशकालादेरपि भानसंभवान्न निर्विकल्पकत्वं भवतीति शाब्दमेव तदुदाहरणीयम्। शाब्दज्ञाने हि तात्पर्यविषयस्यैव भानमित्युपपादयिष्यमाणत्वात् नातात्पर्यस्य देशकाला-

**सोऽयं देवदत्तः तत्त्वमसीत्यादिवाक्यजन्यं ज्ञानम् ।**

देरपि भानम् । सोऽयमिति हि वाक्यं 'अयं स न वेति संशयविपर्ययज्ञानविषय-भेदविरोधिमात्रस्य बुभुत्सितत्वेन तत्परमेव । नह्यन्यस्मिन् बुभुत्सितेऽन्यत् बोधयितुं शक्यते । न केवलं तात्पर्यविषयतया स्वरूपमात्रं प्रतिपाद्यते, किन्तु तस्यैव योग्यतया, न विशेषणादिभानस्येत्यपि बोध्यम् । तथाहि किमत्र तद्देशकाल-विशिष्टोद्देशेन एतद्देशकालवैशिष्ट्यम्, आहो एतद्देशकालयोरैक्यम्, आहोस्वित् विशिष्टयोरैक्यम् । तद्देशकालयोरिदानीम् एतद्देशकालयोरन्यदा च सत्त्वापत्त्या नाद्यद्वितीयकल्पौ प्रसरतः । तृतीयचतुर्थयोस्तु बाध इत्यगत्या विशेषणांशपरि-त्यागेन स्वरूपमात्रपरत्वमेवाङ्गीकरणीयम् । नच स्वरूपमात्रपरत्वे तत्पदस्यायं-पदस्य च वैयर्थ्यम्, तत्तेदन्तोपस्थितिद्वारकाभेदज्ञानस्यैव भेदभ्रमविरोधित्वात् । एवं च योग्यताविरहेण बाधात् न विशेषणभानमिति सिद्धान्तो विनाप्यायासं वाक्यजन्यज्ञान एव संभवतीत्याशयेनाह—**वाक्येति** । **वस्तुतस्तु**—सोऽयं देवदत्त इति प्रत्यभिज्ञाप्रत्यक्षमपि निदर्शयितुं युज्यते, यथाहि पर्वतो वह्निमानित्यादौ महानसीयेतरवह्निभानेच्छायां तादृश एव वह्निर्भासते, अत एवा-संप्रज्ञातसमाधौ अन्यभानं मास्तु ; आत्मभानमात्रं भवतु इतीच्छायां सत्यां न त्रिपुटी-भानमिति सिद्धान्तो युज्यते । असंप्रज्ञातसमाधिरप्या''त्मैकाकारतया तिरस्कृता-नात्मदृष्टिं विदधीते''ति वचनात्केवलात्मज्ञानमिति मताभिप्रायेणेदम् । एवं प्रत्यभि-ज्ञायां विशेषणादिभानाभावेच्छासहकृताभेदमात्रभानेच्छया स्वरूपभानमप्युपपद्यते ।

परमार्थतस्तु—प्रत्यक्षेऽपि बाधस्य प्रतिबन्धकत्वात् न विशिष्टाभेदभानं पूर्वोक्त-रीत्या संभवति । तदुक्तमद्वैतसिद्धौ—"प्रत्यक्षस्य विशिष्टाभेदविषये बाधस्य प्रति-बन्धकतया स्वरूपमात्राभेदविषयत्वादि"ति ! यद्यपि सः इति अयं देवदत्त इति चाभिज्ञाद्वयेनैव प्रत्यभिज्ञा जन्यते, एवं चाभिज्ञयोपस्थापितस्यैव प्रत्यभि-ज्ञयापि ग्रहणेऽभिज्ञातोऽवैलक्षण्यापत्तिः, प्रत्यभिज्ञावैफल्यं चेति शङ्का भवति ; तथाप्युभयोपस्थितिद्वारकाभेदज्ञानस्यैव भेदभ्रमनिवर्तकत्वान्न वैफल्यप्रसङ्गः, नापि स्वरूपतोऽवैलक्षण्यम् ; सप्रकारकत्वनिष्प्रकारकत्वाभ्यां वैलक्षण्यात् । तदुक्त-मद्वैतसिद्धौ—"नचाभिज्ञाया अविशेषः ; सप्रकारकत्वनिष्प्रकारकत्वाभ्यामेव विशेषात्" इति । एवं च प्रत्यभिज्ञोदाहरणमपि दातुं शक्यते, एवमपि तत्त्वमसीति

वाक्यजन्यवैदिकज्ञाने निर्विकल्पकत्वे दृष्टान्तसूचनार्थं सोऽयं देवदत्त इति ज्ञानमपि वाक्यजन्यमत्र विवक्षितमिति बोध्यम् । एवंच—तत्त्वमस्यादिवाक्यं स्वरूपमात्रविषयकं स्वरूपमात्रतात्पर्यकत्वात् सोऽयं देवदत्त इति वाक्यवदित्यनुमानद्वारा तत्त्वमस्यादिवाक्याखण्डार्थत्वस्यापि सिद्ध्या तज्जन्यज्ञाननिर्विकल्पकत्वमप्यव्याहतमित्याशयेनाह—**तत्त्वमसीति** ।

**एतेन**—सोऽयं देवदत्त इति वाक्यजन्यज्ञानदृष्टान्तेन तत्त्वमस्यादिवाक्याखण्डार्थत्वासाधनं न संभवति । सोऽयं देवदत्त इति वाक्ये तद्देशकालविशिष्टैतद्देशकालविशिष्टयोरभेदस्यैव बोधनात्, अन्यथा देवदत्तस्वरूपमात्रस्य प्रागेव ज्ञाततया वाक्यवैयर्थ्यात्, पदान्तरवैयर्थ्यात् । यथाहि नीलो घट इत्यादौ विशेषणभेदेऽपि सामानाधिकरण्यानुपपत्त्या विशिष्टाभेदस्तात्पर्यविषयः, एवमत्रापीति न्यायामृतसिद्धान्तः—**परास्तः ;** दत्तोत्तरत्वात्, भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वरूपसामानाधिकरण्यस्य लक्षणया स्वरूपाभेदमात्रबोधनेऽपि संभवादिति बोध्यम् ।

यत्त्वत्र न्यायामृतकाराः—तत्त्वमसीत्यत्र चिन्मात्रेणाभेदबोधने इष्टापत्तिः, अस्माभिरपि चित्त्वेन जीवब्रह्माभेदाङ्गीकारात्, अप्रसक्तप्रतिषेधः ; नहि चित्त्वे न जीवब्रह्मभेदः प्रमाणान्तरसिद्धः । किंचाभेदो यदि स्वरूपम्, तर्हि तस्य स्वप्रकाशतया नित्यसिद्धत्वेनोपदेशवैयर्थ्यम्, तदस्फुरणे च तद्बुभुत्साद्यनुपपत्तिः, सत्यादिवाक्येनैवोक्तार्थबोधसिद्ध्या महावाक्यवैफल्यम्, एकपदेनैवोपपत्तेः पदान्तरवैयर्थ्यम्, भेदभ्रमकालज्ञातस्वरूपाधिकागोचरत्वात् महावाक्येन भ्रमनिवृत्त्ययोगश्चेति—वर्णयन्ति । तत्र सर्वज्ञत्वाद्युपलक्षितरूपस्य किंचिज्ज्ञत्वाद्युपलक्षितस्वरूपस्य चाभेदस्य महावाक्येन बोध्यमानत्वात् तस्य च प्रमाणान्तरेणासिद्ध्या नोपदेशवैयर्थ्यम्, सत्यादिवाक्येन तु सत्यत्वाद्युपलक्षितस्वरूपमेव बोध्यते, न तु सर्वज्ञत्वाद्युपलक्षिताभेदस्वरूपमिति न महावाक्यवैयर्थ्यम्, यथा च सोऽयं देवदत्त इत्यत्राभिज्ञाद्वयविषयानतिरिक्तविषयत्वेऽपि न प्रत्यभिज्ञावैयर्थ्यम् तद्वत् । तत्त्वमसीति पदत्रयसार्थक्यं तु सिद्धान्तबिन्दुटीकायां विश्वतैजसप्राज्ञानां विराड्ढिरण्यगर्भान्तर्यामिणां त्रिविधानां जीवेश्वराणामभेदप्रतिपत्त्यर्थत्वेन समर्थितम् । भ्रमकाले तु संकीर्णं स्वरूपमवबुध्यते, महावाक्यादिना तु असंकीर्णमिति भ्रमनिवर्तकत्वमप्युक्त-

ननु शाब्दमिदं ज्ञानं न प्रत्यक्षम्, इन्द्रियाजन्यत्वादिति चेत्, न; नह्येन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रम्; दूषितत्वात्, किन्तु योग्यवर्तमानविषयत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम्। तथाच सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्याभिन्नतया सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्।

मेव। ननु सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानं न निर्विकल्पकम्, इन्द्रियाजन्यत्वादित्याशङ्कामप्रयोजकत्वशङ्काकलङ्कितत्वेनोक्तानुमानाप्रवृत्त्या निरस्यन् विषयचैतन्याभिन्नप्रमाणचैतन्यत्वरूपं प्रत्यक्षत्वं वाक्यजन्यज्ञानसाधारणमिति पूर्वोक्तमर्थं स्मारयति—**नन्विति। नह्येन्द्रियेति। योग्यवर्तमानेति।** यद्यपि विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वं न ब्रह्मज्ञाने संभवति, ब्रह्मणश्चैतन्योपाधित्वाभावात्; तथापि विषयावच्छिन्नविषयस्वरूपान्यतरचैतन्याभिन्नत्वस्यैव ब्रह्मप्रत्यक्षसाधारणत्वात् न दोषः। यदितु विषयचैतन्याभिन्नप्रमाणचैतन्यत्वपदेनाज्ञानविषयतासामान्यनिवर्तकत्वमेव विवक्ष्यते, वृत्तेर्विषयदेशसम्बन्धेन विनाऽज्ञानविषयतासामान्यानिवृत्तेः, तदातु न कोऽपि विरोधः।

सोऽयं देवदत्त इति वाक्यजन्यज्ञाने प्रत्यक्षत्वसमन्वयं दर्शयति—**तथाचेति। बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन।** बहिर्निःसृतस्यान्तःकरणस्य सम्बन्धविशेषाख्यपरिणामाभ्युपगमेन। **वाक्यजन्यज्ञानस्येति।** यद्यपि चक्षुःसन्निकर्षसत्त्वात् चाक्षुषप्रत्यक्षत्वमिति वर्णयितुं शक्यते, तथापि तत्तेदन्तोपलक्षितस्वरूपज्ञानं वाक्यजन्यमेवाङ्गीकरणीयम्; तत्तेदंताद्युपलक्षणोपस्थितेः शाब्दत्वस्यैव संभवात्। नच तावता सप्रकारत्वम्, तत्तेदन्तयोर्भासमानवैशिष्ट्यसम्बन्धित्वाभावात्। तदुक्तमद्वैतसिद्धौ—"तत्तेदन्तयोरपि न प्रकारता, भासमानवैशिष्ट्यप्रतियोगित्वाभावात्"—इति।

एवं तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि; तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्।

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्?

प्रमातुरेवेति। प्रमातृत्वोपलक्षितस्वरूपचैतन्यमात्रस्यैवेति। न च स्वरूपचैतन्यमात्रज्ञानमेव तत्त्वमसीति वाक्येन जन्यत इति वाच्यम्; चैत्रो ब्रह्मेति वाक्यजन्यस्वरूपचैतन्यविषयज्ञानस्याज्ञाननिवर्तकतावारणार्थमहंत्वोपस्थितिपूर्वकजीवाभिन्नस्वरूपज्ञानस्यैव निवर्तकत्वमिति लघुचन्द्रिकायां ब्रह्मानन्दसरस्वतीभिरुपपादितत्वेन तथाङ्गीकारायोगात्। चैतन्येऽहंतादाम्याध्यासादयः खलु दुःखकारणमिति युक्तमेवैतत्।

ननु—तत्त्वमसीति वाक्यस्याखण्डार्थत्वे किं मानम्? तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठं तन्मात्रप्रश्नोत्तरत्वात् सोऽयं देवदत्त इति वाक्यजन्यज्ञानवदित्यनुमानं तत्र प्रमाणम्। सत्यमाकाङ्क्षायोग्यतासत्तिमद् वाक्यमेव प्रमाणम्। आकाङ्क्षा तु न सामान्यतः संसर्गानुभावकत्वम्, अनभिमतसंसर्गस्यापि शाब्दबोधविषयतापत्तेः, किन्तु तात्पर्यविषयसंसर्गानुभावकत्वमाकाङ्क्षेति वर्णनीयम्। तत्र तात्पर्यविषयानुभावकत्वमेवाकाङ्क्षेति कल्पने लाघवान् न संसर्गस्याप्याकाङ्क्षास्वरूपघटकत्वं स्वीकुर्मः, तात्पर्यविषयस्तु क्वचित्संसृष्टः क्वचिदखण्ड इति भवति। एतेनाऽऽसत्तिरपि व्याख्याता। नहि साऽन्वयप्रतियोगित्वविशेषितपदार्थोपस्थितिः; गौरवात्, किन्तु शाब्दबोधानुकूलपदार्थोपस्थितिमात्रमिति तत्र संसर्गो न घटकः। अत एव योग्यतापि न संसर्गघटिता; तात्पर्यविषयाबाधस्यैव योग्यतात्वात्। एवंच निर्णीताखण्डतात्पर्यके वाक्ये संसर्गबोधं विनापि आकाङ्क्षादिमद्वाक्यत्वरूपप्रमाणवाक्यत्वसंभवात् तत्त्वमस्यादिवाक्यप्रामाण्यं सिद्धमेव। तदुक्तमद्वैतसिद्धौ—"तात्पर्यविषयानुभावकत्वादिकमखण्डार्थवाक्येऽपि विद्यते" इति। तथाच तत्त्वमस्यादिवाक्यं संसर्गगोचरप्रमाजनकं प्रमाणवाक्यत्वादित्यनुमानमेवाप्रयोजकशङ्काकलङ्कितमप्रमाणम्, नतु तत्त्वमस्यादिवाक्यं अखण्डार्थविषयम्, तन्मात्रप्रश्नोत्तरत्वादित्यनुमानमिति सर्वमनवद्यमित्यभिप्रायेणाह—उच्यत इति।

उच्यते, वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्वम्, अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः,

ननु—महावाक्यतात्पर्यविषयः, संसर्गरूपः, प्रमाणवाक्यतात्पर्यविषयत्वात्, संमतवदित्यनुमानेन संसर्गगोचरत्वं वाक्यस्य साध्यते। प्रमाणं हि नामानधिगताबाधितार्थविषयज्ञानकरणमिति पूर्वमेवोक्तम्, तत् यदि महावाक्यानां स्वरूप एव तात्पर्यम्, तर्हि स्वरूपस्य पदैरेव ज्ञातत्वादधिगतार्थविषयत्वेन प्रामाण्यं न स्यात्; दृष्टं ह्यग्निहोत्रादिवाक्ये यागस्वर्गसाध्यसाधनभावः प्रमाणान्तरानधिगत इति, अन्यथा घटो घट इति वाक्यमपि प्रमाणं स्यादित्याशङ्काम्,—सत्यमग्निहोत्रादि वाक्यविषयः संसर्ग इति, तथापि प्रमाणवाक्यतात्पर्यविषयत्वं प्रति न संसर्गत्वं व्यापकम्। संसर्गस्येव संसृष्टस्यापि वाक्यतात्पर्यविषयत्वेन संसृष्टे व्यभिचारात्; यथाच सत्यादिवाक्यानां तदादिपदानां तत्त्वमसीति वाक्यस्य च विभिन्नविषयत्वेनानधिगतविषयत्वं तत् पूर्वमेव निरूपितम्—यदसंकीर्णं प्रमातृत्वाद्युपलक्षिताभिन्नं च स्वरूपं न प्रमाणान्तरेण तदवगम्यते। यथाचासंकीर्णस्वरूपविषयत्वं न सखण्डार्थत्वं साधयति, यथाच भ्रमविरोधिफलोपहितस्वरूपत्वमेवासंकीर्णत्वं न व्यावृत्त्यादिविशिष्टत्वम्, तथाऽद्वैतसिद्धौ विस्तर इत्यनवसरां निरूपयति—वाक्यजन्यज्ञानविषयत्वे हीति। न तन्त्वम्। न व्यापकम्। संसृष्टरूपे पदार्थे व्यभिचारादिति भावः। यदि च पदार्थस्य संसृष्टस्य न वाक्यतात्पर्यविषयत्वम्, किन्तु संसर्गस्यैवेत्यालोच्यते, तदा यष्टीः प्रवेशयेत्यादौ यष्टिमत्पुरुषसंसर्गं विहाय यष्टिसंसर्गमात्रस्य शाब्दबोधविषयताप्रसङ्गः। तात्पर्यविषयसंसर्गत्वमेव यदि तन्त्वम्, तर्हि तदपेक्षया तात्पर्यविषयत्वमेव लाघवेन तत्र तन्त्वम्, नतु तद्विशिष्टसंसर्गत्वमपि, गौरवादिति तत्त्वमस्यादिवाक्याखण्डार्थत्वे न कोऽपि दोष इत्याह—उच्यत इति।

ननु—अस्तु नाम वाक्यजन्यज्ञानविषयत्वे तात्पर्यविषयत्वमेव तन्त्वम्, एवमपि तत्त्वमसीतिवाक्यस्याखण्डार्थत्वं न सम्भवति। तथाहि—जीवब्रह्माभेदो हि न शास्त्रार्थः, नाहं सर्वज्ञ इत्यनुभवेन भेदसिद्ध्या प्रमाणसिद्धस्य तस्य बाधायोगात्, अबाधेनोपपत्तौ बाधकल्पनं हि न युक्तम्। एतेन—जीवेश्वरौ भिन्नौ परस्परविरुद्धधर्माधिकरणत्वात्, दहनतुहिनवदित्यनुमानमपि—व्याख्यातम्। न च—अयं

भेदो न तात्त्विकः, किन्तु कल्पित एवेति—वाच्यम्; युष्मन्मतेऽभेदस्येवास्मन्मते भेदस्यापि षड्विधतात्पर्यलिङ्गोपेतद्वासुपर्णादिश्रुतिगम्यस्यातात्त्विकतायोगात्। एकतरबाधे च कर्तव्ये सखण्डवाक्यानां बहुत्वात् विप्रतिषेधे भूयसां स्यात् सधर्मत्वमिति न्यायेनाभेदबाध एव युक्तः॥

तथाहि—आथर्वणे "द्वा सुपर्णे"त्युपक्रमः, "परमं साम्यमुपैती"त्युपसंहारः, "तयोरन्यः पिप्पलम्" "अनश्नन्नन्य" इत्यन्यशब्दाभ्यासः, शास्त्रैकगम्येश्वरप्रतियोगिकभेदस्यापूर्वत्वम्, "पुण्यपापे विधूये"ति फलम्, "अस्य महिमानमिति वीतशोकः" इति स्तुतिरूपोऽर्थवादः, 'अत्ति' 'अनश्नन्नि'ति भेदे युक्तिश्च विद्यन्ते। अत्रोपक्रमे द्विशब्दो हि यदि भेदवाचको यदि वा द्वित्वसंख्यावाचकः, उभयथापि भेदस्योपक्रमो वर्तते। एतेनोपसंहारोऽपि व्याख्यातः; साहश्यस्य भेदमन्तरेणानुपपत्तेः। पारम्यविशेषणं तु बहुभिर्धर्मैस्साद्दश्यं गमयितुम्। 'अन्योऽन्यः' 'अन्यमि'त्यभ्यासोऽपि अन्यशब्दस्य भिन्नपरत्वात् भेदविषय एव। एवंच षड्विधतात्पर्यलिङ्गोपेतत्वं भेदश्रुतेः सिद्धमेव।

एतेन—अन्तर्यामिब्राह्मणमपि—व्याख्यातम्; "वेत्थ नु त्वं गार्ग्ये"त्युपक्रमस्य "एष त आत्माऽन्तर्याम्यमृत" इत्युपसंहारस्य, "एष त आत्माऽन्तर्यामीति" एकविंशतिकृत्वोऽभ्यासस्य, अन्तर्यामित्वस्य प्रमाणान्तरानधिगततयाऽपूर्वत्वस्य, "स वै ब्रह्मवित् सर्वविदिति"फलस्य, "तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यती"ति निन्दारूपार्थवादस्य "यस्य पृथिवी शरीरं यं पृथिवी न वेदे"त्युपपत्तेश्चान्तर्यामितात्त्विकतायां तात्पर्यग्राहकाणां विद्यमानत्वात्।

तत्त्वमसीतिवाक्यं तु न जीवब्रह्माभेदपरम्। तथाहि "सदेव सोम्येदमि"त्यादिसन्दर्भो नाद्वितीयब्रह्मपरः; "उत त मादेशमप्राक्ष्यः" "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी"त्युपक्रममध्यपरामर्शोपसंहाराणां सविशेषब्रह्मपरत्वात्। नहि जीवनियमनानुकूलव्यापाररूपशासनकर्तृत्वं निर्विशेषे संभवति। नापि प्रजाशब्दोदितानां जीवानां निर्विशेषब्रह्मणश्च मूलमूलिभावः संभवति, नापि वा "तत्सत्यमिति" प्रपञ्चसत्यत्वावधारणं संबोध्यसंबोधकभावेन श्वेतकेतूद्दालकयोर्भेदप्रतिपादनावगतं जीवनानात्वं निर्विशेषात्मवादे युज्यते। अतः तत्त्वमसीति वाक्यं "ब्रह्मणे त्वा महस आत्मानं युञ्जीति" ति श्रुत्यनुसारेण "तस्मै त्वम्" इति वा, "यतो वा इमानि भूतानि जायन्ते" इति

किन्तु तात्पर्यविषयत्वम्। प्रकृते च "सदेव सौम्येदमग्र आसीत्" इत्युपक्रम्य "तत्सत्यं स आत्मा तत् त्वमसि श्वेतकेतो

श्रुत्यनुसारेण 'तस्मात् त्वमि'ति वा, "स कारणं कारणाधिपाधिपः" इति श्रुत्यनुसारेण 'तस्य त्वम्' इति वा, "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति श्रुत्यनुसारेण 'तस्मिंस्त्वम्' इति वा, अन्तर्यामिब्राह्मणानुसारेण शरीरशरीरिभावपरतया वा योजनीयम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा यद्यपि कार्यस्वरूपाणां विशेषाकारेण कारणाभेदेन द्वैतिनां मते न संभवति, तथापि तत्तदवस्थाविशिष्टं कारणमेव कार्यमित्यारम्भणाधिकरणे निरूप्यमाणं कार्यकारणानन्यत्वं स्वीकृत्य ब्रह्मणि ज्ञाते उपादानतया कार्यानुप्रविष्टो ब्रह्माकारो भवतीति सद्ब्रह्मण उपादानतानिरूपणपरं "यथा मृत्पिण्डेने"त्यादिवाक्यमिति मन्तव्यम्। नचैकमेवाद्वितीयमिति वाक्यानुपपत्तिः; "असिद्वितीयोऽनुचचार पाण्डवः।" इत्यत्रेव द्वितीयशब्दस्य सहायपरत्वेन "एके मुख्यान्यकेवलाः" इति कोशानुसारेणैकशब्दस्यान्यपरत्वाङ्गीकारेण चासहायत्वेनान्यत्वेन चैव ब्रह्मणः प्रतिपाद्यमानत्वात्। नच—तत्त्वमसीतिवाक्यस्य शरीरशरीरिभावपरत्वे जीवशरीरः परमात्मेत्यर्थस्यैव विवक्षणीयत्वात् त्वंपदार्थस्य क्रियायामनन्वयात् 'असी'ति मध्यमपुरुषप्रयोगानुपपत्तिरिति—वाच्यम्, युष्मच्छब्दसामानाधिकरण्यमात्रेण संबोध्यार्थपरत्वाभावेऽपि परंपरया क्रियान्वयमादायापि तदुपपत्तेः। विस्तृत चैतत् पाराशर्यविजय इति तत एव द्रष्टव्यम्॥

एतेन—"ब्रह्म वेद ब्रह्मैव भवती"ति वाक्यमपि—व्याख्यातम्; ब्रह्मैवेत्येवकारो हि नावधारणार्थः किन्तु सादृश्यार्थः, "इववत्वेवे"त्येवकारस्यापीवपर्यायत्वात्। अत्यन्तसादृश्येनाभेदे सोऽयं देवदत्त इत्यत्रेव तात्पर्यानुसारेणाखण्डार्थाविवक्षायां तु अवधारणार्थोऽपि न विरोधी। एवं च सर्वेषामपि वेदान्तानां सद्वितीयब्रह्मण्येव तात्पर्यात् न तत्त्वमस्यादिवाक्यमखण्डार्थमित्यत आह—प्रकृते चेति॥

विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमवसितमिति॥ अयं भावः—नहि वेदान्तानां जीवब्रह्मभेदे तात्पर्यम्, नाहं सर्वज्ञ इत्यनुभवो हि अन्तःकरणावच्छिन्नचैतन्यस्य मायावच्छिन्नचैतन्यभेदमवगाहते, नतु शुद्धचैतन्ये विगलितान्तः-

**इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्य्यमवसितमिति कथं तात्पर्य्याविषयं संसर्गमवबोधयेत् ।**

करणादिनिखिलोपाधिकचैतन्यभेदमिति जीवब्रह्मभेदे नाहं सर्वज्ञ इति प्रत्यक्षं न प्रमाणम्। प्रत्यक्षं हि भेदं न वयं निषेधामः, किन्तु तत्तात्त्विकत्वमेव निषेधामः। नहि प्रत्यक्षबाधमन्तराऽद्वितीयादिश्रुतिप्रामाण्यं सिद्ध्यतीत्यपच्छेदन्यायेन बाध्यमेव प्रत्यक्षमूरीकुर्मः। परीक्षितं हि प्रत्यक्षं न बाध्यं नापरीक्षितमपीति पूर्वमेवोक्तम्। यथाच कामसंकल्पदुःखादिकं नात्मधर्मः, किन्तु अन्तःकरणधर्मः; तथा पूर्वमेव निरूपितमिति विगलितोपाधिशुद्धचैतन्ययोर्जीवब्रह्मणोर्विरुद्धधर्माधिकरणत्वाभावात्—'जीवेश्वरौ भिन्नौ विरुद्धधर्माधिकरणत्वात् इत्यनुमानमपि हेत्वसिद्धिदूषितं न प्रयोजकमिति बोध्यम्। अदुष्टत्वेऽपि वा तात्त्विकभेदस्य दृष्टान्तेऽदृष्टत्वेन साध्यवैकल्यात् भेदमात्रसाधने च सिद्धसाधनाद्वैतविरोधीदमनुमानम्।

नच—द्वासुपर्णेति षड्विधतात्पर्यलिङ्गोपेतश्रुतिसिद्धस्य भेदस्य कल्पितत्वायोग इति—वाच्यम्, आथर्वणे प्रथममुण्डके "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति शौनकप्रश्नानन्तरं 'द्वे विद्ये वेदितव्ये' इति विद्याद्वयमवतार्य ऋग्वेदादिरूपामपरां विद्यामुक्त्वा "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमि"त्यादिना परविद्याविषयत्वमक्षरस्य वर्णितम्। अक्षरशब्दस्तु 'अक्षरमम्बरान्तधृतेरि'त्यत्र निर्गुणब्रह्मपरतया भगवत्पादैर्व्याख्यापितमिति उपक्रमोऽभेदपरः, एवं द्वितीयमुण्डके "पुरुष एवेदं विश्वं ब्रह्मैवेदं विश्वमिदं वरिष्ठमि"ति मध्येऽभेद एव परामृष्टः। तथा तृतीयमुण्डकेऽपि ह्यन्ते 'परेऽव्यये सर्व एकीभवन्ति स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवती'ति अभेद एवोपसंहृत इति उपक्रमपरामर्शोपसंहारैर्मुण्डकत्रयात्मिकाया उपनिषद ऐक्यपरत्वं निर्णीयते। एवंच यथा "चीन् प्रयाजानिष्ट्वा समानयते जुह्वामौपभृतमि"ति प्रयाजाङ्गविशेषं विधाय "अभिक्रामञ्जुहोती"ति विहितमभिक्रमणम् "यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनम्" इत्यादिना "यत्प्रयाजानिष्ट्वा हवींष्यभिघारयती"ति पुनरपि प्रयाजधर्माम्नानात्संदंशन्यायेन प्रयाजाङ्गमेव। अत एव "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति वैयाकरणपरिभाषा। एवंच पूर्वोत्तराभेदवाक्याविरोधेनैव द्वासुपर्णेति वाक्यस्य योजनीयतया

व्यावहारिकभेदपरत्वमेवास्य वाक्यस्याङ्गीकरणीयम्, नतु तात्त्विकभेदपरत्वम्। "तयोरन्यः" "अनश्नन्नन्य" इत्यादिकमपि न तात्त्विकाभेदपरम्॥

एतेनान्तर्यामिब्राह्मणमपि व्याख्यातम्। "आत्मेत्येवोपासीते"ति सूत्रितब्रह्मविद्याविवरणरूपायां चतुरध्याय्यां "अनेन ह्येतत् सर्वं वेदे"त्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "ब्रह्म वा इदमग्र आसीदित्तदात्मानमेवावेदहं ब्रह्मास्मी"त्युपक्रमेण षष्ठाध्यायान्ते मैत्रेयीब्राह्मणे "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्याद्युपसंहारेण चाभेदपरत्वनिर्णये सति पूर्वोक्तरीत्या सन्दर्भस्यास्याभेदाविरोधेनैव नेयत्वात्। एतेन—"भेदव्यपदेशाच्चे"त्यादिसूत्राविरोधोऽपि—व्याख्यातः। "अथातो ब्रह्मजिज्ञासे"ति निर्विशेषब्रह्मविचारोपक्रमेण "अनावृत्तिः शब्दादि"ति निर्गुणब्रह्मात्मभावप्रयुक्तानावृत्तिनिरूपणेनाभेदोपसंहारेण च सूत्राणामप्यद्वैत एव तात्पर्यावगमात्। विस्तृतं चेतदस्माभिर्निर्णयसागरमुद्रापितकल्पतरुपरिमलोपबृंहितभामतीसहित-ब्रह्मसूत्रभाष्यभूमिकायामिति तत एव द्रष्टव्यम्।

एतेन—तत्त्वमसीति वाक्यमपि—व्याख्यातम्; "उत तमादेशः" इत्यत्र हि आदेशशब्दार्थं उपदेशमात्रगम्यत्वं निर्विशेष एव संभवति। अत एवा"चार्यवान् पुरुषो वेदे"त्युपसंहारोऽप्युपपद्यते। "सदेव सोम्येदमग्र आसी"दित्यत्रापि निष्प्रपञ्चात्मतत्त्वमेवोपक्षिप्यते। अत्रहि सच्छब्दो न सत्ताश्रयतयेदंपदार्थे पर्यवसितः, किन्तु ब्रह्मणि; "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधो मतः।" इति स्मृतेः, "सन्मूलाः सोम्ये"ति सच्छब्देन ब्रह्मण एव परामर्शाच्च। नचायं सच्छब्दः सविशेषपर इति वाच्यम्; "सदेवेदमि"ति वाक्योपक्रमे "एकमेवाद्वितीयमि"ति विशेषणेन निर्विशेषपरत्वावगमात्। सदेवेमितीदंतादात्म्यं सद्रूपस्य ब्रह्मणो यत्प्रतिपादितम्, तदिदं रजतमित्यादाविव बाधायां सामानाधिकरण्येनैव गमनीयमिति तदेकवाक्यतानुसारेणैकपदस्यापि भेदशून्यपरतयैव व्याख्यानं युक्तम्, नतु भेदपरतया। एतेनाद्वितीयपदमपि व्याख्यातम्। द्वितीयपदेन सहायविवक्षा न शक्या, किन्तु गौण्येति मुख्यार्थत्यागेन गौणार्थकल्पनं न युक्तम्। अस्तुवा द्वितीयपदस्य सहायार्थेऽपि मुख्यता, एवमपि प्रकृते एकपदैकवाक्यतया सजातीयशून्यपरतैवाऽऽस्थेया। "आत्मा वा इदमग्र आसीदि"ति श्रुत्यन्तरे सत्पदस्थाने आत्मपदप्रयोगोऽप्यत एवोपपद्यते। एवं च सदेवेत्येवकारार्थप्राधान्येन "नेति नेती"ति निर्गुणसिद्धार्थकथनपूर्वकं प्रलयनिरूपणं प्रलयकालस्य तदाधेयसूक्ष्मप्रपञ्चस्य

वस्तुसत्तां निराकर्तु मेव । प्रलयोपन्यासस्तु प्रपञ्चः कदाचित् सूक्ष्मावस्थः कदाचित् स्थूलावस्थ इत्यनेकविकारात्मकत्वादनृत इति ज्ञापनार्थः । "यदाहुः—मृल्लोह-विस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । उपायः सोऽवताराय नास्ति भेदः कथं च ने"ति । एतेन—वाचारम्भणश्रुतिरपि—व्याख्याता । अतएव "वस्त्वस्ति किं कुत्र चिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तस्य कुतो हि तत्त्वम् । मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः । जनैः स्वकर्मस्तिमितात्मबोधैरालक्ष्यते ब्रूहि किमत्र वस्तु । सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।" इत्यादिविष्णुपुराण-वचनान्युपपद्यन्ते । मृदादिदृष्टान्तास्तूपादानस्वरूपे ज्ञाते तदात्मनोपादेयं ज्ञातं भवतीत्यभिप्रायाः एवंचोपक्रमे तावदुपदेशैकगम्यं निष्प्रपञ्चात्मतत्त्वं प्रतिपादितमिति सिद्धम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अन्यथाऽनुपपत्तेः । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति मध्यपरामर्शोऽपि जीवपरमात्मनोरभेदस्यैव । सगुणवाक्यान्यपि अध्यारोपापवादन्यायेन निष्प्रपञ्चात्म-पराण्येव । सच्छूला इति तु व्यावहारिकभेदेनोपपद्यते । एतेन "तत्सत्यमि"ति सामानाधिकरण्यमपि व्याख्यातम् ; इदं रजतमित्यत्रेव बाधायामिवेदं सामानाधि-करण्यमित्यङ्गीकारात् । एवंच तत्त्वमसीतिवाक्यं जीवब्रह्माभेदपरतयैव व्याख्येयम् । तस्मै त्वमित्यादिविवरणं हि त्वंपदार्थस्यैकदेशस्यासिपदेनान्वयासंभवः । एतेन—शरीरशरीरिभावेन सामानाधिकरण्यमपि—परास्तम् ; नहि शरीरवाचकानां पदानां शरीरिपर्यन्तत्वं प्रमाणान्तरसिद्धम्, सिद्धावपि तस्य नियमस्य शरीर-वाचकानां विशेषणत्व एव प्रवृत्तिः, नतु विशेष्यत्वे ; शरीरं नष्टमित्यत्रापि शरीरिणो ग्रहणप्रसङ्गात्, तत्त्वमसीत्यत्र तु शरीरवाचकं त्वमिति पदं न विशेषणम्; आख्यातसामानाधिकरण्यासंभवेनासीतिमध्यमपुरुषैकवचनासाधुताप्रसङ्गात्, नहि परंपरया क्रियान्वयेऽपि युष्मत्पदसामानाधिकरण्यमात्रेण मध्यमपुरुषप्रयोगः, त्वमहमस्मीत्यत्रापि तदापत्तेः । एवंच जीवब्रह्माभेदपरत्वमेवोक्तवाक्यस्याङ्गी-करणीयम्, शुद्धचैतन्यपरत्वेऽपि त्वंपदस्य मध्यमपुरुषप्रयोगोपपत्तिस्तु सिद्धान्ते वाच्यार्थान्वयमादायोपपादनीया । शक्यार्थमादाय खलु गङ्गायां घोष इत्यत्र गङ्गापदाद्दाबुपपत्तिः संपद्यते । सर्वथा च तत्त्वमसीति वाक्यम्, सदेव सोम्येदमग्र आसीदित्युपक्रमेण, तत्त्वमसीत्युपसंहारेण, तत्त्वमसीति नवकृत्वोऽभ्यासेन

**इदमेव तत्त्वमसीत्यादिवाक्यानामखण्डार्थत्वं यत्संसर्गा-**

"येनाश्रुतं श्रुतं भवत्यमतं मतमित्यर्थवादेन, तमलोहपरश्वादिदृष्टान्तपूर्वकयोपपत्त्या, "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति फलश्रवणेनाभेदस्यापूर्वत्वेन च जीवब्रह्माभेदपरमिति सिद्धम्। शब्दान्तरादिकं कर्मभेदस्यैव साधकं नतु चेतनभेदस्य, अन्यथा देवदत्त उत्तिष्ठति, यजति-ददातीत्यादावपि चेतनभेदापत्तेरित्यादिकमद्वैतसिद्धौ विस्तृतम्। तदिदं सर्वमभिप्रेत्याह—**कथं तात्पर्याविषयं संसर्गमवबोधयेदिति।** कथमाक्षेपे। तत्त्वमस्यादिवाक्यानामखण्डार्थत्वव्यवहारोऽप्येतदभिप्राय एवेत्याह—**इदमेव तत्त्वमसीत्यादिवाक्यानामिति।**

आदिपदेन "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादितदादिपदार्थलक्षणवाक्यसंग्रहः। सत्यादिवाक्यानामखण्डार्थत्वे च सत्यादिवाक्यम्, अखण्डार्थनिष्ठम्, लक्षणवाक्यत्वात् तन्मात्रप्रश्नोत्तरत्वात्, प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदित्यनुमानं प्रमाणम्।

"ब्रह्मविदाप्नोति परमि"ति ज्ञेयतया ब्रह्मण एव निर्दिष्टत्वेन तन्मात्रस्यैव बुभुत्सितत्वात् न तन्मात्रप्रश्नोत्तरत्वमसिद्धम्। सत्यत्वादिविशिष्टं वाच्यं यद्यपि सखण्डम्; तथापि लक्ष्यमखण्डमेव। असत्यत्वादिशङ्कानिवर्तनेन पदत्रयं सार्थकं भवति। लक्षणं हि क्वचित् धर्मः क्वचित् स्वरूपम्। यत्र धर्मः, तत्र सखण्डार्थत्वेऽपि यत्र स्वरूपं तत्राखण्डार्थत्वे न विरोधः। यथैकस्मिन् ब्रह्मणि आनन्दत्वरूपेणावृतत्वम्, चिद्रूपेणानावृतत्वम्, एवं रूपभेदेन लक्षणत्वं रूपान्तरेण कल्पितेन लक्ष्यत्वमित्येकस्यैव लक्ष्यलक्षणभावोऽपि युज्यते। यथाच सत्यादिवाक्यतात्पर्यविषयः, संसर्गरूपः, इत्याद्यनुमानस्यानवसरः, तथा पूर्वमेव निरूपितम्। इतरव्यावृत्त्यादिवैशिष्ट्यं तु न लक्षणवाक्यार्थः; तद्बोधकपदाभावात्। "यस्यार्थादर्थो न स चोदनार्थ" इति न्यायात्। एतेन—प्रकृष्टप्रकाश इति वाक्यमपि—व्याख्यातम्; चन्द्रस्वरूपमात्रप्रश्नोत्तरे तत्र स्वरूपमात्रभानस्यैव संभवात्। अभिहितान्वयवादे पदैरभिहितानां पदार्थानामेव शाब्दबोधकारणत्वात् पदार्थगतशक्तेरेव लक्षणापदेन व्यपदेशाच्च सर्वपदलाक्षणिकत्वमपि न दोषाय।

अत्रेदं विचारणीयम्—अभिहितान्वयपक्षेऽन्विताभिधानपक्षे वा सत्यादिपदेन ब्रह्मोपस्थापनात्पूर्वं ब्रह्मज्ञानमावश्यकं कथं भवतीति?

**नवगाहियथार्थज्ञानजनकत्वमिति । तदुक्तम्—**

तत्र केचित्—सुषुप्तौ स्वरूपचैतन्यप्रकाशोऽविद्यावृत्त्यवच्छिन्नो विद्यत इति स एव पूर्वतनं ज्ञानमिति—वर्णयन्ति ।

वार्तिककारपक्षे—"न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः" इति सुषुप्तौ आत्माकाराविद्यकवृत्त्यनङ्गीकारात् न स पूर्वतनब्रह्मानुभव इति मन्वाना अन्ये "आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीते"ति वचनानुसार्यात्ममात्रज्ञानासंप्रज्ञातसमाधितामतिनाऽसंप्रज्ञातसमाधिरेव पूर्वतनानुभव इति—वर्णयन्ति ।

मधुसूदनसरस्वत्योऽसंप्रज्ञातसमाधेः केवलवृत्तिनिरोधरूपत्वात् तज्जन्यानुभव एवात्मज्ञानमिति मन्यन्ते ।

ब्रह्मानन्दसरस्वत्यस्तु—विशिष्टशक्तिज्ञानस्यैव विशेषणांशभानाभावेच्छासहकृतस्य विशेष्यमात्रान्वयानुभवोपयोगित्वम् । उक्तं हि मणौ शब्दाश्रयत्वविशिष्टशक्तिज्ञानात् शुद्धाकाशोपस्थितिरिति, विशिष्टं हि विशेषणविशेष्योभयस्वरूपमित्यादि बिन्दुटीकायां—निरूपयन्ति । परिभाषाकाराणामपि इदमेव मतम् । सर्वथातु सत्यादिवाक्यात् शुद्धब्रह्मोपस्थापनं संभवत्येवेति न कोऽपि दोषः ।

**संसर्गानवगाहियथार्थज्ञानजनकत्वमिति ।** अत्रच संसर्गपदेन पदवृत्तिस्मारितातिरिक्तं बोध्यते, एवंच पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वमखण्डार्थत्वलक्षणम् । तत्त्वमसीत्यादि वाक्यघटकपदवृत्त्या स्मारितस्य स्वरूपस्यैव वाक्येन प्रमापणम्, नतु पदवृत्तिस्मारितातिरिक्तस्येति तत्त्वमस्यादिवाक्ये लक्षणसमन्वयः ।

अत्रच सोऽयं देवदत्त इति प्रत्यभिज्ञायाः स्वरूपमात्रगोचरायाः जनके चक्षुरादीन्द्रियेऽतिव्याप्तिवारणार्थं शब्दत्वमपि विशेषणं देयमिति न्यायामृतप्रकाशे यदुक्तं तत् पदवृत्तिस्मारितप्रतियोगिकसंसर्गाप्रमापकत्वम् अखण्डार्थत्वमिति लक्षणाभिप्रायेण ।

नहि वयं तादृशं लक्षणमूरीकुर्मः ; विषदत्तं भोक्तव्यमिति वाक्यजन्ये विषदत्तमनिष्टसाधनमिति ज्ञानेऽतिव्याप्तेः । सर्वेषां लक्षणवाक्यानामखण्डार्थत्वेन "अप्राप्तयोः प्राप्तिः संयोगः" इत्यस्यापि लक्ष्यत्वेऽपि न दोषः ; पदवृत्तिस्मारितस्यैव तस्य बोधात्, सामान्यतः संसर्गागोचरेति विवक्षणे तु तत्राव्याप्तिः प्रसज्येत ।

"संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता॥" इति॥

अत्र धवखदिरपलाशाः सन्तीति वाक्ये धवादिप्रत्येकपदानामभिहितान्वयवादमते तत्तत्पदार्थमात्रानुभावकत्वेनातिव्याप्तिः स्यात्, अतस्तद्वारणार्थं पदवृत्तिस्मारितातिरिक्ताागोचरप्रमाजनकानेकशब्दत्वमिति विशेषणं देयम्। प्रत्येकपदानामेकपदत्वाच्च दोषः। एवमपि घटः कलश इति वाक्ये संसर्गगोचरप्रमाजनकेऽतिव्याप्तिवारणार्थम् अपर्यायेति शब्दविशेषणं देयम्। न च घटः कलश इत्यत्राकाङ्क्षाभावेन प्रमाजनकत्वमेव नास्तीति वाच्यम्; उद्देश्यविधेययोरैक्येन सप्रकारकज्ञानानाकाङ्क्षायामपि पदार्थमात्रानुभावकत्वे बाधकाभावात्। नचाखण्डार्थत्वं घटः कलश इति वाक्यस्यापीष्टमिति वाच्यम्; तस्यैव ज्ञानस्याखण्डार्थत्वं यत् भिन्नरूपेणोपस्थितिद्वारा भेदभ्रमविरोधि भवेदिति घटे घटभेदबुद्धेराहार्यत्वेन तद्भ्रमाप्रसिद्धया घटो घट इति ज्ञानस्याखण्डार्थत्वाभावात्। अत्र प्रमापदं गौरश्वः पुरुषो हस्तीति पदजन्यतत्तत्पदार्थोपस्थितेः तदनुभवस्य वा जनकेषु तेष्वतिव्याप्तिवारणार्थमिति न्यायामृतप्रकाशकारा—वर्णयन्ति।

सर्वथा संसर्गगोचरप्रमाजनकत्वमखण्डार्थत्वमिति वाक्यं पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकानेकापर्यायशब्दत्वमखण्डार्थत्वमिति योजनीयम्।

अत्रच वृत्तिपदस्मारितपदयोः स्थाने पदज्ञाप्येति विवक्षायां द्विपदत्वं भोक्तव्यमिति वाक्ये पदज्ञाप्यद्विपदत्वानिष्टसाधनत्वज्ञानजनकेऽतिव्याप्तिः स्यादित्यादिकमद्वैतसिद्धौ व्यक्तम्। विस्तरभयादत्रोपरम्यते।

अखण्डार्थत्वस्योक्तरूपत्वे प्रमाणमाह—**तदुक्तमिति**। **संसर्गासङ्गीति**। संसर्गगोचरा या **सम्यग्धीः तद्धेतुता** तज्जनकता, **गिराम्** अपर्यायशब्दानाम्, **अखण्डार्थता** उक्तेति योजना। **तत्प्रातिपदिकार्थतेति**। एकप्रातिपदिकार्थमात्रप्रमापकत्वमित्यर्थ इति लघुचन्द्रिकायां ब्रह्मानन्दसरस्वत्यो वर्णयन्ति। तस्यैव प्रातिपदिकार्थस्येति विवक्षणेन हि प्रातिपदिकार्थान्तरव्यवच्छेदादेकत्वं प्रातिपदिकार्थस्यार्थलभ्यमिति भावः। तत्रैकप्रातिपदिकार्थविषयकत्वस्य सखण्डवाक्यसाधारण्यात् मात्रपदम्। यद्वा तत्पदेन तादृशत्वं विवक्षितम्।

प्रातिपदिकार्थमात्रपरत्वं वा अखण्डार्थत्वमिति चतुर्थपादार्थः ।

तच्च संसर्गासङ्गित्वमेव। तच्च स्वरूपमेकमेव स्यादिति तच्छब्दस्थाने विवरणे एकपदोपादानम् ।

यदि—एकत्वं प्रातिपदिकार्थस्य नैकव्यक्तिमात्रत्वम्, यौगिकार्थौपगवादिप्रश्नोत्तरे 'श्यामो दीर्घो लोहिताच औपगव' इति वाक्ये यौगिकानां नामसमुदायरूपत्वेनैकप्रातिपदिकार्थमात्रपरत्वाभावादव्याप्तेः, किन्तु शक्तिलक्षणाकृत्तद्धितसमासान्यतमैकवृत्तिज्ञानाधीनज्ञानविषयत्वमिति तादृशवृत्तिविषयातिरिक्ताविषयकज्ञानजनकत्वमखण्डार्थत्वम् । यौगिकानामनेकनामत्वेऽपि तद्धितवृत्तेरेकस्यास्तत्र विद्यमानत्वादेकधर्मावच्छेदेनैकवृत्तिविषयत्वमौपगवादिव्यक्तेर्विद्यत एव । एकदेशस्था वृक्षा वनमित्यत्रापि वनत्वेनैकेन रूपेण वृक्षाणां लक्षणया प्रतीतेर्लक्षणसमन्वयः । वस्तुतस्तु—औपगवादिशब्दानामपि लक्षणयैव स्वरूपपरत्वसंभवात् शक्तिलक्षणान्यतराधीनज्ञानविषयातिरिक्तविषयाविषयकज्ञानजनकत्वमखण्डार्थत्वमित्युपपन्नम्, तर्हि पूर्वलक्षणं पदवृत्तिस्मारितातिरिक्ताविषयप्रमाजनकानेकापर्यायशब्दत्वम्, इदंतु शक्तिलक्षणान्यतराधीनज्ञानविषयातिरिक्तविषयाविषयकज्ञानजनकत्वमित्युभयोरप्यैक्यं संमतमेवेति, एकेतिविशेषणवैयर्थ्यमेवेत्यभिसन्धायाह—

प्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमिति चतुर्थपादार्थ इति ।

प्रातिपदिकार्थो नाम शक्तिलक्षणान्यतराधीनज्ञानविषयः । तन्मात्रविषयत्वं च यद्यपि तदितराविषयज्ञानाजनकत्वे सति तद्विषयज्ञानजनकत्वम् । तत्र तद्विषयकत्वांशविवक्षावैफल्यात् विशेषणांशमात्रविवक्षया शक्तिलक्षणान्यतरज्ञानाधीनज्ञानविषयातिरिक्ताविषयज्ञानजनकत्वमखण्डार्थत्वमिति फलति । यद्वेति प्रकारान्तरानुसरणं तु संसर्गासङ्गीति लक्षणे संसर्गपदस्य पदवृत्तिस्मारितातिरिक्ते लक्षणादोषो विद्यत इति विना लक्षणामुक्तविधाखण्डार्थत्वसमर्पणार्थमेवेत्यद्वैतसिद्धयादिसम्मतः प्रकारः ।

यौगिकशब्दानामन्येषां च व्यक्तिमात्रपरत्वमाकृतिपरत्वे व्यक्तेराक्षेपलभ्यत्वमिति मतयोर्यौगिकानां विशिष्टार्थपरत्वमिति मते च सर्वत्र शक्तिलक्षणान्यतरज्ञाना-

**तच्च प्रत्यक्षं पुनर्द्विविधम्—जीवसाक्षी ईश्वरसाक्षी चेति।**

धीनज्ञानविषयत्वं स्वरूपमात्रस्याव्याहतमिति "इदमेव तत्त्वमसी"त्यादिवाक्यानामखण्डार्थत्वमि"ति ग्रन्थोऽपि नानुपपन्नः।

यदत्राशुबोधिन्यां लाघवात् तत्प्रातिपदिकार्थतेति पक्ष एव युक्तः। एवंचेदमेवेत्यवधारणानुपपत्त्या इदमेवेत्यस्येत्थंचेत्यर्थवर्णनमावश्यकमित्युक्तम्, तदेतेन परास्तम्।

तत्त्वमसीत्यत्र हि तत्पदोत्तरविभक्त्याऽभेदबोधनेऽपि अभेदस्य स्वरूपरूपत्वेन तत्रासंसर्गत्वात् न संसर्गावगाहिज्ञानजनकत्वापत्तिः; भेदसमानाधिकरणाभेदस्यैव संसर्गत्वात्।

वस्तुतस्तु—तदादिपदोपस्थापितसंकीर्णस्वरूपेणासंकीर्णस्वरूपबोधनमभिहितान्वयवादरीत्याऽत्र विवक्षितमिति, "मानसमेवात्राखण्डार्थज्ञानं न वाक्यीयमि"त्याशुबोधिनीसिद्धान्तो न समीचीनः। अत एव "सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः। उत्पन्ने च विरोध एकरसिके वस्तुन्यखण्डार्थधीः" इति संक्षेपशारीरकवचनमुपपद्यते। यथाच चैतन्यस्वरूपमात्रबोधनेऽपि नानुवादकत्वम्, यथावा न पदान्तरवैयर्थ्यादिकम्, तथा पूर्वमेवोक्तमित्याशुबोधिनीकाराणां चैतन्यमात्रभेदो नात्र वाक्ये विवक्षित इति मतं परास्तम्। अत्रच सार्थत्वमखण्डार्थत्वमित्यनुक्त्वा तत्प्रातिपदिकार्थत्वमिति प्रातिपदिकपदनिवेशेन शक्तिलक्षणान्यतरज्ञानविषयातिरिक्ताविषयकत्वं विवक्षितमिति सूच्यत इति सर्वमनवद्यम्।

अयं घट इति प्रत्यक्षदशायां घटाकारवृत्त्यवच्छिन्नत्वेन यथा घटांशे चैतन्यं जन्यप्रत्यक्षम्, एवं घटसंयुक्तान्तःकरणावच्छिन्नत्वेनापि तत् जन्यप्रत्यक्षमेव। अत एव विषयप्रत्यक्षे त्रिपुटीभानमुपपद्यते। अन्तःकरणावच्छिन्नचैतन्यमेवेदं साक्षिपदेन व्यवह्रियते। एवंच ज्ञानगतप्रत्यक्षत्वं विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वम्, साक्षिगतप्रत्यक्षत्वं तु विषयचैतन्याभिन्नप्रमातृचैतन्यत्वम्, विषयप्रत्यक्षत्वं प्रमातृचैतन्याभिन्नविषयत्वमिति विभागोऽप्युपपन्न इति सूचयन् चैतन्यरूपं प्रत्यक्षं पुनर्विभजते—**तच्च प्रत्यक्षमिति।**

घटांशे प्रत्यक्षमिति पूर्ववदर्थः। **जीवसाक्षीति।** जीवस्य घटादिविषयभासकम् अन्तःकरणावच्छिन्नचैतन्यमित्यर्थः। सर्वं वस्तु ज्ञाततयाऽज्ञाततया

वा साक्षिभास्यमिति सिद्धान्तात् घटादीनां प्रकाशः साक्षिसम्बन्धमन्तरा न भवतीति भावः। अत एव प्रमातृचैतन्याभिन्नत्वं विषयप्रत्यक्षत्वप्रयोजकमिति पूर्वमुक्तम्।

**ईश्वरसाक्षीति।** ईश्वरस्य सर्वविषयावभासकं मायोपहितचैतन्यमित्यर्थः।

अत्रायं विवेकः—शुद्धं चैतन्यं स्वरूपे निरपेक्षप्रत्यक्षम्, घटादिविषयांशेतु तत्त्ववच्छिन्नत्वेनान्तःकरणमायान्यतरावच्छिन्नत्वेन च प्रत्यक्षम्। तत्रान्तःकरणोपहितचैतन्यं जीवसाक्षी, मायोपहितचैतन्यमीश्वरसाक्षीति।

तत्रेयं शङ्का भवति—को नाम जीवः? कश्चेश्वर इति?

अत्राहुः प्रकटार्थकाराः—अनादिरनिर्वाच्या च भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी माया, तस्यां चित्प्रतिबिम्बमीश्वरः, तस्या एव परिच्छिन्नान्यवस्थाज्ञानपदव्यपदेशभाञ्जि यानि तत्प्रतिबिम्बं जीव इति।

तत्त्वविवेकेतु—"जीवेशावाभासेन करोति माया चाविद्या चे"ति श्रुतिर्हि अविद्याया रूपभेदं ज्ञापयति। तत्र शुद्धसत्त्वप्रधाना माया मलिनसत्त्वप्रधानाऽविद्येति वा, विक्षेपशक्त्या मायाऽवरणशक्त्याऽविद्येति वा स्वरूपभेदोऽङ्गीकरणीयः; सर्वथातु अविद्याप्रतिबिम्बं जीवः, मायाप्रतिबिम्बमीश्वर इति युक्तम्—इति।

संक्षेपशारीरककृतस्तु—"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"। इति श्रुतिमनुसृत्य—"जीवेशावाभासेन करोति माया चाविद्या चे"ति श्रुतौ मायाशब्दस्य कार्यकारणयोरभेदेनान्तःकरणपरत्वमङ्गीकृत्य चाविद्याप्रतिबिम्बमीश्वरोऽन्तःकरणप्रतिबिम्बं तु जीवः, अन्तःकरणावच्छिन्नं चैतन्यं जीव इति पक्षस्तु न युक्तः; इह लोके ब्राह्मणादिशरीरान्तःकरणावच्छिन्नचैतन्यस्य कर्तृत्वम्, लोकान्तरे शरीरान्तरान्तःकरणावच्छिन्नचैतन्यस्याकर्तुर्भोक्तृत्वमिति कृतहानाकृताभ्यागमप्रसङ्गात्। यद्यपि ब्राह्मणादिशरीरगतमेवान्तःकरणं लोकान्तरेऽपि गच्छति, तथापि घटस्य देशान्तरगमनेऽपि तदवच्छिन्नाकाशस्य गमनाभाववदन्तःकरणावच्छिन्नचैतन्यप्रदेशस्य देशान्तरगमनानुपपत्तिः—इति। अस्मिंश्च मत उपाधिगमनागमनयोरुपहितभेदवत् प्रतिबिम्बभेदासंभवात् नोक्तदोष इत्यभिमानः।

विवरणानुसारिणस्तु—एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वस्य "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते" इति स्मृतौ प्रतिपादनात् न जीवेश्वरयोरुभयोरपि प्रतिबिम्बत्वम्, उपाधिद्वयं विना प्रतिबिम्बद्वयासंभवात्। "जीवेशावाभासेन करोती"त्यत्र तु रूपभेदमात्रमुपाधेर्वर्णितम्, नतूपाधिभेदोऽपीति बिम्बचैतन्य-

मीश्वरः, प्रतिबिम्बचैतन्यं तु जीव इति जीवेश्वरयोः स्वातन्त्र्यपारतन्त्र्यव्यपदेशोऽप्युपपद्यते। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति तु अज्ञानप्रतिबिम्बितस्यैव जीवस्य सर्वतः प्रसृतस्योपलब्धिस्थानावच्छिन्नत्वमेव जीवस्येत्याशयम्, अन्यथा योगिनः कायव्यूहाधिष्ठानानुपपत्तेः। कायव्यूहाधिष्ठानत्वं हि युगपदनेकशरीरनियन्तृत्वम्। नचान्तःकरणावच्छिन्नस्य शरीरान्तरनियन्तृत्वसंभवः। कायव्यूहस्थलेऽन्तःकरणभेदस्यैव भाष्यकृता प्रदीपवदावेश इति सूत्रे व्यवस्थापितत्वेनान्तःकरणस्य विकासकल्पनमपि न संभवतीति—मन्यन्ते।

वाचस्पतिमिश्रानुसारिणस्तु—बिम्बप्रतिबिम्बभावेन जीवेश्वरविभागोऽयं न संभवति; नीरूपस्य चैतन्यस्य प्रतिबिम्बासंभवात्। तदुक्तम्—शब्दगन्धरसानां च कीदृशी प्रतिबिम्बते"ति। उदके तु न गगनस्य प्रतिबिम्बः, किन्तु आलोकस्य नक्षत्रादीनां वा। प्रतिध्वनिरपि शब्दविशेषत्वेन न सा शब्दप्रतिबिम्बः। अतो घटाकाशवदन्तःकरणावच्छिन्नचैतन्यं जीवः, तदनवच्छिन्नचैतन्यम् ईश्वरः। यथा प्रतिबिम्बपक्षे उपाध्यन्तर्गतस्यैव प्रतिबिम्बः, नतूपाध्यन्तर्गतस्यापीत्यङ्गीकारे ईश्वरस्य सर्वान्तर्यामित्वानुपपत्त्या लोकदृष्टिमनादृत्य कृत्स्नस्य चैतन्यस्य प्रतिबिम्बः, एवमस्माभिरपि अन्तःकरणावच्छिन्नस्यैव चैतन्यस्यान्तःकरणस्य कल्पितत्वेन तदभावावच्छिन्नत्वमपि विद्यत इति तदभावावच्छिन्नत्वेनान्तर्यामित्वमुपपद्यत इति न जीवस्याण्डाद्बहिरिव सत्त्वापत्तिः, नवा कृतहानाकृताभ्यागमप्रसङ्गः। प्रतिबिम्बपक्षेऽपि देशविशेषस्यचैतन्यस्यैव प्रतिबिम्बत्वेन देशान्तरगमने प्रतिबिम्बचैतन्यदेशस्यापि गमनासंभवेन कृतहानाकृताभ्यागमप्रसङ्गेनोभाभ्यामपि देशविशेषं परित्यज्यैकोपाध्यवच्छिन्नत्वेन जीवैक्यमादायैवोक्तदोषस्य परिहरणीयत्वेनादोषात्। अविद्याप्रतिबिम्बत्वपक्षेऽप्ययं दोषः समान एव। तत्रापि एकस्य जीवस्य क्वचित् प्रदेशे कर्तृत्वं क्वचित् भोक्तृत्वमिति कृतहानाकृताभ्यागमदोषापनोदार्थं जीवैक्यपक्षस्यैवादरणीयत्वात्। एतेनाविद्यावच्छिन्नं चैतन्यं जीवः, तदभावावच्छिन्नचैतन्यम् ईश्वर इति पक्षोऽपि व्याख्यातः। अभावावच्छिन्नचैतन्यमीश्वर इत्यत्र तु—"अन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते। उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा। यथा विधिरुपाधिः स्यात् प्रतिषेधस्तथा न किम्" इति तृप्तिदीपगतं वचनं प्रमाणम्। "अम्बुवदग्रहणात्तु न तथात्वमि"ति सूत्रेण जीवप्रतिबिम्बनिराकरणमप्यत एवोपपद्यते। "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधा-

**तत्र जीवो नाम अन्तःकरणावच्छिन्नचैतन्यम्, तत्साक्षी तु अन्तः-**

ऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे"ति श्रुतिस्तु प्रतिबिम्बितस्य सूर्यस्य जलरूपोपाधिह्रासादौ ह्रासादिवत् जीवस्याप्युपाधिह्रासादिना ह्रासो भवतीत्येवंपरेति "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमि"ति सूत्रे भगवत्पादैर्व्याख्यातम् । एवंचान्तःकरणावच्छिन्नचैतन्यं जीवः, तदभावावच्छिन्नचैतन्यमीश्वरः, अथवाऽविद्यावच्छिन्नचैतन्यं जीवः तदभावावच्छिन्नचैतन्यमीश्वर इति—मन्यन्ते"इति सिद्धान्तलेशसंग्रहे निरूपितम् ।

तद्व्याख्याने तु अन्तःकरणाभावावच्छिन्नमविद्याभावावच्छिन्नं वा ईश्वर इति पक्षो न तात्पर्यतः, किन्तु संभवमात्रेण । यथाऽज्ञानवच्छिन्नचैतन्यमीश्वर इति पक्षे तस्योपाध्यभावेनौपाधिकं सर्वज्ञानकर्तृत्वादिकं न संभवति, तथाऽभावोपाधित्वपक्षेऽपि तन्न संभवतीत्यन्तःकरणावच्छिन्नं चैतन्यं जीवः, अविद्यावच्छिन्नचैतन्यमीश्वर इत्येव विभागोऽङ्गीकरणीयः । अत एव "मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः" इति वाक्यवृत्तिगतं वचनमुपपद्यते । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"इति श्रुतिरप्यत एवोपपन्ना । "जीवेशावाभासेन करोती"ति श्रुतिस्तु मायाशब्दस्यान्तःकरणप्रतिबिम्बं जीव इति मत इवान्तःकरणपरत्वात् आभासपदस्यावच्छिन्नपरत्वाच्च नानुपपन्नेत्यादि—निरूपयन्ति ।

तमिमं पक्षं सिद्धान्तलेशसंग्रहेऽन्ततो निर्दिष्टं व्याख्यातृभिर्व्यवस्थापितं च मनसि निधायाह—**अन्तःकरणावच्छिन्नचैतन्यमिति ॥**

साक्षिस्वरूपमपि कूटस्थदीपे—"स्थूलसूक्ष्मदेहद्वयाधिष्ठानं कूटस्थचैतन्यमुदासीनं स्वावच्छेदकदेहद्वयस्येक्षितृ च साक्षिपदेन व्यवह्रियते" इत्युक्तम् ॥

तत्त्वदीपिकायां "केवलो निर्गुण" इति श्रुत्यनुसारेण शुद्धचैतन्यमेव साक्षीत्युक्तम् ।

कौमुद्यां तु "एको देव" इति देवत्वश्रुत्येश्वरस्यैव जीवप्रवृत्तिनिवृत्त्यनुमन्तृत्वादिरूपेण साक्षित्वम् । तेन च रूपेणेश्वरः कारणत्वादिधर्मानास्पदोऽपरोक्षो जीवगतज्ञानाद्यवभासः प्राज्ञशब्दशब्दितश्च । "यथा इदं रजतमित्यत्र वस्तुतः शुक्तिकोट्यन्तर्गतोऽपीदमंशः प्रतिभासतो रजतकोटिरेवं वस्तुत ईश्वरकोटिरपि

करणोपहितचैतन्यम्; अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्या-मनयोर्भेदः। विशेषणन्तु कार्यान्वयि वर्तमानं व्यावर्तकम्, उपाधिश्च कार्यानन्वयी व्यावर्तको वर्तमानश्च। रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम्. कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः। अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते। प्रकृते चान्तःकरणस्य जडतया विषय-भासकत्वायोगेन विषयभासकचैतन्योपाधित्वम्।

अयञ्च जीवसाक्षी प्रत्यात्मं नाना; एकत्वे तु मैत्रावगते चैत्रस्याप्यनुसन्धानप्रसङ्गः।

प्रतिभासतो जीवकोटिरेव। नच जीवस्य वैलक्षण्याभावः; अन्तःकरणविशेषण-त्वेन जीवत्वं तदुपाधित्वेन साक्षित्वमिति वैलक्षण्यसंभवादि"ति निरूपित-मिति सिद्धान्तलेशसंग्रहोपपादितान्तिमपक्षानुसारेणात्र तन्निर्दिशति—तत्साक्षीति॥

अनयोर्भेद इति॥ जीवत्वसाक्षित्वयोर्भेद इत्यर्थः। विशेषणोपाध्योः स्वरूपमुपपादयति—विशेषणं चेति॥ कार्येति। अवच्छेद्येत्यर्थः। कार्यान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वं विशेषणत्वमिति यावत्। घटपटौ पश्यतीत्यत्र घटस्य पटविशेषणतावारणार्थं व्यावर्तकत्वदलम्। उपाध्युप-लक्षणयोरतिव्याप्तिवारणार्थं कार्यान्वयित्वं वर्तमानत्वं च। उपाधिस्वरूपं निर्दिशति—उपाधिश्चेति। अन्तःकरणे साक्ष्युपाधित्वं समर्थयति—प्रकृते चेति।

ननु—अयं जीवसाक्षी नाना एको वा; यदि नाना, तर्हि साक्षिणो ब्रह्मात्मा-भेदानुपपत्तिः, यदि एकः, मैत्रावगते चैत्रस्याप्यनुसन्धानापत्तिरित्याशङ्क्याह—अयं चेति। प्रत्यात्मं नानेति॥ अयं भावः—यद्यपि साक्षी ब्रह्मा-

**ईश्वरसाक्षी तु मायोपहितं चैतन्यम् । तच्चैकम् ; तदुपाधिभूतमायाया एकत्वात्, "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्र मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तिः ।**

**"मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥"**

**अजामेकां लोहितशुक्लकृष्णां**

**बह्वीः प्रजाः सृजमानां सरूपाम् ।**

भिन्नः ; तथापि अन्तःकरणोपहितत्वेन तस्य प्रतिभासतः इदम इव रजतकोटौ जीवकोटाविव निवेश इति अन्तःकरणरूपोपाधिभेदेन नानात्वमेव युक्तमित्यर्थः । ईश्वरसाक्षिस्वरूपं तदैक्यं च निरूपयति—**ईश्वरसाक्षीति** ।

**मायाया एकत्वादिति** । मिथ्याज्ञानतत्संस्कारकर्माणि न माया ; तेषां सादित्वेनानादीश्वरोपाधित्वायोगात्, नापि ज्ञानप्रागभावः ; तस्य नानात्वेनैकत्वायोगात्, किन्तु अनादिभावरूपाज्ञानमेव माया । तस्य च लक्षणम्—अनाद्युपादानत्वे सति ज्ञाननिवर्त्त्यत्वम् । अनादेरपि प्रागभावस्य परमाणुगतश्यामतायाश्च निवृत्तिदर्शनान्न ज्ञाननिवर्त्त्यत्वानुपपत्तिः । तत्र प्रमाणं न जानामीत्यनुभवः, विमतं प्रत्यक्षज्ञानम्, स्वविषयावरणपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वादित्यनुमानादिकं चेत्यद्वैतसिद्धौ विस्तरः । एवं चोक्तप्रमाणसिद्धाविद्याया एव मायात्वात् तस्याश्चैकत्वमेव लाघवेनाङ्गीकरणीयमिति भावः ॥

ननु—"इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतौ मायाया बहुत्वमाख्यातमिति कथमिदमुपपद्यते मायाया एकत्वमित्याशङ्क्याह—**इन्द्रो मायाभिरिति** । **मायागतशक्तिविशेषेति** । अवस्थाज्ञानैरित्यर्थः । ननु मायाभिरिति बहुवचनस्यान्यथा योजने किं निमित्तमित्यत आह—**मायां त्विति** । एवंच बहुषु वाक्येषु मायाया एकत्वस्य वर्णनात्तदविरोधार्थमन्यथा नयनमिति भावः ।

**अजामेकामिति** । इयं हि श्रुतिः "चमसवदविशेषादि"त्यधिकरणे साम्यावस्थापन्नसत्त्वरजस्तमोगुणात्मकस्वतन्त्रप्रधानपरेति पूर्वपक्षयित्वा "यदग्ने

अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥"
"तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥"

इत्यादिश्रुतिस्मृतिषु एकवचनेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते । ततश्च तदुपहितं चैतन्यमीश्वरसाक्षी । तच्च अनादि ; तदुपाधेर्मायाया अनादित्वात् । मायावच्छिन्नं चैतन्यञ्च परमेश्वरः । मायाया विशेषणत्वे ईश्वरत्वम्, उपाधित्वे

रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"ति रोहितशुक्लकृष्ण-रूपत्वेन वर्णिताव्याकृतभूतत्रयात्मकपरमात्मपरतन्त्रमायापरेति सिद्धान्तितं भाष्यकारैः । तत्र सांख्याभिमतार्थनिरासो भाष्यकारैः—"मायां तु प्रकृतिं विद्यादि"ति वाक्यशेषानुसारेणैव कृत इति, अत्रापि तमर्थं सूचयितुं "मायां तु प्रकृतिं विद्यादिति" वाक्यं प्रथमतो विलिखितम् ।

यदत्राशुबोधिन्याम् 'अत्र लोहितं रजः रञ्जनात्मकत्वात्, कृष्णं तमः आवरणा-त्मकत्वात् शुक्लं सत्त्वं प्रकाशात्मकत्वात् । तथाच सत्त्वरजस्तमोगुणमयोमित्यर्थः, रज आद्युपक्रमस्तु तत्तद्गुणप्रयोज्यसृष्टिस्थितिप्रलयानां क्रमिकत्वानुरोधेनेति व्याख्यातम्, तत् "ज्योतिरुपक्रमा तु तथा ह्यधीयत एके"इति सूत्रविरोधात् "भूतत्रयलक्षणेयमजा विज्ञेया न गुणत्रयलक्षणा । कस्मात् ? तथा ह्येके शाखिन-स्तेजोऽबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति— "यदग्ने रोहितं रूपमि"त्यादिना तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते रोहितादिशब्दसामान्यात्, रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वाद्भाक्त-त्वाच्च गुणविषयत्वस्ये"ति भाष्येण विरोधाच्च नौपनिषदमतानुसारेण, किन्तु सांख्यमतानुसारेण ॥

वस्तुतस्तु—अग्रे आशुबोधिनीकारैरेव "ननु अजाशब्दो मायावाचीत्यत्र किं मानमिति चेद्"इत्यादिना वाक्यशेषानुसारेण भगवत्परतन्त्रमायापरत्वस्यैव

साक्षित्वमिति ईश्वरसाक्षित्वयोर्भेदः, नतु धर्मिणोरीश्वर-तत्साक्षिणोः। स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठ-सत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते।

ननु ईश्वरसाक्षिणोऽनादित्वे "तदैक्षत बहु स्यां प्रजायेय" इत्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते ?

उच्यते—यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवो-पाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते, तथा सृज्यमानप्राणिकर्म-वशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषाः—इदमिदानीं स्रष्टव्यम्, इदमिदानीं पालयितव्यमिदानीं संहर्तव्यम्—इत्याद्याकारा जायन्ते। तासाञ्च वृत्तीनां सादित्वात् तत्प्रतिबिम्बितचैतन्यमपि सादीत्युच्यते।

एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्ये। प्रत्यक्षत्वञ्च ज्ञेयगतं ज्ञप्तिगतञ्चेति निरूपितम्।

व्यवस्थापनात्र तेषां सांख्यमतानुसारिणीदं योजनमभिप्रेतम्, किन्तु औपनिषदमतानु-सारिणेव। तत्र तु भाष्यविरोधोऽपरिहरणीय एवेति नेदं व्याख्यानमादरणीय-मिति।

ननु ब्रह्मविष्णुमहेश्वरादिभेदाः न स्वरूपभेदनिबन्धनाः, स्वरूपस्य चैतन्यस्यैक-त्वात्, नाप्युपाधिभेदनिबन्धनाः। उपाधिभूतमायाया एकत्वस्योक्तत्वादित्यत आह— स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेनेति॥ अत एव—"अथ यो ह खलु वा वाऽस्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा, अथ यो ह खलु वा वाऽस्य तामसोंऽशोऽसौ स योऽयं रुद्रः, अथ यो ह खलु वावास्य सात्विकोंऽशोऽसौ स योऽयं विष्णु"रिति मैत्र्युपनिषद्वाक्यमुपपद्यत इति भावः।

तत्र वृत्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव ; पर्वतो-वह्निमान् इत्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्, तत्तद्विषयांशप्रत्यक्षत्वन्तु पूर्वोक्तमेव। तस्य च भ्रान्तिरूपप्रत्यक्षे नातिव्याप्तिः ; भ्रमप्रमासाधारणप्रत्यक्षत्व-सामान्यनिर्वचनेन तस्यापि लक्ष्यत्वात्। यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यम्, तदा पूर्वोक्तलक्षणेऽबाधितत्वं विषयविशेषणं देयम्, शुक्तिरूप्यादिभ्रमस्य संसारकालीनबाधविषयप्रातिभासिक-रजतादिविषयकत्वेनोक्तलक्षणाभावात् नातिव्याप्तिः।

घटादिविषयांशे जीवांशे साक्षिप्रत्यक्षमपि उपाधिभूतान्तःकरणेन विषय-सम्बन्धस्य जन्यत्वात् जन्यमिति युक्तम्, ईश्वरसाक्षी तु स्वोपाधिभूतमायाया आद्यसृष्टौ विषयसम्बन्धस्याप्यभावात् तज्जन्यत्वेनापि प्रत्यक्षं न स्यात्। एवं च जन्यप्रत्यक्षं द्विविधम्—जीवसाक्षी ईश्वरसाक्षीति विभागो न सङ्गत इत्याशङ्कते—**नन्विति**। प्राणिनामदृष्टनिमित्तेनेदमिदानीं स्रष्टव्यमिति मायापरिणामविशेषस्याद्यसृष्टि-कालेऽपि संभवात्तदैक्षतेति श्रुतिरुपपद्यत एवेति समाधत्ते—**यथेति**। भ्रम-प्रत्यक्षस्यापि लक्ष्यत्वेनातिव्याप्तिं निरसिष्यन् प्रत्यक्षत्वप्रयोजकं पूर्वमुक्तमनुसन्धत्ते—**एवमिति**। **यदा त्विति**। प्रत्यक्षप्रमाणप्रसङ्गेन प्रत्यक्षप्रमाप्रयोजक-मेव वक्तव्यम्, नतु भ्रमप्रमासाधारणमित्यङ्गीकारस्यैव युक्तत्वादिति भावः। **संसारकालीनबाधविषयप्रातिभासिकरजतेति**। नात्र प्राति-भासिकमात्रज्ञानमलक्ष्यमिति मतं संभवति, सुखाहंकारादीनामपि प्रातिभासिक-त्वेन तज्ज्ञानस्याप्यलक्ष्यत्वापत्त्याऽतिव्याप्तिप्रसङ्गात्। अतः संसारकालीनबाध-विषयेतिप्रातिभासिकविशेषणम्। संसारकालीनबाधविषयत्वं हि ब्रह्मज्ञान-तत्कार्यान्यतरत्वरूपमिति तादृशप्रातिभासिकज्ञानस्यैवालक्ष्यत्वात् नोक्तदोषः, नवा ब्रह्मसाक्षात्कारनिवर्त्यप्रातिभासिकज्ञानेऽतिव्याप्तिरिति सर्वं सुस्थम्।

अत्र केचित्—भ्रमज्ञानमेव नास्ति, सर्वमपि ज्ञानं प्रमात्मकमेव। इदं

नतु विसंवादिप्रवृत्त्या भ्रान्तिज्ञानतद्विषयसिद्धावपि तस्य

रजतमित्यत्रेदमिति रजतमिति च ज्ञानद्वयं ग्रहणस्मरणात्मकम् अगृहीतभेदं भेदाग्रहात् प्रवर्तकमपि सफलप्रवृत्तिजनकत्वाभावात् न प्रमेति कथ्यत इति भ्रम इति व्यवहारमात्रमिति—वर्णयन्ति। अयमेवाख्यातिवादः। इममेव वादं मनसि निधाय भगवत्पादाः—"केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रमः" इति—वर्णयन्ति।

नह्येदं सङ्गतमिव। रजतज्ञानमपि प्रत्यक्षमेवानुभवामः, नतु स्मरणम्। नह्यापणस्थरूप्यप्रातिपदिकार्थस्मरणमात्रेण रजतस्येदंतादात्म्यं विनेदंकाराभिमुखी जनानां प्रवृत्तिः संभवति। नच यथा शुष्के पतिष्यामीति वात्वादिवशात् कर्दमे पतति, तथैवात्रापि अवशागतप्रवृत्तिन्यायेन रजतस्मरणेनेदंकाराभिमुखी प्रवृत्तिरुपपद्यत इति वाच्यम्; रजतेच्छयैव प्रवृत्तेर्दर्शनेन रजतग्रहणानन्तरमपि बाधाभावे रजतं लब्धमित्येवानुभवदर्शनेन चेदंरजतयोस्तादात्म्यस्यावश्यं वर्णनीयत्वात्। नहि भेदाग्रहमात्रेण प्रवृत्तिरुपपद्यते। तदुक्तं भामत्याम्—"ग्रहणनिबन्धनौ हि तस्य व्यवहारव्यपदेशौ कथमग्रहणमात्रात् भवेतामि"ति॥ यदि हि भेदाग्रहणमात्रेण प्रवृत्तिः संभाव्यते, तर्हि घटादिज्ञानसमयेऽपि रत्नादीनां भेदाग्रहकाले रत्नादीच्छया प्रवृत्तिः संभाव्येत, नचैतदस्ति। अयातथात्वेनाग्रहणात् प्रवृत्तिः, तर्हि तथात्वेन ग्रहणाभावात्कुतो वा न निवृत्तिः संभवति? एतेन—अगृहीतभेदे ग्रहणस्मरणे प्रवृत्तिं प्रयोजयत इति—प्रत्युक्तम्, नहि रजतप्रातिपदिकार्थस्मरणमात्रेण रजतार्थिनः इदंकारामुखी प्रवृत्तिः संभवति। एवंच भ्रमज्ञानमेवाप्रसिद्धमिति मीमांसकमतमिदं न युक्तमिति। ननु यद्यपि भ्रान्तिज्ञानं सिद्धम्, तथापि तत्र संसारकालीनबाधविषयप्रातिभासिकरजतविषयकत्वे मानाभाव इत्याशयेन शङ्कते—नन्विति॥

अत्रैवमात्मख्यातिवादिनो मन्यन्ते—सत्यं भ्रमज्ञानं प्रसिद्धम्, एवमपि तत्र भासमानं रजतं ज्ञानमेव। ज्ञानस्यैव रजतस्य बहिर्वदवभासमात्रेणैव भ्रमपदव्यवहारः, अयं घट इत्यादिषु सर्वत्रापि विषयाणां ज्ञानाकारतैव दृष्टेति तत्सामान्यात् रजतस्यापि ज्ञानाकारतैवाश्रयणीयेति।

इदमेव योगाचारमतम्। तेषामयमनुमानप्रयोगः—विमतं रजतं बुद्धिरूपं चक्षुरादिसंप्रयोगमन्तरेणापरोक्षत्वात्, संमतबुद्धिवदिति॥

नेदमपि संगतम्, रजतस्य ज्ञानाकारत्वं हि इदं रजतमिति प्रतीत्यनुसारेण निर्णीयते, बाधकप्रत्ययेन वा। आद्ये रजतस्य बाह्यत्वमेवानुभूयते। द्वितीयेऽपि नेदं रजतमिति बाधकप्रत्ययेन प्रतिपत्तुः पुरुषस्य विप्रकृष्टं रजतमवगम्यत इत्यतिसन्निहितज्ञानाकारता न संभवति। तदुक्तं भामत्याम्—"असन्निधाना-ग्रहनिषेधादसन्निहितो भवति प्रतिपत्तुः, अत्यन्तसन्निधानं त्वस्य कुतस्त्यम्?" इति॥

किंच योगाचारमते कथं रजताकारोदय इति वर्णनीयम्, तेषां हि मते सहकारिप्रत्ययात् अधिपतिप्रत्ययात् समनन्तरप्रत्ययात् आलम्बनप्रत्ययाच्च चित्तचैत्ता अयं घट इत्यादिज्ञानरूपा उत्पद्यन्त इत्यङ्गीक्रियते। तत्र यथा समनन्तरप्रत्ययेन घटाकारता आलोकप्रत्ययेन तत्र स्पष्टता चक्षुराद्यधिपतिप्रत्ययेन विषयान्तराकारतानिरासेन घटमात्राकारतानियमोऽहमित्यालम्बनप्रत्ययेनाहं घटं जानामीत्याकारता च भवति, न तथा रजतादिकं संपादयितुं शक्यते। समनन्तर-पूर्वतनघटज्ञानेन क्षणिकेन रजताकारताया असंभवेनान्येषामप्यनवकाशात्, यदि तु पूर्वतनसंस्कारेण रजताकारतादिकं भवतीत्युच्यते, एवमपि इदमाकारताया न किमपि नियामकं संपादयितुं शक्यते।

वस्तुतस्तु—सर्वस्य ज्ञानाकारतासिद्धान्तोऽयं न विकल्पसहः; घटाद्याकार-ताया अप्यसंभवात्, घटाकारतापि समनन्तरघटप्रत्ययेनेति हि तेषां मतम्। तच्चानादिज्ञाने न कथमपि संभवति। प्राथमिकघटज्ञाने पूर्वतनपटज्ञानात् कथं वा घटाकारता सिद्ध्येत्? संस्कारस्तु न समनन्तरप्रत्ययः, समनन्तर-प्रत्ययत्वेऽपि तस्य क्षणिकत्वे कार्यक्षणावृत्तित्वाच्च घटाकारतासंपादकत्वमित्य-इतस्ततः प्रसिद्धो विस्तरः। सर्वथा च घटादीनामपि ज्ञानाकारतासंभवात् अयं घट इत्यादाविव रजतस्यापि ज्ञानाकारतेति वादो न युक्तः॥

एतेन—माध्यमिकानामसत्ख्यातिवादोऽपि—परास्तः, रजतस्यासद्रूपत्वे भाना-संभवात्। अन्यथा शशशृङ्गादेरपि भानापत्त्या "शब्दज्ञानानुपाती तु वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रविरोधापत्तेः। स्वतःप्रामाण्यवादे स्वतः, परतः प्रामाण्यवादे परतश्च प्रामाण्यसिद्ध्या प्रमाणप्रमेयभेदेन पदार्थविभागोऽप्युपपन्न

इति न तदनुपपत्त्याऽपि सर्वस्यासद्रूपत्वम्। नह्यसतः पदार्थस्य सता ज्ञानेन सम्बन्धो भवति ; सदसतोः संबन्धासंभवात्। "असदन्तरेण प्रत्ययो न प्रथेतेति प्रत्ययस्यैष स्वभावो यदसदधीनमस्य किंचिदिति चेत्, अहो बतासत्यपक्षपातो यदयमतदुत्पत्तिरतदात्मा च तदविनाभावनियतः" इति भामतीवाक्यमप्यत्रानुसन्धातव्यम्। एवं च नासत्ख्यातिरपि समीचीना ॥

सत्ख्यातिवादस्तु सर्वथा हेय एव ॥

तथाहि—अयमेषामाशयः—सत्ख्यातिर्नाम सत्यस्यैव विषयस्य ज्ञानं नासत्यस्य ; भ्रमत्वव्यवहारस्तु विषयव्यवहारबाधात्। यथाहि पञ्चीकरणप्रक्रियया पृथिव्यादिषु सर्वत्र पञ्चभूतानि विद्यन्ते, एवं शुक्तिकादावपि रजतांशो विद्यत इति विद्यमानस्यैव रजतस्य भानम्। एतेन—रज्जुसर्पज्ञानमपि—व्याख्यातम् ; रज्जावपि सर्पांशानां विद्यमानत्वात्, एवमपि भ्रमत्वेन व्यवहारो रजतांशानां स्वल्पत्वात् रजतव्यवहाराभावेनैव भवति। शुक्तिकादावपि रजतावयवसद्भावे प्रमाणं हि—"तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक्। सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्। सोमावयवसद्भावादिति न्यायविदो विदुः" इति वचनानि। शुक्त्यंशभूयस्त्वज्ञानात्तु भ्रमनिवृत्तिः, स्वाप्नादिज्ञानमपि सत्यमेव। अत एव तत्तत्कालावसानानां रज्ज्वादीनां सृष्टिवर्णनं श्रुतावुपपद्यते। पीतः शंख इत्यत्र तु नयनरश्मिगतपीतिम्न एव शंखे भानं नतु तत्राविद्यमानस्य। एतेन—लोहितः स्फटिक इति ज्ञानं—व्याख्यातम्। मरीचिकायामपि जलं विद्यत एव पञ्चीकरणप्रक्रिययेति तत्र जलज्ञानमपि सत्यमेव। दर्पणादौ तु अन्तरालदेशाग्रहणेन दर्पणादिप्रतिहतगतिभिर्नयनरश्मिभिर्दर्पणग्रहणपूर्वकं स्वमुखस्यैव ग्रहणम्। अङ्गुल्यवष्टम्भतिमिरादिभिः नयनरश्मीनां द्विविधा गतिर्भवति। एका ऋजुः, द्वितीया त्वङ्गुलिनिरोधादिना वक्रभूता। तत्र प्रथमया चन्द्रः स्वदेशविशिष्टो गृह्यते। द्वितीययातु चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रः स्वदेशवियुक्तो गृह्यते। तत्र चन्द्रदेशतत्समीपदेशयोरन्तरालाग्रहणेनैकस्मिन् देशे चन्द्रग्रहणद्वयं जायते। ततश्च ग्रहणभेदेन ग्राह्याकारभेदात् द्वौ चन्द्राविति प्रतीतेर्द्विचन्द्रज्ञानमपि भ्रम एव। एवंच सर्वमपि ज्ञानं यथार्थमेव। यथाहुः—"यथार्थं सर्वविज्ञानमिति वेदविदां मतमि"ति—इति ॥

इदमपि न चोद्यम्; सोमालाभे पूतीकग्रहणं यत् विहितं न तत् पूतीकस्यापि सोमावयववत्त्वप्रयुक्तसोमत्वेन, "सोमेन यजेते"त्यनेनैव गतार्थत्वेन "यदि सोमं न विन्देत पूतीकानि"ति वाक्यवैयर्थ्यापत्तेः, पञ्चीकरणप्रक्रियया सर्वेषामपि सर्वावयववत्त्वेन व्रीह्यादीनां नीवारादय एव प्रतिनिधिरिति सिद्धान्तभङ्गापत्तेश्च। यथाहि—"तासां त्रिवृतं त्रिवृतं एकैकां करवाणी"त्यादिश्रुत्यनुसारेणाव्याकृतभूतानां द्वेधा विभागेन तत्रैकस्य स्थापनेनापरस्य भागस्य चतुर्धाकरणेन तेषाम् एकैकस्यापरस्मिन् भूते चतुर्धा विभागेन योजनेन सर्वमपि पञ्चीकरणेन पाञ्चभौतिकं भवति, न तथा शुक्तिरजतादीनां द्वेधाकरणादिना शुक्त्यादिस्वरूपनिष्पादनमित्यत्र प्रमाणमुपलभते। नहि रज्जौ सर्पावयवानां सत्त्वाशङ्काया अपि अवसरो विद्यते। अतः पूतीकादिप्रतिनिधित्वसिद्धान्तोऽत्यन्तसादृश्यनिबन्धन एव। अन्यथा प्रपञ्चो मिथ्येति ज्ञानस्यापि युष्मन्मतरीत्या प्रमात्वापत्त्या युष्मदीयं मतमेवासङ्गतं स्यात्। एतेन—स्वाप्नज्ञानमपि—व्याख्यातम्; नहि स्वप्ने रथोत्पादकानामवयवादीनामभावे सत्यरथादिसृष्टिवर्णनमुपपद्यते॥

अतः आपणस्थरूप्यादीनां संसर्गमात्रमत्र कल्प्यत इत्यन्यथाख्यातिरेवाङ्गीकरणीया। एतेन—शंखपीतिमादिभ्रमोऽपि—व्याख्यातः। तदुक्तं भामत्याम्—"नहि सर्पादिभावेन रज्ज्वादयो न प्रतिभासन्ते, प्रतिभासमाना वा भवन्ति तदात्मानस्तद्धर्माणो वा। तथासति मरुषु मरीचीचयमुच्चावचमुच्चलत्तुङ्गतरङ्गमालाऽभ्यर्णमवतीर्णा मन्दाकिनीत्यभिसन्धाय प्रवृत्तस्तत्तोयमापीयापि पिपासामुपशमयेदि"ति। इदं हि वाक्यं यद्यपि सत्ख्यातिनिरासेनानिर्वचनीयख्यातिसमर्थनप्रकरण एव विद्यते; तथाप्यन्यथाख्यातिपक्षेऽपीदमुपपन्नमेव। नह्यन्यथाख्यातिपक्षे तद्धर्मत्वमङ्गीक्रियते। किंच यदि शुक्तौ रजतावयवा अपि विद्यन्ते, तर्हि कुतो वा शुक्तिज्ञानसमयेऽपि रजतज्ञानं न भवति? कुतो वा रजतज्ञानसमये शुक्तिज्ञानं वा न भवति? भूयोऽवयवग्रहणेन स्वल्परजतावयवाग्रहणाच्छुक्तिज्ञानसमये रजतज्ञानाभावेऽपि स्वल्परजतावयवज्ञानेन शुक्तिभूयोऽवयवज्ञानप्रतिबन्धः कथमपि न भविष्यति। यदि दोषेण शुक्तिभूयोऽवयवाग्रहणं तर्हि लाघवादापणस्थरूप्यस्यैवात्र दोषविशेषेण संसर्गमात्रकल्पनमेव युक्तम्। नेदं रजतमिति बाधज्ञानेनासंसर्गाग्रहनिषेधाद्यथा रजतस्य न सन्निहितज्ञानात्मकत्वम्, एवं शुक्तिरूपत्वमपि रजतस्य न भवतीति शुक्तेरेव रजतरूपत्ववर्णनं युक्तम्। यदि हि शुक्तौ

प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणं देशान्तरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसंभवात्, इति चेत्, न, तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात्।

रजतावयवानामवस्थानं स्यात्, तर्हि अग्निसंपर्केण तेषां पृथक्करणमपि कर्तुं शक्येत। नचैतच्छक्यत इति न रजतावयवाः शुक्तिषु विद्यन्ते। एतेन—रज्जौ सर्पावयवनिरासोऽपि—सूचितः। एवं चात्मख्यात्यख्यात्यसत्ख्यातिसत्ख्यातीनामसंभवात् लाघवेनापणस्थरूप्यस्य संसर्गमात्राध्यासकल्पनेनैवोपपत्तौ प्रातिभासिकरजतविषयकत्वे मानाभावादन्यथाख्यातिपक्ष एव युक्त इत्याशङ्काशयः॥

अन्यथाख्यातिर्नामान्यस्यान्यात्मना ज्ञानं यथा शुक्तौ रजतात्मना ज्ञानम्। तत्र चात्यन्तभिन्नयोर्वस्तुतस्तादात्म्यासंभवेऽपि काल्पनिकं तत्संभवत्येवेति तिष्कर्षः॥

तामिमामन्यथाख्यातिं सिद्धान्ती दूषयति—**नेति**। नहि आपणस्थं रूप्यं चक्षुरिन्द्रियसन्निकृष्टम्, येन तस्य संसर्गमात्रमध्यस्येत; जन्यप्रत्यक्षसामान्यं प्रति सन्निकर्षस्य कारणत्वात्। अन्यथा सुरभि चन्दनमित्यादौ सौरभांशे ज्ञानप्रत्यासत्तिकल्पनं नैयायिकानां विफलं स्यात्। एवंचान्यथाख्यातिवादे रजतप्रत्यक्षता नोपपद्यते। अनिर्वचनीयरजतोत्पत्तिवादे तु विषयचैतन्याभिन्नप्रमाणचैतन्यस्येदमवच्छेदेन रजतोत्पत्त्यङ्गीकारात्प्रत्यक्षत्वोपपत्तिः। यद्यप्याविद्यकवृत्त्यवच्छिन्नचैतन्यं न प्रमाणचैतन्यम्; तथापि इदमाकारवृत्त्यवच्छिन्नस्य तत्त्वान्न दोषः। नचैवं रजताकाराविद्यकवृत्त्यङ्गीकारवैयर्थ्यम्; दृष्टत्वात्, वृत्त्यपेक्षयैव साक्षिभास्यत्वमिति मतानुसारार्थं स्वाकारवृत्त्युपहितप्रमातृचैतन्याध्यस्तत्वरूपविषयप्रत्यक्षत्वसमन्वयार्थं चैव वृत्त्यङ्गीकाराच्च। आविद्यकवृत्तिर्हि विनापि सन्निकर्षं यथा संभवति न तथाऽन्तःकरणवृत्तिः; बाह्यप्रत्यक्षे इन्द्रियद्वारमेव मनसो विषयसम्बन्धादित्यनिर्वचनीयख्यातिवादे प्रत्यक्षत्वमुपपद्यत इति रजतप्रत्यक्षतोपपत्त्यर्थमन्यथाख्यातिर्न स्वीकरणीयेति संप्रदायं मनसि निधायाह—**तस्यासन्निकृष्टतयेति**॥

**ननु** लौकिकसन्निकर्षाभावेऽपि अलौकिकसन्निकर्षस्य संभवात् इदं रजतमिति रजतप्रत्यक्षतोपपत्तिरन्यथाख्यातिपक्षे संभवतीति चेत्, तत्र किं सामान्यलक्षणप्रत्यासत्तिरत्र विवक्षितोत ज्ञानलक्षणप्रत्यासत्तिः।

तत्र न सामान्यं प्रत्यासत्तिः; मानाभावात्। पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वप्रकारकव्याप्तिः पूर्वं गृहीता स्मर्यते; एकसम्बन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायात्। स्मृतायाश्च तस्याः विशेष्यविशेषणासंसर्गाग्रहरूपसामग्रीवशात् धूमे वैशिष्ट्यबुद्धिर्भवतीति पर्वतो वह्निमानित्यनुमितिसंभवः। वस्तुतस्तु व्याप्तिविषयकोद्बुद्धसंस्कारपक्षधर्मताज्ञानयोरेवानुमितिकारणत्वस्यास्माकमभिमतत्वेन व्याप्तिवैशिष्ट्यं पर्वतीयधूमेऽपि न ज्ञातव्यम्। धूमो वह्निव्यभिचारी वा नवेति संशयस्तु प्रसिद्धधूमे महानसीयादाविव तत्तद्धूमत्वादिना व्याप्तिनिश्चये धूमत्वेन तत्संशयसंभवादुपपन्नः।

इच्छां प्रति तु समानविषयज्ञानं न नियामकम्, किन्तु समानप्रकारकमेव, एवंचासिद्धे सुखादौ इच्छा सुखत्वज्ञानादेव भविष्यतीति न तदर्थमपि सामान्यलक्षणप्रत्यासत्तिरङ्गीकरणीया। यत्रेच्छा तत्र प्रकाराश्रयत्वमप्यपेक्षितमिति रजतत्वेन प्रकारेण रजतज्ञानदशायां घटादौ न रजतत्वप्रकारकेच्छाप्रसङ्गः। इदं रजतमिति भ्रमज्ञानादपि न शुक्ताविच्छा, किन्तु अनिर्वचनीयरजत एवेति न दोषः। भ्रमत्वं हि न व्यधिकरणप्रकारकत्वेन, किन्तु बाधितविषयत्वेनेति पूर्वमेवोक्तम्॥

तमस्तु न यावत्तेजोविरहरूपम्, किन्तु भावान्तरमिति तत्प्रत्यक्षतार्थमपि न सामान्यलक्षणप्रत्यासत्तिरङ्गीकरणीया। गोत्वाभावज्ञानार्थं यद्यपि गोत्वप्रकारकं ज्ञानमपेक्षितम्, तथापि गोत्वं न गवेतरावृत्तित्वे सति निखिलगोवृत्तित्वरूपम्, किन्तु यत्किंचिद्गोव्यक्तिरेवेति न तदर्थमपि सा।

नैयायिकमतेऽपि अतीतानागतादिज्ञानम् अनुमानादिनैव संभवतीति न सामान्यलक्षणप्रत्यासत्त्यङ्गीकारे किमपि प्रयोजनम्। अनुमितेर्विशेषणतावच्छेदकप्रकारकज्ञानजन्यत्वमेव, नतु विशेषणज्ञानजन्यत्वमिति न तदर्थमपि सा।

किंच धूमत्वादिसामान्यं स्वरूपतो यदि प्रत्यासत्तिः, तर्हि धूलीपटले धूमभ्रमानन्तरमनुभूयमानवह्न्यनुमित्यनुदयापत्तिः; स्वरूपतस्तत्र धूमत्वाभावात्। अत एव—यत् प्रमेयं तदभिधेयम्, यत् प्रमेयवत् तदभिधेयवदिति व्याप्तिपरिच्छेदेन न सर्वज्ञत्वम्, अन्यथा भासमानवैशिष्ट्यप्रतियोगित्वेनोक्तज्ञाने घटत्वादीनामपि प्रकारतया घटत्वादिप्रकारकयावन्निश्चयस्यात्र जातत्वात् सर्वज्ञत्वमापद्येत॥

**न च ज्ञानं तत्र प्रत्यासत्तिः ; ज्ञानस्य प्रत्यासत्तित्वे तत एव**

एवंच सामान्यलक्षणप्रत्यासत्त्यङ्गीकारायोगात् आपणस्थरूप्यस्य न तयाऽत्रोपस्थितिरिति परिशेषात् ज्ञानलक्षणप्रत्यासत्तिरेवाङ्गीकरणीया, तदपि न संभवति ; तत्रापि मानाभावात्। सुरभि चन्दनमित्यत्र सौरभांशेऽनुमितिरूपमेव ज्ञानं न प्रत्यक्षम्। अत एव पर्वतो वह्निमानित्याद्यनुमित्युपपत्तिः। अन्यथा तत्रापि ज्ञानलक्षणप्रत्यासत्त्यैव प्रत्यक्षत्वस्यैवापत्त्याऽनुमितिमात्रोच्छेदप्रसङ्गात्। व्यक्तं चैतत्सर्वमद्वैतसिद्धौ। तदेतत्सर्वं मनसि निधायाह—**नचेति**।

इदं सयुक्तिकसामान्यलक्षणप्रत्यासत्तेरप्युपलक्षणम्। एवंचान्यथाख्यात्यसंभवादनिर्वचनीयख्यातिरेवादरणीया। अत एव मिथ्यैव रजतमभादिति प्रत्यक्षोपपत्तिः। अनिर्वचनीयत्वं च सदसद्विलक्षणत्वम्, सच्चेन्न बाध्येतासच्चेन्न प्रतीयेतेति ख्यातिबाधान्यथानुपपत्त्या तु सदसद्विलक्षणत्वसिद्धिः। सत्त्वं चात्राबाध्यत्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हभिन्नत्वं वेति न दोषः॥

**ननु**—अनिर्वचनीयख्यातिरियं न युक्ता ; इदं रजतमिति ज्ञानेन रजतार्थिनः प्रवृत्तिदर्शनेन सत्यरजतविषयकत्वस्यैव युक्तत्वात्, अनिर्वचनीयरजतस्य रजतार्थक्रियाकारित्वाभावेन प्रवृत्त्यसंभवात्, यदि अनिर्वचनीयरजते व्यावहारिकरजततादात्म्यमपि कल्प्यते, अथवा व्यावहारिकप्रातिभासिकसाधारणं रजतत्वमङ्गीक्रियते, एवमपि रजतोपादानकारणासंभवात् न प्रातिभासिकरजतोत्पादसंभवः। तदुपादानकत्वमेव तस्य युक्तं यदनुविद्धतया यत्प्रतीमः। नह्यज्ञानानुविद्धतया रजतं प्रतीयते, किन्तु रजतानुविद्धतयैवेति रजतावयवानामेव तदुपादानत्वस्य वर्णनीयत्वात् शुक्तौ च रजतावयवानामभावात् कथं रजतोत्पादसंभव इत्याशयेन शङ्कते—**नन्विति**।

शुक्तौ हि इदं रजतमिति ज्ञानं विद्यते। तत्रच रजतं पूर्वोक्तरीत्या न ज्ञानरूपम्, नाप्यसद्रूपम्, नापि सत्, नवाऽऽपणस्थरूप्यमिति परिशेषात् शुक्त्यवच्छिन्नचैतन्याश्रिताविद्यापरिणामरूपमेवाङ्गीक्रियते। अत एव नेदं रजतमिति बाधकज्ञानेनाज्ञानस्यापि नाश उपपद्यते। नहि निमित्तकारणनाशे कार्यनाशः, किन्तूपादाननाश एव। एवंच रजतावयवाद्यपेक्षा व्यावहारिकरजतस्यैव न

यज्ञादिः प्रत्यक्षत्वापत्तौ अनुमानाद्युच्छेदापत्तेः।

ननु रजतोत्पादकानां रजतावयवादीनामभावे शुक्तौ तवापि कथं रजतमुत्पद्यत इति चेत्, उच्यते :—न हि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका, किन्तु विलक्षणैव।

प्रातिभासिकरजतस्य। तस्यतु विनाप्यवयवमविद्यामात्रेणोत्पत्तिरिति न दोष इत्याशयेन समाधत्ते—उच्यत इति।

तत्र पूर्वपक्षो प्रष्टव्यः—किं लोकसिद्धसामग्र्यभावात् रजतानुत्पाद आपाद्यते, उत सामग्रीमात्रविरहाद्वा। नाद्यः, प्रातिभासिकरजतं प्रति लोकसिद्धसामग्र्याः कारणत्वाभावात्। अत एव स्वप्ने रथादिसृष्टिरुपपद्यत इत्याह—नहीति। द्वितीयमनुसन्धत्ते—किन्त्विति।

ननु प्रातिभासिकरजतोपादानमज्ञानमपि किं तदानीमेवोत्पद्यते, उतानादि। आद्ये तस्याप्युपादानमन्यदज्ञानं तस्याप्यन्यदित्यनवस्थाप्रसङ्गः। नच बीजाङ्कुरन्यायेनानवस्था न दोषायेति वाच्यम्; बीजाङ्कुरयोरिव कार्यकारणभावस्य प्रत्यक्षसिद्धत्वाभावेनानवस्थाया दोषत्वस्यावश्यकत्वात्, अन्यथाऽनवस्थाया दोषत्वस्यैव भङ्गापत्तेः। द्वितीयेतु समर्थस्य क्षेपायोगादविद्यया शुक्तितत्त्वसाक्षात्कारपर्यन्तं सदैव भ्रमप्रसङ्गः। एतेन—काचादिदोषसहिताविद्याकारणत्वमपि—परास्तम्; दोषसत्त्वेऽपि पुरोवर्तिवस्तुनः चक्षुःसंयोगेनेदमाकारान्तःकरणवृत्तीदंरजतसादृश्यज्ञानाभ्यामन्तरेण भ्रमानुदयात्। एवंचाविद्योपादानकत्वं रजतस्य न संभवति, अन्यथा वियदादिप्रपञ्चस्यापि मायाकार्यत्वेन ततो वैषम्यानुपपत्तेः। नाप्यात्मोपादानम्; तस्यापरिणामित्वात्। नापि दोषः; तस्य गुणसादृश्यादिरूपस्य द्रव्याद्युपादानत्वायोगात्। अविद्याया दोषविधया निमित्तकारणत्वमेवेति कल्पतरुसिद्धान्तोऽप्यत एव परास्तः; उपादानकारणमन्तरा निमित्तकारणमात्रेण कार्यानुदयादित्याशङ्का हि नात्र प्रसरति; अनाद्यविद्याया एव रजतोपादानत्वाङ्गीकारात्। तस्याश्चाविद्याया रजतात्मना परिणामं प्रति दोषः रजतसंस्कारश्च सहकारिकारणमिति भ्रमकादाचित्कत्वमप्युपपद्यते।

तथाहि—काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्य-संयोगादिदमाकारा चाकचक्याकारा च काचिदन्तःकरण-वृत्तिरुदेति। तस्याञ्च वृत्तौ इदमवच्छिन्नचैतन्यं प्रतिबिम्बते।

वियदाद्युपादानं मूलविद्या, रजतोपादानं तूलाविद्येति वाऽनागन्तुकदोषजन्यं वियदादि आगन्तुकदोषजन्यं प्रातिभासिकमिति वा वैलक्षण्यान्नाविद्योपादानत्वे कोऽपि विरोधः। आत्मोपादानत्वपक्षादिकं त्वनङ्गीकारपराहतमिति वितथमात्मो पादानत्वादिनिराकरणम्। अघटितघटनापटीयसी अविद्या विनापि रजतावयवं यथा रजतमुत्पादयति, एवं विनापि परिणाम्युपादानं दोषविधया रजतोत्पादिकेति कल्पतरुसिद्धान्तोऽपि युज्यते। तथापि विवरणाचार्यमतेनोक्तग्रन्थस्य प्रवृत्तत्वान्न कोऽपि विरोध इत्यभिप्रायवानाह—तथाहीति।

प्रमातृचैतन्याभिन्नं यत् विषयचैतन्यं तन्निष्ठा शुक्तित्वप्रकारिकाऽविद्या रजताकारेण रजतज्ञानाकारेण च परिणमते। तत्राविद्यायाः सहकारिकारणम् उद्बुद्ध-रजतसंस्कारः, उद्बोधकारणं सादृश्यज्ञानमित्याह—प्रमातृचैतन्याभिन्नेति।

अत्र शुक्त्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नत्वोक्तिः प्रातिभासिकेषु विषय-प्रत्यक्षत्वसमन्वयार्थमिति ग्रन्थ एवाग्रे स्फुटीभविष्यति।

वस्तुतस्तु तूलाविद्याया विवरणभामतीप्रस्थानयोः प्रमातृचैतन्याश्रितत्वात् शुक्त्यवच्छेदेन रजताकारेणाविद्यापरिणामसिद्ध्यर्थं प्रमातृचैतन्याभिन्नत्वोक्तिः। विवरणाचार्यमतेऽज्ञानाश्रयस्य विवर्तोपादानकारणत्वाच्छुक्त्यवच्छिन्नचैतन्य-विवर्तोपादानत्वसिद्ध्यर्थं प्रमातृचैतन्याश्रिततूलाविद्यायाः विषयचैतन्याश्रितत्वोप-पादनं हि नियमेनापेक्ष्यते। ग्रन्थकारस्तु प्रायेण विवरणप्रस्थानपक्षपातीति ग्राव्णापरोक्षतादिसाधनेन ज्ञापितमेवेति॥

एतावता च रूप्याध्यासः साक्षादविद्योपादानः, अन्यानुपादानत्वे सति सोपादानत्वात् आकाशवदित्यनुमानमत्र प्रमाणं सूचितम्। नच विपक्षे बाधकाभावः; मिथ्यैव रजतमभादिति प्रत्यक्षानुपपत्तेरेव बाधकत्वात्। मूलाविद्या दोषत्वेन निमित्तकारणम्, तूलाविद्या तूपादानकारणमात्रम्, दोषत्वेन तु काचादीनामेव

तत्र पूर्वोक्तरीत्या वृत्तेर्निर्गमनेन इदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नम्। ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाविद्या चाकचक्यादिसादृश्यसन्दर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण परिणमते। परिणामो नाम

निमित्तकारणत्वमिति सूचयितुं—काचादिदोषसमवहितेति विशेषणम्॥ शुक्त्यवच्छिन्नचैतन्यनिष्ठाविद्यापरिणामो रजतमिति वर्णनेनाविद्यापेक्षया रजतं परिणामः, चैतन्यापेक्षया विवर्त इति निरूपितम्। तत्र परिणामविवर्तयो रूपभेदमुपपादयति—परिणामो नामेति।

यत् कार्यं स्वोपादानसमसत्ताकं तत्तत्परिणामः, यत् स्वसमसत्ताककार्यात्मतामाप्नोति, तत्परिणामिकारणम्, एवं यत् कार्यं स्वविषमसत्ताकस्वोपादानकं तद्विवर्तः, यत् स्वविषमसत्ताकस्वकार्यविशिष्टं तद्विवर्तोपादानकारणम्। यथा घटाद्युपादानमविद्या घटसमसत्ताकेति तत्परिणामि कारणम्। चैतन्यं तु स्वन्यूनसत्ताकघटादिकार्यविशिष्टं तद्विवर्तकारणम्॥

एवं रज्जुसर्पादावपि विवर्तत्वादिसमन्वय ऊहनीयः। तत्र सर्पोपादानमविद्या पल्लवाविद्यैव, नतु मूलाविद्येति स्वोपादानमविद्या स्वसमानसत्ताकैवेति न दोषः। शुक्तिरजतादीनामपि मूलाविद्यापरिणामत्वपक्षे व्यावहारिकत्वात् शुद्धचैतन्यस्यैव तद्विवर्तोपादानकारणत्वाच्च विवर्तलक्षणसमन्वयः। एतेन—उपादानसमसत्ताककार्यत्वमिति परिणामलक्षणमपि शुक्तिरजते व्याख्यातमिति—सूचितम्॥

यत्तु—आशुबोधिन्यां "परिणामविवर्तलक्षणयोः पारमार्थिकापारमार्थिकसत्ताद्वैविध्याभिप्रायकत्वादविद्यागताया अपारमार्थिकसत्तायाः समायाः शुक्तिरजतादौ विद्यमानत्वात् परिणामलक्षणसङ्गतिरित्युक्तम्, तदपि मूलाविद्याकार्यत्वं रजतादीनामिति पक्षमनुसृत्यैवेति मन्तव्यम्। वक्ष्यति हि ग्रन्थकार एवोत्तरत्र शुक्तिरूप्यस्य तूलाविद्याकार्यत्वपक्षं मूलाविद्याकार्यत्वपक्षं च। इदमवच्छिन्नचैतन्याधिष्ठानत्ववादस्तु तूलाविद्याकार्यत्वपक्ष एवेति प्रकृतसंदर्भस्य सत्ताद्वयपक्षेण योजनं चिन्त्यमेवेति॥

उपादानसमसत्ताककार्यापत्तिः। विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः। प्रातिभासिकरजतस्याविद्यापेक्षया परिणाम इति चैतन्यापेक्षया विवर्त इति च उच्यते। अविद्यापरिणामरूपञ्च तद्रजतमविद्याधिष्ठान इदमवच्छिन्नचैतन्ये वर्तते; अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्।

ननु यथाऽद्वैतिनां मते घटादीनामप्यविद्याकार्यत्वेऽपि अवयवापेक्षा, एवं रजतस्याप्यविद्याकार्यत्वेऽप्यवयवापेक्षा विद्यत एवेति विना रजतावयवं कथमाविद्यकमपि रजतमुत्पद्येतेत्यत आह—अविद्यापरिणामरूपमिति। इदमवच्छिन्नचैतन्ये वर्तत इति।

तथाच घटादीनां कपालावच्छिन्नचैतन्येऽध्यासेन स्वाधिष्ठानावच्छेदकतया कपालादिस्वावयवापेक्षा यथा विद्यते, तथात्र रजतस्य स्वावयवावच्छिन्नचैतन्येऽध्यासाभावेनिदमवच्छिन्नचैतन्य एवाध्यासेन च न रजतावयवापेक्षेति न दोष इति भावः॥

स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमादिति। अनेन चाधिष्ठानविषमसत्ताकार्थविषयकज्ञानत्वं भ्रमत्वमिति भ्रमलक्षणमप्युपपादितं भवति॥

यत्तु—भाष्ये "स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणमुक्तम्, तस्याप्ययमेवाशयः। तत्रहि स्मृतिरूपत्वम् असन्निहितविषयत्वमिति भामतीग्रन्थेन विषमसत्ताकार्थविषयकज्ञानत्वमेव विवक्षितम्। परत्रपदं तु वैषम्यप्रतियोगिनोऽधिष्ठानसत्त्वस्योपस्थापनार्थम्। अन्यथा परत्र परमार्थसति पूर्वदृष्टस्यानृतस्य ज्ञानमध्यास इति लक्षणे विवक्षिते अन्तःकरणाधिष्ठानकात्माध्यासेऽव्याप्तिः स्यात्। अधिकं तु भामतीकल्पतरुपरिमलेषु द्रष्टव्यम्।

अत्र यत् निरधिष्ठानभ्रमनिराकरणार्थं परत्रपदं स्मृतावतिव्याप्तिवारणार्थं स्मृतिरूपपदं स्पष्टप्रतिपत्त्यर्थं पूर्वदृष्टपदमिति पञ्चपादिकायामुक्तम्, तत् स्मृतिरूपपदेनाज्ञातगोचरत्वस्यानुपस्थितत्वस्य विवक्षया, न तु विषमसत्ताकार्थविषयज्ञानत्वस्य विवक्षया।

**ननु चैतन्यनिष्ठरजतस्य कथमिदं रजतमिति पुरोवर्तिना तादात्म्यम् ?**

**उच्यते, यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेन**

अत्र स्मृतिरूपत्वं संस्कारजन्यत्वेनैव भवतीति स्मृतित्वशङ्का, शुक्तिरजतस्थले स्वाधिकसत्ताकव्यावहारिकरजतज्ञानजन्यसंस्कारजन्यज्ञानविषयत्वमेव दृष्टमिति व्यावहारिकप्रपञ्चज्ञानस्य भ्रमत्वसिद्धये पारमार्थिकप्रपञ्चज्ञानजन्यसंस्कार एवापेक्षित इति न प्रपञ्चमिथ्यात्वसिद्धिरिति शङ्का च न प्रसरति, संस्कारमात्रजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वेन दोषादिसहिततज्जन्यत्वस्य तदप्रयोजकत्वात्। प्रमाऽप्रमासाधारणज्ञानजन्यसंस्कारस्यैव भ्रमकारणत्वेन पारमार्थिकप्रपञ्चज्ञानजन्यसंस्कारं विनापि भ्रमत्वोपपत्तेश्च ॥

**ननु**—भ्रमेऽनिर्वचनीयरजतोत्पत्त्यङ्गीकारे रूप्यमुत्पन्नं नष्टमिति प्रतीतिप्रसङ्गः, त्रैकालिकनिषेधप्रतीत्यनुपपत्तिश्च। नच उत्पादविनाशप्रतीतिरियं भ्रान्तिसमय आपाद्यते, बाधसमये वा, नाद्यः; पूर्वोत्पन्नाविनिष्टेदंतादात्म्यग्रहस्य तत्प्रतिबन्धकत्वात्, न द्वितीयः; अत्यन्ताभावग्रहस्य प्रतियोगिग्रह इव तदुत्पादविनाशग्रहेऽपि प्रतिबन्धकत्वादिति—वाच्यम्; इदमवच्छिन्नचैतन्याध्यस्तस्य रूप्यस्य तादृशचैतन्यतादात्म्येऽपीदंतादात्म्यासंभवात्। नचानुभवबलादिदंतादात्म्यमप्यङ्गीक्रियत इति वाच्यम्; अनुभवस्य चैतन्यतादात्म्यमादायाप्युपपन्नत्वे नेदंतादात्म्यकल्पकत्वायोगात्। नहि चैतन्यावच्छेदकत्वादिदम इदंतादात्म्यमपि विद्यत इति वाच्यम्; अवच्छिन्नवृत्तिपदार्थस्यावच्छेदकवृत्तित्वस्यापि कल्पने प्रमाणाभावादित्याशयेन शङ्कते—**ननु चैतन्यनिष्ठस्येति।** इदं रजतमित्यनुभूयमानं इदंतादात्म्यं रजतस्य कथम्? येन रजतोत्पादविनाशप्रतीत्यापत्तिनिरास इति भावः॥

समाधत्ते—**उच्यत इति।** अवच्छिन्नवृत्तिपदार्थस्यावच्छेदकवृत्तित्वं नैयायिकानामपि संमतम्। अतएव शरीरावच्छिन्नात्मधर्मस्य सुखादेः शरीरनिष्ठत्वेन शरीरं सुखीति प्रत्ययोपपत्तिः। एवं च तद्वदेवेदंतादात्म्यमप्युपपद्यत इति न दोष इत्याह—**यथा न्यायमत इति।** **चैतन्यमात्रस्य**

उपलम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात्, तथा चैतन्य-मात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधि-ष्ठानत्वेनेदमवच्छेदकतया रजतस्य पुरोवर्तिना संसर्गप्रत्यय उपपद्यते। तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्या-

रजतं प्रत्यनधिष्ठानतयेति ॥ पल्लवाविद्याकार्यं रजतमिति पक्षाङ्गीकारा-दिति भावः।

मूलाविद्याकार्यत्वपक्षे तु यद्यपि चैतन्यमेवाधिष्ठानं तथाप्यध्यासाधारत्वमिद-मवच्छिन्नचैतन्यस्य विद्यते। तदुक्तं सिद्धान्तबिन्दुटीकायाम्—"अविद्यामनो-विशिष्टचैतन्ययोरन्तःकरणतद्धर्मान् प्रति मनोविशिष्टचैतन्यस्य काणत्वादीन् प्रत्यध्यासाधारत्वात् तदध्यासाधिष्ठानस्य च ब्रह्मचैतन्यस्येन्द्रियाध्यासेप्यधिष्ठानत्वा-दि"ति। एवंच मूलाविद्याकार्यत्वपक्षे रजताध्यासाधारतावच्छेदकतया रजतस्ये-दंतादात्म्यमिति न दोषः। अत एवाहं काण इत्यादिप्रत्ययोपपत्तिः।

संसर्गप्रत्यय इति। तादात्म्यप्रत्यय इत्यर्थः। भेदसमानाधिकरणस्यैव संयोगस्य संसर्गत्वं दृष्टमिति अभेदोऽपि तादृश एव संसर्ग इति तादात्म्यमत्र भेदघटितमेव विवक्ष्यते। विस्तरश्चास्य लघुचन्द्रिकायां द्रष्टव्यः॥

ननु रजतमहं पश्यामीति रजतस्य प्रत्यक्षत्वमनुभूयमानं नोपपद्यते। तथाहि—किमिदं मानसप्रत्यक्षत्वमुत बाह्यप्रत्यक्षत्वम्। नाद्यः; रजतस्यान्तरत्वा-भावेन तदयोगात्, अन्यथेदं रजतमिति पुरोवर्तितादात्म्यानुपपत्तेरात्मख्यातिवादा-पत्तेश्च। न द्वितीयः; आविद्यकस्य तस्य ज्ञानपूर्वकालेऽसतः चक्षुरिन्द्रियसन्नि-कर्षाभावेन तदाकारवृत्तिनिर्गमाभावेन तदनुपपत्तेः। एतेन—सुखादिवद्रजतं साक्षिवेद्यमिति सिद्धान्तोऽपि—परास्तः; वृत्तिद्वारा साक्षिसम्बन्धं विना साक्षिभास्यत्वायोगात्। रजतगोचराविद्यावृत्त्याऽविद्योपहितचैतन्यरूपेश्वरसाक्षि-भास्यत्वं हि स्यात्, नास्मदादिसाक्षिभास्यत्वम्। यद्यपि पल्लवाविद्योप-हितचैतन्यमपि जीवसाक्ष्येवेति साक्षिभास्यत्वं नानुपपन्नम्; तथापि अहं रजतं पश्यामीति अन्तःकरणोपहितसाक्षिसम्बन्धानुभवो नोपपद्यत इत्यत आह—

तस्य चेति।

भिन्नतया विषयचैतन्येऽध्यस्तमपि रजतं साक्षिणि अध्यस्तं केवलसाक्षिवेद्यं सुखादिवत् अनन्यवेद्यमिति चोच्यते ।

ननु साक्षिणि अध्यस्तत्वे अहं रजतमिति तद्वानिति वा

**ननु** यथा रजताध्यासाधिष्ठानतावच्छेदकेन तदाधारतावच्छेदकेन वेदंपदार्थेन तादात्म्यं रजते भासते, एवं साक्षिणि रजतस्याध्यस्तत्वे साक्षितावच्छेदकान्तःकरणतादात्म्यमपि रजते भायात् । एवं चाहं रजतमिति प्रतीत्यापत्तिरिति शङ्कते— **नन्विति ।** अत्राहं रजतमिति प्रतीतिः स्यात् अहं सुखीतिवदिति शिखामण्याहृतः पाठः । अहं रजतमिति अहं रजतवानिति वा प्रतीतिः स्यादित्याशुबोधिनीकृदाहृतः पाठः । अत्राहं रजतमिति प्रतीतिः स्यादित्यत्र दृष्टान्ततयाऽहं सुखीति प्रतीतिनिदर्शनत्वं सुखादेरहमुल्लेखिप्रत्ययविषयत्वं तादात्म्यसम्बन्धेन यथा विद्यतेऽत्रापि तथा भवत्वित्याशयेन । इयांस्तु विशेषः—सुखादेरन्तःकरणधर्मत्वाद्धर्मधर्मिणोश्च तादात्म्यप्रत्ययाभिलापस्य मतुबन्तेनैव क्रियमाणत्वात् रूपी घट इतिवदहं सुखीति ज्ञानविषयत्वं युक्तम्, रजतस्य तु तद्धर्मत्वाभावात् तत्तादात्म्यप्रत्ययाभिलापः मतुबन्तेनैव भवतीति । यदि तु रजततादात्म्यप्रत्ययाभिलापोऽपि रजतवानिति मतुबन्तेनैव करणीय इत्याग्रहः, तदाऽहं रजतवानिति प्रतीतिर्भवत्विति पक्षान्तरानुधावनमिति मन्तव्यम् ॥

यत्तु आशुबोधिन्याम्—इदमवच्छिन्नचैतन्य एव रजतस्याध्यासः, नतु साक्षिण्यपि : साक्षिणं प्रति रजतत्वबुद्ध्यभावात् । अतः इदं रजतमित्येव प्रतीतिरुचिता, नतु अहं रजतमिति, रजतस्य साक्षिण्यध्यस्तताप्रतिपादनं तु साक्षिणोऽध्यस्तरजताकारवृत्तिमत्त्वादेव, नतु परमार्थतस्तस्य रजताध्यासविषयत्वादित्यस्वरसादाह—अहं रजतवानिति वा प्रतीतिः स्यादिति—व्याख्यातम्,

तदिदमविचाररमणीयम् : नहि रजतस्य साक्षितादात्म्याध्यासं विना विषयप्रत्यक्षत्वसमन्वयस्तत्र भवति । साक्षिण्यध्यस्तेऽपि रजते साक्षिणि रजतत्वबुद्ध्यभावस्तु रजतस्य साक्षितादात्म्यानुभवाहितसंस्कारसहिताविद्याकार्यत्वाभावनिबन्धन इति न दोषः । किंच साक्षिणि रजतस्यानध्यस्तत्वे रजतस्य प्रकाश एव न स्यात् । नहि साक्षिसम्बन्धं विना विषयस्य प्रकाश इति पूर्वमेव

निरूपितम् । विषयचैतन्याध्यस्तमपि रजतं साक्षिण्यध्यस्तमिति मूलमप्यत एव सार्थकं भवति । नहि रजताकारवृत्तिमत्त्वेन साक्ष्यध्यस्तताव्यवहारः संभवति, वह्न्याद्याकारवृत्तिमत्त्वस्यापि सत्त्वेन वह्नेरपि साक्षिभास्यत्वापत्तेः । किंच रजताकारवृत्तिरविद्यापरिणामो वीतान्तःकरणपरिणामः, आद्ये आविद्यक-रजताकारवृत्तिमत्त्वं कथं साक्षिणि संपन्नं भवति ? यदि विषयावच्छिन्नचैतन्यं प्रमातृचैतन्यं चेकं न भवतीति प्रमातृचैतन्याध्यस्तत्वमपि वस्तुगतिमनुरुध्ये-वोक्तम् ॥

इदं रजतमिति प्रतीतिर्हि रजतस्य मूलाविद्याकार्यत्वपक्ष इदंपदार्थस्य न रजताध्यासाधिष्ठानताप्रयुक्तम् रजततादात्म्यम्, घटादीनामिव शुद्धचैतन्य एवा-ध्यासात्, किन्तु घटाध्यासाधारतावच्छेदकत्वात् कपालादीनां घटादितादात्म्यमिव रजताध्यासाधारतावच्छेदकत्वप्रयुक्तमिति बिन्दुटीकानुसारेण पूर्वमेव निरूपितम् । एवंच विषयचैतन्यप्रमातृचैतन्ययोरभेदेन प्रमातृचैतन्याध्यस्तत्वेऽपि अन्तःकरण-विशिष्टचैतन्ये सुखादीनामिव रजताध्यासाभावात् नाहं रजतमिति प्रतीत्यापत्तिः । एतेन—तूलाविद्यापक्षोऽपि—व्याख्यातः ; तत्रापि अन्तःकरणविशिष्टे रजताध्यासा-भावात् ।

एतेन—अहं घट इति प्रत्यीत्यभावेऽपि निमित्तं—निरूपितम् । विषयचैतन्य इव प्रमातृचैतन्येऽप्यध्यस्तत्वे समाने विषयविशिष्टमेवाध्यासाधारः, नान्तःकरण-विशिष्टमिति कुत इति चेत्, अध्याससामान्यं प्रति तदाकारानुभवाहितसंस्कार-सचिवाविद्याया एव कारणत्वात् यदाकारानुभवाहितसंस्कारसहिताविद्या-कार्यत्वं तद्विशिष्टचैतन्य एवाध्यास इति वदामः । न च—यदध्यासाधारताव-च्छेदकत्वं यस्य तस्य तदाकारानुभवविषयत्वमिति नियमोऽपि न संभवति ; अन्तःकरणविशिष्टे शरीराध्यासेऽपि अहं देह इति प्रतीत्यापत्तेरिति—वाच्यम् ; अन्तःकरणविशिष्टे धर्मपुरस्कारेणैव शरीराध्यासः, नतु स्वरूपत इति अहं देह इति प्रतीत्यसंभवात् । तदुक्तं सिद्धान्तबिन्दौ—"अज्ञानविशिष्टचैतन्येऽहंकारा-ध्यासः, तद्विशिष्टे च धर्मपुरस्कारेणैवाहंकाराध्यासः, तद्विशिष्टे कामसंकल्पादी-नामध्यासः, तद्विशिष्टेच धर्मपुरस्कारेणैवाहं मनुष्य इत्यध्यासः, नतु स्वरूपतः, अहं देह इति प्रतीत्यभावादि"ति । व्याख्यातं चेदं टीकायां ब्रह्मानन्द-सरस्वतीभिः—"अहं मनुष्य इत्यादिपूर्वधीजन्यसंस्कारस्याहं मनुष्य इत्यध्यासे

प्रत्ययः स्यात्, अहं सुखीतिवत् इति चेत्, उच्यते :—

न हि सुखादीनामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्या-कार्यत्वप्रयुक्तमहं सुखीति ज्ञानम्; सुखादीनां घटादिवत् शुद्धचैतन्य एव अध्यासात्, किन्तु यस्य यदाकारानुभवाहित-संस्कारसहकृताविद्याकार्यत्वं तस्य तदाकारानुभवविषयत्व-

हेतुत्वकल्पनात्तादृशाध्यास उपपद्यते। अहं देह इत्यादेः प्रत्ययस्याप्रसिद्धतया तज्जन्यसंस्कारस्याप्रसिद्धेर्न तस्याध्यासहेतुत्वम्" इति। इदं शरीरम् इत्यनुभवस्तु शुद्धचैतन्ये शरीराध्यासरूपो नत्वन्तःकरणविशिष्ट इति न दोषः। एवंच प्रमातृचैतन्याध्यस्तत्वेऽपि रजतस्य नाहं रजत इति प्रतीत्यापादः, अन्तःकरण-विशिष्टे रजताध्यासाभावादित्याशयेन समाधत्ते—उच्यत इति॥

अन्तःकरणावच्छिन्नेति। अन्तःकरणोपहितेत्यर्थः। एवंचान्तः-करणविशिष्टचैतन्ये सुखाध्यास इति अनुपदनिर्दिष्टसिद्धान्तबिन्दूक्तिविरोधो नात्र भवति। शुद्धचैतन्य एवाध्यासादिति। शुद्धचैतन्यस्यैवाध्यासाधिष्ठान-त्वादित्यर्थः। मूलाविद्याकार्यमात्रस्य शुद्धचैतन्य एवाध्यासः, तस्यैव तद्विषयत्वात्, अन्तःकरणावच्छिन्नचैतन्यस्य तदविषयत्वात्। नन्वेवं सति "नहि सुखादी-नामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वप्रयुक्तमहं सुखीति ज्ञानमिति ग्रन्थः कथमुपपद्यते? नहि अन्तःकरणावच्छिन्नचैतन्यनिष्ठाऽविद्येति चेत्, सत्यम्—सुखादीनां शुद्धचैतन्य एवाध्यासः, तदेवाज्ञानाश्रयोऽपि; तथापि सुखज्ञानदशायां सुखावच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य च भाविनमभेदं मनसि निधाय सुखाधि-ष्ठानचैतन्यमेवान्तःकरणावच्छिन्नत्वेनात्र विवक्षितमिति न विरोधः। तेन विशिष्टचैतन्यस्याध्यासाधारत्वेऽपि न क्षतिः, न वा विरोधः। अनुभवा-हितेति। अनुभवाधीनेत्यर्थः। संस्कारेति।

स्मृतिरूपः परत्र पूर्वदृष्टावभास इति अध्यासलक्षणे स्मृतिरूपपदेन संस्कार-जन्यत्वमपि भ्रमस्यावश्यकमिति सूचितमिति पूर्वमेव निरूपितम्। उक्तं हि पञ्चपादिकायाम्—एतज्जन्मानुभूतानामपि स्वाप्नानुभवो जन्मान्तरीयं तदनुभवं कल्पयति, नहि सममो रसः कस्यापि स्वाप्नानुभवगोचरः" इति।

मित्येवानुगतं नियामकम्। तथाच इदमाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वात् घटादेः इदमाकारानुभवविषयत्वम्, अहमाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वादन्तःकरणादेः अहमाकारानुभवविषयत्वम्, शरीरेन्द्रियादेः उभयविधानुभवाहितसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम्। तथाच उभयविधोऽनुभवः, इदं

प्रकृते इदमाकारानुभवाहितसंस्कारसहिताविद्याकार्यत्वमिदमुल्लेख्यनुभवविषयत्वमेव, नत्वहं रजतमित्यनुभवविषयत्वमित्याह—तथाचेति। एवंच यत्र शुद्धचैतन्यस्यैवाध्यासाधारत्वमपि तस्येदमाकारानुभवविषयत्वम्, यत्रान्तःकरणविशिष्टचैतन्येऽध्यासाधारत्वं तत्राहमनुभवविषयत्वम्, शरीरं तु स्वरूपेण शुद्धचैतन्य एवाध्यस्तम्, नत्वन्तःकरणविशिष्टे, तत्र तु धर्मपुरस्कारेणैवाध्यस्तम्। इन्द्रियं तु यद्यपि शुद्धचैतन्य एव सर्वथाऽध्यस्तं नतु धर्मपुरस्कारेणापि अन्तःकरणविशिष्टेऽध्यस्तम्। तदुक्तं सिद्धान्तविन्दौ—"इन्द्रियाणां तु परोक्षत्वान्नापरोक्षधर्म्यध्यासः" इति। इदंतु अन्तःकरणविशिष्टे इन्द्रियाध्यासनिरासपरम्। उक्तं हि तट्टीकायां—"काण ाद्यध्यासाधिष्ठानस्य च ब्रह्मचैतन्यस्येन्द्रियाध्यासेऽप्यधिष्ठानत्वाद्धर्म्यध्यासाधिष्ठाने धर्माध्यासाधिष्ठानत्वमिति नियमो न व्याहतः। अथ धर्म्यध्यासविशिष्टस्यैव धर्माध्यासाधारत्वमिति नियम इति चेत्, न; अप्रतिविम्बरूपत्वस्येव नित्यपरोक्षधर्म्यवृत्तित्वस्यापि धर्मविशेषणत्वमादायैव धर्म्यध्यासाधारत्वस्य धर्माध्यासाधारत्वव्यापकत्वस्वीकारात्" इति; तथापि सिद्धान्तविन्दुटीकायामेव "अनुपदोद्धृतवाक्यानन्तरवाक्येन "मनोऽवच्छिन्नचिति काणत्वादिविशिष्टरूपेणैव चक्षुरादेस्तादात्म्येनाध्यासः, नतु चक्षुष्ट्वादिरूपेणेति स्वीकारे यथोक्तनियमेऽपि क्षत्यभावाच्च" इत्याकारकेण इन्द्रियस्यापि अहं काण इति प्रत्यक्षविषयत्वं संभवतीत्युक्तमिति धर्मपुरस्कारेणेन्द्रियाध्यासे मनोऽवच्छिन्नचैतन्यम् आधारः, स्वरूपत इन्द्रियाध्यासे शुद्धचैतन्यमिति विवेकात् शरीरेन्द्रियादेरुक्तविधानुभवविषयत्वसंभव इति न 'अहं मनुष्यः' 'इदं शरीरम्' 'अहं काणः' 'इदं चक्षुः' 'अहं वधिरः' 'इदं श्रोत्रमि'त्युभयविधानुभवविरोध इत्येतत् सर्वं मनसि निधायाह—शरीरेति।

शरीरम्, अहं देहः, अहं मनुष्यः, अहं ब्राह्मणः, इदं चक्षुः, अहं काणः, इदं श्रोत्रम्, अहं बधिर इति ।

प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वेऽपि इदं रजतमिति सत्यस्थलीयेदमाकारानुभवाहितसंस्कारजन्यत्वात् इदमाकारानुभवविषयता, न तु अहं रजतमिति अहमाकारानुभवविषयतेति अनुसन्धेयम् ।

ननु एवमपि मिथ्यारजतस्य साक्षात् साक्षिसम्बन्धितया भानसम्भवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थ इति चेत्, उच्यते :—

अनिर्वचनीयस्य रजतस्य प्रमातृचैतन्याध्यस्तस्यापि इदमवच्छिन्नचैतन्यस्यैव तदध्यासाधारत्वादिदमाकारानुभवविषयत्वमेव, नाहमाकारानुभवविषयत्वम्, अहं रजतमिति पूर्वतनानुभवाप्रसिद्धेरित्याह—प्रकृते चेति ।

ननु यथा साक्षिसंबन्धेन वृत्तिर्भासते, नतु वृत्तिगोचरवृत्त्यन्तरमङ्गीकृतमेवं रजतस्यापि प्रमातृचैतन्याध्यस्तस्य साक्षात्साक्षिसम्बन्धेनैव भानोपपत्त्या तद्गोचरवृत्त्यभ्युपगमो वितथः । घटादौ हि वृत्तिं विना साक्षिसम्बन्धाभावात्तदाकारवृत्त्यभ्युपगमो युक्तः । एतेनावरणाभिभवार्थोऽपि न वृत्तिरिति सूचितम् ; प्रातिभासिकानामभानापादकाज्ञानविषयत्वरूपावरणस्यैवाभावात् । नच—स्वगोचरवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वरूपविषयप्रत्यक्षत्वसिद्ध्यर्थं तदाकारवृत्त्यभ्युपगम इति—वाच्यम् ; अनावृतस्वावच्छिन्नचैतन्याभिन्नत्वस्यैव विषयप्रत्यक्षत्वप्रयोजकत्वसंभवेन गुरुभूतस्योक्तस्य विषयप्रत्यक्षत्वप्रयोजकत्वानङ्गीकारात् । नहि घटरूपाकारवृत्तिदशायां तत्परिमाणावच्छिन्नचैतन्यमनावृतमित्याशयेन शङ्कते—नन्विति । समाधत्ते—उच्यते इति ।

यद्यपि विट्ठलेशोपाध्यायरीत्या प्रातिभासिकसुखादिप्रत्यक्षत्वं प्रमातृचैतन्याभिन्न-

स्वगोचरवृत्त्युपहितचैतन्याभिन्नसत्ताकत्वाभावस्य विषयाऽपरोक्षत्वरूपतया रजतस्य अपरोक्षत्वसिद्धये तदभ्युपगमात्।

योग्यविषयत्वम्, घटादिबाह्यप्रत्यक्षत्वं स्वाकारवृत्त्युपहितप्रमातृचैतन्याध्यस्त-योग्यविषयत्वमिति प्रातिभासिकप्रत्यक्षत्वसमन्वयार्थं न वृत्तिरङ्गीकरणीया; तथापि एकमेवेदं प्रयोजकं सर्वप्रत्यक्षत्वप्रयोजकमङ्गीकरणीयमित्यभिप्रायेण प्रातिभासिकप्रत्यक्षत्वसिद्धयेऽत्र वृत्तिरुपपादिता। "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि"ति, विषयस्य साक्षिसंबन्धो न ज्ञानपदवाच्यवृत्तिं विना संभवतीति प्रमातृभिन्नत्वं प्रातिभासिकविषयप्रत्यक्षत्वप्रयोजकमित्यङ्गीकारेऽपि वृत्तिरङ्गीकरणीयैव। नचानावृतस्यावच्छिन्नस्य चैतन्याभिन्नत्वमेव विषयप्रत्यक्षत्वमिति वाच्यम्; घटरूपप्रत्यक्षतादशायां घटरूपावच्छिन्नचैतन्यस्य परिमाणावच्छिन्नस्य चाभिन्नतया रूपाकारवृत्त्या रूपावच्छिन्नचैतन्यस्यानावृतत्वेन परिमाणावच्छिन्नचैतन्यस्यानावृतत्वेन रूपप्रत्यक्षतादशायां परिमाणप्रत्यक्षतापत्तेः। नचानावृतत्वं चैतन्यस्य न विशेषणम्, किन्तु विषयस्येति परिमाणस्याप्यावृतत्वान्नोक्तदोष इति वाच्यम्; "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" इति संक्षेपशारीरकवचनानुसारेण चैतन्येतरस्याज्ञानविषयत्वाभावेनानावृतत्वस्य विषयविशेषणत्वायोगेनानावृतचैतन्यविषयत्वस्यैव विषयप्रत्यक्षत्वप्रयोजकस्यादरणीयत्वात्। एवंच रजतगोचराविद्यकवृत्तिं विना न प्रातिभासिकप्रत्यक्षत्वोपपत्तिरिति तदभ्युपगम आवश्यक इति भावः।

वृत्त्युपहितचैतन्येति। स्ववृत्त्युपहितचैतन्येत्यर्थः। स्वगोचरवृत्त्युपहितप्रमातृसत्तातिरिक्तसत्ताविरहस्यैव विषयप्रत्यक्षत्वप्रयोजकत्वात्। अन्तःकरणावच्छिन्नम् इदमवच्छिन्नम् इदमाकारवृत्त्यवच्छिन्नं च चैतन्यमेकलोलीभावेन यथाऽभिन्नम्, एवमिदमाकारवृत्त्यवच्छेदेनैव रजताकारवृत्त्यङ्गीकारात् रजताकाराविद्यकवृत्त्यवच्छिन्नमपि तैरभिन्नं भवतीति मन्तव्यम्। अत एव पूर्वं प्रमातृचैतन्याध्यास्तत्वेन साक्षिवेद्यत्वोक्तिरुपपद्यते।

एतेन—"आविद्यकवृत्त्युपहितत्वस्य प्रमातरि बाधितत्वेनाविद्योपहितचैतन्यमेवात्र तच्चैतन्यपदेन विवक्षितम्। अत एवात्र प्रमातृपदपरित्याग"

**ननु इदंवृत्तेः रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमत इव विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति**

इत्याशुबोधिनीव्याख्या—**परास्ता** ; पूर्वापरविरोधात् । उपपादितं हि पूर्वमाशुबोधिन्यामपि "तस्य च विषयचैतन्यस्य तदन्तःकरणचैतन्याभिन्नतया विषयचैतन्याऽध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यमित्युच्यते" इति पूर्वतनपरिभाषावाक्यव्याख्यावसरे प्रमातृचैतन्याऽध्यस्तत्वं रजतस्य, अत्र चाविद्योपहितचैतन्याध्यस्तत्वमिति विरोधात् ।

प्रमातृपदेन च साक्षिचैतन्यमेव विवक्षितमिति नेश्वरप्रत्यक्षत्वमपि विषये व्याहतम् । एतेन—घटादिषु ईश्वरप्रत्यक्षत्वसमन्वयार्थं यद्वृत्त्यवच्छिन्नं चैतन्यं तदुपहितचैतन्यं प्रमातृपदेन विवक्षितमित्याशुबोधिन्युक्तिरपि—परास्ता ; नहि रजतोपादानतूलाविद्योपहितं चैतन्यं साक्षिपदार्थ इति केचित् ।

**ननु**—एवमपि अनिर्वचनीयख्यातिवादिनां मते इदमाकाररजताकारवृत्तिद्वयाभ्युपगमे एकस्यैव ज्ञानस्येदंरजतोभयविषयत्वाभावेन विशिष्टज्ञानानभ्युपगमात् गुरुमतप्रवेशापत्तिः । तेषां हि मते इदमित्यनुभवात्मकं ज्ञानं रजतमिति स्मरणात्मकं ज्ञानमिति ग्रहणस्मरणे एवागृहीतभेदे प्रवृत्तिं प्रयोजयत इत्युक्तम् । इयांस्तु विशेषः—तेषां मते ज्ञानद्वयं ग्रहणस्मरणात्मकम्, युष्मन्मतेऽन्तःकरणवृत्तिः आविद्यकवृत्तिश्चेति । एवंचाख्यातिमतप्रवेशापत्तिः ; अविद्यातत्परिणामादिकल्पनापेक्षया क्लृप्तसंस्कारजन्यत्वेन स्मृतित्वकल्पनस्यैव युक्तत्वात्, इत्याशयेन शङ्कते—**नन्विति** ।

सत्यम्—इदं रजतमित्यत्र प्रत्येकविषयमानसाविद्यकेदमाकाररजताकारवृत्तिद्वयमङ्गीकृतम्, एवमपि नाख्यातिवादिनामिव ज्ञानभेद इदंरजतयोः परस्परतादात्म्याभावश्चाङ्गीक्रियते, इदमवच्छेदेन रजतं तत्तादात्म्यावच्छेदेन रजततादात्म्यम् इदंत्वावच्छेदेन रजतवृत्तिरित्यादिपदार्थानामेकस्मिन् चैतन्येऽङ्गीकारेण वृत्तिद्वयप्रतिफलितैकचैतन्यस्यैव भ्रमज्ञानत्वाङ्गीकारात् । एवंच सत्यमिथ्यावस्तुतादात्म्यावगाहीदमाकाररजताकारवृत्तिद्वयप्रतिफलितैक-

चेत्, न; वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वस्वीकारात्। अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमादप्रामाण्योक्तिः साम्प्रदायिकानाम्।

ननु सिद्धान्ते देशान्तरीयरजतमपि अविद्याकार्यमध्यस्तं

चैतन्यस्यैव भ्रमत्वस्वीकारात्ख्यातिमतप्रवेशापत्तिः। नहि वृत्तिः ज्ञानम्; जडत्वात्, किन्तु तदवच्छिन्नं चैतन्यमेव तदिति पूर्वमेवोक्तम्। अख्यातिवादिनां तु इदमि रजततादात्म्यस्येदंवृत्त्यवच्छेदेन रजतवृत्तेश्चाङ्गीकरणादस्मन्मताद्विशेषः। नचैवं साक्षिज्ञानस्य प्रामाण्यनियमात् रजतांशेऽपि प्रमात्वं स्यादिति वाच्यम्; अबाधितार्थतादात्म्यस्यैव साक्षिज्ञानस्य प्रामाण्यप्रयोजकत्वेन तदंशेऽप्रामाण्यात्। अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमादप्रामाण्योक्तिः सांप्रदायिकानामुपपद्यत इत्यभिप्रायेणोक्तां शङ्कां निराकुरुते—**नेति**।

**अत एव** वृत्तिद्वयप्रतिफलितचैतन्यस्यैकत्वादेव। **सत्यासत्यविषयतयेति**। अत एवोक्तं भाष्ये—"सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इति। अनेन चेदं रजतमिति ज्ञानस्यापि भ्रमत्वमुपपाद्यते। अतएवोत्तरभाष्य एवोक्तम्—"शुक्तिका हि रजतवदवभासते" इति।

ननूक्तभाष्यानुसारेण ब्रह्मस्वरूपज्ञानव्यतिरिक्तस्य सर्वस्यापि ज्ञानस्य भ्रमात्मकत्वमवगम्यते, भ्रमत्वं चानिर्वचनीयतत्कालोत्पन्नवस्तुविषयत्वेनेति भवतां मतम्। तत्र यदीदमुपपन्नं स्यात्, तर्हि घटादिव्यावहारिकत्वं शुक्तिरूप्यादिप्रातिभासिकत्वं च कुतः? उभयोरप्यविद्याकार्यत्वाविशेषेण तन्नियामकमन्तरा तदसंभवात्। यद्यपि मूलाविद्याकार्यत्वेन व्यावहारिकत्वं तूलाविद्याकार्यत्वेन प्रातिभासकत्वमिति विशेषः संभवति; तथाप्ययं विशेषः शुक्तिरूप्यादीनामपि मूलाविद्याकार्यत्वपक्षे न संभवतीत्याशयेन शङ्कते—**ननु सिद्धान्त इति**।

**देशान्तरीयेति**। शुक्तिरूपेदंपदार्थतादात्म्यानापन्नव्यावहारिकरजत-

चेति कथं शुक्तिरूप्यस्य इतो वैलक्षण्यमिति चेत्, न; त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित् क्षणिकत्वं केषाञ्चित् स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभावविशेषादिकं ममापि। यद्वा घटाद्यध्यासे अविद्यैव दोषत्वेनापि हेतुः। शुक्तिरूप्याद्य-

मित्यर्थः। अपिना शुक्तिरूप्यस्य संग्रहः। अविद्याकार्यमिति। मूलाविद्याकार्यमित्यर्थः॥

ननु इदमवच्छिन्नचैतन्ये शुक्तिरूप्यमध्यस्तम्, शुद्धचैतन्ये तु व्यावहारिकरजतमध्यस्तमित्यवच्छिन्नचैतन्याध्यस्तत्वानवच्छिन्नचैतन्याध्यस्तत्वाभ्यां विशेष इत्यत आह—अध्यस्तं चेति। अनवच्छिन्नचैतन्याध्यस्तमित्यर्थः। यत्तु पूर्वं ग्रन्थकृतेदमवच्छिन्नचैतन्याध्यस्तं रजतमित्युक्तम्, तत् तूलाविद्याकार्यत्वपक्षेणेति न विरोधः। कथमाक्षेपे। वैलक्षण्यं न भवतीत्यर्थः। इतः व्यावहारिकरजतादित्यर्थः।

ननु मूलाविद्याकार्यत्वपक्षे शुक्तिरूप्याणां कीदृशं प्रातिभासिकत्वं, न संभवतीति शङ्क्यते। न तावत् ब्रह्मप्रमातिरिक्ताबाध्यत्वम्; इष्टत्वात्, तन्मते शुक्तिरूप्यस्यापि ब्रह्मप्रमामात्रबाध्यत्वात्। नापि ब्रह्मसाक्षात्कारतः पूर्वं नाशप्रतियोगित्वम्, तस्य घटादौ मुद्गरपातादिनेव घटज्ञानादेः पटज्ञानादिनेव च शुक्तिरूप्यादावपि शुक्तिज्ञानादिना संभवात्, नचाविद्याकार्यत्वेनाविशेषः आकाशादीनामिव शुक्तिरूप्यादीनां नाशमपि विरोधयेत्। अन्यथा नैयायिकमते केषांचित् स्थायित्वाविशेषेण आत्मधर्मज्ञानादीनामपि स्थायित्वापत्तेः। अतो न कोऽपि दोषः इत्याशयेन समाधत्ते—नेति।

प्रातिभासिकपदव्यवहार्यत्वे तु घटाद्यध्यासस्याविद्यारूपदोषजन्यत्वेऽपि अविद्यातिरिक्तकाचादिदोषाजन्यत्वात् घटादीनां न भवति, शुक्तिरूप्यादीनां तु अविद्यातिरिक्तदोषजन्यत्वात् भवतीत्याशयेनाह—यद्वेति। दोषत्वेनापीति। अपिनोपादानत्वेनापीति विवक्षितम्। कल्पतरुमते तु अपिशब्दोऽवधारणार्थः। आगन्तुकेति। काचादीत्यर्थः। इदं स्वाप्निकानां मूलाविद्याकार्यत्वमिति

ध्यासे तु काचादयो दोषाः अपि। तथाच आगन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम्। अत एव स्वाप्नोपलब्धरथादीनामागन्तुकनिद्रादोषजन्यत्वात् प्रातिभासिकत्वम्।

ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव प्रातिभासिकत्वव्यवहारोपपत्तौ न रथादिसृष्टिकल्पनम्; गौरवात्, इति

पक्षानुरोधेन। तदुक्तं सिद्धान्तलेशसंग्रहे—स्वप्नाध्यासस्याप्यनवच्छिन्नचैतन्येऽहंकारोपहितचैतन्ये वाऽवस्थाज्ञानशून्येऽध्यासात् मूलाज्ञानकार्यतायामविद्यातिरिक्तनिद्रादिदोषजन्यतयैव प्रातिभासिकत्वमि"ति।

अस्मिंश्च मते—"जाग्रद्बोधस्य स्वाप्नाध्यासनिवर्तकत्वोक्तिस्तु रज्जुसर्पाध्यासस्य स्थानान्तरोत्पन्नदण्डभ्रमेणेव संभवतीति न जाग्रद्दशायामपि स्वाप्नानुभवानुवृत्तिप्रसङ्गः। यदितु मूलाज्ञानस्यावस्थाभेदो निद्रारूप एव स्वाप्नपदार्थोपादानम् एवं शुक्तिरूप्यस्यापि पक्षवाज्ञानाभिधोऽज्ञानस्यावस्थाभेद एवोपादानमित्यङ्गीक्रियते, तर्हि तूलाज्ञानमूलाज्ञानकार्यत्वाभ्यां विशेषोऽवगन्तव्यः। अस्मिंश्च मते व्यावहारिकजीवावृतत्वेऽपि प्रातिभासिककल्पितजीवसत्त्वान्न द्रष्टृभावप्रसङ्ग इति जीवविवर्तत्वमेव स्वाप्निकानां नानवच्छिन्नचैतन्यविवर्तत्वम्।

**प्रयोजकम्** व्याप्यम्। एतेन सुखादीनां प्रातिभासिकानां दोषजन्यत्वेऽपि न विरोधः; स्वाप्नरथादावपि निद्रारूपदोषजन्यत्वं विद्यते, प्रातिभासिकत्वं च विद्यत इत्याह- **अत एवेति**। ननु स्वप्नोपलब्धरथादीनां पूर्वानुभूतरथादिस्मरणमात्रेण प्रातिभासिकत्वव्यवहारोपपत्तौ न दोषजन्यत्वमङ्गीकरणीयमित्याशयेन शङ्कते—**नन्विति। स्मरणमात्रेण प्रातिभासिकत्वव्यवहारोपपत्ताविति।** स्वाप्निकप्रतीतिव्यवहारयोरुपपत्त्येत्यर्थः। यथाश्रुते तु स्मृतिविषयत्वस्य प्रतीतिकालमात्रस्थायित्वरूपप्रातिभासिकत्वाप्रयोजकत्वादसङ्गतेः। एतेन—"प्रातिभासिकत्वेति। प्रतीतिकालमात्रस्थायित्वेत्यर्थः"। इत्याशुबोधिनीव्याख्या—निरस्ता, नहि सुखादीनामिव स्वाप्निकानां व्यवहारकालाबाध्यत्वं प्रातिभासिकत्वं च कस्यापि मतम्। **न रथादिसृष्टिकल्पनेति। गौरवा-**

**चेत्, न; रथादेः स्मृतिमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः, "अथ रथान् रथयोगान् पथः** **सृजते" इति।** रथावयवादिकल्पनेन तदुत्पत्तिविनाशादिकल्पनेन च गौरवादित्यर्थः।

मूलाविद्या हि विनाऽवयवं कार्यं न जनयति, स्वाप्निकानामपि मूलाविद्याकार्यत्वेऽवयवापेक्षासत्त्वादवयवादिकमपि कल्पनीयम्। एतेन—तूलाविद्याकार्यत्वपक्षोऽपि—प्रत्युक्तः: शुक्तिरजतस्थले हि रजतं पश्यामीत्यनुभवोपपत्त्यर्थमनिर्वचनीयं रजतं कल्पितं युक्तम्। स्वाप्नपदार्थानां तु स्वप्ने चक्षुरिन्द्रियोपरमात् मनसः चक्षुराद्यनपेक्षं बहिर्व्यापाराभावात् न चाक्षुषत्वमद्वैतिनामपि संमतम्। उक्तं हि सिद्धान्तलेशसंग्रहे—"तस्मात् जाग्रज्जाद्यनुभव एव चक्षुरादिजन्यः, नतु स्वाप्नगजाद्यनुभवः" इति। एवंच देशान्तरीयरथादीनामिव स्वप्ने भानमिति कल्पनैव युक्ता। नच स्वप्ने प्रातिभासिकानां अज्ञातसत्त्वं नास्ति। इन्द्रियाणां चातीन्द्रियत्वादज्ञातसत्त्वमिवाङ्गीकरणीयम्। अत एव परोक्षस्थलेऽन्यथाख्यातिरेवाद्वैतिनामपि संमता। एवं च स्वप्ने रथादिसृष्टिकल्पनं न युक्तमिति भावः।

**रथमद्राक्षमित्यनुभवविरोधापत्तेरिति।**

**अयं भावः**—स्वप्ने रथादीनां स्मरणमात्रमिति पक्षे पश्यामीति चाक्षुषत्वानुभवो नोपपद्यते। यद्यपि स्वप्ने चक्षुरादीन्युपरतानि, यद्यपि च प्रातिभासिकानामज्ञातसत्त्वानभ्युपगमात् प्रातिभासिकचक्षुरादिकल्पनमपि न संभवति; तथापि चक्षुर्ग्राह्यत्वमात्रकल्पनया चाक्षुषानुभवस्य भ्रमरूपस्य कल्पनायां न दोषः। तदुक्तं सिद्धान्तलेशसंग्रहे—"तस्मात् सर्वथाऽपि स्वप्ने चक्षुरादिव्यापारासंभवात् स्वाप्नगजादौ चाक्षुषत्वानुभवो भ्रमः' इति। "रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकम्; तदा सर्वेन्द्रियाणामुपरमात्" इत्युत्तरग्रन्थोऽप्यत एवोपपद्यते।

केचित्तु—स्वप्ने प्रातिभासिकानामिन्द्रियाणामप्यज्ञातसत्त्वाङ्गीकारे न दोषः। प्रातिभासिकानां ज्ञातसत्त्वमेवेति नियमस्त्वपरोक्षप्रातिभासिकविषयः। अत एव नित्यपरोक्षाणां गुरुत्वादीनां भ्रम उपपद्यते। परोक्षस्थलेऽपि विशेषणविशेष्यभावोपपत्त्यर्थमनिर्वचनीयवाद एव समादरणीय इत्यद्वैतसिद्धादौ व्यक्तमिति न कोऽपि विरोध इति—मन्यन्ते।

सृजत" इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च । तस्मात् शुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिका यावत् प्रतिभासमवतिष्ठन्ते ।

एवंच स्वाप्निकानुभवोऽन्यथाख्यातिरेवेति मतं परास्तम् । अत एव "अथ रथान् रथयोगान् पथः सृजते" इति स्वप्ने रथादिसृष्टिवर्णनमुपपद्यत इत्याशयेनाह—अथ रथानिति ।

अथ जाग्रद्भोगप्रदकर्मोपरमे सति रथान् स्यन्दनान् रथयोगान् रथयुक्तानश्वान् पथः मार्गांश्च सृजत इत्यर्थः । यद्यपीदं सर्वमसृजतेति श्रुतिसिद्धानां सृज्यमानानाम् आकाशादीनां न प्रातिभासिकत्वम् ; तथाप्यथशब्दस्वारस्येनागन्तुकदोषजन्यत्वं स्वाप्निकानामेव नाकाशादीनाम् । अत एव "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति वैयासिकसूत्रोपपत्तिरिति सूचयन्नुपसंहरति—तस्मादिति । प्रातिभासिका इति ।

सुखादीनां यावत्प्रतिभासमवस्थानं हि तेषां जीवोपाध्यन्तःकरणपरिणामित्वादुपपद्यते, आकाशादीनां त्वीश्वरोपाधिमायापरिणामानां न तत्संभवतीति सर्वसंमतमिदम् । एवं च स्वाप्निकानामपि मायापरिणामानामाकाशादिवत्प्रातिभासिकत्वायोग इत्याशङ्काऽप्येतेन परास्ता ; केवलमायापरिणामत्वस्यैवाकाशादिव्यावहारिकत्वप्रयोजकत्वे बाधकाभावात्, तदेतन्मनसि निधायाह—यावत्प्रतिभासमवतिष्ठन्त इति ।

मूलाविद्याकार्यत्वपक्ष आगन्तुकदोषसहकृताविद्याकार्यत्वस्यैव प्रातिभासिकत्वप्रयोजकत्वाङ्गीकारादिति भावः । आगन्तुकदोषजन्यत्वं प्रातिभासिकत्वप्रयोजकमिति पूर्वतनग्रन्थोऽप्येवमाशय एव । अत एव—"शुक्तिरूप्याध्यासे तु काचादयोऽपि दोषा इत्यपिशब्दप्रयोग उपपद्यते ।

एतेन—आगन्तुकदोषजन्यत्वस्य प्रातिभासिकत्वप्रयोजकत्वे काचादिध्वंसेऽपि प्रातिभासिकत्वव्यवहारापत्तिरिति शङ्का—परास्ता ; ध्वंसं प्रति हि प्रतियोगिनो न सहकारिविधया कारणत्वम्, किन्तु स्वतन्त्रतया ।

ननु स्वप्ने रथाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदाऽसन्निकृष्टतयाऽनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः। तथाच रथाद्यध्यासः कुत्रेति चेत्, न; चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात्। प्रतीयमानं रथादि अस्तीत्येव प्रतीयत इति सद्रूपेण प्रकाशमानं चैतन्यमेवाधिष्ठानम्। देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः, रथादौ इन्द्रियग्राह्यत्वमपि प्राति-

केचित्तु—सविकल्पकज्ञानबाध्यत्वं ब्रह्मज्ञानेतरबाध्यत्वं वा प्रातिभासिकत्व-मिति—मन्यन्ते। अस्मिंश्च मते स्वाप्निकानां पक्षवाज्ञानकार्यत्वपक्ष एवाभिमत इति सिद्धान्तलेशसंग्रहोक्तरीत्या व्यावहारिकजीवज्ञानबाध्यत्वं विद्यत इति स्वाप्निकानामपि प्रातिभासिकत्वमक्षतमेव। अत एव गुरुचन्द्रिकायां "ब्रह्म-प्रमातिरिक्तबाध्यत्वं च पक्षवाज्ञानतत्कार्यान्यतरभिन्नत्वमिति निरूपितम्। आगन्तुकदोषजन्यत्वं हि प्रातिभासिकत्वव्याप्यमित्येवास्माकं मतमिति सुखादीनां प्रातिभासिकानामागन्तुकदोषाजन्यत्वेऽपि न क्षतिः। एवंच शुक्तिरूप्यादीनां स्वाप्निकानां चागन्तुकदोषजन्यत्वेन यावत्प्रतिभासमवस्थानमुपपन्नमिति भावः।

**ननु**—स्वप्ने रथादीनामधिष्ठानं किं चैतन्यम्, उत देशविशेषः? आद्येऽपि अनवच्छिन्नचैतन्यमधिष्ठानमुतोपहितचैतन्यम्। द्वितीयेऽपि अवच्छिन्नचैतन्यं किं बिम्बचैतन्यं वोत प्रतिबिम्बचैतन्यं वा। तत्र न तावत् बिम्बचैतन्यमधिष्ठानम्, तस्यावृतस्य ज्ञानविषयत्वाभावेनाधिष्ठानत्वाभावात्, नापि प्रतिबिम्बचैतन्यम्; तस्य सिद्धान्तलेशसंग्रहोक्तरीत्या स्वयं प्रकाशस्याज्ञातत्वाभावेनानधिष्ठानत्वात्, किंचिद्रूपेण ज्ञातस्य किंचिद्रूपेणाज्ञातस्यैवाधिष्ठानत्वात्। अन्तःकरणावच्छिन्नचैतन्याधिष्ठानत्वमहं गज इति प्रतीत्यापत्त्या न संभवत्येव। अतः परिशेषात् देशविशेष एवाधिष्ठानमिति वर्णनीयम्, स च देहात् बहिःस्थश्चेत् स्वप्नकाले चक्षुरिन्द्रियोपरमेणासन्निकृष्टतयाऽधिष्ठानत्वायोगः, देहान्तःस्थश्चेत्, देहान्तर्दृश्यमानपरिमाणोचितदेशसंपत्त्यभावात् सोऽपि प्रातिभासिकः कल्पित इत्यङ्गीकरणीयम्, कल्पितस्य चाज्ञानाविषयस्याधिष्ठानत्वायोगः। एवंच निरधिष्ठानवादापत्तिः शून्याधिष्ठानतापत्तिर्वेत्याशयेन शङ्कते—**ननु स्वप्न इति**।

भासिकम् ; तदा सर्वेन्द्रियाणामुपरमात्। अहं गज इत्यादिप्रतीत्यापादनन्तु पूर्ववत् निरसनीयम्। स्वाप्नगजादयः साक्षात् मायापरिणामा इति केचित्, अन्तःकरणद्वारा तत्परिणामा इत्यन्ये।

सत्यं देशविशेषः कल्पितो नाधिष्ठानम्, चैतन्यं तु अनवच्छिन्नमविद्याप्रतिबिम्बं वाऽधिष्ठानमिति भवत्येव। तस्य च सामान्यरूपेण ज्ञातस्यापि विशेषरूपेणाज्ञानमपि संभवत्येव। वृत्त्यवच्छिन्नचैतन्यमेवाज्ञानविरोधि, न स्वरूपचैतन्यमिति रूपान्तरेणावरणमप्युपपद्यते। एवं च न निरधिष्ठानतावाद इत्याशयेन समाधत्ते—नेति। अधिकं तु सिद्धान्तलेशसंग्रहाद्द्रष्टव्यम्।

वृत्तिप्रतिबिम्बं ब्रह्मचैतन्यं यथा स्वप्रकाशम्, एवमविद्याप्रतिबिम्बमहंकारावच्छिन्नजीवचैतन्यमपि वाऽनावृतमेवेत्यन्यतराधिष्ठानत्वसंभवः। एतेनान्तःकरणोपहितचैतन्याधिष्ठानत्वपक्षोऽपि व्याख्यातः, अन्तःकरणं हि उपाधिरेव, न विशेषणमिति नाहं गज इति प्रतीत्यापादः।

ननु स्वाप्नपदार्थानामधिष्ठानमनवच्छिन्नं चैतन्यं वा बिम्बचैतन्यं वाऽविद्याप्रतिबिम्बचैतन्यं वाऽहंकारोपहितचैतन्यं वेति मतचतुष्टयं विद्यते। तत्रानवच्छिन्नचैतन्याधिष्ठानत्वपक्षे स्वाप्नगजादेर्देहाद् बहिःस्थस्य साक्षात् चक्षुरादीन्द्रियोपरमेण चाक्षुषवृत्तिद्वारा वा साक्षिसंबन्धाभावात् देहान्तरेव चैतन्यस्याधिष्ठानत्वमङ्गीकरणीयम्। अत एव दृश्यमानपरिमाणोचितदेशसंपत्त्यभावात् स्वाप्नगजादीनां मायामयत्वमुपपद्यत इति वर्णनीयम्। नहीदमपि संभवति ; बिम्बचैतन्यस्येश्वरपदाभिधेयस्यावृततया तत्संबन्धेनापि स्वाप्नप्रतिभासासंभवात्। अन्तःकरणस्य बहिरस्वातन्त्र्येऽपि अन्तः स्वतन्त्रतया स्वयमेव वृत्तिसंभवात्, वृत्तिद्वारा वृत्तिमदन्तःकरणोपधानेन साक्षिसम्बन्धात् स्वाप्निकभानोपपादने त्वहं गज इति प्रतीतिरापद्येत। प्रतिबिम्बचैतन्यमधिष्ठानमिति पक्षेऽपि ब्रह्मचैतन्यस्येवावृतत्वात्प्रतिबिम्बस्य चानावृतत्वात् स्वाप्नगजाद्यध्याससमय एवान्तःकरणवृत्तेरपि पश्यामीत्यनुभवोपपत्त्यर्थं कल्पनीयतयोक्तापत्तिरनिवार्यैव। अन्तःकरणोपहितचैतन्याधिष्ठानत्वपक्षे तु स्फुटोऽयं दोषः समापततीत्याशङ्क्याह—अहं गज इतीति।

**ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीमधिष्ठानसाक्षात्काराभावेन जागरणेऽपि स्वप्नोपलब्धा गजादयोऽनुवर्तेरन्, उच्यते :—कार्यविनाशो हि द्विविधः—कश्चिदुपादानेन सह, कश्चित्तु विद्यमान एव उपादाने। आद्यो बाधः, द्वितीयस्तु निवृत्तिः। आद्यस्य कारणमधिष्ठानतत्त्वसाक्षात्कारः; तेन विना उपादानभूताया अविद्याया अनिवृत्तेः। द्वितीयस्य कारणं विरोधिवृत्त्युत्पत्तिः दोषनिवृत्तिर्वा। तदिह ब्रह्म-**

**पूर्ववदिति।** यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वं तस्य तदाकारानुभवविषयत्वमिति रीत्येत्यर्थः। अत्र चान्तःकरणोपहितचैतन्याधिष्ठानत्वपक्षेऽविद्याप्रतिबिम्बजीवचैतन्याधिष्ठानत्वपक्षे च "अथ रथान् रथयोगान् पथः सृजते" इतीश्वरकर्तृकसृष्टिवाक्यानुपपत्तिरिति बिम्बचैतन्यमधिष्ठानमिति पक्षः, स्वप्नप्रपञ्चबाधोपपत्त्यर्थं प्रतिबिम्बचैतन्यमेवाधिष्ठानमिति पक्षः। पक्षद्वयमपीदं नाद्वैतविरोधीत्यभिप्रायेणाह—**स्वाप्नगजादय इति। मायापरिणामा इति।** प्रतिबिम्बचैतन्यं बिम्बचैतन्यं वाधिष्ठानमिति पक्षाङ्गीकारादिति भावः।

**अन्तःकरणद्वारेति।** अन्तःकरणोपहितचैतन्यमविद्याप्रतिबिम्बं वा चैतन्यमवस्थाज्ञानस्यैवाश्रय इति व्यावहारिकजीवज्ञानात् स्वप्नप्रपञ्चबाध इति पक्षद्वयाङ्गीकारादिति भावः॥

ननु वृत्तिप्रतिबिम्बचैतन्यं बिम्बभूतशुद्धचैतन्यमेवेति सिद्धान्तलेशसंग्रहव्याख्यायां व्यक्तम्। एवंच शुद्धचैतन्याधिष्ठानत्व एव पर्यवसानात् जाग्रत्प्रपञ्चात्स्वाप्नप्रपञ्चस्य न विशेषसिद्धिरित्याशयेन शङ्कते—**नन्विति।**

शुद्धचैतन्याधिष्ठानत्वपक्षे ब्रह्मसाक्षात्कारपर्यन्तं बाधाभावेऽपि विनाशो विद्यत एवेति न जाग्रत्कालेऽपि स्वाप्नानुवृत्त्यापातः। यथाहि घटादीनां दण्डादिपातेन ब्रह्मसाक्षात्कारात्पूर्वं नाशमात्रेण न पुनरनुवृत्तिरेवमिति निरूपयितुं कार्यविनाशं विभजते—**कार्यविनाशो हीति।**

साक्षात्काराभावात् स्वप्नप्रपञ्चो मा बाधिष्ट, मुसलप्रहारेण घटादेरिव विरोधिप्रत्ययान्तरोदयेन स्वप्नजनकीभूतनिद्रादिदोषनाशेन वा गजादेर्निवृत्तौ को विरोधः? एवञ्च शुक्तिरूप्यस्य शुक्त्यवच्छिन्न चैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः। मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्यतया रजतस्य तत्र शुक्तित्वज्ञानेना निवर्त्यतया शुक्तिज्ञानात् निवृत्तिमात्रं मुसलप्रहारेण घटस्येव ।

कारणात्मना विनाशः, कारणरूपेणाप्यभावो बाधः, कारणात्मनाऽवस्थानं निवृत्तिरिति विभाग इति भावः ।

मुसलप्रहारेणेति । मुसलप्रहारेण घटादेर्यथा निवृत्तिः, एवं विरोधिप्रत्ययान्तरोदयेन निद्रादिदोषनाशेन वा गजादिनिवृत्तौ न कोऽपि विरोध इति भावः । शुक्तिरूप्यादावपि मूलाविद्याकार्यत्वपक्षे शुक्तितत्त्वसाक्षात्कारेण निवृत्तिरेवाभिप्रेता, नतु बाधः, स तु तूलाविद्याकार्यत्वपक्ष एवेति निरूपयति—एवं च शुक्तिरूप्यस्येति ॥ बाध इति ।

कालत्रयेति । स्वरूपेण पारमार्थिकरूपेण वा त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वापरपर्यायबाधप्रतियोगित्वेनाबाधितत्वाभावेन विषयप्रत्यक्षत्वलक्षणस्य शुक्तिरूप्ये नातिव्याप्तिः ।

अत्र च मूलाविद्याकार्यत्वपक्षेऽबाधितपदेनागन्तुकदोषसहकृताविद्याकार्येतरत्वं विवक्षितम्, नतु निवृत्त्यप्रतियोगित्वम् ; घटादौ विषयप्रत्यक्षत्वलक्षणस्याव्याप्तेः, कारणरूपेण नाशाप्रतियोगित्वं हि व्यवहारकाले शुक्तिरूप्यस्यापि विद्यत एवेति तस्य विवक्षायां शुक्तिरूप्ये विषयप्रत्यक्षप्रमात्वलक्षणस्यातिव्याप्तिरापद्येतेति भावः ।

ननु—एवमप्यनिर्वचनीयरजतोत्पत्तिवादोऽयं न सङ्गतः, नेदं रजतं नात्र रजतमिति प्रतीतिर्हि त्रैकालिकनिषेधमवगाहत इति खलु भवतां मतम् । तच्च न युज्यते, तस्य प्रतिभासकाले भवद्भिः सत्त्वाभ्युपगमेन त्रैकालिकनिषेधायोगात् । "लौकिकपारमार्थिकरजतमेव स्वरूपेण पारमार्थिकत्वेन वा निषेधप्रतियोगी"ति

ननु शुक्तौ रजतस्य प्रातिभासिकसमये सत्ताभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात्, किन्तु इदानीं इदं न रजतमिति स्यात्, इदानीं घटः श्यामो नेतिवदिति चेत्, न, न हि तत्र रजतत्वावच्छिन्नप्रतियोगिकाभावो निषेधधीविषयः, किन्तु लौकिकपारमार्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रति-

विवरणादिसिद्धान्तोऽप्यत एवोपपद्यते। एवंच नेदं रजतमिति प्रतीतिरिदानीं घटः श्यामो नेतिवदिदानीमिदं रजतं नेत्येव गाह्त इत्याशयेन शङ्कते—नन्विति।

अनिर्वचनीयं हि रजतं न सत्, नाप्यसत्, नापि सदसदिति सदसद्विलक्षणम्। तस्य च शुक्तौ स्वरूपेण प्रतीतिभासेऽपि सत्त्वं नास्तीति स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं न कथमपि बोद्धुं शक्यत इति पारमार्थिकत्वेन त्रैकालिकनिषेध एवात्राभिमत इति पारमार्थिकत्वेन तन्निषेधस्य रजतपारमार्थिकत्वनिषेध एव पर्यवसानात् रजतमिथ्यात्वं नानुपपन्नमिति सूचयन्नुक्ताशङ्कां समाधत्ते—नेति।

तत्र नेदं रजतं नात्र रजतमिति ज्ञानयोः। रजते रजतत्वसत्त्वेन रजतत्वावच्छिन्नप्रतियोगिताकाभावो न प्रसिद्ध्यति। यद्यपि प्रातिभासिकरजतज्ञानेन रजतार्थिप्रवृत्तिरनुभूयमाना न तत्र रजतत्वाङ्गीकारेणैव समर्थनीया; व्यावहारिकरजततादात्म्यमात्राङ्गीकारेणापि तत्संभवादित्यद्वैतसिद्धिसमर्थितप्राचीनमतानुसारेण रजतत्वमपि व्यधिकरणधर्म एव; तथापि नवीनमते व्यावहारिकप्रातिभासिकसाधारणस्यैकस्य रजतत्वस्याङ्गीकारात् न रजतत्वं व्यधिकरणधर्म इति पारमार्थिकत्वावच्छिन्नप्रतियोगिताकाभाव एव निषेधविषय इत्युक्तम्।

लौकिकेति। लौकिकविशेषणतासम्बन्धावच्छिन्नावच्छेदकताकपारमार्थिकत्वावच्छिन्ना या प्रतियोगिता तन्निरूपितानुयोगिताकाभाव इत्यर्थः। पारमार्थिकत्वावच्छिन्नत्वस्य प्रतियोगितायां निवेशात् व्यधिकरणधर्मावच्छिन्नाभाववादोऽत्राङ्गीकृत इत्याह—व्यधिकरणेति। प्रतियोगिताधिकरणावृत्तिधर्मावच्छिन्नप्रतियोगिताकोऽभाव इति वादाङ्गीकारादित्यर्थः। पारमार्थिकत्वस्य

योगिताकः ; व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् ।

शुक्तिरूप्येऽविशेषणत्वेऽपि शुक्तिरूप्यप्रतियोगितायाः तदवच्छिन्नत्वं संभवत्येव ; संयोगेन रूपं नास्तीत्यादौ रूपीयत्वेन संयोगाभावभानमिति मते तथाङ्गीकारात्। उक्तं हि लघुचन्द्रिकायां—"प्रतियोग्यंशे विशेषणतानापन्नस्यैव व्यधिकरणधर्मस्य प्रतियोगितांशेऽवच्छेदकतया विशेषणत्वेने"ति । अयं भावः—यथाहि संयोगेन रूपं नास्तीति ज्ञानोपपत्त्यर्थं संयोगे रूपव्यधिकरणसंबन्धाङ्गीकरणेन व्यधिकरणसम्बन्धावच्छिन्नाभावः स्वीक्रियते, एवं पटत्वेन घटो नास्तीति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रतीतिर्विशेष्यांशस्य भूतलादौ सत्त्वेनाभावासंभवात् शिखी चैत्रो नष्ट इति प्रतीतिर्यथा शिखानाशमात्रमवगाहते, एवं व्यधिकरणधर्ममात्रस्य विशिष्टेऽभावमवगाहत इति पारमार्थिकत्वेन रजताभावज्ञानमिदं रजते पारमार्थिकत्वाभावमेव गोचरयतीति त्रैकालिकनिषेधप्रतियोगित्वं रजतस्य नानुपपन्नम्, रजते पारमार्थिकत्वबाधे पारमार्थिकत्वविशिष्टरूपेण रजतस्यापि बाधादिति भावः ।

**ननु**—प्रतियोग्यंशेऽविशेषणस्य न प्रतियोगितावच्छेदकत्वम् ; घटो न पट इति निश्चयकाले हि न घटत्वविशिष्टो घटः पटत्वेनात्र नास्तीति प्रतीतिर्भवति, या तु तदानीं पटत्वेनात्र घटो नास्तीति प्रतीतिरुपलभ्यते, सा घटत्वपटत्वोभयविशिष्टघटाभावमेव गोचरयति, घटे पटत्वं यद्यपि बाधितम् ; तथापि घटे पटत्वज्ञानं भ्रमात्मकं संभवत्येवेति शुक्तिरूप्ये प्रातिभासिकं पारमार्थिकत्वमङ्गीकरणीयम् । एवंच भ्रमकाले पारमार्थिकत्वस्य भाने पारमार्थिकत्वस्य त्रैकालिकाभावो न भवतीति कथं नेदं रजतमिति पारमार्थिकत्वेनापि त्रैकालिकनिषेधः ? यद्यपि अनिर्वचनीयस्य व्यावहारिकत्वस्य रजते भ्रमकाले सत्त्वेऽपि व्यावहारिकव्यावहारिकत्वस्य तत्राभावात् तस्यैव प्रतियोगितावच्छेदकत्वविवक्षणात् नानुपपत्तिः, अत एव लौकिकपारमार्थिकत्वेति लौकिकविशेषणमपि सार्थकम् ; तथापि नेदं रजतमिति ज्ञानस्य प्रत्यक्षात्मकत्वादभावप्रत्यक्षस्य च व्यधिकरणधर्मावच्छिन्नाभावाविषयत्वात् न नेदं रजतमिति त्रैकालिकनिषेधोपपत्तिः, पटत्वेन घटो नास्तीत्यादिज्ञानं तु यदि अनुमित्यादि-

**ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतं न वा, अनवगमे प्रतियोगितावच्छेदकावच्छिन्नरजतसत्त्वज्ञानाभावाद-भावप्रत्यक्षानुपपत्तिः, अवगमे अपरोक्षावभासस्य तत्कालीन-विषयसत्तानियतत्वात् रजते पारमार्थिकत्वमपि अनिर्वचनीयं**

रूपम्, तर्हि न विरोधः; प्रत्यक्षात्मकं यदि, तर्हि घटे पटत्वाभावगोचरम् आरोपितपटत्वविशिष्टघटप्रतियोगिताकाभावगोचरमंशतो भ्रमात्मकं वाङ्गी-करणीयमित्युभयथाऽपि लौकिकविशेषणतासम्बन्धावच्छिन्नपारमार्थिकत्वाव-च्छिन्नरजताभावगोचरं नेदं रजतमिति प्रत्यक्षमिति कथमुपपद्यत इत्याशयेन शङ्कते—**नन्विति।**

अत्र केचिन्मन्यन्ते—पटत्वेन घटो नास्तीति ज्ञानं न व्यधिकरणधर्मावच्छिन्ना-भावगोचरम्; अनङ्गीकारात्, किन्तु घटे पटत्ववैशिष्ट्याभावगोचरम्। नच यदत्यन्ताभावो नञा बोध्यते तदर्थबोधकपदात् सप्तम्यपेक्षितेति—वाच्यम्; साहित्यस्यात्र तृतीयार्थत्वेन प्रत्ययान्तस्याप्रातिपदिकत्वेन सप्तम्यनपेक्षणात्, प्रातिपदिकार्थात्यन्ताभावबोधस्थल एव सप्तम्यपेक्षणात्। एवं च पारमार्थिकत्वेन रजताभावज्ञानमपि रजते पारमार्थिकत्ववैशिष्ट्याभावगोचरमित्येवाङ्गीकरणीयम्, तत्र च वैशिष्ट्यस्यैव प्रतियोगित्वात्तन्मात्रं कल्पनीयं न पारमार्थिकत्वमपीति पारमार्थिकत्वेन रजतनिषेधपक्षे न कोऽपि विरोधः—इति।

वयं हि अभावज्ञानसामान्ये प्रतियोगितावच्छेदकतादात्म्यवत्प्रतियोगिज्ञानमेव कारणम्, पारमार्थिकत्वेन रजतनिषेधस्थलेऽपि भ्रमप्रतिपन्नत्वात् पारमार्थिक-तादात्म्यस्य पारमार्थिकत्वस्य प्रतियोगितावच्छेदकत्वं रजते तस्यानवगमेऽप्य-बाधितं मन्यामहे; यत्तादात्म्यं प्रतियोगिनि भासते तस्यैव प्रतियोगिताव-च्छेदकत्वात्। पटत्वेन घटो नास्तीत्यादौ त्वसन्निकृष्टत्वात् पटत्वमप्यारोप्यते तत्तादात्म्यमिवेति त्वन्यदेतत्। तथाच रजते पारमार्थिकत्वानुत्पत्तावपि न दोष इति सूचयन्नुक्तापत्तिं परिहरति—**नेति। पारमार्थिकत्वस्येति।**

अधिष्ठानगतस्यैवेदन्त्वस्येव पारमार्थिकत्वस्यापि संसर्गाध्यासमात्रं विवक्षितम्, नतु रजते पारमार्थिकत्वमप्यध्यस्यते। सद्रजतमित्यनुभवोऽपि रजते सत्तादात्म्य-

रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्व तदवच्छिन्नाभावस्तस्मिन् कथं वर्तते इति चेत्, न, पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससम्भवेन रजतनिष्ठपारमार्थिकत्वो-

मेवावगाहते, नतु तत्र सत्त्वमपि, एकसत्तावादाङ्गीकारात्। यथाहि प्राचीनमते रजते व्यावहारिकरजततादात्म्यारोपमात्रेण रजतार्थिप्रवृत्त्युपपत्त्या व्यावहारिकप्रातिभासिकसाधारणरजतत्वं नाङ्गीक्रियते, नापि रजते रजतत्वमुत्पद्यमानमङ्गीक्रियते, एवं रजते पारमार्थिकत्वानङ्गीकारेऽपि पारमार्थिकतादात्म्यस्याङ्गीकारमात्रेण सर्वोपपत्तिः। भ्रमस्थले हि इदंतादात्म्यं इदंत्वसंसर्गः रजतं रजततादात्म्यं रजतत्वसंसर्गश्चेति पञ्चानामेवोत्पत्तिः प्राचीनसंमता, न रजतत्वोत्पत्तिरपि। लोहितः स्फटिक इत्यत्र तु स्फटिके लोहिततादात्म्यस्य लोहितपुष्पप्रतिबिम्बस्य वा यत्र विप्रकृष्टस्थलेऽभावः तत्रैव लोहितत्वस्योत्पत्तिर्नान्यत्रेत्युत्तरग्रन्थोऽप्यत एवोपपद्यते। एवंचैकसत्तावादे रजते पारमार्थिकत्वसंसर्गिस्याभावस्यैव त्रैकालिकनिषेधपदार्थत्वात् रजते पारमार्थिकत्वस्यानवगमेऽपि न दोष इति भावः।

**रजते प्रतिभाससंभवेनेति।** रजते संसर्गप्रतिभाससंभवेनेत्यर्थः। अत्रच रजते पारमार्थिकत्वमनवगतमिति द्वितीयविकल्पानुसार्येव सिद्धान्तः, नतु अवगतमिति प्रथमविकल्पानुसारी। अवगमो हि भ्रमात्मको वा स्यात् प्रमात्मको वा। पक्षद्वयेऽपि पारमार्थिकत्वस्य वस्तुगत्या कल्पनया वा रजते सिद्धान्तिनाप्यनङ्गीकारेण तदवगमासंभवात्। अन्यथा पूर्वपक्षोक्तरीत्याऽपरोक्षावभासस्य तत्कालीनसत्तानियतत्वात् तदवच्छिन्नाभावसंपादनासंभवात्। अस्मन्मते तु रजते पारमार्थिकत्वानवगमेऽपि तत्संसर्गिस्यावगमात् प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानादभावप्रत्ययोपपत्तिः। तथाच सत्यं पारमार्थिकत्वं रजते नावगतं तत्संसर्गित्वं त्ववगतमेवेति नेदं रजतमिति तदभावप्रत्ययोपपत्तिरिति रजतत्रैकालिकनिषेधो नानुपपन्न इति सिद्धान्ताशयः। सत्तात्रैविध्यमते तु स्वरूपेण त्रैकालिकनिषेध एव बाधो न पारमार्थिकत्वेनेति न विरोधः।

नच—रजते पारमार्थिकत्वानवगमे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानाभावादभावप्रत्ययानुपपत्तिरिति—वाच्यम्; दत्तोत्तरत्वात्।

अत्र च स्मृतिभिन्नत्वस्य ज्ञाने निवेशं लघुभूतं परित्यज्य संस्कारमात्रजन्यज्ञानविषयभिन्नत्वस्य स्मृतिविषयभिन्नत्वरूपस्य निवेशे प्रयोजनाभावः, अनधिगतपदमुख्यार्थहानिः, सर्वेषु पक्षेषु वेदान्तिनां मतेऽज्ञानस्य भावरूपत्वेनानधिगतपदस्याज्ञानविषयत्वपरत्वस्यैव योगेन ज्ञानविषयत्वाभावादिपरतयाऽनधिगतपदविवरणायोग इत्यनधिगतत्वं स्वाव्यवहितपूर्वक्षणावच्छिन्नाज्ञानविषयत्वरूपं विवक्षणीयमिति परे मन्यन्ते।

अयं घट इत्यादौ स्वक्षण एवाज्ञानस्याज्ञानविषयताया वा निवृत्तिः, न तु स्वाव्यवहितपूर्वक्षण इति घटादिरनधिगत एव। स्मृतौ तु संस्कारोद्बोधस्याप्यज्ञानविषयतानिवर्तकत्वस्य द्वितीयमिथ्यात्वे ब्रह्मानन्दसरस्वतीभिरुक्तत्वात् स्वाव्यवहितपूर्वक्षणे घटो नाज्ञात इति नातिव्याप्तिः।

वस्तुतस्तु स्वपूर्वस्वकरणक्षणावच्छिन्नाज्ञानविषयत्वमेवानधिगतत्वम्, स्मृतिविषयस्तु स्मृतिकरणानुभवक्षणे नाज्ञानविषय इति न दोषः। विस्तरस्तु बिन्दुटीकायामवगन्तव्यः।

ननु—अत्र पक्षे शुक्तिरूप्यादीनां प्रातिभासिकानामज्ञानविषयत्वाभावात् भ्रमकरणक्षणावच्छिन्नाज्ञानविषयत्वाभावेनानधिगतविषयत्वाभावेनैवातिप्रसङ्गनिरासेनाबाधितपदं व्यर्थम्, न च—अज्ञानं द्विविधम्, असत्त्वापादकमभानापादकं च, तत्र द्वितीयं यद्यपि शुक्तिरूप्यादीनां नास्ति, प्रथमं तु तेषामपि विद्यत एवेति दृश्यत्वनिरुक्तौ ब्रह्मानन्दसरस्वतीभिरुक्तम्, एवञ्च भ्रमकाले सर्वविधाज्ञानविषयताभावेऽपि भ्रमपूर्वमसत्त्वापादकाज्ञानविषयत्वसत्त्वादबाधितपदं सार्थकमिति—वाच्यम्; एवमपि अनधिगतपदेनाभानापादकाज्ञानविषयत्वविवक्षणेनैवोक्तातिप्रसङ्गवारणेनाबाधितपदवैयर्थ्यादिति—चेत्, न; अनधिगतपदेनोक्तान्यतराज्ञानविषयत्वस्यैव विवक्षणीयत्वात्, अन्यथा प्रातिभासिकसुखादिप्रमायां नित्यपरोक्षगुरुत्वादिप्रमायां चाव्याप्तेः, तेषामभानापादकाज्ञानाविषयत्वात्। तत्त्वमसिवाक्यजन्यासङ्कीर्णस्वरूपचैतन्यविषयनिर्विकल्पज्ञानं तु यद्यपि पदार्थज्ञानकरणतामते तदादिपदानामपि स्वरूपचैतन्यमेव लक्षणयाऽर्थ इति स्वकरणक्षणावच्छिन्नाज्ञानविषयस्वरूपचैतन्यविषयं न भवति; तथापि पदार्थज्ञानदशायामसङ्कीर्णस्वरूपज्ञानं तदादिपदैर्न भवति, अन्यथा पदद्वयवैयर्थ्यात्, किन्तु वाक्येनैवेति बिन्दुटीकायामुपपादितत्वात् तत्रापि स्वकरणक्षणावच्छिन्नाज्ञानविषयविषयकत्वमक्षतम्।

एतेन साम्प्रदायिकमते तत्त्वमसीतिवाक्यजन्यज्ञाने न स्मृतिव्यावृत्तं प्रमात्वमिति शिखामण्युक्तिरपास्ता; अन्यथा साम्प्रदायिकमतेऽद्वितीयब्रह्मसद्भावे प्रमाणाभावेन महाननाश्वासः स्यात्। न हि स्मृतिसाधारणो प्रमा स्वतो वस्तुसाधिका।

यत्तु विवरणाचार्यैरष्टमवर्णके—"तत्त्वमसी"तिवाक्यस्य जीवब्रह्मपदार्थप्रतीतिसमयप्रतिपन्नैक्यविषयतयाऽनुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यमि"-त्युक्तम्, तदपि स्वरूपचैतन्यविषयत्वेनानुवादत्वेऽप्यसङ्कीर्णस्वरूपचैतन्यविषयतया निवर्तकत्वमित्यभिप्रायमेवेति न विरोधः।

इदञ्च प्रमात्वं घटादिद्वितीयादिदर्शनसाधारणमिति द्वितीयादिदर्शनस्य न प्रमात्वमिष्टमित्याशुबोधिनीमतं परास्तम्। प्रसिद्धमिदं द्वितीयादिदर्शनमपि प्रमिति। अत एव न्यायवार्तिकतात्पर्यटीकापरिशुद्धौ नित्यस्याकाशादेर्जन्मान्तरेऽन्यस्य च द्वितीयज्ञानेऽव्याप्तिरुक्तलक्षण आपादितोपपद्यते।

ननु—तद्वति तत्प्रकारं ज्ञानं प्रमेति नैयायिकसम्मतं प्रमालक्षणं परित्यज्य किमिति लक्षणान्तराश्रयणम्? इति—चेत्, अस्माभिर्भ्रमस्थलेऽनिर्वचनीयख्यात्यङ्गीकारेण शुक्तौ विद्यमानस्यैव प्रातिभासिकस्य रजतस्य भानाङ्गीकारेण तस्य भ्रमसाधारणत्वात्। एतेन तदभाववति तत्प्रकारकज्ञानत्वं भ्रमत्वमित्यपि निरस्तम्; प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं सर्वस्य प्रपञ्चस्याङ्गीकर्तृणामस्माकं मते अयं घटः भूतलं घटवदित्यादिप्रमात्मकज्ञानसाधारण्यात्तस्य लक्षणस्य॥

अत एव हि वेदान्तानां सगुणानां न गुणादौ तात्पर्यम्, अधिगतत्वात्, किन्तु अनधिगताद्वितीयस्वरूपचैतन्यसम्पादकतयैवोपयोग इत्यद्वैतसिद्धिः। अन्यथा निर्गुणसगुणवाक्ययोः समबलत्वापत्त्या वस्तुनि विकल्पायोगेन सर्वेषामपि वेदान्तानामप्रामाण्यमापद्येत। अत एव—

"उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"

इति तात्पर्यग्राहकप्रमाणेषु अपूर्वताया अपि अनधिगतत्वापरपर्यायाया निवेशः; अन्यथा "ऽग्निर्हिमस्य भेषजमि"त्यादावपि प्रामाण्यापत्त्या अज्ञातार्थबोधकत्वमिव वेदस्येति नियमो भज्येत।

## स्मृतिसाधारणं तु अबाधितार्थविषयकज्ञानत्वम् ।

किञ्च व्यवहारे भाट्टनय इति भाट्टप्रक्रिययैव सर्वस्य व्यवहारस्याद्वैतिभि-रादरादत्रानधिगताबाधितार्थगोचरं ज्ञानं प्रमेति तेषामेव लक्षणेनाद्वैतमताविरोधेन व्यवहारो युक्तः । एवञ्च विषयेऽनधिगतत्वविशेषणं स्मृतावतिव्याप्तिवारणार्थम्, अबाधितत्वविशेषणं भ्रमेऽतिव्याप्तिवारणार्थमिति सिद्धम् ।

ननु—ज्ञानपदं किमर्थम् ? ज्ञानेच्छाकृतीनामेव सविषयत्वात्, तत्र चेच्छाकृत्योरधिगतविषयत्वनियमेनातिप्रसङ्गाप्रसरादिति—चेत्, अत्र शिखामणि-काराः—चक्षुरादीन्द्रियेऽतिप्रसङ्गवारणार्थं स्वरूपकथनार्थं वेति—वर्णयन्ति ॥

वस्तुतस्तु उद्बुद्धसंस्कारेऽतिव्याप्तिवारणार्थं ज्ञानपदम्, न च स्वकरणक्षणा-वच्छिन्नाज्ञानविषयत्वाभावात् न दोषः, संस्कारं प्रति अनुभवस्य करणत्वा-दिति—वाच्यम् ; व्यापारवत्त्वघटितकरणत्वं संस्कारनिरूपितं हि अनुभवस्य न सम्भवति, सम्भवेऽपि संस्कारोद्बोधकरणत्वं न भवत्येव ; स्वकरणक्षणावच्छिन्ना-ज्ञानविषयत्वस्यापि सत्त्वात्, संस्कारोद्बोधसामग्र्या एव तत्करणत्वात् ॥

अर्थपदं तु स्वरूपकथनार्थमेव । यत्तु आशुबोधिन्यां जात्यादीनां वेदान्त-मतेऽपदार्थत्वात् तद्ज्ञानेऽतिव्याप्तिवारणार्थमर्थपदमिति प्रकारान्तरमुक्तम्, तन्न ; वेदान्तिनां मते सत्तादात्म्यमेव जातिर्न तु समवायादिघटितमित्यङ्गीकारेण समवायादीनामलीकत्वस्यैवाभिमतत्वात् अलीकस्य चास्मदुक्तपरिष्करणघटका-ऽज्ञानविषयत्वाभावेनैवालीकज्ञानेऽतिव्याप्तिवारणेनार्थपदवैयर्थ्यात् । आशुबोधिनी-सम्मतपरिष्कारेऽपि संस्कारमात्रोपस्थापितभिन्नत्वरूपानधिगतत्वस्यालीके संस्कारा-प्रसिद्ध्याऽसम्भवेन तत एव वारणसम्भवात् ।

किञ्च विषयत्वं हि तादात्म्यम् ; तच्च न सदसतोरिति, अलीकस्यानधि-गतस्याबाधितस्यापि ज्ञानेन तादात्म्यासम्भवेन विषयत्वाभावादनधिगताबाधित-विषयज्ञानत्वं प्रमात्वमित्यङ्गीकारे न कोऽपि दोषः ; अन्यथा उभयसाधारणा-लीकज्ञानातिप्रसङ्गवारणार्थत्वस्यैव सम्भवात् जातिपर्यन्तानुधावनं वितथमेव स्यात् ।

**स्मृतिसाधारणमिति ।** स्मृत्यनुगतमित्यर्थः । स्मृत्यनुभववृत्तीति यावत् । **अबाधितेति ।** बाधितत्वञ्च स्वाधिष्ठानतत्त्वज्ञाननिवर्त्त्याविद्यो-

पादानकत्वम्, न तु विपरीतप्रमाविषयत्वम्, तेन नात्माश्रयप्रसङ्गः। इच्छादावतिव्याप्तिवारणार्थं ज्ञानपदम्। अर्थपदन्तु भ्रमस्मृत्यादिज्ञानेऽतिव्याप्तिवारणार्थमिति विशेषः। ज्ञानपदं भावव्युत्पत्त्या वृत्त्यवच्छिन्नचैतन्यपरम्, नतु करणव्युत्पत्त्या चक्षुरादीन्द्रियपरमिति शिखामणिविवरणं स्पष्टप्रतिपत्त्यर्थमेव॥

ननु—अयं घटः, अयं घटः, अयं घट इति धारां वहति धारावाहिकज्ञाने पूर्वपूर्वप्रथमादिज्ञानविषयद्वितीयादिज्ञाने प्रमालक्षणमिदमव्याप्तम्, न च—द्वितीयादिज्ञानानामप्रामाण्यमेवेति—वाच्यम्; अर्थप्रदर्शनव्यापारवदेव ज्ञानं प्रवर्तकमित्यर्थप्रदर्शनस्य द्वितीयादिज्ञानसाधारण्यात्तेषामपि प्रामाण्यस्याङ्गीकरणीयत्वात्॥

न च—"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।" इति मीमांसकसिद्धान्तात् प्रथमादिज्ञानस्य प्रथमादिक्षणविशेषविषयत्वमवश्यमङ्गीकरणीयम्, तदुक्तं न्यायपरिशुद्धौ—"समयविशेषविषयत्वात् प्रत्ययानामि"ति। एवञ्च द्वितीयादिज्ञानस्य द्वितीयादिक्षणविशेषविषयत्वेन तस्य च प्रथमादिज्ञानाविषयत्वात् प्रामाण्योपपत्तिरिति—वाच्यम्; अतिसूक्ष्मस्य क्षणस्यास्माभिरनाकलनेन क्षणविषयतयोक्तदोषावारणात्॥

तदुक्तं न्यायवार्तिकतात्पर्यटीकायाम्—"नच—कालभेदेन धारावाहिकत्वं धारावाहिकानामिति—वाच्यम्, परमसूक्ष्माणां कालकलादिभेदानां पिशितलोचनैरस्माभिरनाकलनात्" इति॥

अस्तु वा कथञ्चिदस्मादृशानामतिसूक्ष्मकालकलादिभेदावगमः, एवमपि कालस्य नीरूपत्वेन चाक्षुषप्रत्यक्षे रूपवत्तायाः कारणत्वेन तादृशकारणाभावेन न प्रत्यक्षत्वसम्भवः, नच—रूपवत्त्वं चाक्षुषप्रत्यक्षसामान्ये न प्रयोजकम्, रूपे व्यभिचारात्, न हि रूपेऽपि रूपं विद्यते, न च तत्र प्रत्यक्षम्; अतः कालस्यापि प्रत्यक्षत्वं सम्भवतीति—वाच्यम्; नहि वयं चाक्षुषप्रत्यक्षसामान्ये रूपवत्त्वं प्रयोजकमिच्छामः, किन्तु द्रव्यचाक्षुषतायामिति कालप्रत्यक्षतावादो न सम्भवत्येव। एवञ्च धारावाहिकज्ञानेऽव्याप्तमिति—चेत्, न; प्रतिनियतेन्द्रियग्राह्यद्रव्यचाक्षुषतायामेव रूपवत्त्वं तन्त्रम्, नतु सर्वेन्द्रियग्राह्यद्रव्यचाक्षुषतायामपि। अत एव नीरूपस्यात्मनः प्रतिबिम्बवादो युज्यते; अन्यथा तत्रापि रूपवत्त्वप्रयोजकत्वापत्त्या तदसाङ्गत्यापत्तेः॥

किञ्च यथा रूपे व्यभिचारात् द्रव्यचाक्षुषतायामेव रूपमपेक्षितमिति नियमस्य सङ्कोचः क्रियते, तथा इदानीं घट इत्याद्यनुभवविरोधात् कालभिन्नद्रव्यचाक्षुषतायां रूपं प्रयोजकमिति कल्पयामः । अथवा नीलं नभ इति प्रत्यक्षात् न वस्तुगत्या रूपवत्त्वं चाक्षुषताप्रयोजकम्, किन्तु आरोपितरूपमपि । औपाधिकाद्यारोपितं रूपं कालेऽपि सम्भवतीति तत्प्रत्यक्षतायां न कोऽपि दोषः ।

यत्तु "अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ती"ति भाष्यविरोधः शिखामणावापादितः, तदाकाशस्य स्वरूपेणाप्रत्यक्षत्वस्यैवात्र भाष्ये वर्णितत्वादकिञ्चित्करम् । आकाशे बलाका इति तु आकाशांशेऽलौकिकप्रत्यक्षमेव, सर्वेन्द्रियजन्यज्ञानाविषयत्वात्, कालस्य तु त्वाचादिप्रत्यक्षे कालांशेऽपि लौकिकप्रत्यक्षत्वमेवाङ्गीकरणीयम् ; बाधकाभावात् । एवञ्च तत्सामान्यादितरेषु तथात्वमिति न्यायेन चाक्षुषप्रत्यक्षेऽपि कालभानोपपत्तेर्न चाक्षुषत्वं तस्येति शिखामणिगतम्—परास्तम् ; रूपप्रत्यक्षेऽप्येवं कल्पनाप्रसङ्गेन रूपलौकिकप्रत्यक्षताया अपि असिद्धिप्रसङ्गात् ।

एतेन—इदानीं घट इति प्रतीत्या कालस्य चाक्षुषत्वे आकाशे बलाकेति प्रतीत्याऽऽकाशस्यापि चाक्षुषतापत्तिरित्यादिना कालप्रत्यक्षताया नैयायिकैर्निरासात् न धारावाहिकद्वितीयादिज्ञानप्रमात्वमिति यतीन्द्रमतदीपिकामतं प्रत्युक्तम् ; यतीन्द्रमतदीपिकायामेव पञ्चमावतारे कालस्य प्रत्यक्षत्वमेव तेन तदनुमेयवादः" इत्यादिना कालप्रत्यक्षतायाः समर्थनाच्च ॥

यत्तु भावबोधिन्यां यथा घटेन जात्यादिषु सम्बन्धविशेषस्यैव चक्षुःसन्निकर्षत्वाङ्गीकारेण तेषामपि प्रत्यक्षविषयत्वं न्यायमते, एवं घटादौ चक्षुःसंयोगात्तद्विशेषणे कालेऽपि सम्बन्धविशेषस्यैव सन्निकर्षत्वाभ्युपगमेन कालस्यापि प्रत्यक्षविषयत्वावश्यकत्वादित्युक्तम्, तदिदं न सङ्गतम् ; नीरूपत्वेन खलु कालस्याप्रत्यक्षत्वमाशङ्कितम्, नतु सन्निकर्षाभावेन ; द्रव्यचाक्षुषतायामेव रूपस्य प्रयोजकत्वाच्च जात्यादिप्रत्यक्षे ऽनुपपत्तिः । नहि घटविशेषणत्वमात्रेण कालस्य प्रत्यक्षत्वम् ; बलाकादिविशेषणत्वेनाकाशादीनामपि चाक्षुषतापत्तेः । अत एव पर्वतो वह्निमानित्यत्र वह्नेरप्रत्यक्षत्वम्, अन्यथा संयुक्तसंयोगस्य सन्निकर्षत्वे

**नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविषयकत्वेन न तत्राव्याप्तिः ।**

**किञ्च सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु** यावत् तत्स्फुरणं तावदेकैव सा बुद्धिः, न तु नाना, बुद्धेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात् ।

तत्रापि प्रत्यक्षत्वापत्तिः ॥ एवंच कालप्रत्यक्षतोपपत्त्या न धारावाहिकद्वितीयादिज्ञानेष्वव्याप्तिः । तदिदं सर्वं मनसि निधायाह—**नीरूपस्यापीति** ॥

यद्यपि कालः नीरूपः ; तथापि इन्द्रियवेद्य इत्यभ्युपगम्यते । एवंच धारावाहिकबुद्धिगतद्वितीयादिज्ञानानां **पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेन** प्रथमज्ञानाद्यविषयद्वितीयादिक्षणविशेषविशिष्टविषयकत्वेन । **नाव्याप्तिः ।** द्वितीयादिज्ञानेष्वित्यादिः ; द्वितीयादिज्ञानेषु नाव्याप्तिरिति विशिष्टवाक्यार्थः ।

परमार्थतस्तु—सिद्धान्तलेशसंग्रहे न्यायचन्द्रिकाकृतस्त्वाहुरित्यादिना द्वितीयादिज्ञाननिवर्त्यान्यज्ञानानि विद्यन्ते, तेषां द्वितीयादिज्ञानेन विनाशः, प्रथमज्ञानेन प्रथमाज्ञानविनाशेन भासमानस्यैव द्वितीयाज्ञानविषयत्वमपि विद्यते एव । अवस्थारूपाण्यज्ञानानि हि तत्तत्कालोपलक्षितस्वरूपावारकाणीत्याद्युक्तम् । एवञ्च घटांशेऽपि धारावाहिकज्ञानस्थले निरुक्तं प्रमात्वं कालाप्रत्यक्षतायामप्युपपद्यत एव ।

ननु धारावाहिकस्थले स्थूलकालविशिष्टाज्ञानस्य प्रथमज्ञानेनैव निवृत्तेर्न द्वितीयादिज्ञानेऽज्ञातकालांशभानमिति धारावाहिकस्थले एकैव वृत्तिरङ्गीकरणीयेति सिद्धान्तलेशसंग्रहे वर्णितम्, एवञ्च तदुक्तरीत्या नोक्तशङ्काया अवसरोऽपीत्याह—**किञ्चेति । न ज्ञानभेद इति ।** न वृत्तिभेद इत्यर्थः ।

अत्राशुबोधिनीकाराः—इदानीं घट इत्यनुभवेन स्थूलकालस्य प्रत्यक्षविषयत्वेऽप्यतिसूक्ष्मक्षणविषयत्वायोगेन धारावाहिकद्वितीयज्ञानप्रमात्वं न सम्भवतीत्यस्वारस्यात् किञ्चेति ग्रन्थप्रवृत्तिरिति—वर्णयन्ति । तन्न, क्षणसमूहस्यैव स्थूलकालत्वात् क्षणप्रत्यक्षताप्यर्थसिद्धेति पूर्वोक्तसिद्धान्तलेशसंग्रहविरोधादापातरमणीयमेव ।

यावद्घटस्फुरणम्, तावद्घटाकारान्तःकरणवृत्तिरेकैव, न तु नाना; वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं स्थायित्वाभ्युपगमात्। तथाच

यत्तु धारावाहिकद्वितीयादिज्ञानं न प्रमाणमिति मतान्तरे सिद्धान्तलेशसंग्रहे उपन्यस्तम्, तदपि न कालाप्रत्यक्षतया, किन्तु अधिगत-काल-विषयतयैवेति काला-प्रत्यक्षतयैतद्ग्रन्थ-प्रवृत्तिरिति शिखामणिविवरणमपि प्रत्युक्तम्।

**स्वविरोधीति।** वृत्तिविरोधित्वञ्च क्वचित् स्वभिन्नपदार्थाकारवृत्तेः; यथा घटवृत्तेः पटवृत्तिर्विरोधिनी, औदासीन्यावस्थायामपि औदासीन्याकारवृत्तिर्विद्यत एव। अत एव—

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्"।

इति भगवद्गीतावचनमुपपद्यते। यत्त्वत्र शिखामणौ वृत्तिपदं प्रकृताभिप्रायम्, अन्यथौदासीन्यावस्थालोपप्रसङ्गादित्युक्तम्, तदेतेन परास्तम्; तत्रापि वृत्तेरङ्गी-कारात्॥

अखण्डाकारवृत्तिस्तु स्वयमेव स्वस्य विरोधिनीति नाखण्डाकारवृत्त्या अवि-नाशापत्तिः। अखण्डाकारवृत्तिर्हि अधिष्ठानज्ञानत्वेन अविद्यादिसर्वदृश्यविनाशि-केति दृश्यत्वाविशेषात् स्वस्यापि नाशिकेति युक्तम्। नाशकत्वन्तु अधिष्ठानज्ञान-त्वेन, नाश्यत्वं तु दृश्यत्वेनेति न विरोधः। उपपादितमिदं बिन्दुटीकायां अखण्डा-कारवृत्तिरेव सर्वदृश्यनाशरूपेति स्वस्यापि विरोधिनीति॥

**पर्यन्तमिति।** प्राक्क्षणं यावदित्यर्थः। एवञ्च वृत्त्यन्तरोत्पादसामग्र्या एव पूर्वतनवृत्तिनाशकत्वात् न वृत्तिद्वयस्य सकृदवभासप्रसङ्गः। इदं तु द्वितीय-वृत्तिः पूर्वतनवृत्तिनाशरूपेति मतेन, अतिरिक्तत्वमते तु वृत्तिक्षणं यावदिति व्याख्येयम्। विनश्यदवस्थत्वाच्च पूर्वतनवृत्तेर्न सकृदवभासप्रसङ्गः। एवं चाख-ण्डाकारवृत्तेः स्वनाश्यत्वानङ्गीकारेऽपि न दोषः।

**स्थायित्वाभ्युपगमात्** सत्त्वाभ्युपगमात्। योगिनामप्यसंप्रज्ञात-समाधिनिरोधाख्यवृत्तिविशेष एव।

"आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत॥" इति समाधौ आत्मा-कारवृत्तिर्वा तत्र विद्यत इति न दोषः।

तत्प्रतिफलितचैतन्यरूपं घटादिज्ञानमपि तत्र तावत्कालीन-मेकमेवेति नाव्याप्तिशङ्कापि।

ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वाद् तद् ज्ञानं कथं प्रमाणम्? उच्यते; ब्रह्मसाक्षात्कारानन्तरं हि

**तत्प्रतिफलितेति।** तत्प्रतिबिम्बितेत्यर्थः। वस्तुतो नीरूपस्यापि चैतन्यस्यारोपितरूपवत्त्वेन प्रतिबिम्बसम्भवः। विस्तरश्चास्य विषयस्य ब्रह्मविद्याभरणे कल्पतरुपरिमले च द्रष्टव्यः। **एकमिति।** वृत्तिरूपोपाधिभेदाभावेनौपाधिकभेदरहितमित्यर्थः। **नाव्याप्तिशङ्कापीति।** द्वितीयादिज्ञानविभागाभावादित्यर्थः।

ननु अनधिगताबाधितेति लक्षणे अबाधितत्वं यदि प्रतीतिकालबाधाप्रतियोगित्वम्, तर्हि शुक्तिरूप्यादिज्ञानस्यापि तादृगार्थविषयत्वेनाबाधितपदवैयर्थ्यम्; यदि ब्रह्मप्रमातिरिक्तजन्यबाधाप्रतियोगित्वरूपं व्यवहारकालाबाध्यत्वं विवक्ष्यते, तर्हि देहात्मैक्यज्ञानेऽव्याप्तिः, ब्रह्मप्रमाव्यवहितपूर्वप्रातिभासिकज्ञाने चातिव्याप्तिः। त्रैकालिकबाधाप्रतियोगित्वरूपत्वे तु घटादीनां त्रैकालिकबाधाप्रतियोगित्वाभावेन तद्ज्ञानेऽव्याप्तिरित्याशङ्कां च समाधत्ते—**नन्विति।**

**मिथ्यात्वेन बाधितत्वादिति।** त्रैकालिकनिषेधप्रतियोगित्व-ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वाभिन्नबाधविषयत्वेनेत्यर्थः। मिथ्यात्वेनेति तृतीयाऽभेदे वर्तते। **कथं प्रमाणम्।** कथमाक्षेपे। प्रमाणं न भवतीत्यर्थः। उक्तप्रमालक्षणमव्याप्तमिति यावत्।

अत्रायमाशयः—अबाधितपदेन ब्रह्मसाक्षात्कारपूर्वक्षणाभिन्नव्यवहारकालाबाधितत्वमेव विवक्ष्यते। एतादृशं चाबाधितविषयत्वं देहात्मैक्यज्ञानस्यापि विद्यत एव। व्यवहारदशायामबाधितत्वं च पक्षवाज्ञानतत्कार्यान्यतरभिन्नत्वमिति न ब्रह्मप्रमाव्यवहितपूर्वप्रातिभासिकज्ञानेऽतिव्याप्तिः, शुक्तिरूप्योपादानमज्ञानं तूलाज्ञानं पक्षवाज्ञानमिति च व्यवह्रियते। एवंच नोक्तदोषप्रसङ्ग इत्याह—**ब्रह्मसाक्षात्कारेति।**

घटादीनां बाधः; "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"ति श्रुतेः, न तु संसारदशायां बाधः; "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती"ति श्रुतेः। तथाचाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः। तदुक्तम्—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादि"ति॥

**बाध इति।** सोपादानकार्यस्य विनाश एव बाधपदार्थः। घटाद्युपादानं च मूलाविद्या ब्रह्मसाक्षात्कारमात्रनिवर्त्या; ज्ञानाज्ञानयोः समानविषययोरेव निवर्त्यनिवर्तकभावात्। तमिममर्थं श्रुतिसिद्धं वर्णयितुं तदर्थबोधिकां श्रुतिमुपन्यस्यति—**यत्र त्विति।**

**यत्र** यस्यामवस्थायाम्। **अस्य** कृतात्मसाक्षात्कारस्य। **सर्वमात्मैवाभूत्, तत्** तदा **केन कं पश्येत्** न किमपि करणम्, न किमपि कर्म, न कापि क्रियेत्यर्थः। एवंच सर्वात्मभावाभिन्नात्मसाक्षात्कारवदुद्देशेन साधनाद्यभावबोधनात् ब्रह्मसाक्षात्कारानन्तरं घटादीनां बाध इति युक्तमेव। संसारदशायां घटादीनामबाध इत्यत्र प्रमाणभूतां श्रुतिं निर्दिशति—**यत्रेति।**

यस्यामवस्थायां द्वैतं भवतीव, न तु वस्तुतो भवति; **तत्** तदा, इतर इतरं पश्यति इति श्रुतेरर्थः। एवंच संसारदशायामबाधः सिद्धः। यत्तु—"सर्वमात्मैवाभूदि"त्यस्य "सर्वं खल्वि"ति महावाक्यपर्यालोचनया प्रपञ्चस्य ब्रह्मात्मत्वावधारणं जातमिति विवरणं कृतम्, तत्र "तत्त्वमसि" "अहं ब्रह्मास्मि", "अयमात्मा ब्रह्म" "विज्ञानमानन्दं ब्रह्मे"ति वाक्यचतुष्टयस्यैव महावाक्यत्वात् "सर्वं खल्वि"ति वाक्यस्य भ्रान्तिविध्वंसवादस्य महावाक्यत्ववर्णनं भ्रमलकमिति मन्तव्यम्। **संसारदशायामबाधितत्वमिति।** पल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वमित्यर्थः।

ननु अनधिगतेति प्रमालक्षणं व्यावृत्तिप्रयोजनं चेत्, अद्वैतमते घटादिज्ञानस्य प्रमात्वाभावात् तत्साधारण्यार्थमबाधितपदेन संसारदशायामबाधितत्वं न

आ आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः । लौकिकमिति घटादिज्ञानमित्यर्थः । तानि च प्रमाणानि षट्; प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात् ।

विवक्षितं युक्तमित्याशङ्कायां व्यवहारप्रयोजनमेवेदं लक्षणमिति घटादिज्ञानस्यापि प्रमात्वेनाद्वैतिनां व्यवहारसिद्धिरबाधितपदेनोक्तार्थविवक्षयैवेति सूचयन् प्रामाणिकानां घटादिज्ञाने प्रमात्वव्यवहारं प्रदर्शयति—तदुक्तमिति । देहात्मेति ।

यथाऽहं कृशोऽहं स्थूलोऽहं गच्छामीत्याद्यनुभव आत्मसाक्षात्कारपर्यन्तं प्रमेति व्यवह्रियते, एवं लौकिकम्, इदम्, घटादिज्ञानमपि प्रमेति व्यवह्रियत इति श्लोकार्थः । आत्मनिश्चयादित्यस्यात्मसाक्षात्कारपर्यन्तमित्यर्थबोधौपयिकं पदविभागं तनुते—आ आत्मनिश्चयादिति ।

अथ यथावसरं प्रमाणानि विभजते—तानि चेति । षडिति ।

एतेन—प्रत्यक्षमात्रप्रामाण्यवादः चार्वाकाभिमतः, प्रत्यक्षानुमानोभयप्रामाण्यवादो वैशेषिकानाम्, प्रत्यक्षानुमानशब्दाः प्रमाणमिति वैष्णवकापिलसिद्धान्तः, प्रत्यक्षानुमानोपमानशब्दास्तथेति नैयायिकमतम्, प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः प्रमाणमिति प्राभाकरमतञ्च—प्रत्युक्तम् ।

तत्र प्रत्यक्षमात्रप्रामाण्यवादो न युक्तः । प्रत्यक्षमात्रप्रामाण्यं किं प्रतिज्ञामात्रेण, उत सयुक्तिकप्रतिज्ञया । नाद्यः; अनुमानं प्रमाणमित्याद्यस्मदीयप्रतिज्ञामात्रेणानुमानादिप्रामाण्यस्याप्यङ्गीकरणीयत्वात् । द्वितीये तु अनुमानेनैवानुमानप्रामाण्यं निराकुर्वतो मम माता वन्ध्येति वक्तुरिव व्याहतार्थत्वं प्रसज्येत । नहि प्रत्यक्षमात्रप्रामाण्ये वादिविप्रतिपत्त्यादिकम्, नवा तन्निरासार्थां लौकायतिकप्रवृत्तिश्च युज्यते, नहि परकीयं ज्ञानं परस्य प्रत्यक्षम्, नापिवाऽनधिगताबाधितार्थविषयकत्वरूपं प्रमात्वं प्रत्यक्षगतं परस्य प्रत्यक्षम् । एवंचानुमानप्रामाण्यमङ्गीकरणीयम् ।

एवम् उपमानमपि प्रमाणमेव । वाक्यार्थानुसन्धानं विनाऽन्यसादृश्यादन्यसादृश्यज्ञानं हि न प्रमाणान्तरेण सम्भवति ।

**तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम् । प्रत्यक्षप्रमा चात्र चैतन्यमेव ; "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः । अपरोक्षादित्यस्यापरोक्षमित्यर्थः ।**

एतेन शब्दोऽपि प्रमाणमिति सूचितम् । न हि शब्दं प्रमाणमन्तरा मूकादस्मिन्नो विशेषयितुं प्रभवामः । तदुक्तं वाचस्पतिमिश्रैः—"शब्दप्रामाण्यनिराकरणेन सर्वेषामपि मूकताख्यं नरकं प्रापितं चार्वाकादिभिरि"ति । विस्तरस्तु तत्तत्प्रकरणे भविष्यति । यत्तु पौराणिकानां मतं सम्भव ऐतिह्यमपि प्रमाणमिति, तदपि षडित्यनेन निरस्तम् ।

**तत्रेति ।** प्रत्यक्षानुमानादिषट्कमित्यर्थः । **प्रत्यक्षप्रमायाः करणमिति ।** पूर्ववत् करणत्वनिर्वचनमत्रोह्यम् ।

ननु का नाम प्रत्यक्षप्रमा ? नेन्द्रियजन्यं ज्ञानम् ; साक्षिप्रत्यक्षे स्वप्रकाशेऽव्याप्तेः, सुरभि चन्दनमिति सौरभांशेऽपि प्रत्यक्षत्वापत्तेः, अनुगतजन्यतावच्छेदकाभावेनानेकेष्वेकेन्द्रियजन्यत्वापाताच्च । यदि किमप्यनुगतं जन्यतावच्छेदकं मन्येत, तर्हि तस्यैवापरोक्षत्वरूपत्वं युक्तम्, नत्विन्द्रियजन्यत्वस्यापरोक्षभावायोग्यस्य। नचेन्द्रियसन्निकर्षजन्यत्वाभावात् नातिव्याप्तिरिति वाच्यम् ; अनुगतजन्यतावच्छेदकाभावादिदूषणापरिहारात् । अपरोक्षार्थविषयकज्ञानत्वमपरोक्षत्वमिति वर्णने तु आत्माश्रयादिप्रसङ्गः । नाप्यपरोक्षत्वं जातिः ; दण्डययमासीदिति प्रत्यक्षे संस्कारोपनीतदण्डविशिष्टपुरुषविषयके दण्डांशे स्मरणरूपत्वेनांशतोऽपरोक्षत्वमंशतस्तदभाव इति व्याप्यवृत्तित्वाभावेन जातित्वायोगात्, जातेर्व्याप्यवृत्तित्वनियमात्, "सत्यं ज्ञानमि"त्यादिना सिद्धचैतन्यस्वरूपस्य ब्रह्मण एकत्वेनैकव्यक्तिगत्वेन जातित्वायोगाच्च, किन्तु चैतन्यमेवेत्याह—**प्रत्यक्षप्रमेति ।** प्रत्यक्षप्रमासामान्यमित्यर्थः ।

चैतन्यत्वं प्रत्यक्षप्रमासामान्यलक्षणम् । अनुमित्यादिस्थलेऽपि चैतन्यस्य स्वांशे प्रत्यक्षत्वमभिमतमेवेति नालक्ष्यत्वम् । उक्तं हि ग्रन्थकृतोत्तरत्र—"अभिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव । पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वादि"ति ।

ननु चैतन्यमनादि, तत् कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति? उच्यते; चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जका-

इदञ्च प्रत्यक्षप्रमात्वं चैतन्यस्य स्वांशे घटांशे च विद्यमानं यत् प्रत्यक्षप्रमात्वं तदुभयसाधारणम्। तत्र स्वांशगतं प्रत्यक्षत्वं न प्रमाणप्रयुक्तम्; चैतन्यस्य स्वप्रकाशत्वेन प्रमाणव्यापारानपेक्षणात्, तथापि घटादिविषयांशे प्रत्यक्षत्वं प्रमाण-प्रयुक्तमेव। एवञ्च प्रत्यक्षप्रमाविशेषकरणत्वमेव प्रत्यक्षप्रमाणत्वमिति विवक्षितम्; अनुमित्यादिविभागानां विषयांशमादायैव प्रवृत्तत्वात्।

ननु प्रमाणानपेक्षं चैतन्यं स्वांशे प्रत्यक्षम्, इत्यत्र किं प्रमाणम्? येन चैतन्येतर-विषयांशे प्रत्यक्षप्रमाकरणत्वमेव प्रत्यक्षप्रमाकरणत्वं स्यादित्यत आह—यत्साक्षा-दिति। साक्षात् प्रमाणापेक्षां विना, स्वत इति यावत्। अपरोक्षात् अपरोक्षमित्यर्थः।

ननु चैतन्यमेव प्रत्यक्षप्रमेति यत्सामान्यलक्षणमुक्तम्, तत्र सामान्यलक्षणा-क्रान्तस्य सर्वस्यापि प्रत्यक्षप्रमाकरणमित्यत्र विवक्षा, उत विषयांशप्रत्यक्ष-स्यैव, नाद्यः; चैतन्यस्यानादित्वेन स्वप्रकाशत्वेन च स्वांशे प्रत्यक्षत्वस्योक्त-श्रुतिविरोधेन प्रमाणव्यापारानपेक्षत्वात्, द्वितीये तु प्रत्यक्षप्रमाकरणमिति सामान्योक्त्ययोग इत्याशयेन शङ्कते—नन्विति। अनादीति। स्वप्रकाशं चेति शेषः। घटांशे प्रत्यक्षप्रमाकरणत्वं हि घटाकारवृत्तिगतजन्यत्वं चैतन्येऽपि समारोप्य कथमपि सम्पादयितुं शक्यते, चैतन्यांशे तु तस्याऽजन्यत्वेन प्रमाणजन्यं प्रत्यक्षत्वं न कथमपि भवतीति प्रश्नाशयः।

अयम्भावः—"विषयसंसृष्टवृत्त्यवच्छिन्नरूपेण प्रमात्वम्, विषयशरीरोभयसंसृष्ट-वृत्त्यवच्छिन्नचैतन्यरूपेण प्रमाणत्वम्, शरीरसंसृष्टवृत्त्यवच्छिन्नचैतन्यरूपेण प्रमातृत्वम्, चक्षुरादिप्रमाणत्वव्यवहारस्तु वृत्तिजनकतयौपचारिक" इति बिन्दु-टीकायामुक्तमिति, यत्र स्वभानार्थं वृत्त्यपेक्षा तत्र परम्परया चक्षुरादिप्रमाणत्वेऽपि प्रत्यक्षप्रमासामान्यकरणत्वं कथमिति भावः। अखण्डाकारसाक्षात्कारस्तु न घटादीनामिवाभेदद्वारा भानार्थम्, किन्त्वावरणनिरासमात्रार्थमिति बोध्यम्। समाधत्ते—चैतन्यस्येति। अनादित्वेऽपीति। आत्मांशे इत्यादिः।

**न्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायत इति वृत्तिविशिष्टं**

अनादित्वप्रयुक्तप्रमाणाधीनापरोक्षत्वाभावेऽपीत्यर्थः। एवञ्च स्वांशे प्रत्यक्षं न प्रत्यक्षप्रमाकरणमित्यत्र विवक्षितमिति भावः।

घटांशे प्रत्यक्षं तु घटाकारवृत्तिगतं जन्यत्वं तदवच्छिन्नचैतन्येऽपि समारोप्य जन्यत्वसम्पादनसम्भवेन प्रत्यक्षप्रमाकरणमित्यत्र विवक्षितुं शक्यमिति चैतन्येतरांशप्रत्यक्षप्रमाकरणत्वमेव प्रत्यक्षप्रमाणत्वमिति भावः। **तदभिव्यञ्जकेति।** चैतन्याभिव्यञ्जकेत्यर्थः।

अस्मद्दृष्ट्याऽऽवृतस्य चैतन्यस्यावरणतिरोधानेनाभिव्यञ्जनार्थेत्यर्थः। यथाहि वैयाकरणमते मीमांसकमते च शब्दनित्यत्वेऽपि तदभिव्यञ्जकध्वनिगतमनित्यत्वं शब्दे समारोप्य गकार उत्पन्नो विनष्ट इति प्रतीतिरुपपाद्यते, तथा प्रकृतेऽपीति भावः। **वृत्तिविशिष्टमिति।** वृत्त्युपहितमित्यर्थः।

यत्तु आशुबोधिन्यां "यथा घटो नीलः क्रियते इत्यादौ नीलावच्छिन्नस्य घटस्य विशेष्यीभूतस्य प्रागुत्पन्नतया तदानीमजन्यत्वेऽपि विशेषणीभूतस्य नीलगुणस्य तदानीमुत्पत्तेस्तदवच्छिन्नघटस्यापि जन्यत्वमुच्यते, तथेहापि वृत्तिजन्यत्वेन वृत्तिविशिष्टजन्यत्वमिति व्याख्यायोपसंहारे वस्तुतो वृत्तेरेवेन्द्रियसन्निकर्षजन्यत्वेऽपि तस्याश्चैतन्यावच्छेदकत्वात् चैतन्यत्वेन प्रतीत्या तत्करणस्यैव चैतन्यकरणत्वव्यपदेश" इत्युक्तम्, तत्र वृत्तेरेव प्रत्यक्षप्रमात्वे प्रत्यक्षप्रमा तु चैतन्यमेवेत्यादिग्रन्थविरोधः, वृत्तिविशिष्टचैतन्यजन्यत्वोक्तिवैयर्थ्यम्, चैतन्यस्यानादित्वेऽपीत्यस्य मुख्यरूपेण चैतन्यानादित्वेपीति विवरणक्लेशादिकं च स्यात्।

एवञ्च "ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः" इति ग्रन्थो वृत्तिरेव प्रमा भवतु, किमिति चैतन्यं प्रमा विवक्ष्यते? चैतन्यप्रमात्वविवक्षायामपि प्रमात्वं वृत्तिमादाय खलु समर्थनीयम्, इत्याशङ्कानिराकरणार्थ एव योजनीयः। अज्ञाननिराकरणसमर्थज्ञानस्यैव प्रमात्वात्, वृत्तेश्च जडान्तःकरणपरिणामत्वेन जडत्वेनाज्ञानत्वान्न प्रमात्वमिति।

एतेन—ज्ञानत्वोपचार इत्यस्य सादृश्यातिशयमहिम्ना ज्ञानत्वाविर्भाव इत्याशुबोधिनीविवरणम्—प्रत्युक्तम्; क्लिष्टत्वादपदार्थानुगुणत्वाच्च।

ननु किं नाम ज्ञानम्? यत् अज्ञानविरोधि तदेव ज्ञानपदार्थः। नहि चैतन्यम-

चैतन्यमादिमदुच्यते। ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञान-

ज्ञानविरोधि, अन्यथा चैतन्यस्याऽज्ञानविषयत्वप्रयुक्ताधिष्ठानताविरहेण तत्र प्रपञ्चा-ध्यासवादायोगात्। न च—केवलाग्न्यदाह्यस्याप्ययःकान्तारूढाग्निदाह्यत्ववत् केवलचैतन्यानिवर्त्त्यस्याप्यज्ञानस्य वृत्त्युपारूढचैतन्यनिवर्त्त्यत्वमस्तीति—वाच्यम्; यादृशवृत्तिसम्बन्धेन चैतन्यस्य ज्ञानत्वं तादृशवृत्तेरेव ज्ञानत्वाङ्गीकारस्य युक्तत्वात्।

परोक्षापरोक्षज्ञानविभागो ह्यद्वैतिनां मते परोक्षवृत्तेः स्वत एव व्यवहार-प्रयोजकत्वम्, अपरोक्षस्थले वृत्त्युपारूढचैतन्यस्य व्यवहारप्रयोजकत्वमिति खलु निर्वहणीयः। एवञ्च वृत्ताविव जातिविशेषस्वीकारेणापरोक्षत्वस्याप्युपपादन-सम्भवात् न चैतन्यापेक्षा, परोक्षस्थलेऽपि वृत्त्युपारूढचैतन्यस्यैव व्यवहारप्रयोजक-त्वाच्च परोक्षापरोक्षाविवेकः।

न चाभिव्यक्तविषयचैतन्याभिन्नवृत्तिचैतन्यमपरोक्षम्, केवलवृत्त्यवच्छिन्नचैतन्यं परोक्षमिति विवेकः, विषयचैतन्याभेदश्च विषयदेशेऽन्तःकरणवृत्तिनिर्गमेण भवतीत्यादिकल्पनं युक्तम्; त्वाचप्रत्यक्षादिस्थले चक्षुरादिवन्नियतगोलकाभावेन निर्गमायोगेन तत्प्रत्यक्षत्वनिर्वाहासम्भवात्।

वस्तुतस्तु—अन्तःकरणवृत्तेर्वहिर्निर्गमवादोऽयं न विकल्पसहः; विषयेन्द्रिय-सम्पर्कमात्रेण वृत्तिविशेषोत्पत्तिमन्तरा सर्वोपपत्तेः; अन्यथेच्छादीनामपि वहिर्निःसृतानामिव घटादिप्रवृत्तिप्रयोजकतापि कल्प्येत। एवञ्च वृत्तिरेव ज्ञानमिति, वृत्तेरेव प्रमात्वस्य वर्णनीयत्वात् "प्रत्यक्षप्रमा तु चैतन्यमेवेत्यु"क्तिर-सङ्गतेत्यत आह—ज्ञानावच्छेदकत्वाच्चेति।

अयं भावः—न वृत्तिरेव ज्ञानम्; घटः प्रकाशते, घटं जानामीति सकर्मकत्वा-कर्मकत्वव्यवस्थाविरोधात्, किन्तु चैतन्यमेव; न च तत्रापि स विरोधः; स्वरूपचैतन्यं प्रकाशः, असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टं चैतन्यं ज्ञान-मिति तत्परिहारसम्भवात्। विस्तृतं चैतत् बिन्दुटीकायाम्, अद्वैतसिद्ध्यादौ चेति तत एव द्रष्टव्यम्। परोक्षस्थलेऽपि वृत्त्यवच्छिन्नचैतन्यमेव व्यवहारप्रयोजकम्, नतु वृत्तिमात्रम्, तस्या जडत्वात्, परोक्षापरोक्षत्वविवेकायोगाच्च। विषयकृतं वृत्तौ विशेषमनुभवामः, न तु स्वकृतम्, येन वृत्ताविव जातिभेदः सामग्रीभेद-निबन्धनः कल्प्येत। एवञ्चाभिव्यक्तविषयाकारवृत्तिरपरोक्षेति युष्माभिर्वर्णनीयम्।

त्वोपचारः। तदुक्तं विवरणे—"अन्तःकरणवृत्तौ ज्ञानत्वोपचारादि"ति।

तत्र चावृतत्वं चैतन्यस्यैव न विषयस्येति विषयचैतन्याभिव्यक्तिचैतन्यमेवापरोक्षं फलति। न चायमर्थोऽन्तःकरणस्य बहिर्निर्गममन्तरा सिद्ध्यति। नहि प्रभा विषयदेशमगत्वा तमः तिरस्कुरुते। चाक्षुषप्रत्यक्षादिस्थले चक्षुरादिगोलकं बहिर्निर्गमनद्वारम्, त्वाचप्रत्यक्षे तु त्वगेवेति न त्वाचप्रत्यक्षत्वाद्यनुपपत्तिः। प्रकाशकत्वेन प्रभासादृश्यात् यथान्तःकरणवृत्तेर्बहिर्निर्गमो न तथान्यतत्कल्पनाप्रसङ्ग इति सर्वमुपपन्नम्।

ज्ञानावच्छेदकत्वात् अज्ञाननिवर्तकज्ञानव्यावर्तकत्वात्। वृत्त्युपारूढचैतन्यस्यैवायःकान्तोपारूढाग्नेरिव स्वविरोधिनिवर्तकत्वात्। वृत्तेर्न ज्ञानत्वमित्यत्र विवरणाचार्याणां सम्मतिमाह—अन्तःकरणवृत्तौ ज्ञानत्वोपचारादिति। भाक्तं वृत्तौ ज्ञानत्वमित्यर्थः।

अत्र—"शरीरमध्ये स्थितः सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धः अन्तःकरणाख्योऽविद्याविवर्तो दर्पणादिवदतिस्वच्छो नेत्रादिद्वारा निर्गत्य योग्यान् घटादीन् विषयान् व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत्। तस्य च सौरालोकवत् झटित्येव सङ्कोचविकासावुपपद्येते। स च परिणममानो देहाभ्यन्तरे घटादौ च सम्यग् व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वदविच्छिन्नोऽप्यवतिष्ठते। तत्र देहेऽन्तःकरणभागोऽहङ्काराख्यः कर्तेत्युच्यते; देहविषयमध्यवृत्तिदण्डायमानान्तःकरणभागो वृत्तिज्ञानाख्यः क्रियेत्युच्यते" इति सिद्धान्तबिन्दौ मधुसूदनसरस्वत्यो वर्णयन्ति।

एवञ्चान्तःकरणपरिणामो वृत्तिरिति ग्रन्थस्य न मृत्परिणामो घट इत्यादाविव रूपान्तरापत्तिरित्यर्थः, किन्तु विकासावस्थाप्रयुक्तान्तःकरणावयवविशेषाणां देशविशेषे दण्डायमानानामवस्थानमेवात्र परिणामपदार्थः। इच्छादिसमयेऽपि अन्तःकरणस्यान्तरेव विकासविशेषो विद्यत एव।

दृश्यत्वनिरुक्तौ "वृत्तिव्याप्यत्वं वृत्तेराकाराख्यः सम्बन्धः" इति ग्रन्थविवरणावसरे विट्ठलेशोपाध्यायैर्ब्रह्मानन्दसरस्वतीकृतलघुचन्द्रिकाविवरणे "घटादौ अन्तर्बहिर्लिप्यमानसुधाया इव बहिर्निःसृतान्तःकरणघटयोः सम्बन्धविशेष एव परिणामः" इति विवरणमप्यत एवोपपद्यते।

यदि स्वद एव अन्तःकरणस्य परिणामित्वम् ; तर्हि सर्वात्मना परिणामो वा, एकदेशेन वा । सर्वात्मना परिणामे च वृत्तिचैतन्यं प्रमातृचैतन्यम् इति विभागो न स्यात्, अवस्थाविशेषविशिष्टमुपादानमेव कार्यम्, एवं चाप्राप्तावस्थाविशेषान्तः-करणावच्छिन्नं चैतन्यं प्रमातृचैतन्यं प्राप्तावस्थाविशेषतदवच्छिन्नचैतन्यं वृत्त्यव-च्छिन्नचैतन्यमिति व्यवहारोऽङ्गीकरणीयः । न च सर्वात्मना परिणामपक्षे उभय-रूपेणान्तःकरणविवक्षा संभवति । यथा 'एकदेशेन परिणामतादशायां प्रधानत्व-मेव हीयेतेति प्रधानकारणतावादो न युक्त इति व्यवस्थापितम्, तथा प्रकृतेऽपि सर्वावयवोपेतान्तःकरणाभावेन प्रमातृस्वरूपमपि न सिद्धं भवति ।

भवतु वा कथञ्चित् किञ्चिदवयवोपेतान्तःकरणावच्छिन्नचैतन्यमेव प्रमातृ-चैतन्यमिति, तथापि बिन्दुटीकायां "मनोविषयसंयोगः प्रत्यक्षप्रमासामान्य-करणम्, दर्शनान्तरे मनसः करणत्वाङ्गीकारेणात्रापि मनोवच्छिन्नचैतन्यस्यैव हि प्रमाणचैतन्यत्ववर्णनं युक्तमिति न चक्षुरादेः प्रमाणत्वं युक्तम्, किन्तु विषयदेहमध्यवृत्तिमनःकरणत्वेनौपचारिकमेव, चक्षुरादीन्द्रियवत् विषयदेश-विकासदेहमध्यदेशव्याप्तिदशायामन्तःकरणमन्तर्देशेऽपि विद्यते; जीवनादृष्टस्य शरीरत्यागप्रतिबन्धकत्वात् । एवं च घटप्रत्यक्षतादशायां प्रमातृचैतन्यप्रत्यक्षत्व-मप्युपपद्यते" इत्युक्तमिति वृत्तिपदेनान्तःकरणमेव विवक्ष्यते, तत्रान्तःकरण-भूदेशविशेषेण चैतन्योपधानमेव प्रमातृप्रमाणत्वप्रमातृत्वादिव्यपदेशे निमित्तम् । उक्तं हि बिन्दुटीकायाम् :—"विषयसंसृष्टवृत्त्यवच्छिन्नरूपेण प्रमात्वम्, प्रमाणत्वं तु विषयशरीरोभयसंसृष्टवृत्त्यवच्छिन्नरूपेण, शरीरसंसृष्टवृत्त्यवच्छिन्नरूपेण प्रमातृत्व-मि"ति । अत्र प्रमातृचैतन्यविभागेऽपि वृत्तिपदमेव प्रयुञ्जाना ब्रह्मानन्दसरस्वत्यो वृत्तिरेवान्तःकरणमिति मन्यन्ते ।

एवंच अन्तःकरणस्य घटाकारसदृशाकारत्वमेवात्र परिणामपदेन व्यवह्रियत इति न मृद्घटयोरिवात्र परिणामिपरिणामभावो विवक्षितः । "यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य"त्यादि यदुक्तम्, तदपीदानी-मुपपन्नं भवति । नहि तडागोदकं रूपान्तरभावरूपपरिणामं प्राप्य केदारमा-प्नोति । यदि मृद्घटयोरिव परिणामिपरिणामभावः, तर्हीदं विचारणीयम्—किं घटसंयोगानन्तरं परिणामः, उताहो प्रथमतः परिणामः, परिणामस्य घटदेशगमन-मिति । नाद्यः ; संयोगेनैवेष्टसिद्धेः परिणामकल्पनस्य व्यर्थत्वात्, नापि प्रथमत

**ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथम् ? इत्यम्—न तावदन्तःकरणं निरवयवम् ; सादिद्रव्यत्वेन सावयवत्वात् । सादित्वञ्च "तन् मनोऽसृजते"त्यादिश्रुतेः । वृत्ति-रूपज्ञानस्य मनोधर्मत्वे च "कामः सङ्कल्पो विचिकित्सा**

एवान्तःकरणपरिणामः, अनन्तरं परिणामस्यैव गमनं चेति युक्तम् ; विषयप्रमातृचैतन्याभेदासम्भवेन वक्ष्यमाणविषयप्रत्यक्षत्वलक्षणस्यासम्भवापत्तेः । नहि परिणामिन्या मृदः परिणामस्य घटस्य चैकदेशस्थत्वसंभव इति ।

अन्येतु एकदेशिनान्तःकरणपरिणामो रूपान्तरापत्तिरिव वृत्तिरित्यादिकं मन्यन्ते । सर्वथा स परिणामोऽन्तःकरणस्य सावयवत्वमन्तरा न सिध्यति । न च तत् सावयवं भवितुमर्हति, इन्द्रियस्य तस्य अनुमानसिद्धस्य लाघवेन निरवयवतयैव सिद्धेः सावयवत्वायोगात् इत्याशयेन शङ्कते—**नन्विति** ।

**निरवयवस्येति** । न मनो महापरिमाणम् ; तथासति युगपद्बा-नेन्द्रियसम्बन्धेन चाक्षुषादिनानाविधज्ञानयौगपद्यापत्तेः । नापि मध्यमपरि-माणम् ; जन्यत्वापत्तेः, अनेकमनःकल्पनादिगौरवप्रसङ्गाच्चेत्यणुपरिमाणमेव तदङ्गीकरणीयमिति भावः ॥

फलमुखं गौरवं न दोषायेति, श्रुत्या सावयवमेव मनोऽङ्गीकरणीयम् । श्रुतौ हि "तन्मनोऽसृजते"त्यादिना तस्य कार्यत्वमुपवर्णितम् । द्रव्यस्य चोत्पत्तिमतः सावयवत्वमेव हि मन्तव्यम् । अमुमेवार्थं मनोनिरवयवत्वानुमाने सत्प्रतिपक्ष-प्रदर्शनद्वारा प्रकटयन् समाधत्ते—**न तावदिति** । न हि सादित्वमात्रं सावयव०साधनम्, रूपादिषु व्यभिचारात्, नापि द्रव्यत्वमात्रम् ; आत्मनि व्यभि-चारादित्यत उक्तम्—**सादिद्रव्यत्वेनेति** ।

विकासविशेषापन्नान्तःकरणावयवा एव कामादय इत्यत्र श्रुतिप्रमाणमाह—**वृत्तिरूपज्ञानस्येति** । **मनोधर्मत्वे च** मनोरूपत्वे तु ।

इयं हि श्रुतिः कामादिभिरन्तःकरणस्य तादात्म्यमवबोधयति । अवयवा-वयविनोश्च तादात्म्यं मीमांसकादिसम्मतमेव । नैयायिकानामपि समवायसम्बन्धेन तयोरभेदप्रतीतिविषयत्वं सम्मतमेव । परंतु अवयवो अवयवेषु विद्यत इति तेषां

श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे”ति श्रुतिर्मानम्; धीशब्देन वृत्तिरूपज्ञानाभिधानात्। अत एव कामादेरपि मनोधर्मत्वम्।

मतम्। अस्माकं तु वृक्षे शाखा पटे तन्तव इत्यनुभवात् अवयविन्येवावयवा विद्यन्त इति मतम्। उपपादितमिदमद्वैतब्रह्मसिद्धौ विस्तरेणेति तत एवाधिकमवगन्तव्यम्। एवंच तादात्म्यसम्बन्धेन तादृशान्तःकरणभागविशिष्टवत्त्वमेवान्तःकरणस्य कर्तृत्वमिति, अद्वैतसिद्धौ अन्तःकरणस्य कामादिकर्तृत्वे उक्तश्रुतिप्रमाणतोपन्यासोऽपि न विरुद्धः; अन्यथा तद्विरोधापत्तेः।

**एतेन**—इयं श्रुतिः अन्तःकरणपरिणामो वृत्तिरित्यत्र न मानम्, नहि तदा तत्कर्तृत्वमुपपद्येतेति उक्तश्रुत्यवलम्बनेन तत्कर्तृत्वसाधनमेव युक्तम्, न हि मृदो घटकर्तृत्वं दृष्टमिति शङ्कापि—**परास्ता**; उक्तरीत्योभयोपपत्तेः।

यत्तु—अद्वैतचिन्ताकौस्तुभादौ अन्तःकरणोपादानत्वेन कामादीनां व्यवहारः, सोऽपि विकाराद्यभिप्रायः।

एवंच—मृद् घट इतिवत् सामानाधिकरण्येनाभेदोपपत्तिरिति शिखामणिविवरणम्, आशुबोधिन्यां परिणामो नाम विकारः, न च स निरवयवस्य सम्भवतीत्यवतरणं च मनस एकदेशपरिणाम एव वृत्तिरित्यभिप्रायम्।

आशुबोधिन्यां वृत्तेरौपचारिकज्ञानत्वाङ्गीकारे तस्या मनोधर्मत्वापत्तिः, इष्टापत्तिरिति चेत्, किं तत्र मानमिति—“कामः सङ्कल्प” इति श्रुतिरवतारिता। तत्र यदीयमापत्तिः नैयायिकादिमतरीत्या, तर्हि ज्ञानमनोधर्मत्वस्य परेषामनभिमतत्वेन तदापादनमेवाप्रसक्तम्, परैरियं श्रुतिर्मनोधर्मतापरतया नाङ्गीकृतेतीष्टापत्तिपरताऽसम्भवः, पूर्वोक्तरीत्या वृत्तेर्ज्ञानत्वनिरूपणं च नात्रापेक्षितम्, किन्तु तज्ज्ञानत्वनिरास एवाभिप्रेत इति तज्ज्ञानत्वेन मनोधर्मत्वसाधनमनवसरग्रस्तं चेति मन्तव्यम्।

**ननु** “कामः सङ्कल्प” इति श्रुतेर्वृत्तेरन्तःकरणपरिणामित्वे कथं प्रामाण्यम्? न हि अत्र वृत्तिपदं दृश्यते, इत्यत आह—**धीशब्देनेति**। **ज्ञानेति**। धीशब्दस्य सामान्यतोऽन्तःकरणपरस्यापि मनःपदसमभिव्याहारादत्र विषयशरीरो-

**ननु कामादेरन्तःकरणधर्म्मत्वे अहमिच्छाम्यहं जानाम्यहं**

भयसंक्लिष्टमनस एव ग्रहणमिति तस्यैव वृत्तिरूपत्वात् औपचारिकज्ञानपरत्वाच्चात्र वृत्तिरूपज्ञानपरत्वम् ।

**यद्वा**—धीपदस्य ज्ञानपरत्वात् स्वरूपचैतन्यात्मकज्ञानस्य मनःपरिणामत्वायोगेनौपचारिकज्ञानस्यैव तेन पदेनाभिधानात् वृत्तिरेवौपचारिकज्ञानमिति धीपदेन वृत्तिरूपज्ञानाभिधानमिति भावः ।

**ननु** प्राथम्येनोपजीव्यत्वेन च प्रत्यक्षस्य श्रुत्यपेक्षया बलवत्त्वमङ्गीकरणीयम् । अत एव "यजमानः प्रस्तर" इत्यत्र प्रस्तरे यजमानाभेदः श्रुतिबोधितोऽपि प्रत्यक्षविरोधान्नाङ्गीक्रियते मीमांसकैः, किन्तु प्रस्तरयजमानयोः सादृश्यमेवात्र तैर्विवक्ष्यते तस्मिद्विपिटिकाधिकरणे । उपजीव्यप्राबल्यं तु लोकन्यायसिद्धं सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति वैयाकरणपरिभाषासिद्धं च । एवंच प्रत्यक्षाविरोधिनैवोक्तश्रुतेरर्थो वर्णनीयः । प्रत्यक्षं तु अहमिच्छामि अहं जानामीत्यादिकम् आत्मधर्मत्वं कामादीनां समर्पयति, नत्वन्तःकरणधर्मत्वम् । अहंपदार्थो ह्यात्मा, नह्यहंकारोल्लेखं विनात्मनः कदाप्यनुभवो विद्यते । सुखमहमस्वाप्समिति स्मरणात् सुषुप्तिकालेऽप्यहंकारभानं कल्प्यते इति नान्तःकरणधर्मत्व उक्तानुभव उपपद्यते । एवंचोक्तप्रत्यक्षाविरोधार्थं मनसः कामादिनिमित्तत्वमेवात्र विवक्ष्यते न परिणामित्वमित्याशयेन शङ्कते—**नन्विति ।**

न हि प्राथम्यमात्रं प्रत्यक्षस्य प्राबल्यप्रयोजकम्; इदं रजतमिति भ्रमज्ञानस्यापि प्रथमस्य नेदं रजतमित्युत्तरज्ञानबाधकतापत्तेः, उपजीव्यत्वं तु यद्यपि प्रत्यक्षप्राबल्य-प्रयोजकमेव; तथापि यद्रूपेण प्रत्यक्षं श्रुतिमुपजीवति व्यावहारिकप्रामाण्येन, तत् व्यावहारिकप्रामाण्यं न श्रुत्याऽत्र बाध्यते, तात्त्विकप्रामाण्यमेव खलु प्रत्यक्षस्य श्रुत्या बाध्यते । "यजमानः प्रस्तर" इत्यत्र यजमानप्रस्तरयोरभेदे न तात्पर्यम् । "प्रस्तरमुत्तरं बर्हिषः सादयती"ति विहितप्रस्तरस्तावकं खल्विदं वाक्यम् । स्तुतिश्च येन प्रकारेण भवति, तत्प्रकारकल्पनं तत्रापेक्षितमिति प्रत्यक्षबाधेनार्थवाधस्तत्र सम्पादितः, प्रकृते तूक्तश्रुतेः कामादेरन्तःकरणधर्मत्वबोधन एव

**बिभेमीत्याद्यनुभव आत्मधर्मत्वमवगाहमानः कथमुपपद्यते ?**

तात्पर्यम्, नतु मनोनिमित्तत्वे, तस्य प्रमाणान्तरसिद्धत्वेन निरर्थकानुवादापत्तेः । एवंच प्रत्यक्षादिबाधेनाप्यन्तःकरणधर्मत्वमेवाङ्गीकरणीयम् ।

अयमाशयः—परोक्षितप्रत्यक्षं श्रुत्यपेक्षया प्रबलम्, यजमानभेदप्रत्यक्षं तु परोक्षितम् ; अहमिच्छामीति तु न परोक्षितं सत्कामादीनामात्मधर्मत्वमवगाहत इति सम्भवति । तथाहि—अहंपदार्थो हि नात्मा ; सुषुप्तौ अहमनुभवाभावात्, सुखमहमस्वाप्समिति तु ज्ञानं चैतन्यांशे एव स्मरणम्, अन्तःकरणांशे तु अनुभव एवेत्यहमर्थानात्मतासाधनप्रकरणेऽद्वैतसिद्धौ व्यवस्थापितम् । एवंचान्तःकरण-चैतन्ययोः परस्परविवेकाग्रहेण स्वरूपचैतन्याज्ञानविजृम्भिततादात्म्यभ्रमरूप-एवाहमनुभवः ।

**ननु**—इदं रजतमित्यादौ आरोपितस्य रजतस्याधिष्ठानस्य च पृथक् भानेन यथा द्व्यंशविषयत्वम्, एवमहमित्यनुभवेऽधिष्ठानारोप्योभयविषयत्वाभावेनाहंकार-चिदचिद्ग्रन्थिरूपता न सम्भवतीति—**चेत्, न ;** अहमनुभवस्यापि द्व्यंश-विषयत्वात् ।

इयांस्तु विशेषः यत् एकोंऽशो व्यक्तः, अंशान्तरं तु न व्यक्तमिति । दृष्टं हि अयो दहतीत्यादौ अग्नितादात्म्यापन्नायसि अग्नित्वांशभानं न व्यक्तमिति । यदि तु दहतिपदेनाग्नेरुपादानमत्रेति वर्ण्येत, तर्हि अहं जानामीत्यादौ जानाम्यादि-पदेनाधिष्ठानोपादानमिति न दोषः ।

वस्तुतस्तु—निरुपाधिकाध्यासविवक्षायामेव आरोप्याधिष्ठानयोः पृथक्भान-मपेक्षितम्, अहमिच्छामीत्यादि तु सोपाधिकाध्यास एव अयो दहतीतिवत् । एवं चाविद्यावच्छिन्नचैतन्येऽन्तःकरणस्यान्तःकरणावच्छिन्नचैतन्ये कामादेश्चाध्यास इति धर्म्यध्यासपूर्वकत्वमपि व्याख्यातम् । नचायो दहतीत्यत्रापि निरुपाधिका-ध्यास एवेति वाच्यम् ; अयमग्निरित्येव व्यवहारापत्तेः, अयस्त्वज्ञानदशायां तत्र वह्नितादात्म्याध्यासायोगात् । धर्माध्यासविवक्षायां तु शंखः पीत इत्यादौ शंखत्वज्ञानेऽपि पीतत्वाध्यास इवायस्त्वज्ञानेऽपि दग्धृत्वाध्यास उपपद्यते ।

अयमाशयः—सोपाधिकाध्यासे भेदग्रहो न प्रतिबन्धकः, अयो दहतीति तु सोपाधिकाध्यास एवेति न दोषः, लोहितः स्फटिकः इत्यादौ स्फटिके कुसुमता-

**उच्यते ; अयःपिण्डस्य दग्धृत्वभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्या-**

दात्म्यमपि कल्प्यते, सन्निधानेन सत्यपि भेदग्रहेऽध्याससम्भवात्। उक्तं हि भामत्याम्—"यथा कुसुमात् भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुम-प्रतिबिम्बोद्ग्राहिण्यरुण: स्फटिक इत्यारुण्य विभ्रमः" इति। सर्वथा तु सोपाधिकाध्यासपक्ष एवात्राभिमतः। न च दार्ष्टान्तिकानुपपत्तिः ; कर्तृत्वाध्यासोऽपि सोपाधिक इति पश्चादरणात्।

एतेन—वह्नितादात्म्याध्यासादित्यस्य वह्न्ययःपिण्डयोरविवेकग्रहादिति अन्तः-करणैक्याध्यासादित्यस्यात्मान्तःकरणयोर्विभिन्नयोरप्यभिन्नत्वग्रहादिति चाशु-बोधिनीविवरणं—परास्तम् ; सोपाधिकाध्यासे भेदाग्रहाकारणत्वेन तदुपन्यास-वैयर्थ्यात्। यथा चात्र न निरुपाधिकाध्यासः, किन्तु सोपाधिकाध्यास एव विवक्षितस्तथा पूर्वमेव विवेचितम्। अहमिति धर्म्यध्यासः, अहमिच्छामीति धर्माध्यास इति भाष्ये व्यक्तम्। एवं चाशुबोधिनीकाराणां धर्म्यध्यासपरतया-ऽस्य योजनं प्रत्युक्तमिति सूचितम्।

एवं च भ्रमरूपत्वेनापरीक्षितत्वात् प्रत्यक्षस्य श्रुतिबाधकत्वं न सम्भवतीत्युक्त-श्रुतेः कामादीनामन्तःकरणधर्मत्वे प्रामाण्यमुपपन्नमेव। एतत् सर्वं मनसि निधायाह—**उच्यते इति** ॥

अयःपिण्डस्येति। **दग्धृत्वाश्रयवह्नितादात्म्याध्यासात्** वह्निता-दात्म्याध्यासप्रयुक्तदग्धृत्वाध्यासात् वह्निनिष्ठदग्धृत्वाध्यासादिति वाऽर्थः। **सुखादीति।** अन्तःकरणतादात्म्याध्यासप्रयुक्तसुखादिधर्माध्यासादित्यर्थः। अयःपिण्डस्य वह्नित्वाभावेऽपीत्यनुक्त्वा दग्धृत्वाभावेऽपीत्युक्तिरत्र धर्माध्यास एव विवक्षित इति ज्ञापयतीति भावः।

अयःपिण्डात् पृथक् दाहकत्वेन वह्नेरिवाहङ्कारात् पृथगात्मनः प्रसिद्धिस्तु श्रुतिस्मृत्यादिभिर्भवति। "अथातोऽहङ्कारादेशः" इत्यनन्तरम् "अथात आत्मादेश" इति श्रुतौ—

"महत्तत्त्वाद् विकुर्वाणात् भगवद्वीर्यचोदितात्।
क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥

इत्यादिस्मृतौ चात्मभिन्नस्याहङ्कारस्य प्रतिपादनात्, अहंकारातिरिक्ते च स्वतन्त्राहं-

ध्यासात् यथाऽयो दहतीति व्यवहारः, तथा सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासादहं सुखी अहं दुःखीत्यादिव्यवहारो जायते।

नन्वन्तःकरणस्येन्द्रियतयाऽतीन्द्रियत्वात् कथं प्रत्यक्षविषय-

पदार्थं प्रमाणाभावात्। ननु अहमिच्छामीत्यादौ नान्तःकरणावच्छिन्नचैतन्यमहं पदार्थः, अन्तःकरणस्यातीन्द्रियतया प्रत्यक्षविषयत्वायोगात्। अतीन्द्रियत्वञ्च मनस इन्द्रियत्वेन। तत्र च "मनः षष्ठानीन्द्रियाणी"ति स्मृतिः, सुखादिसाक्षात्कारस्येन्द्रियाजन्यत्वे साक्षात्त्वानुपपत्तिश्च प्रमाणम्, इन्द्रियजन्यं खलु ज्ञानमपरोक्षम्, इत्याशयेन शङ्कते—नन्विति।

यत्तु आशुबोधिन्याम्—"अयो दहति" इत्यत्राग्निरेव विषयः, एवमपि सादृश्यमहिम्ना तु भिन्नयोरप्ययःपिण्डवह्न्योरैक्याध्यास इति युज्यते; प्रकृते तु अन्तःकरणमेव विषय इति न सम्भवति, येनैक्याध्यासो भवेदित्यत्रावतरणं कृतम्, तद् दृष्टान्तदार्ष्टान्तिकयोरुभयत्रापि केवलाग्न्यन्तःकरणविषयत्वस्य केरप्यनभ्युपगमात् तथाभ्युपगमेऽव तादात्म्याध्यासवर्णनासम्भवात् वह्नितादात्म्यापन्नेऽयसि वह्निगतदग्धृत्वाध्यासस्यैवात्राभिमतत्वात् विनापि सादृश्यं केतकीगन्धे सर्पगन्धभ्रमस्य दर्शनेन सादृश्यस्याध्याससमात्रं प्रत्यकारणत्वस्य पञ्चपादिकाविवरण उपपादितत्वाच्च न प्रकृतोपयुक्तम्॥

मनः, अतीन्द्रियम्, इन्द्रियत्वादित्यनुमानं स्वरूपासिद्धम्; मनस इन्द्रियत्वे प्रमाणाभावात्, ननु—"मनःषष्ठानीन्द्रियाणी"ति स्मृतौ मनस इन्द्रियगतषट्त्वसंख्यापूरकत्वं दृश्यते, यद्गतसंख्यापूरकं यत्, तत् तज्जातीयमिति नियमः। अत एव "गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि"त्यत्र भाष्ये "अस्य गोर्द्वितीयोऽन्विष्यतामित्युक्ते सजातीयो गौरेवान्विष्यते नाश्वः पुरुषो वेति यथा, तथा द्वितीयः परमात्मैव भवती"त्युक्तम्; अन्यथा बुद्धिजीवयोरेव गुहाप्रविष्टत्वादिना ग्रहणप्रसङ्गेन तदधिकरणविरोधापत्तेः। एतेनेन्द्रियाणां मनश्चास्मीति गीतावचनमपि व्याख्यातम्; निर्द्धारणषष्ठीस्थले हि निर्द्धार्य्यमाणनिर्द्धारणावध्योः समानधर्म्मत्वमपेक्षितम्। न हि ब्राह्मणेषु पशुरुत्तम इति निर्द्धारणं भवति। एवं चेन्द्रियमेव मनः।

तेति ? उच्यते ; न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। "मनःषष्ठानीन्द्रियाणि"ति भगवद्गीतावचनं प्रमाणमिति चेत्, न ; अनिन्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात्। नहीन्द्रियगतसंख्यापूरणमिन्द्रियेणैवेति नियमः; "यजमानपञ्चमा

न च—युष्मन्मतेऽपि मम मनः इत्यत्र मनसः प्रत्यक्षत्वं विद्यते वा न वा ? यदि विद्यते, कथमिन्द्रियस्य प्रत्यक्षविषयत्वम् ? यदि न विद्यते, मनोमानसप्रत्यक्षविषयत्वसिद्धान्तभङ्गापत्तिरिति—वाच्यम् ; मनोऽनुमेयत्वस्यैवास्माभिरङ्गीकारात्। मम मन इति न लौकिकप्रत्यक्षम् ; किन्तु अलौकिकप्रत्यक्षमेवेति नानुपपत्तिः ; एवं च मनस इन्द्रियत्वे न काचिदनुपपत्तिरिति—चेत्, न ;

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन" इति श्रुतौ इन्द्रियात् पृथक् मनसो निर्देशेन तस्यानिन्द्रियत्वावगमेन "मनःषष्ठानी"ति स्मृतेस्तदविरोधेनैवोपपत्तेर्वर्णनीयत्वात्॥

यत् यद्गतसंख्यापूरणं तत् तज्जातीयमिति न नियमः, किन्तूत्सर्गः। अत एव गुहाधिकरणे गुहां प्रविष्टौ न जीवपरमात्मनौ, किन्तु बुद्धिजीवावेवेति पैङ्गिरहस्यब्राह्मणव्याख्यानुसारी भगवत्पादीयसिद्धान्त उपपद्यते। अत एव—"वेदानध्यापयामास महाभारतपञ्चमान्॥" "यजमानपञ्चमा (ऋत्विजः)इडां भक्षयन्तो"-त्यादौ अवेदानृत्विजोरपि भारतयजमानयोर्वेदत्विंगतसंख्यापूरकत्वं दृश्यते! एवञ्चासति बाधक एवोक्तन्यायप्रवृत्त्या प्रकृते च मन इन्द्रियत्वे श्रुतिविरोधरूपबाधकसत्त्वान्नायं न्यायः प्रवर्तत इति नोक्तस्मृतिर्मन इन्द्रियत्वे प्रमाणम्।

एतेन—इन्द्रियाणां मनश्चास्मीति स्मृतिरपि—व्याख्याता ; "नक्षत्राणामहं शशी" "बलं बलवतामस्मी" त्यादाविव सम्बन्धसामान्यार्थैव षष्ठीत्यङ्गीकारेण निर्धारणषष्ठ्यनभ्युपगमात्, अन्यथा शशिनोऽपि नक्षत्रत्वमभ्युपगम्येत।

यदि केनचित् धर्मेण साधर्म्यमात्रं विवक्षणीयम्, तर्हि प्रकृतेऽपि ज्ञानजनकत्वादिना साधर्म्यान्नानुपपत्तिः। एवं च मनो नेन्द्रियम्। अत एव मम मन इति प्रत्यक्षानुभवोपपत्तिः। नच—मनोंऽशेऽलौकिकप्रत्यक्षत्वमेवाभिमतमिति—

इडां भक्षयन्ती"त्यत्र ऋत्विग्गतपञ्चत्वसंख्याया अनृत्विजापि यजमानेन पूरणदर्शनात्। "वेदानध्यापयामास महाभारतपञ्चमानि"त्यादौ वेदगतपञ्चत्वसंख्याया अवेदेनापि महाभारतेन

वाच्यम्, सामान्यलक्षणादिप्रत्यासत्तेर्निराकरिष्यमाणत्वेन तदुक्त्ययोगात्। तदेतदाह—उच्यते। न तावदिति।

आशुबोधिनीकारास्तु—यद् यद्गतसंख्यापूरकम् तत् तज्जातीयमेवेति नियमे साजात्यं न तत्पदार्थतावच्छेदकधर्मरूपेणैव; धर्मान्तरेणापि सम्भवात्। एवञ्चेदं प्रथमम् इदं द्वितीयमिति प्रतीतिसिद्धेदन्त्वादिना साम्यमादाय मनःषष्ठानीति वाक्यमुपपन्नं मनोऽनिन्द्रियत्वेऽपीति—वर्णयन्ति।

अनृत्विजापीति। "अध्वर्युं वृणीते"त्यादिवाक्यविहितवरणनिमित्तमृत्विक्त्वं यजमानस्य नास्ति। अत एव च "ऋत्विग्भ्यो दक्षिणां ददाती"त्यादौ यजमानस्य न ग्रहणम्। "नियमस्तु दक्षिणाभिः श्रुतिसंयोगादि"त्यधिकरणे-(३—७—१२) ऽप्ययमर्थ एवोपपादितः।

वस्तुतस्तु—"तस्यैतस्य यज्ञक्रतोः चत्वारः पञ्च वा सप्तदश वे"ति वाक्ये सप्तदश ऋत्विजो निर्दिष्टाः। तत्र षोडश—ब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोतारः (४) उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्याः (४) होतृमैत्रावरुणाच्छावाकग्रावस्तुतः (४) अध्वर्युप्रतिप्रस्थातृनेष्टोन्नेतारः (४) इति "नियमस्तु दक्षिणाभिरि"त्यत्र निर्णीय तृतीयसप्तमाष्टादशाधिकरणे "स्वामिसप्तदशाः कर्मसामान्यात्" इत्यत्र सप्तदशस्तु यजमान एव वरणाभावेऽपि क्रतुसंबन्धिकार्यकरणसामान्यात्, न सदस्य इति निर्णीतम्। एवं च यजमानस्यापि ऋत्विक्त्वं क्रतुयजननिमित्तं भवत्येवेति "यजमानपञ्चमा इडां भक्षयन्ती"त्यत्र यद् यद्गतसंख्यापूरकं तत् तज्जातीयमिति नियमस्य न व्यभिचार इत्यस्वरसादुदाहरणान्तरमाह—वेदानध्यापयामासेति।

एतेन—गत्यन्तराभावात् यजमानपञ्चमा इत्यत्रास्य नियमस्य त्याग इति ब्राह्मणपदाध्याहारेणोक्तनियमोपपत्तिरिति चाशुबोधिनीशिखामणिविवरणम्—प्रत्युक्तम्। यद्यपि मुख्यमृत्विक्त्वं यजमानस्य नास्ति, तथापि गौणं तद्

पूरणादर्शनात्, "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन" इत्यादिश्रुत्या मनसोऽनिन्द्रियतावगमाच्च।

न चैवं मनसोऽनिन्द्रियत्व सुखादिप्रत्यक्षस्य साक्षात्त्वं न स्यादिन्द्रियाजन्यत्वादिति वाच्यम्; नहीन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्त्वम्; अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्तेः, ईश्वरज्ञानस्यानिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च।

विद्यत एवेति गौणमुख्यसाधारणर्त्विक्पदव्यवहार्यत्वं होत्रादियजमानसाधारणमेवेति न दोषः॥

परमार्थतस्तु—गौणमिन्द्रियत्वं मनसोऽप्यङ्गीकर्तुं शक्यते। न हि तेनापरोक्षत्वभङ्ग इति न कोऽपि विरोधः। "वेदानध्यापयामास" इत्यत्रापि सकलवेदार्थप्रतिपादकत्वेन भारतस्य गौणं वेदत्वं विद्यते इति मन्तव्यम्। परा ह्यर्था इति। परत्वं चान्तरत्वादिनेति गीताभाष्ये व्यक्तम्।

ननु—इन्द्रियजन्यत्वं साक्षात्त्वप्रयोजकं सुखादिज्ञानस्य चेन्द्रियजन्यत्वं विनानुपपन्नं सत् स्वजनकस्य मनस इन्द्रियत्वं कल्पयतीत्याशङ्का समाधत्ते—न चैवमित्यादिना। अनुमित्यादेरपीति।

ननु मनस्त्वेन मनोजन्यत्वेऽपि इन्द्रियत्वेन मनोजन्यत्वाभावात् नानुमित्यादेः साक्षात्त्वमितीन्द्रियजन्यत्वमेव साक्षात्त्वप्रयोजकम्, अथवेन्द्रियजन्यत्वमित्यनेनेन्द्रियसन्निकर्षजन्यत्वमेव विवक्षितमित्यतादृशेऽनुमित्यादौ नातिप्रसङ्ग इत्यतो दोषान्तरमाह—ईश्वरज्ञानस्येति। ईश्वरज्ञानं हि अजन्यं प्रत्यक्षरूपं चेति यद्यपि न सर्वसम्मतम्; अद्वैतिभिः मायाजन्यत्वस्याङ्गीकारात्; तथापीन्द्रियाजन्यत्वं सर्वसम्मतमित्याह—अनिन्द्रियजन्यस्येति।

तथा च मनस इन्द्रियत्वे प्रमाणाभावात् प्रत्युत बाधकसत्त्वान्न मन इन्द्रियमिति, अहमिच्छामीत्यादौ अन्तःकरणभानमुपपन्नमेव।

न च—भामत्याम्—"त इन्द्रियाणि तद्व्यपदेशादि"त्यत्र मनसस्त्विन्द्रियत्वे स्मृतेरवगते क्वचिदिन्द्रियेभ्यो भेदेनोपादानं गोबलीवर्दन्यायेन। अथवेन्द्रियाणां वर्तमानमात्रविषयत्वात् मनसस्तु भाविगोचरत्वाद् भेदेनोपादानमि"त्युक्तम्,

मनुस्मृतावपि—

"एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः।
तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः॥
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता॥
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकमि"त्युक्तम्॥

एवं चोक्तस्मृति-भामतीविरोधाद् विवरणमतं न युक्तमिति—वाच्यम्; पूर्वे मनीषिण इति एकादशेन्द्रियत्ववादस्य केषाञ्चित् पक्षत्वस्य वर्णनेन मतान्तरानुसारिविवरणमतस्यायुक्तत्वासम्भवात्। न च—वाचस्पतिमिश्रमते मनसोऽहं-प्रत्ययविषयत्वं न सम्भवतीति—वाच्यम्; केवलकर्मेन्द्रियस्य केवलज्ञानेन्द्रियस्य च प्रत्यक्षाविषयत्वेऽपि उक्तमनुवचनानुसारेणोभयात्मकमनस इन्द्रियस्य चाक्षुषत्वेऽविरोधात्। उक्तं हि भामत्यां मनस्सम्बन्धेन चैतन्यस्य तत्प्रत्यक्षविषयत्व-मध्यासभाष्ये। सर्वथा च कामाद्यन्तःकरणधर्मतावाद उपपन्न एव।

एतेनोक्तवचनं "त इन्द्रियाणि तद्व्यपदेशादि"त्यत्र भाष्यकृता मनस इन्द्रियत्व-व्यवस्थापनं भामतीसिद्धान्तादिकं सर्वमपि न वेदान्तमतानुसारीत्याशुबोधिनी-सिद्धान्तः परास्तः; वेदान्तपक्षोक्तपक्षस्यापि वेदान्तानभिमतत्वकल्पने मनो-ऽनिन्द्रियत्ववादस्यैव तत्कल्पनाप्रसङ्गात्।

एवञ्च शाब्दापरोक्षवादिनां मते न मन इन्द्रियम्, एतदनङ्गीकारिणां वाचस्पति-मिश्राणां तु मते मन इन्द्रियम्। निराकृतो हि भामत्यां "धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते"रिति भाष्यावतरणावसरे शाब्दापरोक्ष-तावाद इति मम मन इत्यादिप्रत्यक्षोऽपि व्याख्यातः।

ननु—अहं बधिरोऽहं काण इत्यादिप्रत्यक्षाणामिन्द्रियधर्माध्यासनिबन्धनाना-मनुभूयमानत्वान्नेन्द्रियत्वमपरोक्षत्वप्रतिबन्धकम्। साक्षिभास्यत्वेन सुखादीनामि-वेन्द्रियाणामपि प्रत्यक्षत्वसम्भवेनातीन्द्रियत्वव्यवहारोऽप्युपपन्न इति नात्र मन-इन्द्रियत्वनिराकरणमपेक्षितम् इति—चेत्, न; "देहेन्द्रियादिष्वहंममाभिमान-रहितस्ये"ति भाष्ये इन्द्रियेषु ममताभिमानस्यैवोक्तत्वेन तत्र धर्म्यध्यास-स्यानावश्यकत्वात् धर्मादीनामिव परोक्षत्वमेवेन्द्रियाणां युक्तम्। अहं

सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत्, किं ज्ञानगतस्य

चक्षुष्मानिति ज्ञानं तु चक्षुष्मच्छब्देन शरीरस्यैव ग्रहणात् शरीरे इन्द्रियसंयोगात् प्रत्यक्षमिति युज्यते।

एवं चाहं बधिर इत्यादिज्ञानं धर्माध्यास एवेति नेन्द्रियप्रत्यक्षतां प्रयोजयति। धर्माध्यासस्य धर्म्यध्यासव्यापकत्वं यत् नियतम्, तस्यायमाशयः—यत् धर्म्यध्यासाधिष्ठाने धर्माध्यासो न धर्म्यध्यासं विना सम्भवति, नतु धर्म्यध्यासाधारे—इति। अत्राहं—पदार्थो नेन्द्रियाध्यासाधिष्ठानम्; शुद्धचैतन्ये इन्द्रियाध्यासात्, इति नापरोक्षतयेन्द्रियाध्यासोऽपेक्षितः। स्पष्टं चैतत् सिद्धान्तबिन्दुतट्टीकयोरिति तत्र द्रष्टव्यम्।

एवं चेन्द्रियाणां परोक्षत्वमेवेति नियमात् अध्यासभाष्येऽन्तःकरणधर्माध्यासतद्धर्म्यध्यासयोः व्याप्यव्यापकभावस्य मनःप्रत्यक्षत्वस्य च साधितत्वेन मनइन्द्रियत्वे तदनुपपत्तेर्मनस इन्द्रियत्वनिराकरणं सङ्गतमेवेति दिक्।

इदं च विवरणमतेन; वाचस्पतिमिश्रमते तु इन्द्रियधर्माध्यासोऽपि इन्द्रियाध्यासमूलक एव। न हि विवरणाचार्यैरिव भामतीकारैः "देहेन्द्रियादौ"ति वाक्यं देहादावहमभिमानहीनस्य इन्द्रिये ममताभिमानहीनस्येति व्याख्यातम्, किन्तु देहे इन्द्रियादौ च तादात्म्याध्यासतद्धर्माध्यासोभयहीनस्येति।

अत एव भामत्याम् इन्द्रियधर्मानित्यस्य इन्द्रियाणामध्यस्तात्मभावानां धर्मानिति व्याख्यातम्! एवं च इन्द्रियाध्यासस्याप्यपरोक्षस्य भामतीसम्मतत्वादिन्द्रियत्वं न प्रत्यक्षत्वविरोधीति मनस इन्द्रियत्वाङ्गीकारेऽपि न क्षतिः।

यत्तु पूर्वमस्माभिर्भामतीकारमते मनस उभयात्मकत्वेन प्रत्यक्षविषयत्वमुक्तम्, तदिन्द्रियस्य प्रत्यक्षाविषयत्वमभ्युपेत्येति न विरोधः। सिद्धान्तबिन्दुतट्टीके तु विवरणानुसारिण्याविति तत्रैव व्यक्तमिति।

ननु इन्द्रियजन्यत्वमेव प्रत्यक्षत्वप्रयोजकं युष्माभिरप्यङ्गीकरणीयम्, अन्यथासम्भवात्। न चेश्वरज्ञानस्याप्रत्यक्षताप्रसङ्गः; जन्यप्रत्यक्षं प्रत्येवास्य प्रयोजकत्वादित्याशयेन शङ्कते—सिद्धान्ते इति।

प्रमाणप्रमितिप्रमेया अपरोक्षपदेन विषयीक्रियन्ते, तत्र प्रमाणगतप्रत्यक्षत्वप्रयोजकत्वं प्रत्यक्षप्रमाकरणत्वमिति प्रागुक्तम्, तत्रापि यद्यपि ज्ञाने प्रत्यक्षत्व-

प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि ? किं वा विषयगतस्य ? आद्ये प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इति ब्रूमः ।

तथाहि——त्रिविधं चैतन्यम्——विषयचैतन्यं प्रमाणचैतन्यम् प्रमातृचैतन्यञ्चेति । तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम् । अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम् । अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम् ।

प्रयोजकनिरूपणमन्तरा न निर्णयो भवति ; तथापि प्रमितिप्रमेययोः प्रत्यक्षत्वप्रयोजकनिरूपणेनैव सर्वदोषनिरासात् तदेवात्र निरूपणीयमित्यभिप्रायेण पर्यनुयुङ्क्ते—किं ज्ञानगतस्येति । वृत्त्यवच्छिन्नचैतन्यगतस्येत्यर्थः ।

चैतन्यगतप्रत्यक्षत्वप्रयोजकं चैतन्यमेव ; "यत् साक्षादपरोक्षाद् ब्रह्मेति" श्रुतेरिति पूर्वं निरूपितम् । विषयगतस्येति स्वरूपचैतन्येतरविषयगतस्येत्यर्थः । तेन वक्ष्यमाणविषयप्रत्यक्षत्वप्रयोजकस्य ब्रह्मसाधारण्याभावेऽपि न क्षतिः ; तत्र चैतन्यत्वस्यैव प्रयोजकत्वात्, प्रमाणजन्यप्रत्यक्षप्रमाप्रसङ्गेन निरूप्यमाणस्य प्रयोजकस्याजन्यप्रमासाधारण्यस्यानपेक्षितत्वात् । अत एव लघुचन्द्रिकादौ अभानापादकाज्ञानाविषयत्वतद्विशिष्टचित्तादात्म्यान्यतरवत्त्वं विषयप्रत्यक्षत्वमिति तत् निरुक्तमिति ।

प्रमाणचैतन्यस्येति । वृत्त्यवच्छिन्नचैतन्यगतं विषयावच्छिन्नचैतन्याभिन्नत्वमित्यर्थः । विषयचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वमिति यावत् ।

सिद्धान्तबिन्दौ मधुसूदनसरस्वत्यः विषयव्यापकान्तःकरणभागः विषयस्य ज्ञानकर्मत्व रूपादकतायोग्यमभिव्यक्तियोग्यत्वं प्रमितिः तद्विषयं ब्रह्मचैतन्यं प्रमेयमिति व्यवह्रियते, देहगतान्तःकरणभागावच्छिन्नचैतन्यं प्रमातृचैतन्यं विषयदेहमध्यवृत्तिदण्डायमानान्तःकरणभागावच्छिन्नचैतन्यं प्रमाणचैतन्यमिति वदन्ति, तदेव मनसि निधाय प्रकृतोपयोगिचैतन्यविभागमुपक्रमते—त्रिविधमिति । प्रमाणचैतन्यमिति । प्रमितिचैतन्यमित्यर्थः ।

अन्तःकरणस्यैकदेशविकारो वृत्तिरिति मताङ्गीकारे हि न केवलं यथा तड़ागोदकमित्यादिवक्ष्यमाणदृष्टान्तानुपपत्तिः, किन्तु वक्ष्यमाणस्य परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये समावेशस्य चानुपपत्तिः।

तथाहि—एकदेशविकारो वृत्तिरिति पक्षे हि परिणामानन्तरं बहिर्निर्गमो वा उक्तमनसो विषयसम्बन्धानन्तरमेकदेशपरिणामो वा? नाद्यः; विषयसंयुक्तचक्षुःसंयोगमात्रं न प्रत्यक्षकारणम्, किन्तु विषयमनःसंयोगोऽपि कारणम्, अन्यथा विषयचैतन्यप्रमातृचैतन्ययोरभेदायोगेन विषयप्रत्यक्षत्वासम्भवात्, विषयसंयुक्तमनोजन्यवृत्तिविषयत्वं प्रत्यक्षत्वमिति वृत्तिविनिर्गमं विनापि प्रत्यक्षत्वनिरूपणसम्भवेन वृत्तिबहिर्निर्गमवादायोगाच्च।

यदि तु विषयसम्बन्धं विना विषयप्रत्यक्षत्वाविवेक इत्युच्यते, तर्हि साक्षिभास्ये सुखादाविवान्तःकरणविषयसम्बन्ध एव लाघवात् प्रत्यक्षत्वप्रयोजक इत्यङ्गीक्रियताम्। परिभाषाकृता साक्षिभास्यानां चक्षुरादिप्रमाणान्तरानपेक्षत्वेन वृत्तिभास्यत्वं यदङ्गीकृतम्, तस्यापि मनोभागविशेषो वृत्तिरित्येवाशयः। उक्तं हि बिन्दुटीकायाम्—"आत्मसुखादौ मनःकरणकस्यैव साक्षात्कारस्य वाचस्पतिमतेऽङ्गीकारादि"ति।

विषयचैतन्यप्रमाणचैतन्य प्रमातृचैतन्यानामेकदेशस्थोपाधित्रयावच्छिन्नत्वेनाभेदवर्णनादिकमपि एकदेशपरिणामपक्षे न सम्भवति। यद्यपि वृत्तिविषययोरेकदेशस्थत्वं सम्भवति, अन्तःकरणविषयवृत्तीनां तु न कथमपि भवति, अस्मन्मते तु यथा मठ-तदेकदेशस्थघटावच्छिन्नाकाशयोरपि मठाकाशत्वेन व्यवहारः एवमन्तःकरणावच्छिन्नचैतन्यमन्तःकरणभागावच्छिन्नचैतन्यं चैकं भवति। अत एव मठान्तर्वर्तिघटावच्छिन्नाकाशस्य यथा मठाकाशत्वमित्याद्युत्तरग्रन्थोऽप्युपपद्यते।

परोक्षस्थले तु न विषयदेशपर्यन्तो विलास इति पर्वतो वह्निमानित्यत्र शरीरान्तरेवान्तःकरणस्य भागद्वयकल्पनात् परोक्षत्वापरोक्षत्वयोरेकत्र समावेश उपपद्यते। किं च न कुत्रापि परिभाषायामयं पक्ष उपन्यस्तः। यथा "वृत्तिप्रक्रियावाक्ये तैजसमन्तःकरणं चक्षुरादिद्वारा बहिर्निर्गत्ये"त्युक्तम्। एवम् "अनुमित्यादिस्थले तु" इत्यत्र "अन्तःकरणस्य बहिर्निर्गमाभावादि"त्येवोक्तं न तु वृत्तेर्निर्गमाभावादिति।

"पर्वताद्यवच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्ये"त्यत्र

## तत्र यथा तड़ागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तः-करणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा

तु वहिर्निःसृतं यदन्तःकरणं तस्य वृत्तिरिति योजनैव सम्भवति। विषयप्रत्यक्षत्व-विचारावसरेऽपि "अनुमित्यादिस्थलेऽन्तःकरणस्य वहिर्निर्गमनाभावेने"त्येवोक्तम्; "पर्वतावच्छिन्नचैतन्यस्य वहिर्निःसृते"ति वाक्यानन्तरं "वह्न्यंशेऽन्तःकरणवृत्ति-निर्गमाभावेने"ति पाठः अपपाठ एव, पूर्वतनवाक्ये "वहिर्निःसृतान्तःकरणवृत्तौ"-त्यत्र निःसृतपदस्य वृत्तावन्वयभ्रमेण केश्चन शोधकैः कल्पितो वेति मन्तव्यम्।

अत एव न द्वितीयः; मनोभागसम्बन्धमात्रेणैव प्रत्यक्षत्वसम्भवे परिणाम-कल्पनावैयर्थ्यात्। तदुक्तं सिद्धान्तविन्दौ—"तस्य च त्रिभागस्यान्तःकरणस्य स्वसंवद्धचैतन्यभासकत्वमि"ति। न हि तड़ागोदकस्यैकदेशपरिणामानन्तरं निर्गमः केदारसम्बन्धानन्तरं च परिणामः प्रत्यक्षसिद्धः प्रत्यक्षावाधितो वा।

एवंच विषयावच्छिन्नचैतन्यं विषयचैतन्यं विषयसंयुक्तमनोभागावच्छिन्न-चैतन्यं प्रमितिचैतन्यं विषयशरीरमध्यवृत्तिभागावच्छिन्नचैतन्यं प्रमाणचैतन्यं शरीरसंसृष्टान्तःकरणभागावच्छिन्नचैतन्यं प्रमातृचैतन्यमित्येव ग्रन्थकृदाशयः। तथाच नात्रैकदेशपरिणामपक्षेण योजनं युक्तम्।

तदुक्तं विन्दुटीकायाम्—"ननु चक्षुरादीनामपि प्रमाणत्वसम्भवात् दर्शनान्तरे-ष्वुक्तत्वाच्च तदनुक्त्या न्यूनत्वमिति चेत्, न; प्रमासामान्यकरणत्वस्य दर्शनान्तरे-ष्वुक्तत्वात्तदुक्तेरेव प्रकृतोपयोगाद् वृत्तिरेवात्र प्रमाणपदेन व्यवह्रियते" इति। अत्र च मन एव वृत्तिः, न तु तत्परिणाम इति व्यक्तम्। तदिदं सूचयन्नाह—

## तत्रेति।

ननु अन्तःकरणं नाणुपरिमाणम्; दूरवर्तिध्रुवादिविषयदेशपर्यन्तं गमनेन देहस्य विषयापरोक्षतादशायां निर्जीवत्वापत्तेः, नापि मध्यमपरिमाणम्; देहादिवन्मन्द-गमनप्रसङ्गेन झटिति विषयप्रतिभानायोगात्। नापि आकाशादिवत् परम-महापरिमाणम्; निष्क्रियत्वापत्तेः, एवं च कथमन्तःकरणपरिणामो वृत्ति-रित्यत आह—**तैजसमन्तःकरणमिति।** तथाच मध्यमपरिमाणमपि मन-स्तैजसद्रव्यत्वेन सूर्यकिरणवत् शीघ्रप्रसरणशीलं भवतीति न दोष इति भावः।

घटादिविषयाकारेण परिणमते; स एव परिणामो वृत्तिरित्युच्यते। अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशगमनम्; वह्न्यादेश्चक्षुराद्यसन्निकर्षात्। तथाच—अयं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च वहिरेकत्र देशे समवस्थानात्तदुभयावच्छिन्नं चैतन्यमेकमेव; विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थत्वेन भेदाजनकत्वात्। अत एव

**विषयाकारेण परिणमते इति।** विषयसम्बन्धेन विषयतुल्याकारो भवतीत्यर्थः। परिणामो नाम सम्बन्धविशेष एवेति पूर्वमेव लघुचन्द्रिकाविवरणविट्ठलेशोयवाक्योपन्यासपूर्वकमुक्तम्। **उच्यते** अद्वैतिभिरिति शेषः। एवं च विषयान्तःकरणसम्बन्धः सर्वदर्शनसिद्ध एव, तत्र वृत्तिपदव्यवहारमात्रमद्वैतिनां विशेष इति भावः। चक्षुरादिद्वारेत्युक्तेरनुमित्यादिस्थले नान्तःकरणस्य वह्न्यादिदेशगमनमित्याह—**अनुमित्यादिस्थले इति।** पूर्वोक्तशङ्कानिवर्तनपूर्वकम् "अयं घट" इत्यादौ प्रत्यक्षलक्षणसमन्वयं दर्शयति—**तथाचेत्यादिना। तथाच** अन्तःकरणस्य वहिर्निर्गमने सिद्धे चेत्यर्थः।

अत्र त्रिविधं चैतन्यम्, विषतचैतन्यं, प्रमाणचैतन्यं प्रमातृचैतन्यमिति विभागे प्रमाणचैतन्यविषयचैतन्ययोरभेदः कथम्? चैतन्यं ह्येकमपि उपाधिभेदाद् भिन्नमेव, यथा—घटाकाशो मठाकाशाद् भिन्नः, एवं प्रमाणचैतन्यस्य वृत्त्युपाधिकत्वाद् विषयचैतन्यस्य विषयोपाधिकत्वाद् भेद एव तयोः स्यादित्याशङ्क्याह—

**अयं घट इत्यादि।** अयं घट इति ज्ञानं घटांशे प्रत्यक्षम्; घटतदाकारवृत्त्यवच्छिन्नचैतन्ययोरेकदेशस्थितघटतदाकारान्तःकरणोभयावच्छिन्नत्वेन तयोर्भेदप्रतीत्ययोगात्; भिन्नदेशावेवोपाधी उपधेयभेदं प्रमापयतः, नत्वेकदेशौ। नहि मठाकाशः मठैकदेशस्थघटावच्छिन्नाकाशश्चैकदेशस्थोपाधिद्वयावच्छिन्नौ भिन्नौ, घटप्रत्यक्षत्वदशायां तु घटदेशेऽन्तःकरणस्य संयोगात् अन्तःकरणैकदेशस्यैव वृत्तिपदार्थत्वात् घटावच्छिन्नचैतन्यं घटगताभिव्यक्तियोग्यत्वरूपप्रमितिचैतन्यं चैकमिति लक्षणसमन्वयः।

**मठान्तर्वर्त्ति घटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाद् भिद्यते । तथाच अयं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य चाभिन्नतया**

**भेदाजनकत्वात्** भेदप्रतीत्यजनकत्वात्। एवंच प्रमाणचैतन्यस्य विषयचैतन्याभेद इत्यनेन विषयचैतन्याभिन्नत्वप्रकारकज्ञानविषयप्रमितिचैतन्यत्वमेव विवक्षितमिति मन्तव्यम् ।

**एतेन**—यदि विषयशरीरमध्यवृत्तिमनोभागावच्छिन्नचैतन्यं प्रमाणचैतन्यम्, न तु घटसंयुक्तभागावच्छिन्नम्, तदा मठान्तर्वर्त्तिघटाकाशकुशूलाकाशयोर्यथा नाभेदः, एवं विषयचैतन्यप्रमाणचैतन्ययोरपि नाभेदः। तथाच घटांशे प्रत्यक्षत्वसमन्वयो न भवति, एवं चैकदेशपरिणामपक्ष एव युक्तः, तत्र तु मते घटाकारवृत्तेर्घटदेशतदतिरिक्तदेशव्यापित्वेन तस्या मठस्थानीयत्वेन घटस्य च मठान्तर्वर्त्तिघटस्थानीयत्वेन चाभेदः संभवति। न च प्रमाणचैतन्यमित्यस्य प्रमितिचैतन्यमित्येवार्थः, एवं च पूर्वोक्तरीत्याऽभेद उपपद्यत इति वाच्यम्; वृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यमिति विवरणविरोधेन प्रमाणचैतन्यपदेनोक्तार्थविवक्षाऽसम्भवादित्याशङ्का—**परास्ता** । एकदेशपरिणामपक्षे उक्तदृष्टान्तेन प्रमाणचैतन्याभेदायोगेन विषयप्रत्यक्षलक्षणासाधुत्वप्रसङ्गेन वृत्तिपदस्यान्तःकरणभागपरत्वस्य विन्दुटीकायामुक्तत्वेन च प्रमितिचैतन्यमिति विवरणे दोषाभावेन चोक्तशङ्कानुदयात्। तदेतत् सर्वं मनसिकृत्याह—**अयं घट इत्यादिना—घटांशे प्रत्यक्षत्वम् इत्यन्तेन** ।

**भिद्यते** भिन्नत्वेन भाति। **घटाकारवृत्तेः** घटसदृशाकारसंयुक्तमनोभागस्य। **घटसंयोगितया** सुधाघटसंयोगसदृशपरिणामपदबोध्यघटानुयोगिकसम्बन्धविशिष्टत्वेन। एतेन—संयोगस्याव्याप्यवृत्तितया सर्वदेशावच्छेदेन मनःसंयोगासम्भवेन सर्वांशेन घटप्रत्यक्षताव्यवहारः कथमुपपद्यते ? इति शङ्का परास्ता ।

**तद्वृत्त्यवच्छिन्नचैतन्यस्य** घटसंयुक्तमनोभागावच्छिन्नचैतन्यस्य। **घटज्ञानस्य** घटाधिष्ठानब्रह्मचैतन्यस्य। **घटांशे** घटावच्छिन्नत्वेन।

तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वम्, सुखदुःखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य च नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वान्नियमेनाहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वम्।

नन्वेवं स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षतापत्तिरिति चेत्, न; तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्तमानत्वेन तत्रोपाध्योर्भिन्नकालिकतया तदवच्छिन्नचैतन्ययोर्भेदात् उपाध्योरेकदेशस्थत्वे सत्येककालिकत्वस्योपधेयाभेदप्रयोजकत्वात्।

स्वरूपेण तु ब्रह्मचैतन्यं न कदापि परोक्षम्, नापि स्वापरोक्षतार्थं प्रमाणव्यापारं मनो वाऽपेक्षत इति पूर्वमेवोक्तम्। एवंच मनोभागविषयोभयावच्छिन्नत्वं ब्रह्मचैतन्यस्य विषयांशे प्रत्यक्षत्वप्रयोजकमिति सिद्धम्। तथाच उक्तप्रत्यक्षत्वप्रयोजकं सुखादिसाक्षात्कारसाधारणं मनस इन्द्रियत्वं विनापि घटत इति सुखादिसाक्षात्कारत्वान्यथानुपपत्त्या मनइन्द्रियत्वसाधनं नोपपन्नमिति सूचयन् सुखादिप्रत्यक्षेऽपि लक्षणसमन्वयं प्रदर्शयति—**सुखदुःखादीति**।

**अहं सुखीत्यादिज्ञानस्येति**। सुखाद्यंशे इति शेषः। नच—वृत्त्यवच्छिन्नचैतन्यगतमेव प्रत्यक्षत्वमत्र विचार्यते इति—वाच्यम्; सुखावच्छिन्नस्यापि चैतन्यस्य तदवच्छिन्नत्वेनैव प्रत्यक्षत्वव्यवहारात्। अत एवोत्तरत्र वृत्तौ विषयप्रत्यक्षत्वलक्षणाव्याप्तिशङ्कोपपद्यते। नचैतावता वृत्तेरिव चैतन्योपाधितया सुखादेरपि ज्ञानपदव्यवहार्यत्वापत्तिः; इष्टत्वात्, अज्ञानविरोधितावच्छेदकत्वस्यैव ज्ञानपदव्यवहारनिमित्तत्वात्। ज्ञानावच्छेदकत्वाच्चेति पूर्वग्रन्थस्याप्ययमेवाशयः।

ननूपाध्योर्भेदकत्वं यद्युपाध्योरेकदेशस्थत्वेन भवति, तर्हि स्ववृत्तिसुखादिस्मरणेऽतिप्रसक्तमिदं प्रयोजकम्, न हि स्मरणं प्रत्यक्षमिति कस्यापि मतम्, इत्याशयेन शङ्कते—**नन्विति**।

यदि एकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकम्, तदा पूर्वमहं सुखीत्यादिस्मृतावतिव्याप्तिवारणाय वर्तमानत्वं विषयविशेषणं देयम्।

उपाध्योरेकदेशस्थयोरपि भिन्नकालिकत्वे तयोरुपधेयभेदकत्वमेवाङ्गीकरणीयम्। उपाध्योरेककालिकत्वविशिष्टैकदेशकत्वस्यैवोपधेयाभेदप्रयोजकत्वात्। एवं च यत्र देशे सुखाकारान्तःकरणपरिणामः, तत्रैव देशे सुखमपि पूर्वमासीदित्येकदेशस्थयोरपि सुखतदाकारवृत्त्योः सुखस्यातीतत्वं वृत्तेर्वर्तमानत्वमिति भिन्नकालिकत्वात् नात्र सुखावच्छिन्नचैतन्याभिन्नं तद्वृत्त्यवच्छिन्नचैतन्यमिति नोक्तातिव्याप्तिरिति समाधत्ते—तत्रेति। सुखादिस्मरण इत्यर्थः।

तुष्यतु दुर्जनन्यायेनाङ्गीकृत्यैकदेशस्थत्वमात्रस्योपधेयाभेदप्रयोजकत्वं विषयावच्छिन्नेत्युक्तलक्षणे वर्तमानत्वं विषयस्य विशेषणं दत्वा वर्तमानविषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नत्वमेव ज्ञानप्रत्यक्षत्वप्रयोजकमिति सुखादिस्मरणस्थलेऽनतिव्याप्तिमाह—यदि चेति। विषयविशेषणमिति। विषयचैतन्याभिन्नप्रमाणचैतन्यत्वमिति प्रत्यक्षप्रयोजकघटकविषयव्यावर्तकमित्यर्थः।

ननु—विषयावच्छिन्नचैतन्याभिन्नप्रमाणचैतन्यत्वमित्यत्र विषयस्य चैतन्योपाधितया वर्तमानत्वमपेक्षितम्, न हि विषयातीततायां विषयावच्छिन्नं चैतन्यं भवतीति विनापि वर्तमानतानिवेशं सुखादिस्मरणेऽतिव्याप्त्यभावात् किमर्थमिदं विशेषणमिति—चेत्,

अत्राशुबोधिनीकाराः—"विषयचैतन्यस्य प्रमाणचैतन्याभिन्नत्वमित्यनेन स्वातिरिक्तविषयचैतन्यसत्त्वाभावकालीनवृत्त्यवच्छिन्नचैतन्यत्वं विवक्षितम्। अयं घट इत्यादौ घटाकारवृत्त्यवच्छिन्नचैतन्याभिन्नमेव घटावच्छिन्नचैतन्यमिति न स्वातिरिक्तं विषयचैतन्यमस्तीति तत्सत्त्वाभावकालीनत्वाल्लक्षणसमन्वयः। सुखादिस्मरणे तु विषयचैतन्यस्यैवाप्रसिद्धत्वात् स्वातिरिक्तविषयचैतन्यसत्त्वाभावकालीनत्वं विद्यते इत्यतिव्याप्तिः वर्तमानताऽनिवेशे भवत्येव। विषये वर्तमानतानिवेशे तु विषयावच्छिन्नचैतन्यस्य सत्त्वाभावेऽपि विषयस्य वर्तमानताभावात् नातिव्याप्तिरि"—वर्णयन्ति।

तत्र दत्तेऽपि वर्तमानत्वविशेषणे सुखाकारवृत्त्यवच्छिन्नचैतन्यातिरिक्तं वर्तमानसुखावच्छिन्नचैतन्यं सुतरामप्रसिद्धमिति नाशुबोधिनीनिष्कर्षोऽत्र समादरणीय इत्यन्यथैव वयमत्रोक्तशङ्कापरिहारमभिप्रेमः ।

अधिष्ठानसाक्षात्कारपर्यन्तं हि ब्रह्मव्यतिरिक्तानां सर्वेषामपि कारणरूपसत्त्वमेवाद्वैतिनो मन्यन्त इति सुखस्मरणकालेऽपि सुखावच्छिन्नचैतन्यं प्रसिद्धमेव । अत एव द्वैततादात्म्यविशिष्टे ब्रह्मणि "नेह नानास्ति किञ्चने"ति भूतभाव्यादिसर्वप्रपञ्चनिषेध उपपद्यते ; अन्यथा भूतभाव्याद्युपहितचैतन्यस्यैवाप्रसिद्धत्वे तत्र सर्वनिषेधोऽकिञ्चित्करः । आशुबोधिनीसम्मतपरिष्कृतार्थविवक्षणे तु तन्मतरीत्या घटादिस्मरणेऽपि घटाकारवृत्त्यवच्छिन्नचैतन्यातिरिक्तघटावच्छिन्नचैतन्यसत्त्वाभावसमकालीनत्वेनातिव्याप्त्या सुखादिस्मरणपर्यन्तानुधावनं वितथम् । नच—सुखादिप्रत्यक्षे लक्षणसमन्वयानन्तरं तत्स्मरणमेव प्रथमोपस्थितमिति तत्रातिव्याप्तिप्रदर्शनं युक्तमिति—वाच्यम् ; एवमपि उपाध्योरेकदेशस्थत्वस्योपधेयाभेदप्रयोजकत्वनियमोपजीवनेनोक्तपूर्वपक्षग्रन्थप्रवृत्त्यसाङ्गत्यप्रसङ्गात् ।

किञ्चाशुबोधिनीकारा अपि—उपाध्योरेकदेशस्थत्वे सत्येककालिकत्वस्यैवोपधेयभेदाप्रयोजकत्वादिति ग्रन्थावलम्बेन सुखादिस्मरणे विषयचैतन्यप्रमाणचैतन्ययोरभेदबाधेनैव प्रथमतोऽतिव्याप्तिनिरासग्रन्थं व्याचक्षते, न तु विषयचैतन्याप्रसिद्ध्या, विषये विशेषणान्तरप्रदानेन वा । एवञ्च स्मरणस्थले विषयचैतन्याप्रसिद्धेरेव वारणं यदि परिभाषाकृतामभिमतं स्यात्, तर्हि प्रयासोऽयं तेषां विफलः स्यात् । सर्वथा च विषयचैतन्याप्रसिद्धिशङ्का तत्परिहारादिकं सर्वमप्याशुबोधिनीकाराणामापातरमणीयमेवेति । तथाच वर्तमानत्वं स्वरूपेण विद्यमानत्वपरमिति न दोषः ।

नन्वेवमपि धर्माधर्मादिज्ञानेऽतिव्याप्तिः—धर्माधर्मौ हि मनोधर्मावपि नापरोक्षौ, किन्तु परोक्षावेव, स्वभाववैचित्र्यात् । तथाहि—त्वं सुकृतीति वाक्येनाहं सुकृतीति ज्ञानं शाब्दं जायते । तत्र धर्मतदाकारान्तःकरणपरिणामयोरेकदेशस्थत्वेनोभयावच्छिन्नचैतन्याभेदेन विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वरूपोक्तप्रत्यक्षत्वप्रयोजकं विद्यते । आन्तराणां पदार्थानां विनैव बहिर्निर्गममन्तःकरणेन पूर्वोक्तः परिणामपदाभिधेयः सम्बन्धविशेषः सुखादिषु दृष्ट इति धर्माधर्मयोरपि स आवश्यक एव ।

नन्वेवमपि स्वकीयधर्माधर्मौ वर्तमानौ यदा शब्दादिना ज्ञायेते, तदा तादृशशाब्दज्ञानादावतिव्याप्तिः, तत्र धर्माद्यवच्छिन्नचैतन्यतद्वृत्त्यवच्छिन्नचैतन्ययोरैकत्वादिति चेन्न ; योग्यत्वस्यापि विषयविशेषणत्वात्। अन्तःकरणधर्मत्वा-

एतेन—बहिर्निर्गतस्याप्यन्तःकरणस्य परमाण्वादिभिर्यथा न सम्बन्धो घटेन तु स भवति, तथान्तरपदार्थेष्वपि केषुचन परिणामाख्यः सम्बन्धविशेषः केषुचन नेति धर्माद्यपरोक्षतानिरासः—प्रत्युक्तः ; परमाण्विन्द्रियसंयोगाभावेन दृष्टान्ते मनःपरिणामायोगेऽपि धर्माधर्मादौ तदभावकल्पने प्रमाणाभावात्, इत्याशयेन शङ्कते—नन्वेवमपीति।

एवमपि विषये वर्तमानत्वविवक्षायामपि। स्वकीयधर्माधर्माविति। अयं सुकृतीति परकीयधर्माधर्मादिज्ञाने तु वृत्तिविषययोर्भिन्नदेशस्थत्वान्नोक्तातिप्रसङ्ग सति स्वकीयेत्युक्तम्। शाब्दज्ञानादाविति। शब्दजन्यं ज्ञानं परोक्षमेवेति नैयायिकादयः, भामतीकाराश्च मन्यन्ते। विवरणाचार्यास्तु शब्दजन्यमपि ज्ञानं सन्निकृष्टविषयमपरोक्षमेवेति वर्णयन्ति।

तत्र प्रथममतावलम्बेनालक्ष्यत्वं सूचयितुं शाब्देति विशेषणम्, द्वितीयमतावलम्बेनालक्ष्यत्वं तु धर्माधर्मपदेनैव सूचितम्। एतेन शाब्देति विशेषणवैयर्थ्यशङ्का परास्ता। समाधत्ते—नेति। योग्यत्वस्यापीति। अपिना वर्तमानत्वसमुच्चयः। योग्यत्वस्य तत्तत्प्रत्यक्षविषयतावच्छेदकस्वभावविशेषस्येत्यर्थः।

यत्तु अत्र तत्तदिन्द्रिययोग्यत्वस्येत्याशुबोधिनीविवरणम्, तत् सुखादीनामिन्द्रियायोग्यत्वात् सुखादिप्रत्यक्षाव्यापकत्वान्न सङ्गतम्।

विषयविशेषणत्वादिति। एवञ्च योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नत्वं विषयांशे ज्ञानप्रत्यक्षत्वप्रयोजकमिति पर्यवसन्नत्वात् न धर्माधर्मादिप्रत्यक्षायोग्यपदार्थज्ञानेऽतिव्याप्तिः।

"नैमित्तिके सति निमित्तानुसरणम्, न तु निमित्तमस्तीति नैमित्तिकारोप"

**विशेषेऽपि किञ्चिद् योग्यं किञ्चिदयोग्यमित्यत्र फलबलकल्प्यः स्वभावविशेष एव शरणम्; अन्यथा न्यायमतेऽप्यात्मधर्मत्वाविशेषेऽपि सुखादिवद्धर्मादेः प्रत्यक्षत्वापत्तिर्दुर्वारा ।**

इति न्यायेन धर्माधर्मादिप्रत्यक्षस्य कस्याप्यनभिमतत्वेन तत्र परोक्षत्वमात्रफलानुगुणस्वभावविशेष एव प्रत्यक्षयोग्यत्वप्रतिबन्धक इति कल्प्यते, तदेतदाह—**अन्तःकरणेति ।** अन्तःकरणधर्मत्वेन सुखादितुल्यत्वेऽपीत्यर्थः ।

**स्वभावविशेष इति ।** अनुद्भूतत्वमित्यर्थः । तदुक्तं सिद्धान्तलेशसंग्रहे—"न चान्तःकरणतद्धर्माणां ज्ञानादीनामिव धर्माधर्मसंस्काराणामपि साक्षिणि कल्पितत्वाविशेषात् आपरोक्ष्यापत्तिः; तेषामनुद्भूतत्वात्, उद्भूतस्यैव जडस्य चैतन्याभेद आपरोक्ष्यमित्यभ्युपगमादि"ति ।

ननु—धर्माधर्मादिकम्, प्रत्यक्षयोग्यम्, मनोजन्यत्वात्, सुखादिवदित्यनुमानेन धर्मादीनां मनोधर्मत्वेऽपरोक्षत्वापत्त्याऽन्यधर्मत्वमेव तेषामङ्गीकरणीयम्; एवञ्च "तत्सामान्यादितरेषु तथात्वमि"ति न्यायेन कामादीनामप्यात्मधर्मत्वमेवाङ्गीकरणीयमिति वृत्तेरन्तःकरणपरिणामत्ववादो न युक्त इति—चेत्, न; धर्माधर्मादीनामात्मधर्मतावादिनां नैयायिकानामपि मते आत्मधर्मत्वेन सुखादिवत् धर्मादिप्रत्यक्षताप्रसङ्गेन "यश्चोभयोः समो दोषो न तत्रान्यतरः पर्यनुयोगार्हः" इति न्यायेन धर्मापरोक्षतायाः स्वभावविशेषाभावेनैव परिहरणीयत्वेन कस्यापि दोषस्याप्रसङ्गात् । तदेतत् सर्वं मनसिकृत्याह—**अन्यथेति ।** प्रत्यक्षयोग्यतायां तदयोग्यतायां च स्वभावविशेषस्यैवानियामकत्वे ।

ननु—धर्माधर्मादेरन्तःकरणधर्मत्वे प्रमाणाभावः, न च "कामः सङ्कल्प" इति श्रुतिर्मानम्, तत्र कामसङ्कल्पादिपदेषु केनापि धर्माधर्मसुखादीनामनुपादानात् । एवञ्च नियमेनान्तःकरणदेशस्थत्वेन सुखादिज्ञानं कथं प्रत्यक्षम्? कथं वा धर्मादिज्ञानातिप्रसङ्गापादनमिति—चेत्,

अत्रेवं सम्प्रदायः—यागो नाम ज्ञानं सङ्कल्पविशेषो वा, यो "ज्योतिष्टोमेने"त्यादिवाक्यैर्विधीयते । धर्मो नाम सूक्ष्मावस्थापन्नो याग एवेति प्राचीनमीमांसका मन्यन्ते । एवं सुखमपि वृत्तिप्रतिफलितानन्दैकदेश एव । एवञ्च सङ्कल्पज्ञानादिमनोधर्मत्वेनैव धर्माधर्मादिधर्मत्वमपि "कामः सङ्कल्प" इति श्रुत्याऽर्थसिद्धमेवेति ।

**नचैवमपि सुखस्य वर्तमानतादशायां त्वं सुखीत्यादि-वाक्यजन्यज्ञानस्य प्रत्यक्षता स्यादिति वाच्यम्; इष्टत्वात्। दश-**

यत्तु आशुबोधिन्यां—धर्माधर्मविषयकानुभवस्य प्रत्यक्षत्वशङ्कैव न भवति; शब्दादिजन्यत्वात्, तत्कथं तदव्याप्तिवारणाय प्रयासातिशय आद्रियते-इत्युक्तम्, तत् धर्माधर्मज्ञानेऽतिव्याप्तेरेवापादितत्वात् प्रामादिकमेव ।

नन्वेवमपि शब्दजन्यज्ञानस्य परोक्षत्वमिति नियमानुसारिभामत्यादिसिद्धान्ते त्वं सुखीति वाक्यजन्येऽहं सुखीति ज्ञाने उक्तप्रत्यक्षप्रयोजकस्य सत्त्वादतिप्रसक्तमिदं लक्षणमित्याशयेन शङ्कते—**न चैवमपीति ।** एवमपि विषयं प्रति योग्यत्वं वर्तमानत्वं चेति विशेषणद्वयविवक्षायामपीत्यर्थः । **त्वं सुखीति वाक्यजन्य-ज्ञानस्येति ।** अहं सुखीति ज्ञानस्येति शेषः ।

अत्र सुखं वर्तमानं योग्यं चेति योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्न-वृत्त्यवच्छिन्नत्वं सुखज्ञाने विद्यते, न चेदं लक्ष्यम्; वाक्यजन्यत्वादित्यतिप्रसङ्गवाक्य-विशिष्टार्थः ।

इदं हि प्रयोजकं न भामतीप्रस्थानेन, किन्तु विवरणप्रस्थानेनेति प्रस्थानान्तर-परत्वात्, प्रस्थानान्तरे च वाक्यजन्यज्ञानस्यापरोक्षत्वाभ्युपगमात्र तस्यालक्ष्यत्वमिति नातिप्रसङ्ग इत्याशयेन समाधत्ते—**इष्टत्वादिति ।** सुखादिज्ञाने वाक्यजन्ये प्रत्यक्षत्वस्येत्यादिः ।

भामतीप्रस्थाने तु मनस इन्द्रियत्वेऽपि प्रत्यक्षविषयत्वसम्भवात् इन्द्रियसन्नि-कर्षजन्यज्ञानत्वमेव प्रत्यक्षत्वमित्यङ्गीकारसम्भव इति पूर्वमेव सूचितम्। न चेश्वरज्ञानेऽव्याप्तिः; जीवप्रत्यक्षं प्रत्येवोक्तलक्षणप्रवृत्तेस्तस्यालक्ष्यत्वादिति न दोषः ।

ननु—तत्त्वमसीतिवाक्यजन्यं ज्ञानं परोक्षं वाक्यजन्यत्वात्, ज्योतिष्टोमादि-वाक्यजन्यज्ञानवदित्यनुमानेन वाक्यजन्यज्ञानस्य परोक्षत्वनियमात्, कथं त्वं सुखीति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वमिष्टमित्याशङ्क्याह—**दशमस्त्वमसी-त्यादाविति ।**

अयं भावः—तत्त्वमस्यादिवाक्यजन्यम् ज्ञानमपरोक्षम्, अपरोक्षार्थविषयत्वात्, चाक्षुषप्रत्यक्षवदित्यनुमानेन सत्प्रतिपक्षितत्वात्, अपरोक्षार्थविषयकत्वेन सोपाधि

मस्त्वमसीत्यादौ सन्निकृष्टविषये शब्दादप्यपरोक्षज्ञानाभ्युपगमात्।

कत्वात्, दशमस्त्वमसीति वाक्यजन्यज्ञाने व्यभिचारात्, अभिहितान्वयवादे पदार्थानामिव शाब्दबोधकारणत्वेन वाक्यजन्यत्वाभावेन स्वरूपासिद्धेश्च नोक्तानुमानेन तत्त्वमसीतिवाक्यजन्यज्ञानपरोक्षतापत्तिः।

दशमस्त्वमसीत्यत्र हि नेन्द्रियजन्यं दशमत्वज्ञानम्; शब्दश्रवणात् प्राक् इन्द्रियसन्निकर्षे सत्यपि तदनुदयात्। इन्द्रियस्य प्रत्यक्षजनकतायां शब्दस्य सहकारित्वं कुत्रापि न क्लृप्तमिति न शब्दसहकृतेन्द्रियजन्यत्वेनापि तदापरोक्ष्यम्। न च तस्य परोक्षत्वमेवेति शङ्क्यम्; अपरोक्षाध्यासनिवर्तकत्वायोगात्। एवञ्च शब्दजन्यमपि ज्ञानमपरोक्षमेवाङ्गीकरणीयम्। अत एव—

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति॥"

इति वचनमुपपद्यते। **सन्निकृष्टविषये इति।** अनेन पूर्वपक्षिणामनुमानेऽसन्निकृष्टार्थविषयत्वमुपाधिः प्रदर्शितः। **ज्ञानाभ्युपगमादिति।**

**अत्रेयमाख्यायिका**—यत्र दश सुहृदः संमिल्य ग्रामान्तरं प्रस्थिता मध्येमार्गं चौरेभ्यो भीतभीता नानामार्गैः प्रस्थिता भ्रान्त्वा भ्रान्त्वैकत्र मिलितास्तस्त आत्मानं विना गणनेन नवैव वयं मिलिता एकः कुत्रेति गवेषयन्तो दुःखसागरे निमग्नाः किमपि किमपि विलपन्तः आसते, तत्रैकेन पथिकेन प्रत्येकगणनया दशमस्त्वमसि दशमस्त्वमसीति बोधितास्ते सर्वेऽपि दशमोऽहमित्यात्मानमपरोक्षयन्तीत्यनुभवसिद्धमिति।

**तदुक्तं पञ्चदश्याम्**—

"न क्षतो दशमोऽस्तीति श्रुत्वा प्रवचनं तदा।
परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत्॥
त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः।
अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति॥
तथाऽवान्तरवाक्येन परोक्षब्रह्मधीर्भवेत्।

अत एव पर्वतो वह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षम्, पर्वतांशेऽपरोक्षम्। पर्वतावच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य च परस्परं भेदाभावात्। वह्न्यंशेत्वन्तःकरणवृत्तिनिर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात्। तथाचानुभवः—पर्वतं

सर्वत्रैव महावाक्यविचारात्त्वपरोक्षधीः ॥
ब्रह्मापरोक्ष्यसिद्ध्यर्थं महावाक्यमितीष्यितम् ॥" इति।

ननु सन्निकृष्टविषये शब्दप्रमाणजन्यस्यापि ज्ञानस्यापरोक्षत्वे पर्वतो वह्निमानित्यत्रापि पर्वतांशे ज्ञानास्यापरोक्षत्वापत्तिरित्याशङ्कामिष्टापत्त्या परिहरति—अत एवेति।

इन्द्रियाजन्यस्यापि सन्निकृष्टविषयेऽपरोक्षत्वाभ्युपगमादेवेत्यर्थः। **वह्न्यंशे** वह्न्याकारवृत्त्यवच्छिन्नत्वेन। **पर्वतांशे** पर्वताकारवृत्त्यवच्छिन्नत्वरूपेण। यद् यदाकारवृत्त्यवच्छिन्नत्वेन प्रत्यक्षं तत्तदवच्छिन्नमपीति नियमः प्रकृतेऽपि पर्वताकारवृत्त्यवच्छिन्नचैतन्यस्य पर्वतावच्छिन्नत्वस्यापि विद्यमानत्वादव्याहत इति पर्वतांशे प्रत्यक्षत्वं निरूपयितुं पर्वताकारान्तःकरणपरिमाणस्य पर्वतदेशसम्बन्धं निरूपयति—**बहिर्निःसृतेति**।

बहिर्निःसृतं यदन्तःकरणं तत्सम्बन्धविशेषरूपा या वृत्तिः तदवच्छिन्नस्येत्यर्थः। **वह्न्यंशे त्विति**। वह्न्याकारेत्यर्थः। वह्नेर्बहिर्निःसृतान्तःकरणसम्बन्धविशेषाभावादित्यर्थः। पर्वतो वह्निमानिति ज्ञानस्यानुमितित्वव्यवहारस्तु वह्न्याकारवृत्त्यवच्छिन्नत्वेनैव, न तु पर्वताकारवृत्त्यवच्छिन्नत्वेन, तेन रूपेण तु प्रत्यक्षत्वमेवेत्यमुमर्थमनुभवप्रमाणेन द्रढयति—**तथाचेति** ॥

**एतेन**—अनुमित्यादिसाधारणं लक्षणं प्रकल्प्य पर्वतो वह्निमानिति ज्ञानस्य प्रसिद्धानुमितिभावस्य लक्षणेन प्रत्यक्षत्ववर्णनं न युक्तम्। उक्तं हि भट्टपादैः—

पश्यामि वह्निमनुमिनोमीति। न्यायमते पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः। असन्निकृष्टपक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम्। सुरभि चन्दनमित्यादिज्ञानमपि चन्दनांशेऽपरोक्षम्, सौरभांशे परोक्षम्; सौरभस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात्।

"सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्॥"—इति

शङ्का—परास्ता; पर्वतांशेऽपरोक्षत्वस्यैव लोकसिद्धत्वात्॥

न केवलं पर्वतं पश्यामीत्यनुव्यवसायात् साधकादेतदर्थसिद्धिः, किन्तु पर्वतमनुमिनोमीत्यनुव्यवसायापत्त्यापीत्याह—न्यायमते इति।

ननु—पर्वतो वह्निमानिति ज्ञानं प्रसिद्ध्यनुसारेण सर्वांशेऽप्यनुमितिरेवाङ्गीकरणीयमित्याशङ्कायाम् असन्निकृष्टपक्षकानुमितिपरतयोक्तप्रसिद्धेर्नं सन्निकृष्टपक्षकानुमितावपि पर्वतांशेऽपरोक्षत्वस्य विघात इत्याह- असन्निकृष्टपक्षकेति। सर्वांशेऽपि।

सम्मतमिदं परेषामपि यदेकस्मिन् ज्ञानेंऽशभेदेन रूपभेद इत्याह—सुरभि चन्दनमिति। चक्षुरिन्द्रियायोग्यतयेति। चक्षुरिन्द्रियद्वारकनिर्गमवदन्तःकरणपरिमाणशून्यतयेत्यर्थः। योग्यत्वघटितस्येति। योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वघटितस्येत्यर्थः। सुरभि चन्दनमित्यत्र चन्दनांश एवेन्द्रियसन्निकर्षात् विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वरूपं प्रत्यक्षत्वम्, न तु सौरभांशे, तस्येन्द्रियसन्निकर्षाभावेन तदाकारनिर्गतान्तःकरणपरिणामाख्यसम्बन्धाभावेन वह्न्यंश इवापरोक्षत्वासम्भवात्। न हि तत्र विषयावच्छिन्नचैतन्याभिन्नं वृत्त्यवच्छिन्नं चैतन्यम्। एवञ्च यथाऽत्रांशभेदेन लौकिकालौकिकप्रत्यक्षत्वे, एवं पर्वतो वह्निमानित्यत्रांशभेदेन परोक्षत्वापरोक्षत्वे अपि न दोषायेति भावः।

यत्तु शिखामणौ सुरभि चन्दनमिति ज्ञानस्य चन्दनांश इव सौरभांशेऽपि प्रत्यक्षत्वाभावेन तत्र योग्यत्वघटितलक्षणातिव्याप्तिर्दुर्वारेति चेत्, सत्यम्, तज्ज्ञानं चन्दनखण्डांशे प्रत्यक्षं सौरभांशे परोक्षमिति, तथापि तत्तदिन्द्रिययोग्यत्वघटितस्य विवक्षितस्य लक्षणस्याभावान्न दोष इत्याहेति—सुरभिचन्दनमिति ग्रन्थोऽवतारितः, तदेतेन परास्तम्; पूर्वोक्तरीत्या विषयावच्छिन्नचैतन्याभिन्नत्वाभावेनैवातिप्रसङ्ग-वारणेन तत्तदिन्द्रिययोग्यत्वविवक्षाया अनावश्यकत्वात्, सौरभस्य चक्षुरिन्द्रिया-योग्यतयेत्यादिकं तु परेषामपि तत्प्रत्यक्षत्वं लौकिकं न सम्मतमिति सूचनायैव।

अथवा—**योग्यत्वघटितस्य निरुक्तलक्षणस्य** इन्द्रियजन्ययोग्यविषयक-ज्ञानत्वं प्रत्यक्षत्वमिति नैयायिकसम्मतलक्षणस्येत्यर्थः॥

अत्र हि योग्यविषयकत्वं धर्माधर्मादिज्ञानेऽतिप्रसङ्गवारणार्थमिति न कोऽपि विरोधः॥

यदि तु शिखामणिगतस्य विवक्षितस्येति पदस्यापि नैयायिकसम्मतस्येत्यर्थो विवक्ष्यते, तदा न कोऽपि दोषः; परन्तु शिखामणाविव ज्ञानप्रत्यक्षत्वप्रयोजकोप-संहारे—"सुरभि चन्दनमि"ति ज्ञाने स्वाकारवृत्त्युपहितयोग्यविषयचैतन्याभिन्नत्वे-नातिव्याप्तिः, तत्तदिन्द्रिययोग्यत्वेन तन्निरासस्येत्येषामर्थानां विवरणान्नात्र नैयायिकसम्मतस्येति विवरणं तेषां सम्मतम्॥

**अयमत्र निष्कर्षः**—योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं विषयांशे ज्ञानप्रत्यक्षत्वम्, योग्यत्वं चोद्भूतत्वमनावृतत्वं वेति बिन्दुटीकासिद्धान्तलेशसंग्रह-योर्व्यक्तम्, घटाद्यंशे प्रत्यक्षतादशायां परिमाणांशे प्रत्यक्षत्वव्यवहारो हि न भवति, तदाकारवृत्तिं विना तदवच्छिन्नचैतन्याभिन्नतदाकारवृत्त्यवच्छिन्नचैतन्याभेदरूप-प्रयोजकासम्भवात्। नापि सौरभांशे सुरभि चन्दनमिति ज्ञानस्य प्रत्यक्षत्वम्, तत्र सौरभाकारवृत्तिसत्त्वेऽपि तस्या निर्गमाभावात्, नापि धर्माधर्मादिज्ञानेऽतिव्याप्तिः; तस्यावृतत्वेनायोग्यत्वादिति॥

**एतेन**—यथाश्रुतलक्षणे घटरूपाकारान्तःकरणवृत्तिदशायां परिमाणांशे प्रत्यक्षत्वापत्त्या, तत्तदाकारवृत्त्युपहितयोग्यविषयावच्छिन्नचैतन्याभिन्नत्वस्य प्रयो-जकतया विवक्षणेऽप्यस्मदादेर्घटज्ञानसमये परिमाणाकारेश्वरमायिकवृत्तिमादाया-स्मदादेः प्रत्यक्षत्वापत्त्या, पुरुषभेदेन प्रत्यक्षभेदविवक्षणेऽपि योग्यपदेनेन्द्रिययोग्यत्व-विवक्षायां सुरभि चन्दनादिज्ञानस्य सौरभांशे प्रत्यक्षत्वापत्त्या, तत्तदिन्द्रिययोग्यत्व-

विवक्षणेऽपि सुखादिज्ञानेऽव्याप्त्यापत्त्या तत्तदिन्द्रियसाक्ष्यन्यतरयोग्यत्वविवक्षणेऽपि धर्माधर्मादेरप्यनुमानादिद्वाराऽहं धर्मवानिति ज्ञानविषयत्वेन साक्षिवेद्यत्वेन धर्माधर्मादिज्ञानेऽतिव्याप्त्यापत्त्या, इन्द्रियकेवलसाक्ष्यन्यतरयोग्यत्वविवक्षायामप्यन्तःकरणोपहित-जीवसाक्ष्ययोग्यधर्माधर्मगोचरेश्वरप्रत्यक्षेऽव्याप्त्यापत्त्या जीवेश्वरसाधारणसाक्षित्वानिर्वचनेनोभयायोग्यत्व विवक्षासम्भवात्, सम्भवेऽपि सर्वस्यापीश्वरसाक्षियोग्यत्वेनोभयायोग्याप्रसिद्ध्याऽन्यतरयोग्यत्वविवक्षायामीश्वरसाक्षियोग्यत्वमादाय धर्माधर्मादिज्ञानेऽतिव्याप्त्या च—तत्तदिन्द्रिय-तत्तत्केवलसाक्ष्यन्यतरयोग्य तत्तत्साक्षिजन्यतत्तदाकारवृत्त्युपहितविषयावच्छिन्न-चैतन्याभिन्नतत्तत्साक्षिजन्यतत्तदाकारवृत्त्यवच्छिन्नचैतन्यत्वं तत्तद्विषयांशे तत्तज्ज्ञानस्य प्रत्यक्षत्वमिति शिखामणिव्याख्यानमपि—चिन्त्यमिति सूचितम् ; योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नतत्तद्वृत्त्यवच्छिन्नचैतन्यत्वं प्रत्यक्षत्वमिति विवरणेनैव सर्वदोषनिवारणेन घटाकारवृत्तिदशायां परिमाणाकारवृत्त्यभावेनैव दोषवारणेन तत्तत्साक्षिजन्यतत्तदाकारवृत्त्युपहितेति विशेषणवैयर्थ्यात्, अन्तःकरणतद्धर्मसुखादीनामनावृतत्वेन योग्यत्वम्, एवं प्रातिभासिकरूप्यादीनां घटादीनामपि च तत्, धर्मादीनां तु न तदिति सामान्यतो योग्यत्वविवक्षणेनैव दोषवारणात् तत्तदिन्द्रियतत्तत्केवलसाक्ष्यन्यतरयोग्येत्यस्यापि वैयर्थ्यात् ॥

यदत्र साक्षिजन्येति वृत्तिविशेषणं नेदं सङ्गतम् ; वृत्तेः साक्ष्यजन्यत्वात् । तत्तत्साक्ष्युपाधिभूतमनःपरिणामेत्यर्थविवक्षणं साक्षिजन्यपदेन यदि क्रियते, तर्हि मास्तु नाम विरोधः ॥

यदत्र धर्माधर्मादीनामपि साक्षियोग्यत्वं साधितम्, तत् "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति नियमेन ज्ञातत्वादिना साक्षिभास्यत्वेऽपि स्वरूपतः साक्षिभास्यत्वाभावान्न सङ्गतम् ॥

**एतेन**—धर्माधर्मादेरपि प्रमाणद्वारा साक्षिभास्यत्वेनेति ग्रन्थोऽपि—**परास्तः ;** जीवसाक्ष्ययोग्यधर्माधर्मेत्युत्तरग्रन्थविरोधाच्च ॥

यत्तु परिभाषायां तत्तदिन्द्रिययोग्येति विवक्षम् तदजहल्लक्षणयाऽनावृतत्वेन सुखादिसाधारणमिति न सुखादिज्ञानेऽव्याप्तिः, नापि वा तद्वारणार्थमाशुबोधिन्युपपादितरीत्या मनइन्द्रियत्वपक्षादरणमत्रैव ग्रन्थे इति कल्पनेति सुवं सम्यक् ॥

न चैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयो-र्जातित्वं न स्यादिति वाच्यम्; इष्टत्वात्, जातित्वोपाधित्व-

ननु—एकस्मिन् ज्ञाने परोक्षत्वापरोक्षत्वयोरङ्गीकारे प्रत्यक्षत्वं न जातिरिति स्यात्, "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जाति-बाधकसंग्रहः॥" इति वचनानुसारेण जातित्वबाधकतया साङ्कर्यस्योरीकर्तव्यत्वेन प्रकृतेऽपि परोक्षत्वादिना साङ्कर्येण जातित्वायोगात्। तथाहि— परस्परासमाना-धिकरणयोर्धर्मयोरेकत्र समावेशः साङ्कर्यम्। एवञ्च यथा मूर्तत्वभूतत्वयोः मूर्तत्वानधिकरणे भूतत्वमाकाशे, भूतत्वानधिकरणे मनसि मूर्तत्वमुभयोः पृथिव्य-प्तेजोवायुषु समावेश इति भूतत्वं न जातिः, एवं परोक्षत्वानधिकरणेऽयं घट इति ज्ञानेऽपरोक्षत्वमपरोक्षत्वानधिकरणेऽसन्निकृष्टपक्षकानुमितौ परोक्षत्वमुभयोः पर्वतो वह्निमानिति सन्निकृष्टपक्षकानुमितौ समावेश इति नापरोक्षत्वं जातिरिति स्यादिति शङ्कते—**न चैवमेकत्रेति।**

अत्र यस्य साङ्कर्यं तस्यैव न जातित्वम्, येन साङ्कर्यं तस्य तु जातित्वमेवेति केचि-न्मन्यन्ते, अन्ये त्वविशेषादुभयोरपि न जातित्वमिति। तत्र द्वितीयपक्षानुसारे-णाह—**तयोर्जातित्वमिति। इष्टत्वादिति॥**

जातित्वाभावस्येत्यादिः। अयं घट अयं घट इत्यादिज्ञानानां तत्तत्संस्थानमेव विषयः, न तु संस्थानातिरिक्तजातिसत्त्वे मानमिति यतीन्द्रमतदीपिकायामुक्तम्, नचेदमुपपन्नम्; अनुगताकारज्ञानं नानुगतरूपमन्तरा सिद्ध्यति। न हि तत्तत्-संस्थानमनुगतं रूपम्, तच्च रूपं घटत्वादिकमेव। एवं चायं घटोऽयं घट इत्यनुगतव्यवहारः, अनुगतधर्मविषयः, अनुगतव्यवहारत्वात्, इत्यनुमानेन घट-त्वाद्यनुगतधर्मसिद्धौ तत्रैकत्वसंशयानन्तरं लाघवेनैकत्वसिद्धौ कालादिवन्नि-त्यत्वमपि सिद्ध्यतीति जातित्वमपि सिद्ध्यतीति घटत्वादीनामिव परोक्षत्वा-परोक्षत्वयोरपि जातित्वमावश्यकमिति कथमुक्तेष्टापत्तिरित्यत आह—**जातिरवेति।**

सत्यमयं घट इत्यादिव्यवहारोऽनुगतोऽनुगतं धर्ममपेक्षते, स तु धर्मो जाति-रित्यत्र न प्रत्यक्षं प्रमाणम्, नाप्यनुमानम्, लाघवेनैकत्वनित्यत्वयोः सिद्धयोरपि

परिभाषायाः सकलप्रमाणागोचरतयाऽप्रामाणिकत्वात् । घटोऽयमित्यादि प्रत्यक्षं हि घटत्वादिसद्भावे मानम्, न तु तस्य जातित्वेऽपि; जातित्वरूपसाध्याप्रसिद्धौ तत्साध्यकानुमानस्याप्यनवकाशात्, समवायासिद्ध्या ब्रह्मभिन्नाखिलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्च । एवमेवोपाधित्वं निरसनीयम् ।

समवायस्य सम्बन्धत्वे तस्यापि सम्बन्धस्तस्यापि सम्बन्धः कल्पनीयः संयोगवदित्यनवस्थाप्रसङ्गेन समवेतत्वघटितजातिसिद्ध्यसम्भवात्, नापि वेदः प्रमाणम्, उपमानादिकं नावसरत्यपि, एवञ्च नैयायिकानां जातित्वादिसङ्केतोऽयमप्रामाणिक इति भावः ।

ननु—यद् यदिन्द्रियग्राह्यं तन्निष्ठा जातिस्तदभावश्च तदिन्द्रियग्राह्य इति न्यायेन घटोऽयमित्यादिप्रत्यक्षैः घटादीनामिव घटत्वजातेरपि ग्रहणात् प्रत्यक्षं तत्र प्रमाणमित्याशङ्क्याह—घटोऽयमिति । नतु तस्य जातित्वेऽपीति । प्रमाणमिति शेषः ।

घटत्वादिकं जातिः नित्यानेकसमवेतत्वादित्यनुमानं तु साध्याप्रसिद्धिस्वरूपासिद्ध्यादिदोषग्रस्तमिति, नात्र प्रमाणमित्याह—जातित्वरूपसाध्याप्रसिद्धाविति ।

ननु भवतु नाम परोक्षत्वापरोक्षत्वयोर्न जातित्वम्, एवमपि एकस्मिन् स्थाने तयोर्विरोधान्न समवधानसम्भव इत्यत आह—पर्वतो वह्निमानिति । एवञ्चैकस्यैव चैतन्यस्य पर्वताकारवृत्त्यवच्छिन्नत्वेन वह्न्याकारवृत्त्यवच्छिन्नत्वेन च रूपेण वृत्तिभेदप्रयुक्ते परोक्षत्वापरोक्षत्वे इति न विरोध इति भावः ।

ज्ञानप्रत्यक्षत्वप्रयोजकमेतावता ग्रन्थेनोक्तं निष्कृष्य मनइन्द्रियत्वं विनाऽपि सुखादिसाक्षात्कारत्वोपपत्त्या न तदन्यथानुपपत्त्याऽपि मन इन्द्रियमिति प्रथमक्षुपक्रान्तमर्थमुपसंहरति—तथाचेति ॥

"पर्वतो वह्निमानि"त्यादौ पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तदवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न कश्चिद् विरोधः ।

तथाच तत्तदिन्द्रिययोग्यवर्त्तमानाबाधितविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् ।

**तत्तदिन्द्रिययोग्येति ।** अनावृतेत्यर्थः । यथाश्रुतार्थविवक्षणे हि सुखादिसाक्षात्कारत्वं मनइन्द्रियत्वेनैव ग्रन्थकृतापि साधितं भवतीति प्रतिज्ञातार्थानिर्वाहिणोपक्रमोपसंहारयोर्वैरूप्यम्, इन्द्रियसाक्ष्यन्यतरयोग्येतिपरिष्करणापेक्षया तु विन्दुटीकोक्तानावृतत्वाश्रयणस्यैव लघुभूतत्वेन गौरवं च। यदि तु घटादिबाह्यप्रत्यक्षप्रयोजकमेवात्र निष्कृष्यते, अत एवोत्तरत्र घटादेर्विषयस्येति ग्रन्थ उपपद्यत इत्यालोच्यते, तर्हि यथाश्रुतमेव सम्यक् । तत्तत्पदं तु स्पष्टार्थम् ॥

**एतेन**—स्मृतिकारसिद्धं मनइन्द्रियत्वमादाय सुखादिसाक्षात्कारे उक्तप्रयोजकं योजयन्त आशुबोधिनीकाराः—**परास्ताः ;** उक्तलक्षणस्यापीश्वरीयप्रत्यक्षासाधारणत्वेनेन्द्रियजन्यज्ञानत्वस्यैव लघुभूतस्य प्रत्यक्षत्वप्रयोजकताप्रसङ्गेन सर्वो ग्रन्थकृत प्रयासो हि वितथीकृतः स्यात् ॥

अत्र च वृत्तिपदेनान्तःकरणपरिणामोऽविद्यापरिणामो वा विवक्ष्यते। तेनेश्वरीयप्रत्यक्षेऽस्मदादिसुखादिप्रत्यक्षे च नाव्याप्तिः । "कामः सङ्कल्प" इति श्रुतौ मनःपरिणामरूपैव वृत्तिर्गृह्यते, नाविद्यापरिणाम इति "एतत्सर्वं मन एवे"ति नानुपपन्नम् ॥

एवञ्चेदं प्रयोजकं भ्रमप्रमासाधारणमेवेति प्रातिभासिकरूप्यज्ञानेऽपि लक्षणसमन्वयः । प्रातिभासिकानां प्रतीतिभिन्नकालेऽसत्त्वापादकाज्ञानमात्रविषयत्वम्, न तु अभानापादकाज्ञानविषयत्वम्, प्रतीतिकाले तु सर्वविधाज्ञानाविषयत्वमिति तेषामप्यनावृतत्वलक्षणं योग्यत्वं विद्यत एव । नित्यपरोक्षाणां तु अभानापादकाज्ञानविषयत्वस्यैवाप्रसिद्धत्वा न योग्यत्वम् । अनावृतत्वं नाम भातीति व्यवहारविषयत्वमेवेति न ग्रामशृङ्गादिकमपि योग्यं भवति ।

## घटादेर्विषयस्य प्रत्यक्षत्वन्तु प्रमात्रभिन्नत्वम्।

यदि प्रातिभासिकज्ञानव्यावृत्तमेवेदं लक्षणम्, तर्हि अबाधितत्वमपि विषय-विशेषणं देयम्। अत्र चाहं ब्रह्मास्मीति वाक्यजन्यपरोक्षज्ञाने प्राथमिकेऽति-व्याप्तिवारणार्थं योग्यत्वमनावृतत्वापरपर्यायं प्रत्यक्षकालिकमेव विवक्षणीयम्, न तु कादाचित्कम्। साधनचतुष्टयसम्पन्नानां श्रुतमतध्यातवेदान्तार्थानामेवात्म-साक्षात्कारो नेतरेषाम्। तदुक्तं भामत्याम्—"परीक्षकाः खल्वेवं विविचयन्ति, न प्रतिपत्तारः" इति। अहं ब्रह्मास्मीत्यादिवाक्येन तु सर्वदैव न सर्वेषामेवात्म-साक्षात्कार एव भवतीति युक्तम्।

न चैवम्—सुखादीनां स्मरणकाले भातीति व्यवहारविषयत्वं नास्ति, अतीतस्य वर्तमानवत् भातीतिव्यवहाराभावादिति योग्यत्वदलेनैव सुखादिस्मरणेऽप्यति-प्रसङ्गनिरासाद्वर्तमानत्वविशेषणं व्यर्थमिति—वाच्यम्; इष्टत्वात्।

विषयप्रत्यक्षत्वमपि मनइन्द्रियत्वं विनैव सम्पादयितुं शक्यत इत्यभिप्रायेण तत्प्रयोजकमपि स्वाभिमतं निर्दिशति—**घटादेर्विषयस्य प्रत्यक्षत्वन्त्विति।**

ननु—किं नाम विषयस्य प्रत्यक्षत्वम्? प्रत्यक्षज्ञानविषयत्वं विषयस्य प्रत्यक्ष-त्वमिति नैयायिकादयो मन्यन्ते, तत्र नैयायिकसम्मतज्ञान प्रत्यक्षत्वनिराकरणात् विषयचैतन्याभिन्नप्रमाणचैतन्यस्यैव प्रत्यक्षज्ञानरूपत्वस्य साधितत्वात् तादृशप्रत्यक्ष-विषयत्वस्य विवक्षणं न युक्तम्, घटादेः प्रत्यक्षताव्यवहारो हि घटादेः साक्ष्यभेदमन्तरा न सिद्ध्यति; "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि"ति सिद्धान्तात्। इयान् विशेषः—परोक्षस्थले ज्ञानमात्रस्य साक्षिण्यध्यासः, अपरोक्षस्थले तु विषयस्या-पीति। एवञ्चावश्यकस्यास्याभेदस्यैव विषयप्रत्यक्षत्वप्रयोजकत्वे सम्भवति न प्रत्यक्ष-ज्ञानविषयत्वमिति लक्षणं युक्तम्। परोक्षस्थलेऽपि प्रमातृचैतन्याभिन्नत्वं वृत्त्यव-च्छिन्नचैतन्ये स्यादित्यगत्या ज्ञानप्रत्यक्षत्वे विषयावच्छिन्नचैतन्याभिन्नत्वं विव-क्षितम्। किञ्च वृत्त्यवच्छिन्नचैतन्यं नियतसाक्षिसम्बन्धात् व्यवहारास्पदं भवदपि नान्यस्य व्यवहारमपि प्रयोजयति, अन्यथा "ज्ञाततयाऽज्ञाततया सर्वं साक्षिभास्य-मि"ति सिद्धान्तविरोधात्। तथाच विषयप्रत्यक्षत्वव्यवहारप्रयोजकं न प्रत्यक्ष-विषयत्वम्। एतदभिप्रायेणैव विषयस्यापरोक्षत्वं संविदभेदादित्युक्तं विवरणे।

यत्तु आशुबोधिन्यां प्रत्यक्षज्ञानविषयत्वस्य विषयप्रत्यक्षत्वप्रयोजकत्वे सुरभि चन्दनमित्यत्र सौरभस्यापि प्रत्यक्षत्वव्यवहारप्रसङ्ग इत्युक्तम्, तत्सौरभाकारनिर्गतान्तःकारणपरिणामाभावेन सौरभांशे ज्ञानस्य विनापि योग्यत्वदलं प्रत्यक्षत्वनिराकरणेन सौरभावच्छिन्नचैतन्याभिन्नतदाकारवृत्त्यवच्छिन्नचैतन्याभिन्नत्वांशाभावेनेवोक्तातिप्रसङ्गवारणादापातरमणीयम्। पर्वतो वह्निमानितिज्ञाने वह्न्यंशे प्रत्यक्षत्वनिवारणस्याशुबोधिनीकारैरपि वह्न्याकारवृत्त्यवच्छिन्नचैतन्यस्य वह्न्यवच्छिन्नचैतन्याभेदाभावेनैव संपादितत्वात्। एतेन—योग्यत्वे सतीति सौरभप्रत्यक्षतानिवरणार्थं विशेषणं देयम इति शङ्कादिकमपि—परास्तम्। यदप्याशुबोधिन्यां वृत्तिप्रमातृप्रमेयसाधारणविषयत्वनिरूपणाय प्रमातृभिन्नविषयत्वमित्यवश्यमेव लक्षणीयम्, एवंच वृत्तिप्रमातृप्रमेयाणां त्रयाणां प्रत्यक्षपदवाच्यतासिद्ध्यर्थं प्रत्यक्षज्ञानविषयत्वरूपं प्रमातृभिन्नत्वमेव लक्षणमिति परिभाषाशयवर्णनम्, तदिदं बालसंमोहनमात्रम्, वृत्तिप्रमात्रादिगोचरवृत्त्यङ्गीकारेण तदंशेऽपि ज्ञानप्रत्यक्षत्वस्य विवक्षणीयतया सर्वत्रापि स्वावच्छिन्नचैतन्याभिन्नस्वाकारवृत्त्यवच्छिन्नचैतन्यविषयत्वप्रयोजकत्वेनैव प्रत्यक्षतानिर्वाहसंभवात् त्रितयसाधारण्याय प्रमातृभिन्नत्वस्याविवक्षणीयत्वात्। एतेन योग्यत्वमेव धर्माधर्मादिव्यावृत्तं विषयप्रत्यक्षत्वप्रयोजकमिति शिखामण्युक्तिः परास्ता; साक्ष्यभेदं विनाऽनावृतत्वमात्रस्यैव प्रत्यक्षत्वव्यवहारापयोजकत्वात्, अन्यथा शशशृङ्गस्यापि प्रत्यक्षतापत्तेः। ब्रह्मणिऽपि अखण्डाकारसाक्षात्कारदशायामनावृतत्वस्य साक्ष्यभेदस्य च विद्यमानत्वाल्लक्षणसमन्वयेनातिप्रसङ्गस्त ब्रह्मसाक्षिणोर्भिन्नसत्ताकत्वात्, चित्वस्यैव तत्प्रत्यक्षत्वप्रयोजकत्वाच्च न भवति। एवंचास्मदुक्तरीतिरेवादरणीयेति युक्तमिदं प्रमातृभिन्नत्वमिति। प्रमातृभिन्नत्वं साक्ष्यभिन्नत्वमित्यर्थः। वृत्त्यवच्छिन्नचैतन्याभिन्नत्वं तु न लक्षणम्; स्वाकारवृत्त्युपहितत्वविशेषणस्य वक्ष्यमाणस्य प्रमातृचैतन्य इव वृत्त्यवच्छिन्नचैतन्येऽनन्वयेन वृत्तावव्याप्तिपरिहाराद्ययोगात्।

ननु—घटादेः साक्ष्यभिन्नत्वं न सम्भवति; जडत्वप्रकाशत्वादिविरुद्धस्वभावत्वात्, घटमहं जानामीतिभेदग्रहात्, अन्यस्यान्यात्मताज्ञानं हि तयोरविरुद्धस्वभावत्वे परस्परमविवेकग्रहे चैव भवति—यथा इदं रजतमिति॥

न च—घटत्वेन साक्षित्वेन च भेदग्रहेऽपि सत्त्वेन भेदाग्रहात् तादात्म्याध्यास उपपद्यत इति—वाच्यम्; अद्वैतिनां मते घटादीनां सत्ताऽप्रसिद्धेः॥

त्यत्यनभ्युपगमात्। यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात्। अत एव इन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसम्भवात् न स्फटिकेऽ-

वस्तुतस्तु—व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावज्ञाने प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं न कारणमेव। नहि पारमार्थिकत्वविशिष्टं रजतमिति ज्ञानं प्रमात्मकं संभवति, भ्रमात्मकतज्ज्ञानं यद्यपि भवति ; तथापि भ्रमेऽनिर्वचनीयस्य पारमार्थिकत्वस्यैव भानात् तस्य च व्यधिकरणधर्मत्वाभावात् न व्यधिकरणधर्मावच्छिन्नप्रतियोगिज्ञानसंभवः। उक्तंहि लघुचन्द्रिकायाम् :—"न व्यधिकरणधर्मावच्छिन्नत्ववादिनामस्माकं मते प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानं कारणमि"ति।

यत्तु—शिखामणिकाराः—शुक्तिगतेदन्ताया इव तद्गतलौकिकपारमार्थिकताया एव रजते प्रतीत्यभ्युपगमेन तदवच्छिन्नप्रतियोगिनस्तत्र सत्त्वात् न तदवच्छिन्नप्रतियोगिताकाभावानुपपत्तिरिति सिद्धान्तग्रन्थमवतारयन्ति, तस्य मणिप्रभायां शुक्तिगतपारमार्थिकत्वावच्छिन्नरजतस्य शुक्तौ अभावात् निषेधोपपत्तिरित्याशयो वर्णितः। अयं चाशयः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानाभावपक्षेणैवोपपद्यते। अन्यथा प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनस्तत्रासत्त्वादित्यस्यानुपपत्तेः। एतेन—"अवगतपक्षमङ्गीकृत्य निराकरोति परममूल इति मणिप्रभा चिन्त्योपपत्तिकेति—सूचितम्। एतेन—"प्रातिभासिकरजते पारमार्थिकत्वमवगतमिति पक्षमवलम्ब्य तदुक्तदूषणं परिहरती"ति बालबोधिन्यवतरणमपि—प्रत्युक्तम्। नहि शुक्तिगतेदंताया इव तद्गतपारमार्थिकतायाः रजते प्रतिभासमात्रेण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं संभवति, संभवे पारमार्थिकत्वविशिष्टरजतस्य त्रैकालिकनिषेधः कथं स्यात्? अतोऽनवगमपक्षेणैव सिद्धान्तग्रन्थप्रवृत्तिः।

एवंच नन्वित्यादिपूर्वपक्षसिद्धान्तौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव नेदं रजतमित्यत्र बोध इति पक्षेणाप्युपपन्नावेव। पूर्वपक्षिणा हि दीधितिकाराद्युक्तरीत्या प्रतियोगितावच्छेदकस्य प्रतियोगिनि भ्रमात्मकज्ञानमादाय प्रतियोगितावच्छेदकस्य प्रतियोगिवृत्तित्वं संपाद्य पारमार्थिकत्वावच्छिन्न-

निर्वचनीयलौहित्योत्पत्तिः। ननु एवं यत्र जपाकुसुमं द्रव्यान्तरव्यवधानात् असन्निकृष्टम् तत्र लौहित्यप्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियतामिति चेत्, न; इष्टत्वात्।

रजताभावः आश्रितः, सिद्धान्तिना त्वधिष्ठानगतमेव पारमार्थिकत्वं प्रतियोगितावच्छेदकम्। तच्च न भ्रामात्मकज्ञानमादायापि रजते संपादयितुं शक्यत इति पारमार्थिकत्वेन रजतनिषेध उपपद्यत एवेति निरूपितम्।

तथाच व्यधिकरणधर्मावच्छिन्नाभावाङ्गीकारेऽपि प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावप्रत्यक्षाकारणत्वात् पारमार्थिकत्वस्य रजतेऽनवगमेऽपि न दोषः, सर्वथा पारमार्थिकत्वस्य रजतेऽनवगमपक्षेणैव सिद्धान्तो विवक्षितः; नत्ववगमपक्षेणेति दिक्॥

नन्वेवं सति लोहितः स्फटिक इति प्रतीतावपि लौहित्यमनिर्वचनीयं नाङ्गीकरणीयम्, यदा स्फटिकं पुष्पं चोभयमपि सन्निकृष्टं तदा पुष्पनिष्ठलौहित्यस्य संसर्गाध्यासमात्रेण लोहितः स्फटिक इति प्रतीतिसंभवादित्याशङ्कामिष्टापत्त्या परिहरति—अत एवेति। सन्निकृष्टस्थले संसर्गाध्यासमात्राङ्गीकारेणान्यथाख्यातिवादाङ्गीकारादेवेत्यर्थः। स्फटिके इति। संसर्गमात्राध्यासेनेति शेषः।

इदं रजतमित्यादिस्थले हि रजतस्यासन्निकृष्टत्वात् रजतं तत्तादात्म्यमुभयं कल्पितम्, अत्र तु लौहित्यस्य सन्निकृष्टत्वात् संसर्गमात्राध्यासेनापि लौहित्यप्रकारतोपपत्त्या नानिर्वचनीयख्यातिरिति भावः। यत्र तु लौहित्यं कुसुमगतं न द्रव्यान्तरव्यवधानेन सन्निकृष्टम्, तत्र लौहित्यमप्यनिर्वचनीयमङ्गीकरणीयं स्यादित्याशङ्कते—नन्विति। उक्तामाशङ्कामिष्टापत्त्या परिहरति—इष्टत्वादिति।

तथाच यदि प्रत्यक्षसामान्यलक्षणं निरूपयितुमिष्टम्, तदाऽबाधितदलं विना केवलविषयावच्छिन्नचैतन्याभिन्नत्वानवच्छिन्नत्वमात्रं प्रत्यक्षप्रमामात्रस्य विवक्षियिषितत्वेऽबाधितविषयघटितं तल्लक्षणं विवक्षितमिति सर्वमनवद्यमित्याह—एवमिति।

एतावता प्रबन्धेन ज्ञानगतं विषयगतं च द्विविधमपि प्रत्यक्षं जीवसाक्षीश्वर-

एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थ-प्रत्यक्षलक्षणासद्भावश्च दर्शनीयः।

उक्तप्रत्यक्षं प्रकारान्तरेण द्विविधम्—इन्द्रियजन्यं तदजन्यं चेति। तत्र इन्द्रियाजन्यं सुखादिप्रत्यक्षम्; मनस इन्द्रियत्व-निराकरणात्। इन्द्रियाणि पञ्च, घ्राणरसनचक्षुस्त्वक्-श्रोत्रात्मकानि। सर्वाणि चेन्द्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति।

तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्वस्थानस्थितान्येव गन्ध-

साक्षिभेदेन द्विविधं निरूपितम्, इदानीं प्रकारान्तरेण विभजते—उक्तं प्रत्यक्षमिति।

कानि तर्हि इन्द्रियाणीत्यत आह—इन्द्रियाणीति। इन्द्रस्येमानि इन्द्रियाणीति व्युत्पत्त्या आत्मनः सुखादिभोक्तृत्वे साधनानीन्द्रियपदेन व्यवह्रियन्त इति साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रा वर्णयन्ति। इन्द्रियलक्षणं तु शास्त्र-दीपिकायाम्—"यत् संप्रयुक्तेऽर्थे विशदावभासं ज्ञानं जनयति तदिन्द्रियमि"त्यादिना निरूपितम्।

इन्द्रियसद्भावे प्रमाणानि तु—रूपाद्युपलब्धयः करणसाध्याः, कार्यत्वात्, घटादिवदित्यनुमानम्, "इन्द्रियाणि हयानाहुरि"ति काठकश्रुतिः, "मनःषष्ठानीन्द्रियाणी"ति स्मृतिश्च भवन्ति।

तत्रेन्द्रियाण्यप्राप्यकारीणीति सौगता मन्यन्ते, नेदं संगतमित्याशयेनाह—सर्वाणि चेन्द्रियाणीति। स्वस्वविषयसंयुक्तानीति। विषयसंयोगो हीन्द्रियाणां विषयदेशगमनाद् विषयाणामिन्द्रियदेशं प्रत्यागमनाच्च भवति। तत्र किं सर्वेषाम् इन्द्रियाणां विषयदेशगमनम्, उत विषयाणां सर्वेषामिन्द्रिय-संबन्धो विवक्षितः, आहो केषांचनेन्द्रियाणां विषयदेशगमनं केषांचन विषया-णामिन्द्रियदेशगमनमिति विषयविवेको विवक्षित इत्याशङ्कायामाह—तत्रेति। इन्द्रियेष्वित्यर्थः।

रसस्पर्शोपलम्भान् जनयन्ति । चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः; श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात् ।

**स्वस्वस्थानस्थितान्येवेति ।** स्वदेशागतविषयसंयुक्तानीति शेषः । **स्वत एव**—स्वयमित्यर्थः । इन्द्रियाणां भौतिकानां द्रव्यरूपत्वाद् गमनसंभव इति भावः । एतेन—इन्द्रियाणां गोलकगतशक्तिविशेषरूपत्वात् शक्तेश्च द्रव्याश्रितत्वादिनियमात् न स्वयमिन्द्रियाणां विषयसंभव इति शङ्का—प्रत्युक्ता ।

**विषयदेशं गत्वेति ।** विषयपर्यन्तंविकाशेन सम्बन्धेत्यर्थः । चक्षुरादेरतिस्वच्छद्रव्यतया पूर्वदेशापरित्यागेन द्रुतगत्या विषयव्याप्त्या न विषयसम्बन्धवेलायां देहस्य निरिन्द्रियत्वापत्तिः, नवा ध्रुवमण्डलादिदर्शने विलम्बापत्तिरिति भावः ।

ननु चक्षुषः परिच्छिन्नत्वात् विषयदेशगमनं भवतु श्रोत्रस्य त्वाकाशरूपस्यापरिच्छिन्नत्वात् न विषयदेशगमनसंभव इत्यत आह—**श्रोत्रस्यापीति ।** अपिना पूर्वोक्तस्य चक्षुषः परिग्रहः । **परिच्छिन्नतयेति ।**

अयं भावः—आकाशं श्रोत्रमिति पक्षे यद्यपि श्रोत्रं विभु; तथापि तत्पक्षे सर्वेषामेकश्रोत्रत्वादिप्रसङ्गात् न स पक्षो युक्तः । तदुक्तं श्लोकवार्तिके—"आकाशश्रोत्रपक्षे च विभुत्वात्प्राप्तितुल्यता । दूरभावेऽपि शब्दानामिति ज्ञानं प्रसज्यते ॥ श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत् । तेनैकश्रुतिवेलायां शृणुयुः सर्व एव ते ॥" इति ।

कर्णशष्कुल्यवच्छिन्नो नभोभागः श्रोत्रमिति पक्षोऽप्येतेन पराहतः; निरवयवस्याकाशस्य भागकल्पनासंभवात् । तदुक्तं श्लोकवार्तिके—"तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः । नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये । वैशेषिकादिसिद्धान्तेष्वेवं तावत्प्रसज्यते ।" इति ।

अस्तुवा कर्णशष्कुल्यवच्छिन्नाकाशं श्रोत्रमिति, एवमपि तस्य परिच्छिन्नस्यापि विषयदेशगमनं विरुद्धम् । उक्तं हि शावरभाष्ये—"यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्, तथापि तावदनेकदेशता कदाचिदवगम्येत, नच तत् संयोगदेशमागच्छति । प्रत्यक्षा हि कर्णशष्कुली तद्देशस्था गृह्यते" इति । श्लोकवार्तिकेऽप्युक्तम्—"वक्तृवक्त्रप्रदेशानां भिन्नत्वाद्भिन्नदेशता । श्रोत्रागमनपक्षे

स्यात् तद्देशे त्वेकदेशता"। "वक्त्रैकत्व भिन्नेषु श्रोतृषु स्यादिपर्ययः। तत्र हि श्रोत्र-देशानां भिन्नत्वात् भिन्नदेशता। तदागमे तु वक्त्रैक्यादेकदेशत्वसंभव" इति।

एवं दिशः श्रोत्रमिति पक्षाङ्गीकारेऽपि श्रोत्रस्य विषयदेशगमनं विरुद्धमेव। अत एव—"अभिघातेन हि प्रेरिताः वायवः स्तिमितानि वाय्वन्तराणि प्रति-बाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्ति, यावद्वेगमभिप्रतिष्ठन्ते। तेच वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते, अनुपरतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु। अतो न दोषः। अत एव चानुवातं दूरादुपलभ्यते शब्दः" इति शब्दस्यैव ध्वन्यपरपर्यायवायवीयसंयोगविभागैः श्रोत्रदेशं प्रत्यागमन-मिति शाबरभाष्योक्तिरुपपद्यते।

एवंच चक्षुरिव श्रोत्रमपि विषयदेशं गत्वा विषयं गृह्णातीत्ययमुपन्यासो न मीमांसकमतेन, नापि वैशेषिकादिमतेन कापिलसाङ्ख्यादिमतेन वा, कापिल-साङ्ख्ययोर्हि मतेऽनित्यः शब्दः, सचाकाश एवोत्पद्यते विद्यते चेति सिद्धान्तः, एवंचाकाशभागस्यैव तन्मते श्रोत्रत्वेऽपि न शब्ददेशं प्रत्याकाशगमनं संभवति, अतोऽत्रेदं विचारणीयं, केन मतेनात्र श्रोत्रस्य विषयदेशं प्रति गमनमिति पक्ष उपन्यस्त इति।

तत्र श्लोकवार्तिककाराः—"नावश्यं श्रोत्रमाकाशमस्माभिरभ्युपेयते। नचा-नवयवं व्योम जैनसङ्ख्यनिषेधतः। तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेत्। कार्यार्थापत्तिगम्यं नः श्रोत्रं प्रतिनरं स्थितम्॥ यद्यपि व्यापिचैकं च तथापिध्वनि-संस्कृतिः। अधिष्ठानेषु सा यस्य तच्छब्दं प्रतिपत्स्यते॥ इत्यादिना श्रोत्ररूपं बहुधा वर्णयन्ति। तत्र वस्त्वन्तरमेव श्रोत्रमिति पक्षे एकदेशिसंमते तस्य परिच्छिन्नस्य विषयदेशगमनं भाष्याद्यविरुद्धमिति तदनुसार्येवायं ग्रन्थः। न च—श्रोत्रस्य विषयदेशगमने बहुषु वक्तृषु एकस्मिन् श्रोतरि च शब्दस्य नानादेशोपलम्भः प्रमा स्यात्, एवं च तस्य भ्रान्तित्वं वार्तिककृतोक्तं विरुध्येत। तदुक्तं न्यायरत्नाकरे—नहि स्वदेशस्थं श्रोत्रं शक्नोति भिन्नेषु देशेषु शब्दं ग्रहीतुम्। अतो भ्रान्तमेव नानादेशत्वं न वास्तवमिति। अतः श्रोत्रगमनपक्षोऽयं न युक्त इति—वाच्यम्। अस्मिन् पक्षे उक्तस्थलीयोक्तोपलम्भप्रमात्वस्येष्टत्वात्। उक्तवार्तिकादीनां पक्षान्तरानु सारित्वाच्च। "श्रोत्रागमपक्षेचेत्यादिना वार्तिककारो हि अमुमपि पक्षं कटा-क्षयति। तदिदमुक्तम्—श्रोत्रस्यापि परिच्छिन्नतया भेर्यादिदेशगमनसंभवादिति।

**अत एवानुभवो भेरीशब्दो मया श्रुत इति।**

साङ्ख्यसम्मतश्चायं चक्षुःश्रोत्रागमनपक्षः। तदुक्तं न्यायरत्नाकरे—साङ्ख्यास्ताव दाहङ्कारिकयोः श्रोत्रचक्षुषोर्वृत्तिः शरीराद्विनिर्गत्यार्थं गृह्णातीति मन्यन्त इति।

भेरीशब्दो मया श्रुत इत्यनुभवोऽप्यस्य पक्षस्य गमक इत्याह—**अत एवेति। भेरीशब्द इति।** भेरीदेशावच्छिन्नः शब्द इत्यर्थः। यथाश्रुते तु वायुवेगेन वर्तिककारोक्तरीत्या शब्दागमनपक्षेऽपि भेरीशब्दो मया श्रुत इत्यनुभवोपपत्त्या श्रोत्रागमपक्षोपपादनासंभवात्।

ननु—एतत्सर्वं शब्दनित्यत्ववाद एव युज्यते नतु तदनित्यत्ववादे। तत्र हि संयोगाद्वा विभागाद्वा शब्दाद्वा शब्दनिष्पत्तिः। तथाहि—प्रथमं भेरीदण्डसंयोगाद् वेणुदलविभागाद्वा शब्दो निष्पद्यते। स च वीचीसन्तानवत् समानजातीयान् शब्दान् सर्वतः सन्तनुते। तेषु च संतन्यमानेषु स्वदेशप्राप्तः शब्दः श्रोत्रेण गृह्यत इति श्रोत्रदेशं प्रति भेरीशब्दस्यैवागमनं नास्ति; श्रोत्रस्य भेरीदेशगमनं तस्याकाशरूपत्वान्न संभवत्येवेति स्वीक्रियते, एवं च तदनित्यत्ववादे नोपपद्यत इदम्। शब्दनित्यत्ववादस्तु न विचारसहः, शब्दनित्यत्वे हि गकार एक एव न गव्यक्तिभेद इति स्यात्, एकस्य च युगपद् नानादेशोपलम्भो विरुद्धः। व्यञ्जकध्वनिदेशभेदेन शब्ददेशभेदोपलम्भनमिति कल्पनं तु न युक्तम्; व्यञ्जकदीपभेदेऽपि व्यज्यमानस्य भिन्नदेशत्वाननुभवात्। तदुक्तं वार्तिके—

"नित्यत्वे श्लोकबुद्धेः स्याद् न किञ्चिद्भ्रान्तिकारणम्।
कामं देशा इति न्यायात् तच्चैकत्वे विरुध्यते।
न च व्यञ्जकभेदेन देशभेदोपलम्भनम्।
प्रदीपैर्भिन्नदेशस्थैर्न भिन्नो व्यज्यते घटः" इति॥

अत एव हि ध्वनिद्वारा शब्दस्यापि वृद्धिरुपपद्यते।

तदुक्तं वार्तिके—
हेतुवृद्ध्यनुसारित्वात् कार्यताऽस्य घटादिवत्।
नहि दीपसहस्रेऽपि व्यञ्जके वर्धते घटः।" इति

तथाच शब्दनित्यत्वमतेनैव श्रोत्रागमपक्षोपपत्त्या सोऽयमसङ्गत इति चेत्,

अत्र श्लोकवार्तिकव्याख्यातारः—"सर्वो हि लोक एकमेव शब्दं परस्मै श्रावयितुं विवक्षति, नतु शब्दान्तरं श्रावयितुं शब्दान्तरं विवक्षति, तेनेयं विवक्षानु-

सारिणी शब्दश्रुतिः, विवक्षितस्यैव श्रावणं नान्यस्येति तामनुगच्छद्भिरनुक्रामद्भिरेव परीक्षकैर्मार्गो दर्शयितव्यः। शब्दसन्ताने त्वन्य एव शब्दो वक्त्रा विवक्ष्यते, श्रोत्रा चान्यः श्रूयत इति न विवक्षामनुसृता श्रुतिरनुगता स्यादिति—"सर्वलोकप्रसिद्धां च विवक्षानुसृतां श्रुतिम्। अनुगच्छद्भिरेकान्तात् कार्यो मार्गः परीक्षकैः।' इति वार्तिकव्याख्यानावसरे निरूपयन्तः शब्दानित्यतावादो न विचारसह इति—निरूपयन्ति। वार्तिककारा अपि—"तत्र ये तावदिच्छन्ति प्राक् संयोगविभागतः। शब्द उत्पद्यते तस्मादन्यस्तत्सदृशः पुनः। तदनन्तरदेशेऽन्यस्ताद्दृगन्यस्ततः परः। वीचीतरङ्गवच्चैवमन्त्यः श्रोत्रेण गृह्यते" इति वैशेषिकसंमतं शब्दानित्यत्ववादमनूद्य—

अदृष्टकल्पना ह्यस्मिन् पक्षे बह्वी प्रसज्यते॥
शब्दभेदे न तावच्च प्रत्यभिदः प्रवर्तते।
आरम्भकत्वं शब्दस्य निष्क्रियस्याप्रमाणकम्।
देशान्तरगतं कार्यं नामूर्तस्यानभिप्रतः।
देशियत्तानिमित्तं च नारम्भनियमं प्रति।
न च दिङ्नियमे हेतुरनुवातगतेस्तथा।
सदृशं वा सजातिं वा करोतीति च दुष्करम्।
आरम्भसर्वदिक्त्वे न च हेतुः प्रतीयते।
निरन्वयैर्विनश्यद्भिर्नचात्यन्तासतां क्रिया।
ज्ञानसन्तानवच्चैषां सन्तानो नावकल्पते।
वेगवत्सक्रियत्वाभ्यां तरङ्गाणां तु युज्यते।
कार्यदेशान्तरारम्भो यावद्वेगं च तत्क्रिया।
आरम्भप्रतिबन्धोऽस्य नच कुड्यादिभिर्भवेत्।
नह्यमूर्तस्य सद्भावो मूर्तमध्ये विहन्यते।
नच कुड्यादिभिर्व्योम नाश्यते सार्यतेऽपि वा।
न तिरोधीयते तस्मात्कुड्यमध्येऽपि तद् ध्रुवम्।
आकाशं तत्र न स्याच्चेत् कुड्यस्थानं विरुध्यते।
तन्मध्यावयवानां च न हि तिष्ठति ते घने।
अथास्त्यात्मकद्रव्यसंयोगरहितं नभः।
शब्दोत्पादं बिभर्तीति तत्र न्यायो न कश्चन।
शब्दं नारभते शब्दः शब्दत्वादन्त्यशब्दवत्।
एवं विभागसंयोगौ तद्भावादन्त्ययोगवत्॥"

अन्यथा वीचितरङ्गन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनागौरवं भेरीशब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनागौरवञ्च स्यात् । तदेवं व्याख्यातं प्रत्यक्षम् ॥

इति वेदान्तपरिभाषायां प्रत्यक्षपरिच्छेदः ॥

इत्यादिना वैशेषिकादिपक्षं निरस्य "प्रयत्नाभिहतो वायुः कोष्ठगो यातीत्यसंशयम् । स संयोगविभागौ च ताल्वादेरनुरुध्यते । वेगवत्त्वाच्च सोऽवश्यं यावद्वेगं प्रतिष्ठते । तस्यात्मावयवानां च स्तिमितेन च वायुना । कर्णव्योमनि संप्राप्तः शक्तिं श्रोत्रे नियच्छति । तद्भावि शब्दबोधाच्च संस्कारोऽदृष्ट इष्यते ।" इत्यादिना शब्दाभिव्यञ्जकसंस्कारविशेषः श्रोत्रे जायते, तेन च शब्दो व्यज्यत इति शब्दनित्यतामेव समर्थयामासुः । नच—शब्दनित्यतावादेऽपि प्रतिशब्दं संस्कारविशेषः कल्प्य इत्यविशेषे किमिति संस्कारोत्पत्तिरेवाङ्गीक्रियताम्, न शब्दविशेषोत्पत्तिरिति—वाच्यम्; नहि संयोगविभागाभ्यां शब्द उत्पद्यत इति संभवति, तन्तुद्वयसंयोगविभागाभ्यां शब्दोत्पत्त्यभावादिति पूर्वमेव वार्तिकानुसारेणोपपादितत्वात् । तदुक्तं वार्तिके—'शब्दोत्पत्तेर्निषिद्धत्वादन्यथानुपपत्तितः । विशिष्टसंस्कृतेर्जन्म ध्वनिभ्योऽध्यवसीयते ॥" इति । एवंच शब्दजः शब्द इत्यादिस्वीकारे भेरीदेशमारभ्य कर्णदेशपर्यन्तमनेकशब्दकल्पनादिप्रसङ्गात् न शब्दानित्यतावादो युक्तः, यथाचात्र वीचितरङ्गन्यायो न प्रवर्तते, तथा वार्तिककृतैवोक्तम् । तदेतत् सर्वं मनसि निधायाह—**वीचितरङ्गन्यायेनेति** । वीचिसन्तानन्यायेनेत्यर्थः ।

वीचिसन्तानस्य सर्वतः प्रसरो नास्तीति सर्वतः प्रसरः शब्दसन्तानस्य कदम्बमुकुलन्यायेनैव संभवतीत्यभिप्रेत्य केचिदस्य ग्रन्थस्य कदम्बमुकुलन्यायोपलक्षणत्वं वर्णयन्ति । सर्वथाच शब्दानित्यतावादो न युक्त इति भावः ।

प्रत्यक्षप्रमाणनिरूपणस्य प्रयोजनं तु शाब्दापरोक्षतामते ब्रह्मसाक्षात्कारस्याज्ञाननिवर्तनद्वारा ब्रह्मभावाख्यमोक्षोपयोगः ब्रह्मसाक्षात्कारानन्तरं घटादिप्रत्यक्षज्ञानानां बाधितार्थविषयकत्वेन भ्रमत्वनिश्चयश्च । शाब्दापरोक्षतानङ्गीकारेऽपि उक्तं प्रयोजनं संभवत्येवेति सर्वमनवद्यम् ।

इति वेदान्तपरिभाषाप्रकाशिकायां प्रत्यक्षपरिच्छेदः समाप्त इति शिवम् ॥

## अथानुमानपरिच्छेदः ।

अथ अनुमानं निरूप्यते :——

अनुमितिकरणम् अनुमानम् । अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या । व्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावात् नानुमितित्वम् ।

## अथानुमानपरिच्छेदः ॥

पूर्वं सप्रपञ्चप्रत्यक्षप्रमाणं निरूपितम्, इदानीम् उद्देशक्रमप्राप्तमनुमानप्रमाणं निरूपयितुमुपक्रमते—**अथेति** । प्रत्यक्षप्रमाणनिरूपणानन्तरमित्यर्थः । प्रत्यक्षप्रमाणं हि अनुमानस्य मूलम्, नहि साध्यहेत्वोस्साहचर्यदर्शनमन्तराऽनुमानं संभवति । अत उपजीव्योपजीवकभावोऽनन्तरसंगतिरिति भावः । मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादिति वस्तुसिद्धिं प्रति लक्षणनिरूपणस्यापेक्षितत्वादनुमानलक्षणमाह—**अनुमितिकरणमिति** । अनुमीयतेऽनेनेति करणव्युत्पत्त्याऽयमर्थो लभ्यते इति भावः ।

ननु का नामानुमितिः ? अत्र नैयायिकाः—व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपलिङ्गपरामर्शजन्यं ज्ञानमनुमितिरिति—वर्णयन्ति । नेदं सङ्गतम् ; अग्निवसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपस्य व्याप्तिवैशिष्ट्यस्य पर्वतीयधूमे ग्रहणासंभवात्, महानसीयधूम एव धूमत्वेन रूपेण गृहीतव्याप्ति संस्कारस्यैव हि पक्षधर्मताज्ञानसहितस्यानुमितिं प्रति कारणत्वं मीमांसकैर्वेदान्तिभिश्चाङ्गीक्रियते । अतो व्याप्तिविशिष्टपक्षधर्मताज्ञानं नानुमितिकारणमित्यभिप्रायेणाह—**अनुमितिश्चेति** । व्याप्तिज्ञानत्वेनेति तृतीयाया अवच्छिन्नत्वमर्थः । तस्य व्याप्तिज्ञानेनेति तृतीयार्थजनकतायामाश्रयतासम्बन्धेनान्वयः । तथाच व्याप्तिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताश्रयाऽनुमितिरित्यर्थः । जनकतायां

अनुमितिकरणञ्च व्याप्तिज्ञानम्। तत्संस्कारोऽवान्तरव्यापारः, न तु तृतीयलिङ्गपरामर्शोऽनुमितौ करणम्; तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात्।

व्याप्तिज्ञानत्वस्यावच्छेदकत्वविवक्षायाः प्रयोजनमाह—व्याप्तिज्ञानानुव्यवसायादेरिति। तत्त्वेन तज्जन्यत्वाभावादिति। व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्यत्वाभावादित्यर्थः।

प्रत्यक्षं प्रति हि विषयस्य विषयतयैव हेतुत्वम्, नतु घटत्वादिना विषयतावच्छेदकधर्मेण। अत एव व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरिति मणिकारलक्षणव्याख्यावसरे "नच परामर्शानुव्यवसायादावतिव्याप्तिः; सामान्यतः प्रत्यक्षे विषयत्वेन तत्तद्विषयप्रत्यक्षे तत्त्वेन हेतुत्वादि"ति दीधितिकृत आहुः। विषयताया भिन्नत्वेऽपि विषयतात्वमनुगमकमिति तट्टीकाकृतः। एवं च व्याप्तिज्ञानानुव्यवसायस्य विषयत्वेन व्याप्तिज्ञानजन्यत्वेऽपि व्याप्तिज्ञानत्वेन तज्जन्यत्वाभावात् न तत्रातिव्याप्तिरिति भावः। अनुव्यवसायादेरित्यादिपदेन व्याप्तिस्मृतेः परिग्रहः। स्मृतिं प्रत्यनुभवस्यानुभवत्वेन न कारणत्वम्, किन्तु स्वसमानविषयकानुभवत्वेनेति न दोषः।

ननु—अनुमितिकरणमनुमानमित्यत्रानुमितिं प्रति किमपि कारणमुक्तम्। अनुमितिश्चेतिग्रन्थे तु व्याप्तिज्ञानस्यानुमितिं प्रतिकारणत्वमित्युक्तम्। तत्र किमनुमानं किंवा व्याप्तिज्ञानम्? नच व्याप्तिज्ञानमेवानुमानम्; करणत्वस्य व्यापारवदसाधारणकारणत्वरूपत्वेन व्याप्तिज्ञानस्य कारणत्वेऽपि व्यापारवत्त्वाभावात्, नच व्याप्तिसंस्कारो व्यापार इति संभवति; संस्कारजन्यत्वेनानुमितेरपि स्मृतित्वापत्तेः। यत्तु नैयायिकानां लिङ्गपरामर्शोऽनुमानमिति मतम्, तदपि न युक्तम्; तस्य कारणत्वस्यैवासिद्ध्या करणत्वकल्पनस्य गौरवग्रस्तत्वात्। एवंचानुमानपदार्थः क इत्यत आह—अनुमितिकरणं चेति। व्याप्तिज्ञानमिति धूमो वह्निव्याप्य इति ज्ञानमित्यर्थः।

ननु पर्वतीयधूमेन्द्रियसन्निकर्षदशायां यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिज्ञानं न संभवति, हेतुसाध्ययोः साहचर्यज्ञानं खलु व्याप्तिज्ञानं जनयति। नह्यीदानीं तद्विद्यते इति चेत्, न; एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति

रीत्या स्मृतव्याप्तिवैशिष्ट्यमसंसर्गाग्रहरूपकारणेन धूमे गृहीतमिति अदोषात्।

**ननु**—धूमे वह्निव्याप्यत्वज्ञानमनुमितिपूर्वक्षणे न संभवति ; महानसीयधूमे एव खलु व्याप्तिज्ञानं संजातम्। तस्य च व्याप्तिज्ञानस्य करणत्वं व्यापारमन्तरेण न संभवति ; व्यापारवदसाधारणकारणं खलु करणमित्यतः तस्य व्याप्तिसंस्काररूपव्यापारवत्त्वमाह—**तत्संस्कार इति। अवान्तरेति।** मध्यपातीत्यर्थः।

**ननु**—तज्जन्यत्वे सति तज्जन्यजनकत्वं खलु व्यापारत्वम्। एवंच व्यापारेणैव कार्यसंभवे तज्जनकं व्याप्तिज्ञानं कुलालजनकवदन्यथासिद्धमिति चेत्, न हि व्यापारिणोऽपि कारणत्वस्य प्रामाणिकप्रसिद्धतयाऽन्यथासिद्धत्वम् ; प्रामाणिकव्यवहारविषय‸रूपान्यथासिद्धत्वस्य व्यापारिण्यनङ्गीकारात्। तदुक्तम्—"व्यापारेण व्यापारिणो नान्यथासिद्धत्वमि"ति। अत्र नैयायिकाः—साध्यव्याप्यहेतुमान् पक्ष इति परामर्श एवानुमितिकरणमिति—मन्यन्ते। अत्र लघुचन्द्रिकाकाराः—यो यत्र पुरावगतः स एव तत्र संस्कारवशादलौकिकप्रत्यक्षे भाति, यत्र यो न पुराऽवगतः तत्र तस्य धीरनुमित्यादिरेवेति प्राचीनतार्किकमतम्, उपनयसन्निकर्षास्वीकर्तॄणामस्माकं मते हेतुनिष्ठं साध्यसामानाधिकरण्यमेव व्याप्तिः, नतु साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकमिति पक्षे च महानसीय एव धूमे गृहीतस्मृतव्याप्तेः पर्वतीयधूमे प्रत्यक्षासंभवः। अत एव प्राभाकराः—धूमत्वाद्येकरूपेण व्याप्तिज्ञानपक्षधर्मताज्ञानयोरेवानुमितिकारणत्वमूरीकुर्वन्ति, अस्मन्मते तु व्याप्तिसंस्कारपक्षधर्मताज्ञानयोरेव कारणत्वम्, व्याप्तिविषयकोद्बुद्धसंस्कारपक्षधर्मताज्ञानोत्तरं व्याप्तिस्मृतिव्यक्तीनामनुमित्युत्पत्त्यर्थं कल्पने महागौरवात्। तदुक्तम् पञ्चपाद्याम्—लिङ्गज्ञानव्याप्तिसंस्कारयोः संभूय न लिङ्गज्ञानहेतुत्वम्, संस्कारानुद्बोधे तदभावात्। तस्मात् लिङ्गज्ञानमेव लिङ्गिसम्बन्धसंस्कारमुद्बोध्य तत्सहितं लिङ्गज्ञानं जनयतीति—वदन्ति। न च—व्याप्तिसंस्कारस्यानुमितिहेतुत्वे न्यायप्रयोगस्थले उपाध्युद्भावनं नियमतो न स्यात्, तत्कार्यस्य व्यभिचारज्ञानस्यानुमितिकारणसंस्काराप्रतिबन्धकत्वादिति—वाच्यम् ; विरोधिनिश्चयस्य संस्कारनाशकत्वाङ्गीकारेण व्याप्तिसंस्कारनाशार्थं

**न च संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः, स्मृति-**

व्याप्तिधीप्रतिबन्धार्थं वा व्यभिचारज्ञानस्य साधनीयत्वेनादोषात् । एवंच व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपपरामर्शस्यानुमितिकरणत्वं नोपपद्यते ; परामर्शस्य कारणत्वस्यैवासिद्धया तद्विशेषकरणत्वकल्पनायोगादित्याह—**नत्विति । तृतीयेति** ॥ व्याप्तिज्ञानपक्षधर्मताज्ञानद्वयातिरिक्तेत्यर्थः ।

**ननु**—संस्कारजन्यं ज्ञानं स्मृतिरिति स्मृतिलक्षणं विवक्षितम् । एवंच संस्कारजन्यत्वस्यानुमितौ स्वीकारेऽनुमितेरपि स्मृतित्वापत्तिरित्याशयेन शङ्कते—**नचेति । संस्कारजन्यत्वेनेति ।** नच—स्वसमानविषयकसंस्कारजन्यत्वस्य स्मृतित्वप्रयोजकतया व्याप्तिसंस्कारादसमानविषयकाज्जन्याऽनुमितिर्न स्मृतिर्भवितुमर्हतीति—वाच्यम् ; यत्र यत्र धूमस्तत्र तत्राग्निरिति यावद्धूममग्निसद्भावोऽवगत इति गृहीतग्राहित्वमेवानुमानस्येति मते समानविषयकजन्यत्वानपायात् । नचात्र स्मृतिप्रमोष एवेति सांप्रतम् ; प्रत्युत्पन्नलिङ्गकारणजन्यत्वेन संस्कारमात्रजन्यत्वाभावेन स्मृतित्वायोगात् ।

तदुक्तं शास्त्रदीपिकायाम्—"ननु नियमावधारणाधीनत्वे कथं ताद्रूप्येणापरिच्छिन्ने प्रवृत्तिः, ईदृशो हि नियमः—यत्र यत्र धूमस्तत्र तत्राग्निः, यद्यद्रसवत् तत्तद्रूपवदिति, एवंच यावद्धूममग्निसद्भावोऽवगत इति नापरिच्छिन्नविषयत्वमनुमानस्य संभवतीति । अत एव चोद्यात् बिभ्यतः केचिदसन्निकृष्टग्रहणं स्मरणाभिमाननिरासार्थं व्याचक्षते गृहीतग्राहित्वमेवानुमानस्य स्वीकुर्वाणाः । तथापि नाप्रामाण्यम् ; नत्वगृहीतग्रहणं प्रमाणलक्षणम् ; अनुभूतिर्हि तल्लक्षणम् । अनुमानं च प्रत्युत्पन्नलिङ्गकारणजन्यत्वेन संस्कारमात्रजन्यत्वाभावादनुभूतिरेवेति युक्तमस्य प्रामाण्यम् । अथ स्मृतिप्रमोषः कस्मान्नाद्रियते ? प्रत्युत्पन्नकारणसद्भावादिति । "यदि चावगतमेवानुमानेनावगम्यते, ततः स्मरणमेव प्रमुषिततद्भावमनुमानं स्यात्, न च प्रत्युत्पन्नकारणजत्वादस्मृतित्वम् ; तदसिद्धेः । सम्बन्धिदर्शनं हि सदृशदर्शनवत्संस्कारमुद्बोधयेत्, क्लृप्तं हि तस्य कारणत्वम् । संस्कारश्चोद्बोधितः स्मृतिं जनयतीत्यविवादम् । तदेवं क्लृप्तेनैव मार्गेण धूमादग्निज्ञानोत्पत्तौ लिङ्गस्य लिङ्गिज्ञानहेतुत्वमक्लृप्तं केन कल्पयेत् ? तस्मादगृहीत-

प्रागभावजन्यत्वस्य संस्कारमात्रजन्यत्वस्य वा स्मृतित्वप्रयोजक-

ग्राहित्वमेवानुमानस्याङ्गीकरणीयम्। किंचाग्निधूमयोर्मिथः सम्बन्धः देशकालावच्छिन्नः प्रत्यक्षेणावगत इत्येतावदेव भवान् ब्रवीति। नचैतावता देशान्तरकालान्तरसम्बन्धोऽग्नेरवगतो भवति, तस्मादगृहीतग्राह्येवानुमानम्, किमत्रागृहीतम्? अग्निविशिष्टस्तु पर्वतो न केनाप्यवगत इति सोऽनुमेयो भविष्यति। तत्र च प्राप्ताप्राप्तविवेकेन सम्बन्धमात्रं प्रमेयमवशिष्यते" इति शास्त्रदीपिकोदाहृतपक्षान्तरानुसारः, तर्हि व्याप्तिसंस्कारानुमित्योस्समानविषयत्वाभावात् न स्मृतित्वप्रसङ्गः। एवं च परिभाषाग्रन्थोऽयं पूर्वोदाहृतस्य केषांचित्पक्षस्यानुसार्येवेति मन्तव्यम्।

यत्तु—आशुबोधिन्याम्—स्वसमानविषयकसंस्कारजन्यत्वस्य प्रत्यभिज्ञासाधारण्यात् न स्मृतित्वप्रयोजकत्वमित्युक्तम्, तदिदं यदि नैयायिकमतानुसारेण, तर्हि "अभिन्नयोर्वस्तुत एकस्मिन् कालद्वयसम्बन्धस्य ग्रहणेऽपि प्रत्यभिज्ञया एकस्मिन् कालद्वयसम्बन्ध इति वा कालद्वयसम्बन्ध्येकमिति वा ग्रहणेन प्रमीयत एव भेद" इति अद्वैतसिद्धिग्रन्थानुसारेण प्रत्यभिज्ञासंस्कारयोः समानविषयत्वाभावात् स्वसमानविषयसंस्कारजन्यत्वं न प्रत्यभिज्ञासाधारणम्। अद्वैतमतानुसारे तु प्रत्यभिज्ञासामान्यस्य निर्विकल्पत्वात् न संस्कारप्रत्यभिज्ञयोः समानविषयत्वम्। तदुक्तमद्वैतसिद्धौ—नचाभिज्ञाया अविशेषः; सप्रकारकत्वनिष्प्रकारत्वाभ्यां विशेषात्" इति।

अनुभवसंस्कारयोः समानविषयत्वमविवादमेव। एवं च संस्कारजन्यत्वपदेन स्वसमानविषयसंस्कारजन्यत्वविवक्षायामपि अनुमितेः स्मृतित्वमापद्येतेवेति शङ्काग्रन्थाशयः॥

स्मृतिप्रागभावजन्यत्वमेव वा स्मृतित्वप्रयोजकम्, अनुमितेस्तु न स्मृतिप्रागभावजन्यत्वं विद्यत इति न दोष इत्याह—**स्मृतीति**।

**ननु**—कार्यसामान्यस्य तत्तत्प्रागभावजन्यत्वादनुमितेरप्यनुमितिप्रागभावजन्यत्वमङ्गीकरणीयम्, तत्र यैरनुमितेः स्मृतित्वमापाद्यते,तैः स्मृतिप्रागभावजन्यत्वं प्रकारान्तरेणानुमितिस्मृतित्वनिरासमन्तरा नोरीक्रियेतेति स्मृतित्वप्रयोजकम-

तया संस्कारध्वंससाधारणसंस्कारजन्यत्वस्य तदप्रयोजकत्वात्।

न च—यत्र व्याप्तिस्मरणादनुमितिः तत्र कथं संस्कारो हेतु-

न्विकल्पयति—संस्कारमात्रजन्यत्वस्य वेति। संस्कारेतरासाधारण-कारणाजन्यत्वे सति संस्कारजन्यत्वमित्यर्थः। एवंचानुमितेर्लिङ्गज्ञानाद्यसाधारण-कारणजन्यत्वान्न स्मृतित्वप्रसङ्ग इति भावः।

ननु—संस्कारजन्यत्वमेव स्मृतित्वप्रयोजकं भवतु, किमिति तन्मात्रजन्यत्वं तत्प्रयोजकमुच्यते? न च प्रत्यभिज्ञायामतिव्याप्तिरिति वाच्यम्; स्वसमान-विषयकत्वविवक्षणेनैवोक्तदोषवारणादित्यत आह—संस्कारध्वंससाधारणेति। एवं च सामान्यतः संस्कारजन्यत्वविवक्षायां संस्कारध्वंसेऽतिव्याप्तिः, प्रत्यभिज्ञायां चातिव्याप्तिरिति तन्निरासार्थं स्वसमानविषयकसंस्कारजन्यत्वविवक्षायामप्यनुमिता-वतिव्याप्तितादवस्थ्यमिति सर्वातिप्रसङ्गनिरासार्थं संस्कारमात्रजन्यत्वमेव स्मृतित्व-प्रयोजकमङ्गीकरणीयमिति भावः।

ननु—व्याप्तिसंस्कारद्वारा व्याप्तिज्ञानमनुमितिं प्रति न करणम्, यत्र व्याप्तिस्मरणं तत्र स्मरणेन पूर्वतनसंस्कारस्य विनाशात्, स्मृत्या संस्कारनाशो भवतीत्यत्र प्रमाणं तु—अनुभवजन्यः स्मृतिजनकः संस्कारः, स्वफलस्मृतिनाश्यः, व्यापारत्वात्, अपूर्ववत्, इत्यनुमानमेव। न च—स्मृत्या पूर्वतनसंस्कारविनाशेऽपि विलक्षणसंस्कारान्तरोत्पादकत्वात् व्याप्तिसंस्कारः पुनरपि विद्यत एवेति तद्द्वारा करणत्वसंभव इति—वाच्यम्; तस्य संस्कारस्य व्याप्तिस्मृतिजन्यत्वेऽपि व्याप्तिज्ञानजन्यत्वाभावेन तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्याप्तिज्ञानव्यापारत्वा-संभवात्। स्मृतौ हि सत्यां संस्कारो दृढो भवतीत्यभियुक्तोक्तिरपि प्रथमस्मृतौ सत्यां तज्जनकीभूतः संस्कारः दृढत्वनामधर्मवान् भवतीत्यभिप्रायो न भवति, न हि स धर्मो जातिः; स्मृतिप्रयोज्यत्वेनानित्यत्वात्, अतो वैजात्यविशिष्टसंस्कारा-न्तरमेव स्मृतिजन्यं विलक्षणस्मृतिजनकं स्वीकार्यम्; एवं च विलक्षण-स्मृत्युत्पत्तिरप्युपपद्यत इति व्याप्तिज्ञानकरणतावादोऽयं न सङ्गत इत्याशयेन शङ्कते —न च यत्रेति। कथं संस्कारो हेतुरिति।

रिति—वाच्यम् ; व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात्। न हि स्मृतेः संस्कारनाशकत्वनियमः; स्मृतिधारादर्शनात्। न चानुद्बुद्धसंस्कारादप्यनुमित्यापत्तिः, तदुद्बोधस्यापि

अनुमितिपूर्ववर्त्तित्वाभावादिति शेषः। **संस्कारः** व्याप्तिज्ञानजन्यसंस्कारः। **हेतुः** व्यापारः। व्याप्तिस्मरणेऽपि व्याप्तिज्ञानजन्यसंस्कारो विद्यत एव। विलक्षणात्तु स्मृतिः स्मृतिजन्यसंस्कारसहितपूर्वतनसंस्काराधीना संभवत्येव। स्मृतौ हि सत्यां संस्कारो दृढ़ो भवतीत्यभियुक्तोक्तेरपि समानविषयकत्वसामानाधिकरण्योभयसंबन्धेन संस्कारान्तरवैशिष्ट्यमेव पूर्वतनसंस्कारस्य विवक्षितम्। एवं च स्मृतेः संस्कारनाशकत्वे मानाभावः। पूर्वोक्तानुमानं प्रत्यक्षज्ञानेनेन्द्रियसन्निकर्षस्याविनाशादनैकान्तिकम्। एवंच व्याप्तिस्मृतिस्थलेऽपि संस्कारसत्त्वात् तद्द्वारा व्याप्तिज्ञानकरणत्वं नानुपपन्नमिति; एतत् सर्वं मनसि निधायाह—**व्याप्तिस्मृतिस्थलेऽपीति**।

**संस्कारस्यैवेति**। व्याप्तिज्ञानजन्यसंस्कारस्यैवेत्यर्थः। एवकारेण व्याप्तिस्मृतिजन्यसंस्कारो व्यावर्त्त्यते। **नियम इति**। रोगविशेषादीनामिव संस्कारनाशकत्वात्स्मृतेस्तन्नाशकत्वस्य क्वचाप्यसंभवान्नियमपदं संभवपरम्। एवंच स्मृतेः संस्कारनाशकत्वसंभवो नेत्यर्थः।

**ननु**—प्रत्यक्षज्ञानानन्तरमिन्द्रियसन्निकर्षस्य तेन विनाशो नाङ्गीक्रियते, अन्यथा धारावाहिकप्रत्यक्षानुपपत्तेः, स्मृतेः संस्कारनाशकत्वे तु न काप्यनुपपत्तिः। नच मानाभावः; संस्कारः, स्वफलस्मृतिनाश्यः, कालान्तरभाविफलव्यापारत्वादित्यनुमानस्य प्रमाणत्वात्, नचेन्द्रियसन्निकर्षे व्यभिचारः; तत्फलस्य प्रत्यक्षस्य तत्काल एव भावादिति—**चेन्न** ; धारावाहिकं प्रत्यक्षं यथा विद्यते, एवं स्मृतिधारापि विद्यते; अतस्तदुपपत्त्यर्थं संस्कारनाश्यत्वस्यायोगात्, तदेतन्मनसि निधायाह—**स्मृतिधारादर्शनादिति**।

सहकारित्वात् । एवञ्च अयं धूमवानिति पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमान् इत्यनुमितिर्भवति, न तु मध्ये व्याप्तिस्मरणं तज्जन्यं वह्निव्याप्य-धूमवान् इत्यादिविशिष्टज्ञानं वा हेतुत्वेन कल्पनीयम् ; गौरवात्, मानाभावाच्च । तच्च व्याप्तिज्ञानं वह्निविषयक अंश एव करणम्,

ननु—व्याप्तिसंस्कारो न व्यापारः, सत्यपि संस्कारे तदनुद्बोधेऽनुमित्यनुदया-दित्याशङ्कते—**नचेति** ॥ उद्बुद्धसंस्कारस्यैवानुमितिहेतुत्वान्न दोष इति समाधत्ते—**तदुद्बोधस्यापीति** । उद्बोधोऽभिव्यक्तिः ; फलजननाभिमुखत्वमिति यावत्, स च धूमदर्शनानन्तरमेव जायते, एवंच पर्वतो धूमवानिति पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इति व्याप्तिसंस्कारोद्बोधे च सति पर्वतो वह्निमानित्यनुमितिर्जायत इति मध्ये व्याप्तिस्मरणादिकं न कल्पनीयमिति निष्कर्षः । तदिदमाह—**एवं चेति** ।

अत्र च पक्षधर्मताज्ञानं व्याप्तिसंस्कारोद्बोध इति कारणद्वयादेवानुमितिः, व्याप्तिसंस्कारोद्बोधस्तु धूमज्ञानमात्रेणैव, नतु पक्षधर्मताज्ञानेन । अत एव पक्ष-धर्मताज्ञानव्याप्तिसंस्कारयोर्द्वयोरेवानुमितिकारणत्वमिति लघुचन्द्रिकायामुक्तम् । उक्तं चैतत् पू र्वमेव ।

एवं च यद्बालबोधिन्याम्—उद्बोधः धूमदर्शनानन्तरमेव भवतीति पूर्वमु-क्त्वाऽनन्तरं पक्षधर्मताज्ञानोद्बोधितव्याप्तिज्ञानजन्यसंस्कारस्यावान्तरव्यापारत्वे सतीति पक्षधर्मताज्ञानस्य संस्कारोद्बोधसामग्रीत्वं निरूपितम्, तन्मूलाक्षरानन-नुगुणम् । मूले हि—पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमानित्यनुमितिर्भवतीति चशब्दप्रयोगात् पक्षधर्मताज्ञानसंस्कारोद्बोधयो-र्द्वयोरेवैकजातीयं कारणत्वं निरूपितमेव । **एवंच** अनुमितौ व्याप्तिसंस्कारस्य व्यापारत्वे सिद्धे च । **पक्षधर्मताज्ञाने**ऽहेतोः पक्षवृत्तित्वज्ञाने ।

न पर्वतविषयकत्वांशे ; पर्वतो वह्निमान् इति ज्ञानस्य वह्न्यंश एवानुमितित्वम्, न पर्वताद्यंशे ; तदंशे प्रत्यक्षत्वस्योपपादितत्वात्। व्याप्तिश्च——अशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपा।

नैयायिकाः—व्याप्तिज्ञानं व्याप्तिस्मरणं पक्षधर्मताज्ञानं लिङ्गपरामर्शश्चानुमितिसामग्रीति मन्यन्ते, तन्मतं निरस्यति—नत्विति। गौरवादिति। सामग्रीद्वितयेनोपपत्तावधिकसामग्रीकल्पने गौरवादित्यर्थः। प्रामाणिकं गौरवं न दोषायेति तस्यादोषत्वशङ्कायामाह—मानाभावादिति।

पर्वतो वह्निमानित्यत्र पर्वतांशे ज्ञानस्य प्रत्यक्षत्वं वह्न्यंश एवानुमितित्वमिति पूर्वमुक्तम्, तदनुसारेणाह—तच्च व्याप्तिज्ञानमिति। वह्निविषयकत्वांश इति। पर्वतवह्निसम्बन्धांश एवेत्यर्थः। तदुक्तं शास्त्रदीपिकायाम् :—"यथा" दध्ना जुहोतीति विशिष्टविषयोऽपि विधिर्विशेषणपरो भवति, तथैवेहापि विशिष्टविषयमेवानुमानं विशेष्यविशेषणयोः प्राप्तत्वात् सम्बन्धविषयं भवती"ति॥

व्याप्तिस्वरूपमुपपादयति—व्याप्तिश्चेति। अशेषाः साधनाश्रयाः तन्निष्ठं यत् साध्यं तत्सामानाधिकरण्यं व्याप्तिः। यावन्ति हेत्वधिकरणानि तन्निष्ठः साध्यत्वेनाभिमतो यः पदार्थः तत्सामानाधिकरण्यमिति यावत्। पर्वतो वह्निमान् धूमादित्यत्र धूमे व्याप्यत्वसमन्वयः। तत्र साधनं धूमः, यावन्ति धूमाधिकरणानि तत्र तत्र साध्यत्वेनाभिमतो वह्निर्विद्यते। तत्सामानाधिकरण्यं धूमेऽपि वर्तते। धूमवान् वह्नेरित्यत्र तु साधनाश्रयेषु महानसादिषु केषुचन साध्यत्वेनाभिमतो धूमो विद्यते, एवमपि अयोगोलके साधनाश्रये धूमो नास्तीति, नाशेषसाधनाश्रयाश्रितसाध्यसामानाधिरण्यरूपं व्याप्यत्वमस्ति। एवंचाशेषपदार्थस्य साधनाश्रयपदार्थेन साकमत्रान्वयो विवक्षित इति भावः।

ननु—व्याप्तिज्ञानं न संभवति ; व्याप्तिग्राहकानिरूपणात्। नच तर्को व्याप्तिग्राहकः ; तर्कस्यापि व्याप्तिमूलकत्वेन तस्यापि तर्कापेक्षायामनवस्थानात्, नच सहचारदर्शनं तद्ग्राहकम् ; सकृदसकृद्वा सहचारज्ञाने सत्यपि व्यभिचारज्ञाने

सा च व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते। तच्च सहचारदर्शनं भूयोदर्शनं सकृद्दर्शनं वेति विशेषो नादरणीयः; सहचारदर्शनस्यैव प्रयोजकत्वात् ।

तच्चानुमानमन्वयिरूपमेकमेव, न तु केवलान्वयि ; सर्व-

सति व्याप्तिग्रहाभावादित्यत आह—सा चेति। व्याप्तिरेत्यर्थः। व्यभिचाराज्ञाने साध्यवदन्यवृत्तित्वज्ञानाभावे सति।

नैयायिकाः—अनुमानं त्रिविधम्—अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति। तत्र साधनसत्त्वे साध्यसत्त्वमन्वयः, तन्मूलिका या व्याप्तिः, सा चाग्निसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपा, तन्मात्रमूलकं यदनुमानं तत्केवलान्वयि। साध्याभावे साधनाभावो व्यतिरेकः, तन्मूलिका व्याप्तिर्व्यतिरेकव्याप्तिः साध्याभावव्यापकसाधनाभावप्रतियोगित्वरूपा, तन्मात्रनिबन्धनमनुमानं केवलव्यतिरेकि। उभयव्याप्तिमूलकमनुमानमन्वयव्यतिरेकि। तत्र पर्वतो वह्निमानिति तृतीयम्। पृथिवी, इतरेभ्यो भिद्यते, इति द्वितीयम्, सर्वम्, वाच्यम्, मेयत्वादिति प्रथममनुमानमिति विवेक इति—वर्णयन्ति।

तत्र केचित् केवलान्वयिसाध्यकत्वं केवलान्वयित्वमिति मन्यन्ते।

मीमांसकास्तु—व्यतिरेकव्याप्तिज्ञानेन नानुमितिः, साध्याभावसाधनाभावयोर्व्याप्तिग्रहेण कथं साधनेन साध्यानुमानं भवेत् ? अतोऽन्वयिरूपमेकमेवानुमानम्, नान्वयव्यतिरेकि केवलव्यतिरेकि वानुमानं किंचिदस्तीति—वदन्ति।

तदेतन्मीमांसकमतं मनसि निधायाह—तच्चानुमानमन्वयिरूपमेकमेवेति। यत्र यत्र धूमस्तत्र तत्राग्निरित्यन्वयव्याप्तिज्ञानमात्रेण व्यतिरेकव्याप्तिज्ञानं विनाऽपि वह्निमानित्यनुमितिसिद्ध्या व्यतिरेकव्याप्तिज्ञानस्यानुमितिं प्रत्यहेतुत्वम्। एवंच केवलव्यतिरेकिरूपत्वमप्यनुमानस्य न संभवति। अत्यन्ताभावाप्रतियोगिसाध्यकत्वं केवलान्वयित्वमिति मतेऽनुमानस्य केवलान्वयित्वेन विभागो न संभवति। तथाचैकमेवेति युक्तमिति भावः। तदिदं सर्वमभिप्रेत्याह—नत्विति। वाच्यत्वमेयत्वादीनामपि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन केव-

**स्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः।**

लान्वयिसाध्याप्रसिद्धेरित्याह—**सर्वस्येति।** ब्रह्मतु यद्यपि सर्वत्र वर्त्तते, तथापि न स धर्मः; अतो न पक्षधर्मत्वरूपसाध्यत्वसंभवः। **अस्मन्मते इति।** वेदान्तिनामद्वैतिनां मते इत्यर्थः। **ब्रह्मनिष्ठात्यन्ताभावेति।** "नेह नानास्ति किंचने"ति श्रुत्यनुसारेणेत्यादिः। इयं हि श्रुतिर्द्वैतवति ब्रह्मणि द्वैताभावं बोधयति। तस्य च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वे पर्यवसानमित्यन्यत्र विस्तरः। एवंच यत्र येन संबन्धेन येन धर्मेण च यदस्ति, तत्र तेन संबन्धेन तेन रूपेण तन्नास्तीति फलितम्; तथाच यत्र यत्र वाच्यत्वं तत्र तत्र वाच्यत्वाभावोऽपि विद्यत एव। वाच्यत्वज्ञानदशायामेव वाच्यत्वाभावज्ञानं न संभवति; वाच्यत्वादावधिष्ठानगतस्य सत्त्वस्य य आरोपस्तस्यानादिदृढवासनासहितस्य तदभावग्रहप्रतिबन्धकत्वात्।

**वस्तुतस्तु**—घटादिप्रत्यक्षदशायां श्रुत्या तत्र मिथ्यात्वनिश्चयो नानुपपन्नः। तत्र नैयायिकमत आकाशाभावस्य संयोगाभावस्य च केवलान्वयित्वमभिमतं समर्थयितुं स्वविरोधी वृत्तिमांश्चात्यान्ताभावो यः तदप्रतियोगित्वं केवलान्वयित्वमिति निरुच्यते, अस्मन्मत आकाशस्यापि वृत्तिमत्त्वादुक्तदलद्वयविवक्षायामपि तयोः केवलान्वयित्वं न संभवतीत्यत्यन्ताभावाप्रतियोगिसाध्यकत्वात्मककेवलान्वयित्वं कस्यापि नास्त्येव।

वस्तुतस्तु—स्वविरोधित्वविशेषणोपादानेऽपि न क्षतिः; पूर्वोक्तरीत्या वाच्यताज्ञानदशायां वाच्यत्वाभावज्ञानासंभवेन वाच्यत्वाभाववाच्यत्वयोः परस्परविरोधित्वात्; तदेतत्सर्वं मनसि निधायाह—**अत्यन्ताभावाप्रतियोगीति।**

यदत्र शिखामणौ "अत्र ब्रूम इत्यादिना घटः प्रमेयः द्रव्यत्वादित्यादौ साध्यस्य केवलान्वयित्वं विद्यत एव। ब्रह्मणि प्रमेयत्वस्य पारमार्थिकत्वेन निषेधेऽपि स्वरूपेणानिषेधात्, पारमार्थिकत्वेन प्रमेयत्वाभावस्य प्रमेयत्वाविरोधित्वाच्च, स्वविरोधिवृत्तिमदत्यन्ताभावो न स्वरूपेण प्रमेयत्वाभाव इति प्रमेयत्वं केवलान्वय्येव। एतेन—वाच्यत्वमपि—व्याख्यातम्; पदजन्यज्ञानविषयत्वस्य ब्रह्मासाधारणत्वादित्युक्तम्; तदेतेन चिन्त्यम्; स्वरूपेणापि प्रमेयत्वस्य

ब्रह्मण्यसंभवात्; अद्वैतहानेः, वाचस्पतिमते हि शुद्धं ब्रह्म न वृत्तिविषयः, किन्तूपहितमेवेति ब्रह्मणः शुद्धस्य प्रमेयत्वं नाङ्गीक्रियत एव; तस्य स्वप्रकाशत्वात्। "सर्वोपाधिविरहितं हि स्वयंज्योतिरिति गीयते" इति वाचस्पतिमतानुसारेण प्रमेयत्वं ब्रह्मणि नास्त्येव। व्यवहारदशायां पूर्वोक्तरीत्या विवरणमतेऽपि प्रमेयत्वतदभावयोः सह ज्ञानासंभवेन प्रमेयत्वाधिकरणे प्रमेयत्वाभावस्यापि सत्त्वेनोक्तकेवलान्वयित्वोपपादनासंभवात्। प्रमेयत्वज्ञानदशायां ब्रह्मण्यन्यत्र वा यद्यपि प्रमेयत्वाभावज्ञानं प्रत्यक्षं न संभवति; तथापि शाब्दं तत् संभवत्येव। नच "नेह नानास्ति किञ्चनेति" श्रुत्या पारमार्थिकत्वेनैव प्रपंचस्य निषेधो नतु स्वरूपेण, अन्यथा दृश्यनिषेधस्याहार्यरूपत्वापत्तेरिति—वाच्यम्; दृश्यत्वेन प्रपञ्चवति आत्मभिन्नत्वेन प्रपञ्चनिषेधेन घटत्वेन घटवति पृथिवीत्वादिना प्रपञ्चनिषेधेन वाऽऽहार्यत्वपरिहारेण स्वरूपेण त्रैकालिकनिषेधेऽप्यदोषात्। तदुक्तं लघु-चन्द्रिकायाम्—घटवत् द्रव्यवदित्येवमुद्देश्यतावच्छेदकभानेऽपि द्रव्यं नास्तीत्यादि-विधेयांशे घटत्वादिविशिष्टस्योद्देश्यतावच्छेदकत्वेन द्रव्यत्वादिविशिष्टाभावभानस्य नाहार्यत्वापत्तिरिति। "द्वैतवति द्वैताभावबोधस्याहार्यत्वेन शाब्दत्वासंभवेऽपी-हपदस्य दृश्यत्वरूपेण द्वितीयपदस्य चात्मभिन्नत्वरूपेण बोधकत्वेनाहार्यत्वाभावात्" इति। तथाच स्वरूपेण त्रैकालिकनिषेधपक्षोऽप्युपपन्न एव। तदुक्तमद्वैतसिद्धौ—स्वरूपेण पारमार्थिकत्वेन वा त्रैकालिकनिषेधः" इति।

ननु—स्वरूपेण त्रैकालिकनिषेधपक्षोऽयं एकसत्तावाद एव, नतु सत्तात्रैवि-ध्यवाद इति परिभाषायामुत्तरत्र प्रतिपादयिष्यते, मिथ्यात्वप्रक्रियानिरूपणप्रसङ्गे च सत्तात्रैविध्यपक्ष एवोपपादितः, एवं च पारमार्थिकत्वेन त्रैकालिकनिषेधस्यैव परिभाषाकृता मिथ्यात्वरूपत्वाङ्गीकारात् प्रमेयत्वादीनां केवलान्वयित्वमुपपन्नमेवेति —चेत् न; सत्तात्रैविध्यमतेऽपि स्वरूपेण त्रैकालिकनिषेधस्य मिथ्यात्वस्याद्वैत-सिद्ध्यादौ सम्यगुपपादनेन परिभाषाग्रन्थस्य मन्दप्रयोजनत्वेनादोषात्।

वस्तुतस्तु—अद्वैतिनां मते भावाभावयोर्विरोधकथैव नास्ति। तदुक्तं लघु-चन्द्रिकायां—भावाभावयोरेकाधिकरणे समसत्ताकत्वेऽपि न दोष इति। व्याख्यातं च विट्ठलेशीये—न दोष इति। तयोः (भावाभावयोः) विरोधस्यैवानुपगमादिति भावः" इति। एवंच स्वविरोध्यभावस्यैवाप्रसिद्धत्वात् स्वविरोधित्वहानेन सामान्यतोऽत्यन्ताभावाप्रतियोगित्वस्य केवलान्वयित्वरूपत्वे

## नाप्यनुमानस्य केवलव्यतिरेकिरूपत्वम्; साध्याभावे

वर्णनीये तस्यापि प्रमेयत्वादौ पारमार्थिकत्वेनाभावप्रतियोगित्वेनासिद्धिः। नहि परिभाषाकृतां मते—पारमार्थिकत्वेन त्रैकालिकनिषेध एव मिथ्यात्वमिति संभवति। सत्तात्रैविध्यपक्षे पारमार्थिकत्वेन निषेध इत्युक्त्या पक्षान्तरे स्वरूपेण निषेध एव स इति सूचितम्। सत्तात्रैविध्यसत्त्वैकत्वपक्षयोरुभयोरपि परिभाषायां प्रत्यक्षपरिच्छेद आदरो दृश्यत एव। अत एव—अत्यन्ताभावाप्रतियोगित्वरूप-केवलान्वयित्वेति प्रकृतग्रन्थोपपत्तिः। सर्वथा तु अद्वैतिनां मते केवलान्वयिपदार्थो न प्रसिद्ध इत्यलं विस्तरेणेति दिक्॥

केवलान्वयित्वमनुमानस्य निराकृत्य केवलव्यतिरेकिरूपत्वं तस्य निराकुरुते—

**नापीति। केवलव्यतिरेकिरूपत्वम्** साध्याभावसाधनाभावयोर्व्याप्तिग्रहा-त्मकव्यतिरेकव्याप्तिमात्रमूलकत्वम्।

तदुक्तमनुमानदीधितौ केवलान्वयिग्रन्थे—"एवं साध्याभावव्यापकाभाव-प्रतियोगित्वमपि नानुमित्यौपयिकम्, गौरवात्; व्यभिचारज्ञानाविरोधित्वाच्च। वह्न्यभावसमानाधिकरणाभावप्रतियोगी धूमाभाव इति ज्ञानं हि धूमाभावाभाव-त्वेन तत्र वन्ह्यभावसामानाधिकरण्यबुद्धिं कदाचिद्विरुन्ध्यात्, न तु धूम-त्वेन; भिन्नप्रकारकत्वात्, व्यतिरेकव्याप्तिग्रहाधीनाच धीर्नानुमितिः; तत्त्वे-नाननुभवात्, कृप्तकारणाभावात्, सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात्, किन्तु विजातीया। तत्कारणमपि प्रमाणान्तरमर्थापत्तिरेव, कृप्तप्रमाणद्वय-समाहारसमग्रीत्वं च युगपदन्वयव्यतिरेकधर्मद्वयप्रतिसन्धानमिति। अत्रेदं जागदशीयं व्याख्यानम्—"केवलान्वयिनं निरस्य केवलव्यतिरेकिणं निरस्यति—एवमिति। गौरवादित्यस्य साध्याभाववदवृत्तित्वज्ञानापेक्षयेत्यादिः। ननु—साध्यवदन्यावृत्तित्वज्ञानस्येव व्यतिरेकव्याप्तिग्रहस्यापि व्यभिचारविरोधित्वे-नानुमितिहेतुत्वं साधनीयम्, अत आह—व्यभिचारेति। अविरोधं व्युत्पादयति—वन्ह्यभावेति। वह्न्यभाववति धूमाभावो नास्तीति धीरभावे धूमाभाव-प्रतियोगित्वावगाहिनो धूमाभावेऽपि वह्न्यभाववदवृत्त्यभावप्रतियोगित्वमवगाहत इति तस्या एव विरोधिविषयकत्वमात्रेण व्यतिरेकव्याप्तिग्रहे कदाचित् प्रतिबन्धकत्वसुचितम्, तदप्ययुक्तम्; संसर्गविधया प्रतियोगित्वग्रहे प्रतियोगित्वा-

साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात् ।

कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानादनुमितिः? अर्थापत्तिप्रमाणादिति वक्ष्यामः। अतएवानुमानस्य नान्वयिव्यतिरेकिरूपत्वम् ; व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात् ।

भावप्रकारिकाया व्यतिरेकव्याप्तिधियो विरोधित्वासंभवात्, वह्न्यभाववति धूम इति व्यभिचारग्रहेतु व्यतिरेकव्याप्तिग्रहस्य विरोधित्वं सुदूरपराहतम् ; वस्तुगत्या धूमाभावाभावात्मकस्य धूमस्य विषयत्वेऽपि धूमाभावाभावत्वेनाप्रकारत्वात् । विजातीयेति। वैजात्यम् अर्थापयामि नानुमिनोमीत्यनुभवादेव सिद्धमि"त्यादि। यत्तु अत्र शिखामणौ—स्वव्यभिचारविरोधिधीविषयव्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्यानुमितिहेतुत्वात् व्यतिरेकव्याप्तिज्ञानमप्यनुमितिकारणमेव, नहि धूमाभावो यावद्वह्न्यभावाधिकरणावृत्तिरिति ज्ञाने धूमो वह्न्यभावेन समानाधिकरण इति ज्ञानं भवति, एवंच यदा व्यतिरेकव्याप्तिज्ञानादिघटितसामग्र्यां सत्यामनुमिनोमीत्यनुव्यवसायः, तदा तज्जन्यज्ञानस्यानुमितित्वम्, यदातु तादृशसामग्रीसत्तायामपि धूमेन वह्निं कल्पयामीत्यनुव्यवसायः तदा धूमस्यार्थापत्तिविधया प्रामाण्यमिति प्रमाणषट्कव्यपदेशोऽप्युपपन्न एव। सर्वथातु व्यतिरेकव्याप्तिज्ञानस्याप्यनुमितिहेतुत्वात् केवलान्वयिकेवलव्यतिरेक्यन्वयिव्यतिरेकिभेदेन त्रिविधमेवानुमानमिति व्यवस्थापितम्, तदेतद्दोधित्यादिविरुद्धम् । तदुक्तं माधुर्याम्—अभिनवमीमांसकास्त्वित्यादिना--तत्र तादृशानुव्यवसायस्यैवासिद्धेः प्रत्यतेदन्त्वसाक्षात्कृतं नत्वाऽनुमितं परन्त्वर्थापत्त्याऽवगतमिति वैपरीत्येनैवानुभवादिति। तदेतमर्थं मनसि निधायाह—**साध्याभावे इति**। **वक्ष्याम इति**। **अन्वयिव्यतिरेकिरूपत्वम्**। अन्वयव्यतिरेकव्याप्तिद्वयमूलकत्वम्। प्रकृतमनुमानं विभजते—**तच्चेति**। पर्वते धूमेन्द्रियसन्निकर्षदशायामुत्पन्नं स्वार्थानुमानम्। अत्र नैयायिकाः—प्रतिज्ञाहेतूदाहरणोपनयनिगमाः पञ्चावयवाः परार्थानुमानेऽपेक्षिताः इति वदन्ति। तत्र साध्यनिर्देशरूपप्रतिज्ञया यो यो धूम-

तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम्। तत्र स्वार्थं तूक्तमेव, परार्थन्तु न्यायसाध्यम्। न्यायो नामावयवसमुदायः। अवयवाश्च त्रय एव प्रसिद्धाः-प्रतिज्ञाहेतूदाहरणरूपाः, उदाहरणोपनयनिगमनरूपा वा, न तु पञ्चावयवरूपाः; अवयवत्रयेण च व्याप्तिपक्षधर्मतयोरुपदर्शनसम्भवेनाधिकावयवद्वयस्य व्यर्थत्वात्।

वान् स सोऽग्निमानित्युदाहरणेन धूमादिति हेतूपन्यासेन च व्याप्तिपक्षधर्मताज्ञानयोरुत्पत्त्याऽनुमितिसंभवान्नोपनयनिगमयोरपेक्षा, अथवोदाहरणोपनयनिगमैरेवोक्तविधयाऽनुमितिसंभवान्न प्रतिज्ञाहेतुवाक्ययोरुपयोग इति शास्त्रदीपिकासूक्तिमनुसृत्याह—**अवयवाश्चेति**॥ ननु अनुमानलक्षणादिनिरूपणस्य वेदान्तग्रन्थेषु क उपयोगः? नच ब्रह्मस्वरूपज्ञाने तस्योपयोग इति—वाच्यम्, "तन्त्वौपनिषदं पृच्छामी" त्यादिना तस्योपनिषदेकसमधिगम्यत्वस्यावगमात्। तदुक्तं भगवत्पादैर्जन्माद्यधिकरणे "वेदान्तकुसुमग्रथनार्थत्वात् सूत्राणाम्" इत्यादि। "श्रोतव्यो मन्तव्य" इति मननशब्दवाच्यस्यापि ब्रह्मस्वरूपनिर्णये वेदान्तवाक्यानां सहकारित्वं निरूपितमिति चेत्, तत्रेदं विचारणीयम्—कुत्र विषयेऽनुमानस्योपयोगः? किम् अद्वितीयस्वरूपज्ञाने, उत केवलस्वरूपज्ञाने, आहो अद्वितीयत्वज्ञाने इति? तत्र न तावत् प्रथमः; "एकमेवाद्वितीयमि" तिश्रुत्यैव तल्लाभेनानुमानवैयर्थ्यात्। **एतेन**—द्वितीयतृतीयकल्पावपि—**परास्तौ**। नचोक्तश्रुतेर्मुख्यासहायपरमात्मपरत्वमेव, नतु सजातीयविजातीयस्वगतभेदरहितस्वरूपमात्रपरत्वमिति मतान्तरानुसारिणां व्याख्यानं किं युक्तम्, उत सजातीयविजातीयस्वगतभेदराहित्यरूपद्वैताभावोपलक्षितस्वरूपमात्रपरत्वमेवेत्यस्मदीयव्याख्यानं युक्तमिति संशये द्वैतमिथ्यात्वतात्पर्यग्राहकतयोपपत्तिपदाभिधेयमनुमानमपेक्षितम्, तदुक्तमद्वैतसिद्धौ—"अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात् द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम्" इति। अत्रोपपादनीयमित्यस्यानुमानेन साधनीयमित्यर्थः। एवंच द्वैतमिथ्यात्वनिर्णयेऽनुमानस्योपयोग इति—वाच्यम्; नहि द्वैतमिथ्यात्वमनुमानेन साधयितुं शक्यम्। तथाहि—किमिदं मिथ्यात्वम्? मिथ्याशब्दोऽपह्नववचनोऽनिर्वचनीयतावचनश्चेति पञ्चपादिकोक्त्याऽपह्नवो यदि

मिथ्यात्वम्, तर्हि शशशृङ्गादिवत्प्रपञ्चस्यालीकत्वापत्तिः, अनिर्वचनीयत्वं मिथ्यात्वमित्यपि न युक्तम्, किमिदमनिर्वचनीयत्वम्? न तावत्सदसद्विलक्षणत्वम्, सद्विलक्षणत्वेऽसद्विलक्षणत्वस्यासद्विलक्षणत्वे सद्विलक्षणत्वस्य चावश्यकत्वेन सदसद्विलक्षणत्वस्यैकस्मिन्नधिकरणे व्याहतत्वात्। नच—शुक्तिरूप्यं प्रातिभासिकं सत् इति प्रतीयमानं वस्तुतः सद्विलक्षणमसद्विलक्षणं चेति सदसद्विलक्षणत्वं नैकत्र व्याहतमिति प्रपञ्चस्यापि सदसद्विलक्षणत्वसंभव इति—वाच्यम्; नेदं रजतम् अत्र रजतं नास्तीति च बाधप्रतीत्यनुसारेण शुक्तौ रजततादात्म्याधिकरणे रजताभावसिद्धेः। रजतस्य सदसद्विलक्षणत्वेऽपि मृत् न घटः मृदि न घट इति बाधप्रतीत्यभावेन प्रपञ्चस्य घटादेर्बाधाभावेनानिर्वचनीयत्वाङ्गीकारायोगात्, एतेन—नेह नानास्ति किञ्चनेति श्रुतिरपि—व्याख्याता; तत्र हि निष्ठापरपर्याये ध्यानेऽविच्छित्तिरिव बोध्यते, नतु ब्रह्मणि प्रपञ्चाभावः, द्वैतवति द्वैताभावो यद्यस्य वाक्यस्यार्थः स्यात्, तर्हि घटवति भूतले घटाभावज्ञानमिवेदमपि ज्ञानमात्राहार्यमेव स्यात्, नच तेन वस्तुसिद्धिः। अत एव हि घटादिभिरुदकाहरणादिकमुपपद्यते, नहि अनिर्वचनीयेन रजतेनाभरणादिकं निर्मातुं पारयामः। एवंच सन् घट इति घटादिसत्त्वप्रत्यक्षमपि समर्थितं भवति, नहि प्रत्यक्षविरुद्धं मिथ्यात्वानुमानं हुतवहानुष्णत्वानुमानवदात्मानं लभते। एवंच ब्रह्मभिन्नं विमतं सत्यं प्रातिभासिकत्वानधिकरणत्वे सति असत्त्वानधिकरणत्वात्, अनिषेध्यत्वेन प्रमां प्रति साक्षाद्विषयत्वात्, सप्रकारकज्ञानाबाध्यार्थक्रियाकारित्वात्, अनारोपितमिथ्यात्वकत्वात्, कल्पकरहितत्वादिति प्रत्यक्षानुगृहीतप्रपञ्चसत्त्वानुमानमेवार्थसाधकमित्युक्तानुमानसत्प्रतिपक्षितं प्रपञ्चमिथ्यात्वानुमानं न युक्तिसहम्। किंच—प्रपञ्चमिथ्यात्वानुमाने किं पक्षतावच्छेदकं विवक्षितम्, यदि सर्वत्वं तर्हि ब्रह्मणि बाधः, यदि ब्रह्मभिन्नत्वम्, तर्हि अलीके बाधः, यदि ब्रह्मभिन्नत्वे सति सत्त्वम्, तथापि आश्रयभेदेन मिथ्यात्वस्यापि भेदात् पक्षतावच्छेदकसामानाधिकरण्येनैव साध्यसिद्धेरुद्देश्यत्वस्य विवक्षणीयत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेति प्राचीनतार्किकमते शुक्तिरूप्ये सिद्धसाधनम्। अतएव हि—शब्दोऽनित्यः कार्यत्वादित्यनुमाने ध्वन्यात्मकशब्दमादाय सिद्धसाधनतावारणार्थं वर्णात्मकत्वं विशेषणं दत्तम्। अतस्तदर्थं ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वे सति ब्रह्मभिन्नं पक्ष इति विवक्षणीयम्,

**एवमनुमाने निरूपिते तस्मात् ब्रह्मभिन्ननिखिलप्रपञ्चस्य मिथ्यात्वसिद्धिः ।**

एवमपि हि न निर्दुष्टं पक्षतावच्छेदकं सिद्धं भवति ; ब्रह्मप्रमाऽव्यवहितपूर्व-प्रातिभासिकमादाय सिद्धसाधनताप्रसङ्गात्। एतेन—हेतुरपि—व्याख्यातः ; तथाहि—दृश्यत्वं न हेतुः ; तद्धि वृत्तिविषयत्वं वा फलचैतन्यतादात्म्यं वा, आद्येऽपि वृत्तिपदेन विकल्पसाधारणज्ञानविवक्षायामलीके व्यभिचारः, तद्व्यावृत्तवृत्तिविवक्षायामपि वेदान्तजन्यवृत्तिविषये ब्रह्मणि व्यभिचारः, शब्दाजन्यवृत्तिविषयत्वविवक्षायां तु धर्माधर्मयोः शब्दमात्रजन्यवृत्तिविषययोर्भागासिद्धिः, एतेन—शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम्, अन्यथा शशविषाणं तुच्छमिति शब्दजन्यवृत्तिविषये तुच्छे व्यभिचारस्य दुरुद्धरत्वात्। एवंच सति—शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वेऽपि न तत्र व्यभिचारः, तुच्छशुद्धयोः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमादित्यद्वैतसिद्धिः—परास्ता, उक्तदोषात्। वृत्तिप्रतिफलितचैतन्यरूपफलविषयत्वं तु अतीन्द्रिये भागासिद्धिग्रस्तम्। एतेन—कार्यत्वपरिच्छिन्नत्वे अपि न हेतू इति—सूचितम् ; कार्यत्वस्याकाशादौ विप्रतिपन्नत्वात्, विभक्तत्वस्य तुच्छब्रह्मसाधारण्याच्च।

तदुक्तं न्यायामृते—

"न धर्मादौ फलव्याप्तिः, वृत्तिव्याप्यत्वमात्मनि ।
अज्ञातत्वादिरूपेण विद्येयत्वं तु चित्यपि ॥" इत्यादि ।

एवंचादुष्टस्य पक्षतावच्छेदकस्य साध्यस्य हेतोर्वा कस्याप्यसंभवात् प्रपञ्चमिथ्यात्वानुमानं न संभवतीति प्रपञ्चमिथ्यात्वनिर्णयेनाप्यनुमानस्य वेदान्तिनां मते साफल्याभावादनुमानलक्षणादिनिरूपणं वितथमित्यत आह—**एवमनुमाने इति**। **अयं भावः**—अद्वैतिनां मतेऽपि प्रपञ्चमिथ्यात्वनिर्णयार्थमनुमान-प्रमाणमपेक्षितमेव। श्रुतिरेव यद्यप्यद्वैतिनां मुख्यं प्रमाणम् ; तथापि तत्तात्पर्यनिर्णायकतयोपपत्तिपदाभिधेयमनुमानमपि सार्थकम्। तदुक्तम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥" इति ।

अतएव द्वितीयमिथ्यात्वोपक्रमे—"नेह नानास्ती"ति श्रुत्यर्थे विवदमानं प्रति साध्यान्तरमाहे"ति लघुचन्द्रिकायामवतारितम्। मिथ्यात्वं चात्र सदसद्वि-

लक्षणत्वम्, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्, ज्ञाननिवर्त्यत्वम्, स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं सद्विविक्तत्वं वा। शुक्तिरूप्यस्थलेऽपि यस्य भ्रान्तस्य शुक्तिरूप्यपरीक्षार्थं प्रवृत्तिः प्रवृत्त्यनन्तरमपि विपरीतभावनाद्यभावेन शुक्तिरेवेयं न रजतमिति साक्षात्कारो जायते, तस्यैव नात्र रजतमिति बाधबुद्धिरुपजायते, नत्वपरीक्षमाणस्यापि भ्रान्तस्य। अनुभवसिद्धमिदमस्माकं रज्जुसर्पभ्रमेण भीतभीतस्य ज्वरादिपीडितस्य च पुरुषस्य सहस्रशोऽपि गुरुभिः पित्रादिभिर्वाऽऽप्तैः परीक्षकैरपि नायं सर्पः रज्जुरेवेति बोधितस्यापि स्वानुद्वेगार्थमेवेदं वाक्यजातमिति विपरीतभावनावतो विना परीक्षां युगशतेनाऽपि नायं सर्पः इति ज्ञानं नोदेतीति। एवंच—एकस्य परीक्षकस्य साक्षात्कारोऽन्यस्यातादृशस्य तदभावश्चेति वस्तुस्थितौ शुक्तिरूप्यादिमिथ्यात्वमेव परमार्थमिति यथाङ्गीक्रियते, एवं "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादि वाक्येषु विश्वासेन "नेह नानास्ती"त्यादिवाक्योक्तप्रकारेणात्मतत्त्वं परीक्षमाणस्य पुरुषस्य मनननिदिध्यासनदूरीकृतासंभावनाविपरीतभावनादिदोषजातस्य प्राप्तात्मसाक्षात्कारस्य नियतमेव 'नेह प्रपञ्च' इति बाधबुद्धिर्भविष्यतीति व्यवहार दशायां बाधज्ञानाभावमात्रेण प्रपञ्चस्य सदसद्विलक्षणत्वाभावो न निर्णेतुं शक्यत इति सदसद्विलक्षणत्वरूपं प्रपञ्चमिथ्यात्वमेव वस्तुसत्। एवंच "नेह नानास्ति किंचने" ति श्रुतिरपि प्रपञ्चमिथ्यात्वाभिप्रायेव योजनीया। यथा चात्र द्वैतवति द्वैताभावबोधेऽपि नाद्वार्यत्वं तथा पूर्वमेव निरूपितम्। स्वाप्निकानां कामिन्यादिपदार्थानामप्यर्थक्रियाकारित्वदर्शनात् मिथ्याभूतस्यापि प्रपञ्चस्यार्थक्रियाकारित्वं न विरुद्धम्। यथाचात्र सन् घट इति प्रत्यक्षबाधो नावतरति, तथाऽनुपदमेव मूल एव निरूपयिष्यते। एवंच प्रपञ्चमिथ्यात्वानुमाने न प्रत्यक्षबाधावकाशः, नवाऽर्थक्रियाकारित्वादिहेतुकसत्प्रतिपक्षावकाशः॥ विस्तृतं चेतत् सर्वमद्वैतसिद्धौ तत्तत्प्रकरण इति तत एव द्रष्टव्यम्। सदसद्विलक्षणत्वादिमिथ्यात्वानां सर्वेषामपि "प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमेवोपजीव्यमिति ग्रन्थकृता तदेवात्रोपक्षिप्तमिति न न्यूनतादिदोषः। तथाच प्रपञ्चमिथ्यात्वनिर्वचनादिसंभवात् प्रपञ्चमिथ्यात्वानुमानं यथार्थमेव। न चानुगतपक्षतावच्छेदकाभावः; ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वे सति चिद्भिन्नत्वस्य तत्त्वसंभवात्। ब्रह्मप्रमातिरिक्ताबाध्यत्वपदेन च पक्षयाज्ञानतत्कार्यान्यतरभिन्नत्वमेव विवक्ष्यत इति

गुरुचन्द्रिकायां निरूपितमिति न ब्रह्मप्रमाव्यवहितपूर्वप्रातिभासिके सिद्धसाधनम्। यदि तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे पक्षैकदेशे सिद्धसाधनं न दोषायेति नवीनतार्किकमतमालोच्यते, तदा ब्रह्मभिन्नत्वे सति सत्त्वेन प्रतीत्यर्हत्वमेव पक्षतावच्छेदकं विवक्षितमिति न दोषः। इदंच सामान्यानुमान-विवक्षाभिप्रायेण। यदि तु विशेषानुमानं विवक्ष्यते, तदा घटत्वपटत्वादिकमेव पक्षतावच्छेदकमिति न सिद्धसाधनादिप्रसङ्गः। **ननु**—मिथ्यात्वसाधकमनुमानं कीदृशमत्र विवक्षितम्, नच ब्रह्मभिन्नं सर्वं मिथ्या इति सामान्यतोनुमानमेव विवक्षितम्, धर्माभेदेऽपि धर्मिणां भेदेन युगपत्सर्वव्यक्तीनां बुद्धावनारोहात्, नापि विशेषानुमानं पृथिवी मिथ्या घटो मिथ्येत्यादिरूपेण विवक्षितम्; विशेषानुमानविवक्षायां शुक्तिरूप्यदृष्टान्तत्वासंभवेन यथा शुक्तिरूप्यमिति दृष्टान्तस्यानुपपत्तेः; तथाहि—मिथ्यात्वं हि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्, तच्च यस्मिन्नधिकरणे येन सम्बन्धेन येन रूपेण यद् वर्तते तस्मिन्नधिकरणे तेन रूपेण तस्य योऽभावस्तत्प्रतियोगित्वरूपं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वपर्यवसितमिति स्वत्वघटितम्। एवंच पृथिव्यादीनां स्वपदेन ग्रहणे शुक्तिरूप्यादेरपि स्वपदेन ग्रहणासंभवान्न दृष्टान्तसिद्धिः। नच—पृथिवीपक्षकानुमाने प्रातिभासिकपृथिवी व्यवहारिकरजतपक्षकानुमा शुक्तिरूप्यं दृष्टान्त इति विवक्षितम्, स्वपदेन हि रजतत्वविशिष्टमेव विवक्षितमिति रजतत्वविशिष्टाधिकरणे शुक्तौ रूप्याभावस्य सिद्धत्वात् दृष्टान्तसिद्धिः, व्यावहारिक रजतस्यापि रजतत्वविशिष्टत्वात् स्वपदेनोपादानमिति न दोष इति—वाच्यम्। सत्यं रजतत्वविशिष्टाधिकरणे शुक्तौ रजताभावः सिद्धः, तथापि मिथ्यात्वे स्वाधिकरणयावन्निष्ठात्यन्ताभावप्रतियोगित्वरूपे यावत्त्वस्य निवेशेन रजतत्व-विशिष्टाधिकरणे सर्वत्र रजतत्वावच्छिन्नाभावोऽनुमानात् पूर्वं सम्पादनीयः। न न चैतत् संभवति। रजतत्वविशिष्टाधिकरणे शुक्तौ रजताभावसिद्धावपि तादृशे रजतावयवेऽनुमानात् पूर्वं रजतत्वावच्छिन्नाभावासिद्धेः। एवंच विशेषानुमानमपि दृष्टान्तासिद्ध्या नात्र विवक्षितुं शक्यते। नच—त्रैकालिकनिषेधो नात्र स्वरूपेण विवक्षितः, किन्तु पारमार्थिकत्वेनैव, प्रत्यक्षपरिच्छेदे उत्तरत्र च पारमार्थिक-त्वावच्छिन्नप्रतियोगिताकाभावरूपत्वस्यैव वर्णनात्, एवंच विशेषानुमानविवक्षायां दृष्टान्तसिद्धिरपि नानुपपन्नाः; रजतत्वविशिष्टाधिकरणे सर्वत्र पारमार्थिकत्वेन

तथा हि—ब्रह्मभिन्नं सर्वं मिथ्या, ब्रह्मभिन्नत्वात्, यदेवं तदेवम्; यथा शुक्तिरूप्यम् । न च दृष्टान्तासिद्धिः; तस्य साधितत्वात् ।

रजताभावसिद्धेरिति—वाच्यम्; नहि विशेषानुमानस्यैवात्र विवक्षितत्वे ब्रह्मभिन्नं सर्वमिति पक्षनिर्देशोपपत्तिः । तथा चानुमानप्रमाणनिरूपणमिदं व्यर्थमित्यत आह—**तथाहीति** ॥ **ब्रह्मभिन्नं सर्वमिति** । अयं भावः—सामान्यानुमानं विशेषानुमानमुभयमपि मिथ्यात्वसाधकमेव । ब्रह्मभिन्नत्वं स्वविशिष्टात्यन्ताभावप्रतियोगिवृत्ति, दृश्यवृत्तित्वात्, शुक्तिरूप्यत्ववत्, इति सामान्यानुमानप्रयोगः, व्यावहारिकप्रातीतिकसाधारणघटत्वविशिष्टो घटो मिथ्या, दृश्यत्वात्, इति विशेषानुमानप्रयोगः । आद्ये शुक्तिरूप्यं दृष्टान्तः, द्वितीयेतु घटत्वेन पटो नास्तीति प्रतीतिसिद्धाभावप्रतियोगी पटो दृष्टान्तः । स्वत्वमनुगतमिति पक्षेण सामान्यानुमानम्, तदननुगतमिति पक्षेण विशेषानुमानम् । तदुक्तं लघुचन्द्रिकादौ—"विशेषानुमाने तु रजतत्वेन घटो नास्तीति प्रतीतिसिद्धाभावप्रतियोगी घटो दृष्टान्तः, सामान्यानुमानेतु शुक्तिरूप्यादिकं मूलोक्तमेव दृष्टान्तः । परिभाषाकृतां तु यथा शुक्तिरूप्यमिति दृष्टान्तानुसारात् ब्रह्मभिन्नमिति सामान्यतः पक्षनिर्देशाच्च सामान्यानुमानमेवात्र विवक्षितमिति न दोषः । सामान्यानुमाने मिथ्यात्वघटकाभावप्रतियोगितायामपि स्वावच्छिन्नत्वमेव विवक्षितमिति न दृष्टान्तासिद्धिरिति । व्यक्तं चाधिकं विट्ठलेशोपाध्यायादाविति तत एव द्रष्टव्यम् । ननु—अत्र स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वघटकेन धीपदेन भ्रमविवक्षायां सिद्धसाधनम्, प्रमाविवक्षायां सिद्धान्ते कपालादेरपि घटादिभ्रमं प्रत्येव विशेष्यतयाऽसंभवापत्तिरिति अभिमतपदेन स्वाश्रयत्वप्रकारकप्रमाविषयत्वेन पराभिमतमित्यर्थो विवक्षित इति विट्ठलेशोये व्यक्तम् । एवंच शुक्तिरूप्ये स्वाश्रयत्वप्रकारकपराभिमतप्रमाविषयाप्रसिद्ध्या दृष्टान्तासिद्धिः, शुक्तिः रजतप्रकारकप्रमाविशेष्यमिति परेषामपि न संमतम्, इत्याशयेन शङ्कते—**नच दृष्टान्तासिद्धिरिति** । **तस्य साधितत्वादिति** । प्रमाविषयत्वेन पराभिमतमिति विट्ठलोपाध्यायविवरणपक्षाभिप्रायेण, वस्तुगत्या तु धीसामान्यमेव

न चाप्रयोजकत्वम् ; शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात् ।

विवक्षितम् । तदुक्तं विट्ठलेशीये—धीविषयत्वं तु यथाश्रुतमेवेति । नच प्रत्यक्ष-परिच्छेदे—शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वपक्षे शुक्तिज्ञानेन तदज्ञानेन सह बाध इति ग्रन्थेन परिभाषायां ज्ञाननिवर्त्यानां शुक्तिरूप्यादीनां शुक्त्यादौ पारमार्थिकत्वेन त्रैकालिकनिषेध एव साधितः; प्रकृते स्वरूपेण त्रैकालिक-निषेधरूपमेव मिथ्यात्वं घटादीनां साध्यते इति न दृष्टान्तस्य पूर्वं साधनम् । यथाचात्र स्वरूपेण त्रैकालिकनिषेध एव मूलकृतामभिनिवेशस्तथाऽनुपदमेव स्फुटी भविष्यति ; एवंच तस्य साधितत्वादिति कथमुक्तमिति—वाच्यम् ; प्रकृत-ग्रन्थोपपत्त्यर्थं हि ज्ञाननिवर्त्यत्वेन स्वरूपतो निषेधपक्षस्यापि पूर्वं सूचितत्व-कल्पनेनादोषात् । नन्वेवमपि ब्रह्मभिन्नत्वमस्तु मिथ्यात्वं मास्तु इत्यप्रयोजकत्वशङ्काकलङ्कितत्वादुक्तानुमानं न साधकमित्याशयेन शङ्कते—नचाप्रयोजकत्वमिति । शुक्तिरूप्यादिकं मिथ्येति साधितम्, तत्रच किं पक्षवाज्ञानकार्यत्वं प्रयोजकम् उतागन्तुकदोषकरणकत्वं प्रयोजकमाहो ब्रह्मभिन्नत्वं प्रयोजकमिति संशये ब्रह्मभिन्नत्वमेव प्रयोजकमित्येव निर्णीयते, "अतोऽन्यदार्त-मि"ति श्रुतिर्हि ब्रह्मभिन्नोद्देशेन मिथ्यात्वं बोधयन्ती धनवान् सुखीत्यादा-विवोद्देश्यतावच्छेदकब्रह्मभिन्नत्वप्रयुक्तमार्तत्वापरपर्यायं मिथ्यात्वमिति गमयति । उक्तश्रुत्युपपत्त्यर्थं च व्यावहारिके ब्रह्मभिन्नत्वं बाधप्रत्यक्षोपपत्त्यर्थं शुक्तिरूप्यादौ प्रातिभासिकत्वं प्रयोजकमिति कल्पनायां गौरवात् लाघवेन ब्रह्मभिन्नत्वं सर्व-मिथ्यात्वप्रयोजकमिति कल्पनैव साधीयसी । इत्थं चातोऽन्यदार्तमिति श्रुतिबाध एवात्र विपक्षे बाधकस्तर्क इति नाप्रयोजकशङ्का । तदुक्तं—व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मत इति । मिथ्यात्वस्वरूपं निर्वक्ति—स्वाश्रयेति ॥

स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति भावः ;

**मिथ्यात्वञ्च स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम् । अभिमतपदमसम्भववारणाय ।**

यावत्पदस्य व्यापकत्वार्थकत्वात् । **ननु**—मिथ्यात्वलक्षणेऽभिमतपदं किमर्थम्, नच—यदि स्वाश्रयत्वं न तर्हि तत्र तदभावः, यदि तदभावस्तर्हि न स्वाश्रयत्वम्, इति व्याघातवारणार्थं तदिति—वाच्यम्; अत्यन्ताभावो हि पारमार्थिकः व्यावहारिको वा इति पक्षद्वयं विद्यते, तत्र प्रथमपक्षे प्रतियोगिनो व्यावहारिकत्वमत्यन्ताभावस्य पारमार्थिकत्वमिति भिन्नसत्ताकत्वेनोभयाविरोधः, द्वितीयकल्पे तु भावाभावयोर्विरोधस्यैवानङ्गीकारेणोभयाविरोध इति व्याघाताभाव इत्यत आह—**अभिमतपदमिति ॥ असंभववारणायेति ॥** यद्यपि वेदान्तिनां मते न व्याघातः; तथापि परमतरीत्या तस्य प्रसङ्गात् तद्वारणार्थं अभिमतपदम् । यद्यपि पारमार्थिकत्वेन त्रैकालिकनिषेधः शुक्तिरूप्ये परेषामपि संमतः, तथापि शुक्तिरूप्यस्यापि परमते शुक्तिर्नाश्रयः, अन्यथाख्यातिस्वीकारादिति भावः । वस्तुतस्तु—अन्यथाख्यात्यादिनिरासेनानिर्वचनीयख्यातिः सिद्धान्तितत्वात् शुक्तिरूप्याश्रयत्वस्य शुक्तौ साधनात् अभिमतपदाभावेऽपि दृष्टान्तसिद्धिर्भवत्येवेति तद्दृष्टान्तेनासंभूतस्यापि व्याहतस्यापि स्वसमानाधिकरणात्यन्ताभावस्य व्यावहारिके पक्षे साधनसंभवात् अभिमतपदाभावेऽपि न क्षतिः । शुक्तिरूप्यमिथ्यात्वसाधनानन्तरमेवोक्तानुमानस्य प्रयोगेण तदनिर्वचनीयत्वेन शुक्तेरपि रजताश्रयत्वात् ।

**ननु**—मिथ्यात्वलक्षणे यावत्पदं व्यर्थम्, नच—रजताश्रयत्वेनाभिमते शुक्त्यादौ रजताभावसिद्धिमादायार्थान्तरं स्यात्, तद्वारणार्थं तदिति—वाच्यम्; स्वपदेन व्यावहारिकप्रातिभासिकसाधारणरजतत्वमादायोभयविधरजतविवक्षायामपि पूर्वोक्तरीत्या पक्षसमन्वयावसरे व्यावहारिकरजतस्यैव विवक्षणीयतया तदाश्रयत्वस्य रजतावयव एव विद्यमानत्वेन तत्र रजताभावस्यानुमानात्पूर्वमसिद्धत्वात् सिद्धसाधनाप्रसङ्गात् । तदुक्तं विट्ठलेशीये—"व्यावहारिकरजतस्य स्वपदेनोपादाने तत्सम्बन्धितया ज्ञाते रजतावयवे विद्यमानाभावप्रतियोगितायास्तत्रासिद्धतया सिद्धसाधनाभावेने"त्यादि । एवंच यावत्पदं व्यर्थमिति—**चेत्** ।

अत्र शिखामणिप्रभाकाराः—**ननु**—तथापि लक्षणे यावत्पदं व्यर्थमित्यत

आह मूले—यावदिति । तथाच लक्षणे यावत्पदाभावेऽपि कपिसंयोगाश्रयत्वे-
नाभिमते वृक्षे मूलावच्छेदेन वर्तमानात्यन्ताभावप्रतियोगित्वं शाखावच्छेदेन
स्थितकपिसंयोगादेरस्तीति सत्यत्वाविरोधिमिथ्यात्वसिद्ध्याऽर्थान्तरमिति—
वदन्ति । अस्मिंश्च व्याख्याने यावत्पदेन समग्रं वस्तु विवक्षितमित्याशुबोधिन्यां
मणिप्रभायां च व्यक्तम्, आशुबोधिनीकाराणामपीदमेव संमतम्, तदिदं
न युक्तम्, तथाहि—कपिसंयोगस्य वेदान्तिनां मतेऽव्याप्यवृत्तित्वानङ्गीकारेण
वृक्षाग्रभागस्यैव कपिसंयोगाश्रयत्वात् वृक्षस्य तदनाश्रयत्वात् न कपिसंयोगि
उक्तरूपं मिथ्यात्वं सिद्धम् । तदव्याप्यवृत्तित्वाङ्गीकारेऽपि स्वाश्रयत्वेनाभिमत-
पदेन येन सम्बन्धेन येन चावच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र
भवितुमर्हति, तद्विषयत्वस्यैव विवक्षणान्न कपिसंयोगि सिद्धसाधनप्रसङ्गः ।
तदुक्तमद्वैतसिद्धौ—"येन सम्बन्धेन यद्यस्याधिकरणं तेन सम्बन्धेन तन्निष्ठात्यन्ता-
भावप्रतियोगित्वमिति विवक्षायां अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति
चेन्न ; येन रूपेण यदधिकरणतया यत्प्रतिपन्नं तेन रूपेण तन्निष्ठाभाव-
प्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात् । तच्च रूपं संबन्धविशेषोऽवच्छेदक-
विशेषश्च । तथा च येन सम्बन्धविशेषेण येन चावच्छेदकविशेषेण यदधिकरणता-
प्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदकविशेषेण
तदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्ध-
साधनम्" इति । अतो यावत्पदसार्थक्यमन्यथैवोपपादनीयम्, तच्च अभिमत-
पदेन धीविषयत्वस्य विवक्षितत्वात् भ्रमात्मकप्रतीतिविशेष्ये शुक्त्यादौ रजताभाव-
सिद्धिमादाय प्रसक्तार्थान्तरवारणमेव, एतेषां तु "प्रतीतिनिवेशे यावत्त्वमधि-
करणे निवेश्यम्, अन्यथोक्ताधिकरणतायां तच्छून्येऽपि प्रतीतिसंभवेन सिद्ध-
साधनतापत्तेरि"ति लघुचन्द्रिकाग्रन्थोऽनुकूलः । अनिर्वचनीयख्यातिवादिनामस्माकं
मते स्वं व्यावहारिकरजतादि पक्षः, तदाश्रयत्वप्रकारकभ्रमविषयाप्रसिद्धिः,
तथापि लघुचन्द्रिकायां पक्षतावच्छेदकविचारप्रघट्टके—रजततादात्म्येन
प्रतीयमानं यच्छुक्त्यादिकं तन्निष्ठाभावीयं यद्रजतत्वतादात्म्यसम्बन्धावच्छिन्न-
प्रतियोगित्वं तस्य प्रातीतिक इव व्यावहारिकेऽपि रजते सत्त्वात् तत्र सिद्धसाधन-
वारणाय सर्वत्रेत्युक्तम् । तस्य चायमाशयः—स्वं रजतत्वादिविशिष्टपरं, तद-
धिकरणताप्रतीतिश्च रजतावयवे शुक्तौ उभयत्र विद्यते, तत्र शुक्तौ रजतत्व-

**यावत्पदमर्थान्तरवारणाय।**

विशिष्टाभावस्य सिद्धा सिद्धसाधनं स्यात्, यावत्पदे तु रजतावयवे तदभावाप्रसिद्‌ध्याऽनुमानसार्थक्यमिति। वस्तुतस्तु—अन्यथा तेषामन्यत्र सत्त्वापातादित्यद्वैतसिद्धिवाक्यं लघुचन्द्रिकायाम्—"अन्यथोक्तमिथ्यात्वे सर्वत्र पदानिवेशे अन्यत्र प्रतिपन्नोपाध्यन्तरे सत्त्वापातात् सत्त्वमादायार्थान्तरापातात्, किंचित्प्रतिपन्नोपाधिमात्रनिष्ठाव्याप्यवृत्त्यभावप्रतियोगित्वमादाय सिद्धसाधनापाताच्चेति" व्याख्यातम्। सिद्धसाधनापाताच्चेति वाक्यस्य च विट्ठलेशीये—"व्यावहारिकरजतरूपे धर्मिणि प्रतिपन्नोपाध्यन्तरे सत्त्वाविरोधिनः शुक्तिरूप्ययत्किंचित् धर्मिनिष्ठाभावप्रतियोगित्वस्य साधनसंभवे व्यावहारिकरजते तदवयवरूपधर्मिणि मिथ्यात्वसिद्धेरुद्देश्याया असिद्धिप्रसङ्गादित्याशयो वर्णितः। एवंच सिद्धसाधनार्थान्तरयोरुभयोरपि यावत्पदाभावे प्रसङ्गात् यावत्पदमर्थान्तरवारणायेति ग्रन्थोऽवयुत्यानुवाद इति बोध्यम्। यदि तु यावन्तः स्वाश्रयाः तन्निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति विवक्ष्यते, तर्हि एतद्रूपादिपक्षकानुमानेषु साध्याप्रसिद्धिः स्यात्, एकव्यक्तिपक्षस्थले यावन्तः स्वाश्रया इत्यस्यांशस्यासंभवात्। स्पष्टाचेयं रीतिः गादाधर्यां साकल्यलक्षणे। यदि तु धीभेदेन विशेष्यतायाः तदाश्रयव्यक्तेश्च भेदो विवक्ष्यते, तर्हि स्वाश्रयत्वेनाभिमतानि यावन्ति तन्निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति विवक्षायामपि न दोषः। यावत्पदेन व्यापकत्वाविवक्षायां प्रत्येकरूपेण सर्वेषाम् अनेकेषाम् आश्रयाणां बोधः, अन्यथा तु नेत्यपि गादाधर्यां साकल्यलक्षण एव व्यक्तम्। सर्वथातु यावत्पदनिवेशस्यावश्यकत्वात् स्वाश्रयत्वेनाभिमतेति लक्षणे यावत्पदं लघुचन्द्रिकोक्तरीत्या सिद्धसाधनवारणार्थमेव युक्तम् तमिममर्थं मनसि निधायाह **यावत्पदमर्थान्तरवारणायेति।** अर्थान्तरवारणाय सिद्धसाधनवारणायेत्यर्थः। अर्थान्तरपदं हि सिद्धसाधनाभिप्रायेणापि प्रयुज्यते, अत एव—"नच—प्रयोजनाभावः, घटादेः पारमार्थिकत्वेऽपि पारमार्थिकत्वेन शुक्तिरूप्यघटोभयाभावप्रतियोगित्वस्य घटादौ सिद्धिमादाय यदर्थान्तरं तद्वारणार्थं प्रयोजनस्य सत्त्वादि"ति लघुचन्द्रिकायां सिद्धसाधनेऽर्थान्तरपदप्रयोग उपपद्यते। तदुक्तं विट्ठलेशीये—"नचैवं सिद्धसाधनमित्येव वक्तुं शक्यमिति—वाच्यम्;

तदुक्तम्—

"सर्वेषामेव भावानां स्वाश्रयत्वेन सम्मते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता" इति।

यद्वा अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, पटत्वात्, पटान्तरवत्, इत्याद्यनुमानं मिथ्यात्वे प्रमाणम्। तदुक्तम्—

सिद्धसाधनस्याप्य जिज्ञासितार्थाभिधानरूपतयाऽर्थान्तरपदव्यपदेशात्। एवमग्रेऽपी"ति॥ यथा पञ्चपाद्युक्तत्वात् सदसद्विलक्षणत्वं मिथ्यात्वम् एवं चित्सुखाचार्योक्तत्वादिदमपि मिथ्यात्वमादरणीयमेवेति सूचयति—तदुक्तमिति। चित्सुखाचार्यैरिति शेषः। ननु ब्रह्मभिन्नं सर्वं यदि मिथ्या, तर्हि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुरि"त्यादिनाऽऽकाशादेः श्रुतावुत्पत्तिराम्नायमाना नोपपद्यते, न हि मिथ्याभूतानां श्रुतिष्वाम्नानमुपपद्यत इत्याशङ्कां सृष्टिवाक्यानामपि प्रपञ्चकार्यत्वबोधनद्वारा तन्मिथ्यात्वबोधन एव तात्पर्यमिति सूचनेन परिहरन् कार्यत्वहेतुकमनुमानान्तरमपि मिथ्यात्वे मानमाह—यद्वा अयं पटः इति॥ एतत्तन्तुनिष्ठेति। स्वोपादाननिष्ठेत्यर्थः। अयं पटः स्वोपादाननिष्ठात्यन्ताभावप्रतियोगी, कार्यत्वात्, कार्यान्तरवत्, इत्यनुमानप्रयोगतात्पर्यम्। तदुक्तम् अद्वैतसिद्धौ "तन्तुपदम् उपादानपरमिति। एवं च पटे तन्त्वव्च्छिन्नचिदेवोपादानमिति मते सिद्धसाधनस्य न प्रसङ्ग इत्यादि लघुचन्द्रिकायां व्यक्तम्। यथाच तन्तुनिष्ठात्यन्ताभावप्रतियोगिनोऽपि पटस्य तन्निष्ठप्रागभावप्रतियोगित्वमात्रेण तत्समवेतत्वं तथाऽद्वैतसिद्ध्यादौ विस्तृतम्। एवंचायं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न एतत्समवेतत्वात्, व्यतिरेके पटान्तरवत्, इति सत्प्रतिपक्षानुमानस्यापि नात्रावसरः। एतन्निष्ठप्रागभावप्रतियोगित्वमात्रेणैतत्समवेतत्वसिध्याऽप्रयोजकत्वात्। उक्तानुमाने चित्सुखाचार्यसंमतिमाह—तदुक्तमिति। अंशिन इति। अत्रैवं योजना—इतरांशीव इतरांशिन इव। अंशित्वात् कार्यत्वात्, स्वांशगात्यन्ताभावस्य प्रतियोगिनः स्वोपादाननिष्ठात्यन्ताभावनिरूपितप्रतियोगिताशालिनः मिथ्यात्वे या दिक् इति शेषः। एषैव दिक् गुणादिषु मन्तव्येति। इतरांशीवेति तु प्रथमान्तेन समास

अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिता । अंशित्वादितरांशीव दिगेषैव गुणादिषु ॥ इति ।

न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षबाधः; अधिष्टानब्रह्मसत्तायोस्तत्र विषयतया घटादेः सत्यत्वासिद्धेः ।

इति पक्षेण इवेन समासो विभक्त्यलोपश्चेति विहितनित्यसमासः हरीतकीं भुङ्क्ष्वराजन् मातेव हितकारिणीम् इत्यत्र मातेवपदमिव साधु ।

**ननु**—घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षबाधः, अत्र हि प्रत्यक्षे घटादेः सत्त्वं भासते, तच्च सत्त्वं सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वाभाव एवेति प्रत्यक्षबाधितत्वादुक्तानुमानं प्रथममिथ्यात्वे न मानम्, नच—सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वात् न तदभावरूपं सत्त्वं प्रत्यक्षे भासते, किन्तु सत्ताजात्यादिरूपम् अर्थक्रियाकारित्वम्, सद्रूपब्रह्मतादात्म्यं वा तत्र भासत इति तस्य मिथ्यात्वाविरोधितेति—वाच्यम्; योग्यप्रतियोगिक एवाभावो योग्य इत्यङ्गीकारे घटे मनस्त्वाभावप्रत्यक्षानुपपत्त्या सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वाभावस्यैव सत्त्वरूपत्वात्, नहि सत्तासामान्यं जातिः; अभावः सन्निति प्रत्ययासाधारणत्वात्, एतेन—ब्रह्मतादात्म्यमेव सन् घट इत्यत्र भासत इति—प्रत्युक्तम्; ब्रह्मणो नीरूपस्य चक्षुरयोग्यत्वादित्याशयेन शङ्कते—**नच घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षबाध इति** ॥ सन् घट इति प्रत्यक्षे सर्वदेशीयत्रैकालिकनिषेधाप्रतियोगित्वरूपं सत्त्वं न भासते, स्वप्रतियोग्युपलम्भापादिकतायोग्यप्रतियोगिकाभावः प्रत्यक्षः, घटे हि मनस्त्वरूपेण मनस्त्वाभावो न प्रत्यक्षः, तथा च सर्वदेशादिघटितं सत्त्वं न सन् घट इत्यत्र भाति, अतएव हि शुक्तिरूप्यं सदिति प्रतीतिरुपपद्यते । अतः सद्रूपब्रह्मतादात्म्यमेव तत्र भासते, तच्च न मिथ्यात्वविरोधीत्याशयेन समाधत्ते—**अधिष्ठानेति** ॥ कथमाक्षेपे । **चाक्षुषेति** । चाक्षुषप्रत्यक्षेत्यर्थः । अत्र चाक्षुषादीत्यादिपदमधिकम् । नहि रूपवत्त्वं चाक्षुषप्रत्यक्ष

न च—नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति—वाच्यम्; नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात्।

न च नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वमिति नियमः, मन्मते ब्रह्मणो द्रव्यत्वासिद्धेः, गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतम्। न हि निर्गुणस्य ब्रह्मणो गुणाश्रयता, नापि समवायिकारणता; समवायासिद्धेः।

अस्तु वा द्रव्यत्वं ब्रह्मणः, तथापि नीरूपस्य कालस्येव चाक्षुषादिज्ञानविषयत्वेऽपि न विरोधः।

प्रयोजकम्; रूपस्य नीरूपस्यापि चाक्षुषत्वात्, अतो नीरूपस्यापि ब्रह्मणः चाक्षुषत्वोपपत्तिरित्याह—**नीरूपस्यापीति**। यदि द्रव्यचाक्षुषतायामिव रूपं निमित्तम्, तर्हि ब्रह्मणोऽस्मन्मते निर्गुणस्य निष्क्रियस्य समवायिकारणताशून्यस्य च न द्रव्यत्वमिति तत्प्रत्यक्षमपि रूपप्रत्यक्षमिव नानुपपन्नमित्याह—**मन्मते इत्यादिना**।

**ननु**—वस्तुतो द्रव्यत्वस्य ब्रह्मण्यभावेऽपि कल्पितस्य तस्य तत्र सत्त्वात् नीरूपस्य ब्रह्मणो द्रव्यस्य चाक्षुषत्वं न संभवति; न च—कल्पितद्रव्यत्वस्य गुणादावपि सत्त्वात् द्रव्यगुणविभागोऽकल्पितद्रव्यत्वमादायैव वक्तव्यः। एवंच ब्रह्म न द्रव्यमिति—वाच्यम्; व्यवहारकालाबाध्यत्वरूपव्यावहारिकसम्बन्धेन द्रव्यत्वतदभावाभ्यां द्रव्यगुणविभागोपपत्त्या ब्रह्मणोऽपि व्यावहारिकसम्बन्धेन द्रव्यत्ववतो द्रव्यत्वावश्यकत्वादित्यस्वरसादाह—**अस्तु वेति**। नहि द्रव्यसामान्यं रूपवदेव चाक्षुषप्रत्यक्षविषयः किन्तु, प्रतिनियतेन्द्रियग्राह्यं द्रव्यमेव, अतएव "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति मीमांसकसिद्धान्त उपपद्यते। अतएव हि धारावाहिकद्वितीयादिज्ञानप्रमात्वं पूर्वं समर्थितम्। एवंचास्मन्मते

यद्वा त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिक-

न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इति सद्विषयकप्रतीत्यनङ्गीकारात् सद्रूपस्य ब्रह्मणः सर्वानुभवविषयत्वात् सर्वेन्द्रियग्राह्यं ब्रह्मेति न ब्रह्मचाक्षुषतानुपपत्तिः। एवं च न प्रत्यक्षबाध इत्याह—तथापीति।

अयं भावः—प्रपञ्चमिथ्यात्वानुमानस्य प्रत्यक्षबाधितत्वं किन्निबन्धनम्? न च—जात्या प्रत्यक्षं प्रबलमिति—वाच्यम्; नहि प्रत्यक्षसामान्यमनुमानबाधकम्, चन्द्रप्रादेशिकत्वप्रत्यक्षस्य तदधिकपरिमाणानुमानाबाधकत्वात्, नापि प्राथम्येन; इदं रजतमिति भ्रमज्ञानेन नेदं रजतमिति ज्ञानाबाधनात्। अतएव ह्यपच्छेदाधिकरणन्यायोपपत्तिः, तत्र हि प्रतिहत्रपच्छेदनिमित्तप्रायश्चित्तस्य प्रथमस्यापि नानुष्ठानम् किन्तूत्तरोद्गात्रपच्छेदनिमित्तप्रायश्चित्तस्यैवेत्युक्तम्, तत्र यदि प्रथमं बाधकमेव स्यात् तर्हि तदधिकरणविरोधोऽपरिहार्यः। अतएव हि—यो होता सोऽध्वर्युरित्युपदेशवाक्यस्योत्तरस्यानुसारेण होतुरतिदेशप्राप्तस्वकार्यबाधेनाध्वर्युकार्यैकार्यकारित्वमेवेति साधितम्। एवंच प्रत्यक्षस्य सत्त्वग्राहित्वेऽपि तत् सत्त्वं अबाध्यत्वरूपं वाऽन्यद्वा, अबाध्यत्वरूपत्वेऽपि प्रपञ्चनिष्ठं वोत ब्रह्मनिष्ठस्य संसर्गमात्रं वेत्यादिशङ्काकलङ्कितमिदं सन् घट इति प्रत्यक्षं स्वतःप्रमाणनिरस्तसमस्तदोषापौरुषेयवेदानुगृहीतं प्रपञ्चमिथ्यात्वानुमानं न बाधितुं पारयति। यदा तूक्तविधशङ्काकलङ्कितस्यैव प्रत्यक्षस्य बाधकत्वं न भवति, तदा सन् घट इति प्रत्यक्षे सद्रूपब्रह्मण एव सत्पदेन प्रतीतिर्लाघवात्, अनुगतैकाकारप्रतीतिनिर्वाहसंभवाच्चेति सत्तादात्म्यस्यैव कल्पितस्य प्रपञ्च भानमिति सिद्धान्ते कथं कथा प्रत्यक्षेण प्रपञ्चमिथ्यात्वानुमानं बाध्यते इति॥

इदं सर्वं एकसत्तावादानुसारेण निरूपितम्। इदानीं सत्तात्रैविध्यमतेनापि न प्रत्यक्षबाधकत्वमित्याह—यद्वेति। अत्रापि प्रत्यक्षस्य जात्या प्राथम्येन वा बाधकत्वं पूर्ववन्न संभवति, नच-प्रकारान्तरेणाबाधकत्वेऽपि उपजीव्यत्वेन प्रत्यक्षं बाधकमेव, अतएव—सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति वैयाकरणानां परिभाषोपपद्यत इति—वाच्यम्; नह्युपजीव्यत्वमात्रं प्राबल्यप्रयोजकम्, "यो होता सोऽध्वर्युरि" त्यत्रोपजीव्यस्याप्यतिदेशस्य

श्चेति। तत्र पारमार्थिकं सत्त्वं ब्रह्मणः, व्यावहारिकं सत्त्वमाकाशादेः, प्रातिभासिकं सत्त्वं शुक्तिरजतादेः।

बाध्यत्वदर्शनात्। अयमाशयः—उपजीव्योपजीवकविरोधो हि द्वेधा समाधातुं योग्यः; उपजीव्यस्यान्यथानयनेनोपजीवकस्य वाऽन्यथा नयनेन। तत्र यदि प्रकारान्तरेणुपदेशवचनत्वादिभिरुपजीवकस्य प्राबल्यम्, तर्हि उपजीव्यस्यान्यथा नयनम्, अन्यथोपजीवकस्यान्यथा नयनम्। एवंच प्रकृते—उपजीवकस्य वेदस्यैव बलवत्तात्पर्यार्पितस्य यथार्थत्वाङ्गीकारेण प्रत्यक्षस्य व्यावहारिकसद्विषयकत्वेनैवोपजीव्योपजीवकभावविरोधः समाधेयः। तदुक्तं भामत्याम्--"नचैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिव्याहारेणैकगामात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम्" इति। "नचानन्यपरं वाक्यं स्वार्थे उपचरितार्थं युक्तम्" इति च। कल्पतरुपरिमलेऽप्युक्तम्—उपजीव्योपजीवकभावविरोधो हि द्वेधा समाधातुं शक्यते—उपजीव्यं प्रत्यक्षं औत्सर्गिकात् तत्त्वावेदकप्रमाणभावात् प्रच्याव्य व्यावहारिकविषयसमर्पणेन वा, उपजीवकं वाक्यजातमौत्सर्गिकान्मुख्यार्थात्प्रच्याव्यौपचारिकविषयसमर्पणेन वा। तत्र "यो होता सोऽध्वर्युरित्यत्रोपजीवकस्य प्रत्यक्षवचनत्वेन प्राबल्यादुपजीव्यस्यैवोपमर्दः कृतः" इत्यादि।

वस्तुतस्तु—प्रत्यक्षानुमानयोरुपजीवकयोर्विरोध एवात्र नास्ति, अनुमानशब्दौ तु स्वविषयस्य हेतुशब्दादिभिः सम्बन्धमात्रावगमार्थं प्रत्यक्षमपेक्षेते, नतु प्रत्यक्षेण हेतुसम्बन्धादिसत्त्वमप्यपेक्षेते। तदुक्तं—पूर्वसम्बन्धनियमे प्रमाणे तुल्ये एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा" इति। एवंच प्रत्यक्षेण सत्त्वावगाहेऽपि सत्त्वविषयकत्वेन प्रत्यक्षस्यानुपजीव्यत्वात् अनुमानेन सत्त्वबाधे नोपजीव्यविरोधः, अस्तुवा पदार्थसत्त्वनिवयकत्वेनापि प्रत्यक्षमुपजीव्यम्, एवमपि व्यावहारिकसत्त्वेन प्रत्यक्षस्योपजीव्यत्वम्, न पारमार्थिकसत्त्वेन। तदुक्तं भामत्याम्—उत्पादकाप्रतिबन्धित्वात्, न ह्यागमज्ञानं सांव्यावहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन कारणाभावान्न भवेत्, अपितु तात्त्विकम्, नच तत्तस्योत्पादकम्; अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यावहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिजननात्" इत्यादि॥ एवंच सत्तात्रैविध्यमतानुसारे

**तथोच घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम् । अस्मिंश्च पक्षे घटादेर्ब्रह्मण्यपि निषेधो न स्वरूपेण,**

उपजीव्यविरोधस्याप्यभावात् न प्रत्यक्षेण प्रपञ्चमिथ्यात्वानुमानबाध इति प्रपञ्च-मिथ्यात्वानुमानमिदं न दुष्टमिति भावः ॥

**पारमार्थिकसत्त्वम्** त्रिकालाबाध्यत्वम् । **ब्रह्मणः** नित्यशुद्ध-बुद्धाद्वितीयस्वरूपचैतन्यस्य । **व्यावहारिकसत्त्वम्** ब्रह्मप्रमातिरिक्ताबाध्यत्वं पञ्चवाज्ञानतत्कार्यान्यतरभिन्नत्वमिति यावत् । **प्रातिभासिकसत्त्वम्,** ब्रह्मप्रमातिरिक्तबाध्यत्वम् । **तथाचेति ।** ब्रह्माकाशशुक्तिरूप्यादिनिष्ठपार—मार्थिकत्वादिरूपत्रिविधसत्त्वे सिद्धे चेत्यर्थः । जागरकालिकशुक्तिरूप्यस्य स्वाप्निकशुक्तिरूप्यस्य चैकमेव सत्त्वम्, एवमपि जागरे इदमोऽधिष्ठानताव-च्छेदकत्वम्, स्वप्ने तु अविद्यायास्तत्त्वमित्याद्यद्वैतसिद्धौ विस्तरेण प्रतिपादितम् । अयंच विभागः संसारकालिकस्यैव सत्त्वस्य । अतः पञ्चमप्रकाराविद्यानिवृत्तेर्न सत्त्वान्तरकल्पनापत्तिरित्याद्यपि तत्रैव द्रष्टव्यम् । नच—अयं विभागः प्रपञ्चस्य मिथ्यात्वसिद्ध्यनन्तरमेव सिद्ध्यति, मिथ्यात्वसिद्धिस्तु एतादृशसत्त्वविभागसिद्ध्यन-न्तरमेव सिद्ध्यतीत्यन्योन्याश्रयः प्राप्नोतीति—वाच्यम्; कल्पतरुपरिमलोक्तरीत्या सत्त्वविभागात् पूर्वमेव श्रुतिबोधितत्वेन मिथ्यात्वनिर्णये सति सत्त्वप्रतीत्युपपत्त्यर्थ-मेवास्य विभागस्य कल्पनात् । **अस्मिंश्च पक्षे इति ।** सत्ताचैविध्यपक्षे चेत्यर्थः । **न स्वरूपेणेति ।** न व्यवहारिकसत्त्वेनेत्यर्थः । अन्यथा पूर्वोक्तरीत्योपजीव्यविरोधाभावस्य निरूपयितुमशक्यत्वेन प्रत्यक्षबाधापत्त्या श्रुत्यनुमानयोर्बाधापत्तेः । यदि तु—"द्वैतुतत्त्वबहिर्मुखसत्त्वासत्त्वकथा वृथे"ति वचनानुसारेण सत्त्वस्यव्यावहारिकस्यापि नोपजीव्यत्वमिति मतमाद्रियते, तर्हि सत्ताचैविध्यपक्षेऽपि स्वरूपेण त्रैकालिकनिषेध एव मिथ्यात्वम् । अतएव हि—स्वरूपेण त्रैकालिकनिषेधः पारमार्थिको व्यावहारिको वा, मतद्वयेऽप्यदोषादित्यद्वैतसिद्ध्याद्युपपत्तिः । नच—स्वरूपेण त्रैकालिकनिषेधेऽ-लीकत्वापत्तिरिति—वाच्यम्, सदधिकरणकत्रैकालिकनिषेधस्यैव मिथ्यात्व-

किन्तु पारमार्थिकत्वं नैवेति न विरोधः । अस्मिन् पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावविशेषणं द्रष्टव्यम् । तस्मात् उपपन्नं मिथ्यात्वानुमानमिति ।

इति परिभाषायामनुमानपरिच्छेदः ।

पत्वेनालीकत्वे सदधिकरणकत्वासंभवेनादोषात् । सदसतोस्संबन्धाभावात्, अद्वैतसिद्धिकारास्तु—कालसम्बन्धित्वसमानाधिकरणस्यैव त्रैकालिकनिषेधस्य मिथ्यात्वरूपत्वान्न प्रपञ्चस्यालीकत्वप्रसङ्ग इति—निरूपयन्ति । सर्वथातु अनुमानलक्षणादिकथनं प्रपञ्चमिथ्यात्वोपपादनद्वारा "नेह नानास्ति" त्यादिश्रुत्यर्थनिर्णयार्थमपेक्ष्यत इति सिद्धम् ॥

पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावविशेषणमिति । पारमार्थिकत्वेन त्रैकालिकनिषेध इत्यत्र पारमार्थिकत्वेनेति तृतीयायाः स्वावच्छिन्नप्रतियोगिताकत्वमर्थं इति भावः ॥ सिद्धिब्रह्मानन्दीययोरस्य विषयस्य विस्तरो द्रष्टव्य इति ग्रम् इति ॥

इति परिभाषाप्रकाशिकायामनुमानपरिच्छेदः ॥

---

# अथ उपमानपरिच्छेदः ।

## ( अथोपमानपरिच्छेदः । )

क्रमप्राप्तम् उपमानं निरूपयितुं प्रतिजानीते — अथेति । अनुमाननिरूपणानन्तरमित्यर्थः । यद्यप्यनुमाननिरूपणानन्तरं शब्दोऽपि निरूपयितुं शक्यते, शाबरभाष्ये श्लोकवार्त्तिके शास्त्रदीपिकायां चानुमाननिरूपणानन्तरं शब्दप्रमाणं निरूप्य तदनन्तरमेवोपमाननिरूपणं कृतम्; तथापि सूचीकटाहन्यायानुसारेण नैयायिकाद्युक्तक्रमानुसारेण चात्रानुमाननिरूपणानन्तरमुपमाननिरूपणमेव क्रियते। अत्र प्रत्यक्षानुमाने द्वे एव प्रमाणे, नतूपमानादिकमपि प्रमाणम्, उपमानं हि नामान्यसादृश्यात् अन्यसादृश्यज्ञानम्, तत्त् प्रत्यक्षमेव, तदुक्तं वाचस्पतिमिश्रैः सांख्यतत्त्वकौमुद्यां—यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्षम्, अतएव स्मर्यमाणायां गवि गवयसादृश्यज्ञानमपि प्रत्यक्षमेव, नह्यन्यत् गवि सादृश्यम् अन्यच्च गवये। भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती जात्यन्तरे सादृश्यमुच्यते, स चेत् गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति यत्र प्रमाणम् उपमानं भवेदिति न प्रमाणमुपमानमित्याहुरि"ति ।

तत्राहुः शास्त्रदीपिकायां पार्थसारथिमिश्राः—नचेदमुपमानं प्रत्यक्षान्तर्गतम्; अनिन्द्रियसन्निकृष्टत्वात् नगरस्थायाः गोः। नचानुमानम्; अगृहीतसम्बन्धस्याप्युपजायमानत्वात्। एवं किलानुमीयेत गौर्गवयसदृशी गवयसादृश्यप्रतियोगित्वात्, यद्यत्सादृश्यप्रतियोगि तत्तत्सदृशं दृष्टमिति, नचेद युक्तम्; यो हि द्वावर्थौ मिथः बहुशो युगपच्च दृष्टवानेकामिव गामुपलभ्य वने गवयं पश्यति सोऽपि गां गवयसादृश्यविशिष्टामुपमिनोत्येव। तस्मान्नानुमानम्" इति। अनुपदं ग्रन्थ एवैतत् स्पष्टं भविष्यति। सर्वथातु—उपमानं प्रमाणान्तरमेव। गवयदर्शनात् एतत्सदृशी गौरिति यद्विज्ञानं सैवोपमितिः। तत्र च स्मर्यमाणैव गौः, गवयसादृश्यं तु गोगतं प्रमेयम्, यद्यपि गवये सादृश्यं प्रत्यक्षम्, गवि तु न प्रत्यक्षम्, तथाच सादृश्यविशिष्टगोस्मरणमुपमितिः। तत्र चांशभेदेन स्मरणत्वमंशभेदेनोपमितित्वं च भवत्येवेति गवांशे स्मरणरूपत्वेऽपि न क्षतिः। तदुक्तं वार्त्तिके—"प्रत्यक्षेणावबुद्धेच

साहृश्ये गवि च स्मृते। विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता॥ प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके। विशिष्टविषयत्वेनानुमानप्रमाणता" इति॥ तथाच गोप्रतियोगिकगवयानुयोगिकगोसादृश्यज्ञानात् गवि गवयसादृश्यज्ञानमुपमिति रिति मीमांसका मन्यन्ते। इदमेव वेदान्तिनामपि मतम्।

नैयायिकास्तु—पदवाच्यत्वप्रकारका प्रतीतिरुपमितिः। तथाहि—सामान्यतो गवयपदवाच्यं किंचिदस्तीति जानानो विशिष्य परिचिन्वानः कीदृशो गवयपदवाच्य इति कंचित् पृच्छति। तेन गोसदृशो गवयपदवाच्य इत्युक्तः सन् विपिनमनुसरन् यदा गोसदृशं पिंडं पश्यति, तदा पूर्वानुभूततादृशातिदेशवाक्यार्थं स्मरन् परिच्छिनत्ति सोऽयं गवयपदवाच्य इति। सेयमुपमितिर्नाम। नह्येतत् प्रत्यक्षम्, चक्षुरादिव्यापारविगमेऽपि जायमानत्वात्, नाप्यनुमितिः; व्याप्तिज्ञानाद्यभावेऽप्युत्पत्तेः, नापि शाब्दम्; गवयत्वविशिष्टोपस्थापकपदाभावात्, अतोऽतिरिक्तेयमुपमितिरिति। एतेषां मते शक्तिनिर्णायकतया शब्दं प्रत्युपमानमुपजीव्यम्, उपमितिं प्रति वाक्यार्थानुसन्धानस्य कारणत्वात् उपमानं प्रति शब्द उपजीव्यमिति परस्पराश्रयदोषः। यदि व्यवहारादिना वाक्यार्थज्ञानमेवोपमानस्योपजीव्यम्, तर्हि उपमानप्रमाणप्रमेयं नापूर्वं किमपि विद्यते। तदुक्तं वार्तिकव्याख्याने न्यायरत्ने—"गोसादृश्येनोपलक्षितस्य गवयशब्दः संज्ञेत्यतिदेशवाक्यार्थः, यावत् गोसदृशं न पश्यति, तावत् किं गोसदृशं वस्तु? यस्यानेन गवयसंज्ञोक्तेत्येवं वाक्यप्रतिपादितमर्थं यथावन्न विजानाति। दृष्टेतु गोसदृशे वस्तुनि तेनैव वाक्येन स्मृतेन गवयसंज्ञां प्रतिपद्यत इति नोपमानापेक्षा।" इति।

वस्तुतस्तु—अतिदेशवाक्यार्थानुसन्धानं विनाऽपि अयं गवय इति ज्ञानं भवत्येव। तदुक्तं वार्तिके—"श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते। येऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम्। प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनामि"ति। तथाचासौ गवयपदवाच्य इति ज्ञानं नोपमितिः, अतिदेशवाक्यस्मरणाद्यनपेक्षत्वात्, एतादृशोपमानप्रमाणनिरूपणस्य निष्प्रयोजनत्वाच्च। अतः अन्यसादृश्यज्ञानात् अन्यसादृश्यज्ञानमुपमितिरित्येवाङ्गीकरणीयम्। तस्य च प्रयोजनानि वार्तिककृता बहून्युक्तानि। यथा—"प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगात् भवति तदुपचारे यत्र नीवारजातौ। तदपि फलमभीष्टं लक्षणस्योपमायाः प्रकृतिरपि च गौणैर्बाध्यते यत्र चान्यैः" इति। एवंच नैयायिकमतमिदं न युक्तम्। अतएव—

## अथोपमानं निरूप्यते।

**अथ उपमानं निरूप्यते। तत्र सादृश्यप्रमाकरणम् उपमानम्।**

शब्दनिरूपणात् प्रागुपमाननिरूपणमुपपद्यते, अन्यथोपमानप्रमाणं प्रति शब्द प्रमाणस्योपजीव्यत्वेन शब्दपरिच्छेदानन्तरमेवोपमाननिरूपणापत्तेः। मीमांसकानां मते तु—उपमानशब्दयोरुभयोरपि परस्परमुपजीव्योपजीवकभावाभावेनोभयोरपि प्रत्यक्षोपजीव्यकत्वेनैकतरस्य निरूपणे प्रथमं कर्तव्ये सूचीकटाहन्यायेनोपमाननिरूपणं शब्दनिरूपणात् प्रागुपपन्नम्। अनुमाने तु प्रत्यक्षं अनुमितिकालेऽपि पक्षविषयेऽपेक्षितमित्युपमानाद्यपेक्षयाऽन्तरङ्गम्। अतः प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणम्, तत उपमाननिरूपणमिति युज्यते।

**ननु**—वेदान्तिनां मते उपमानप्रमाणविचारोऽयं किंप्रयोजनः? न तावादद्वैतज्ञानादौ तस्योपयोगः अद्वैतद्वैतमिथ्यात्वादीनां सादृश्याघटितत्वात् इति—**चेत्**।

अत्र केचित्—अद्वैतिनामपि अद्वितीयब्रह्मसाक्षात्कारपर्यन्तं चित्तशुद्ध्याद्यर्थं कर्मानुष्ठानस्यापेक्षितत्वात् तत्र प्रकृतिविकृतिभावादिज्ञानस्यापेक्षितत्वात् तत्समर्पकतयोपमानपरिच्छेदस्सार्थक इति—वर्णयन्ति। न्यायसिद्धान्तमञ्जर्यां भट्टाचार्यचूडामणिजानकीनाथ विरचितायां तु—साद्दश्यज्ञानमिव वैधर्म्यज्ञानमप्युपमानमेवेति निरूपितम्, तन्मतानुसारेतु ब्रह्मवैलक्षण्येन च सदसद्विलक्षणत्वरूपमिथ्यात्वनिर्णय उपमानप्रमाणनिरूपणस्य फलम्। अन्येतु—"यत्रत्वसदृशादेव कल्पयित्वोपजायते। सादृश्यप्रत्ययस्तत्र पदाभासत्वकल्पना। बाधकप्रत्ययाच्चैषा सादृश्याभासता मता॥ इति वार्त्तिकेनोपमानमपि द्विविधम् भ्रमात्मकं प्रमात्मकं चेति। तत्र प्रपंचे सत्यत्वदिना ब्रह्मसादृश्यानुभवादिकं च ब्रह्मसाक्षात्कारपर्यन्तं अबाधेऽपि ब्रह्मस्वरूपसाक्षात्कारानन्तरं बाध्यत एवेति भ्रमात्मकमेव। एवंच—"निरंजनः परमं साम्यमुपैतीत्यादौ सादृश्यं नार्थः, किन्त्वैक्यमिति सिद्धिरुपमानपरिच्छेदस्य प्रयोजनं—मन्यन्ते॥ सर्वथोपमानलक्षणादिनिरूपणमनुमाननिरूपणानन्तरमावश्यकमेवेति मीमांसकसंमततल्लक्षणादिकमेव स्वाभिमतं मत्वा तन्मतानुसारेण तन्निरूपणार्थमुपक्रमते—

तथाहि—नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः अयं पिण्डो गोसदृश इति, तदनन्तरञ्च भवति अनेन सदृशी मदीया गौरिति। तत्र अन्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं गोनिष्ठगवयसादृश्यज्ञानं फलम्।

न चेदं प्रत्यक्षेण सम्भवति; गोपिण्डस्य तदा इन्द्रिया-सन्निकर्षात्, नापि अनुमानेन; गवयनिष्ठगोसादृश्यस्य अतल्लिङ्गत्वात्, नापि मदीया गौः एतद्गवयसदृशी,

अथ अनुमाननिरूपणानन्तरम्॥ नैयायिकसंमतम् अयं गवयपदवाच्यः इति ज्ञानमेवोपमितिरिति पक्षं स्वानभिमतं सूचयन् सादृश्यप्रमैवोपमितिरिति मीमांसकपक्षानुसारेणोपमानप्रमाणलक्षणमाह—सादृश्यप्रमेति। सादृश्य-प्रमैवोपमितिः, उपमिनोमीत्यनुव्यवसायस्य तत्रैव विद्यमानत्वात्; कमलेन लोचनमुपमिनोमीत्यनुभवात्, नतु अयं गवयपदवाच्य इति प्रमा, व्यवहारादिनाऽयं गवयपदवाच्य इत्यनुभवे तथाऽनुव्यवसायाभावात्, सा चोपमितिः गोसदृशो गवय इति सादृश्यज्ञानेनैव जायते। तच्च ज्ञानं—"प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनाम्।" इति वार्त्तिकोक्तरीत्याऽतिदेशवाक्यानुसन्धानं नापेक्षते इत्यादिं सर्वमर्थं सूचयन् सादृश्यप्रमाकरणमुपमानमित्युक्तमुपमानलक्षणं लक्ष्ये योजयति— तथाहीति॥

उपमानस्य प्रत्यक्षेऽनुमाने वा नान्तर्भाव इत्याह—नचेदमिति। इदं उपमितिपदवाच्यं गवि गवयसादृश्यज्ञानम्। गवि गवयसादृश्यज्ञानं प्रत्यक्षेण भवतीति वदन् वादी प्रष्टव्यः—किं गवयज्ञानं प्रत्यक्षेण भवतीति विवक्षितम्, उत सादृश्यज्ञानम्, आहो गोज्ञानम्, आहोस्वित् गोसादृश्यवैशिष्ट्यज्ञानम्। तत्र आद्ये इष्टापत्तिः, अतएव न द्वितीयः, तुरीये उपमानप्रमाणमन्तरा स्मृतायां गवि सादृश्यवैशिष्ट्यग्रहाऽसम्भवः। अत एव न तृतीयः, गवांशे इन्द्रियसन्निकर्षा-भावेन प्रत्यक्षरूपत्वं हि न संभवतीति स्मृतिरूपत्वमेवेति पूर्वमेवोक्तम्। तदुक्तं वार्त्तिके "नगरस्थस्तु गोर्ज्ञानं स्मरणान्नातिवर्त्तते" इति॥ तथाच न प्रत्यक्ष

एतन्निष्ठसादृश्यप्रतियोगित्वात्, यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः, यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रो मैत्रसदृश इत्यनुमानात् तत्सम्भव इति वाच्यम् ; एवंविधानुमानानवतारेऽपि अनेन सदृशी मदीया गौरिति प्रतीतेरनुभवसिद्धत्वात्, उपमिनोमीत्यनुव्यवसायाच्च । तस्मात् उपमानं मानान्तरम् ।

इति वेदान्तपरिभाषायामुपमानपरिच्छेदः ।

उपमानस्यान्तर्भाव इति भावः । उपमानस्यानुमानेऽपि नान्तर्भाव इत्याह—नाप्यनुमानेनेति ।

मदीया गौः गवयसदृशी एतन्निष्ठसादृश्यप्रतियोगित्वादित्यनुमानं हि तस्यैव पुरुषस्य भवेत्, यो हि युगपत् द्वौ पदार्थौ मिथः सदृशौ पश्यति, यस्य तु युगपत्सादृश्यं दर्शनं नास्ति तस्य सम्बन्धग्रहणाभावान्नोक्तानुमानं भवति। तदुक्तं सोमनाथीये शास्त्रदीपिकाव्याख्याने—"पूर्वं मिथः सदृशार्थद्वयदर्शने सत्येव सम्बन्धग्रहणं भवेत्, तदभावे तु जायमानं गवयसदृशी गौरिति विज्ञानं नानुमानम्, अगृहीतसंबन्धस्याप्युपजायमानत्वात् प्रत्यक्षवदिति ॥ तमिममर्थं मनसि निधायाह—एवंविधानुमानानवतारेऽपीति ॥

तदुक्तं वार्तिके—"नचैतस्यानुमानत्वं पक्षधर्माद्यसंभवात् ।
प्राक् प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ॥
गवये गृह्यमाणं च न गवामनुमापकम् ।
प्रतिज्ञार्थैकदेशत्वाद्गोगतस्य न लिङ्गता ।
गवयस्याप्यसम्बन्धाच्च गोलिङ्गत्वमृच्छति ।
सादृश्यं नच सर्वेण पूर्वं दृष्टं तदन्वयि ;
एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ।
सादृश्येन सहैवास्मिँस्तदैवोत्पद्यते मतिः ।" इति ॥

सर्वथातु प्रमाणान्तरमेव, तस्य च न संज्ञासंज्ञिसम्बन्धसिद्धिः फलम्, किन्तु सादृश्यप्रमैव, तस्यास्तु प्रतिनिध्यादिनिर्णयः वार्तिकोक्तं फलमित्यभिप्रायेणोपसंहरति तस्मादुपमानं मानान्तरमिति ॥

इति परिभाषाप्रकाशिकायामुपमानपरिच्छेदः ॥

## अथागमपरिच्छेदः

प्रत्यक्षानुमाने द्वे एव प्रमाणे इति वैशेषिकादयो मन्यन्ते । तेषां शब्दस्यानुमानविधया प्रामाण्यमभिसंहितम् । तेषामयमाशयः—

"शब्दानुमानयोरैक्यं धूमादग्न्यनुमानवत् ।
अन्वयव्यतिरेकाभ्यामेकप्रत्यक्षदर्शनात् ।
संबन्धपूर्वकत्वाच्च प्रतिपत्तिरितो यतः ।
प्रत्यक्षान्यप्रमाणत्वात् तददृष्टार्थबोधनात् ।
सामान्यविषयत्वाच्च ह्यैकात्म्यविषयाश्रयात् ।"

इत्यादि वार्तिकश्लोकैरुपवर्णितः । इदंच मतं वार्तिककारैरेव सम्यङ् निरस्तम् । अयमाशयः—शब्दो नानुमानविधयाऽर्थप्रत्यायकः । अनुमाने हि पक्षः पक्षधर्मः सपक्षान्वयः विपक्षव्यतिरेकश्चापेक्षिताः । नच शब्दे चतुष्टयमपि विद्यते । यद्यत्र वाक्यं पक्षः, अर्थवृत्तित्वं साध्यम्, वाक्यमेव हेतुः, तर्हि पक्षहेत्वोरैक्यम्, यदि तदर्थमर्थो धर्मी पक्षः, तर्हि शब्दस्याकाशवृत्तेरर्थेन सम्बन्धाभावाच्च हेतोः पक्षवृत्तिता संभवति । एतेन—सपक्षान्वयरूपा व्याप्तिरपि नास्तीति—सूचितम् । विपक्षव्यतिरेकस्तु न भवत्येव; युधिष्ठिराद्यर्थाभावेऽपि शब्दसत्त्वात् । अतः शब्दोऽतिरिक्तं प्रमाणम् । यथा हि धूमाग्न्योः सम्बन्धग्रहे सत्येव धूमेनाग्नेरनुमानं भवति, तथा वाक्यस्य वाक्यार्थेन सम्बन्धग्रहे सत्येव वाक्यार्थज्ञानं भवति । यद्यपि अन्विताभिधानमते वाक्यार्थेऽपि वाक्यस्य शक्तिरिष्यते; तथापि सा स्वरूपसत्येव वाक्यर्थं गमयति, न तद्ग्रहस्तत्र कारणम्, एतेनाभिहितान्वयवादोऽपि व्याख्यातः । तत्रापि पदार्थनिष्ठायाः स्वरूपसत्या एव शक्तेः वाक्यार्थानुभावकत्वात् ।

तदुक्तं वार्तिके—

अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ।
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।

कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते।
न क्रियाकर्तृसम्बन्धाद्दते सम्बन्धनं क्वचित्।
राजा भर्ता मनुष्यस्य तेन राज्ञः स उच्यते।
वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः।
देशोऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति।
कार्यकारणभावादौ क्रिया सर्वत्र विद्यते॥
नचानवगताकारः संबन्धोऽस्तीति गम्यते।
न चास्त्यसति सम्बन्धे षष्ठी तत्पुरुषोऽपि वा।
तस्माच्च पक्षधर्मोऽयमिति शक्या निरूपणा।
निवृत्तेऽन्यत्र सम्बन्धे येऽपि तद्विषयात्मना।
वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत्;
तैरप्येतन्निरूप्यं तु शब्दस्तद्विषयः कथम्।
गमकत्वाच्च धर्मत्वं धर्मत्वाद्गमको यदि।
स्यादन्योन्याश्रयत्वं हि तस्मादेषाऽपि कल्पना॥
नच धर्मो गृहीतोऽत्र येन तद्धर्मता भवेत्।
पर्वतादिर्यथादेशः प्राग्धर्मत्वावधारणात्।
यथात्र कथ्यते धर्मी प्रमेयोऽस्य स एव सः॥
यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः।
न त्वेवं यत्र शब्दोऽस्ति तत्रास्तीति निश्चयः।
तस्मादननुमानत्वं शब्दे प्रत्यक्षवद्भवेत्।
वाक्यार्थे तु पदार्थेभ्यः सम्बन्धानुभवादृते।
बुद्धिरुत्पद्यते तेन भिन्नाऽसावक्षबुद्धिवत्" इति॥

तथाचागमोऽपि प्रमाणमेव।

ननु—शब्दप्रमाणनिरूपणस्य वेदान्तिनां मते किं प्रयोजनम्? नच—अद्वितीय-ब्रह्मावगतिः प्रपञ्चमिथ्यावगतिश्च प्रयोजनमिति—वाच्यम्; वेदान्तिनां मते वेदस्यापि मिथ्यात्वेन तेन सत्याद्वितीयब्रह्मावगत्यसंभवादिति—चेत्।

अत्र वदन्ति-मिथ्याभूतादपि सत्यार्थावगतिः संभवत्येव। तदुक्तं भामत्याम्—अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात्,

## अथागमो निरूप्यते।

तथाच वर्णे ह्रस्वत्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः। नहि लौकिकाः नाग इति वा नग इति वा पदात् कुञ्जरं तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः" इति॥ एवं च पारमार्थिकाद्वितीयनिरस्तसमस्तोपाधि-नित्यशुद्धबुद्धमुक्तप्रत्यगभिन्नब्रह्मस्वरूपादिसिद्धिरागमपरिच्छेदस्य मुख्यं फलमिति मन्तव्यम्। सर्वथाच शब्दप्रमाणनिरूपणमावश्यकमेवेति क्रमप्राप्तं तन्निरूपयितुं प्रतिजानीते—**अथागमो निरूप्यते इति॥**

अन्विताभिधानवादः अभिहितान्वयवादः इति मतद्वयं मीमांसकानां मते प्रसिद्धम्। तत्रान्विताभिधाने पदैः पदार्थानां स्मरणम्, स्मृतानां पदार्थानां संसर्गोऽपि पदैरेवावगम्यते इति मतम्, तत्र पद एव शक्तिद्वयम्—एका स्मारकशक्तिः या ज्ञायमानैव पदार्थं स्मारयति, अपराऽन्वयानुभावकशक्तिः, यातु स्वरूपसती वाक्यार्थमन्वयं गमयति। अत्र मते वाक्यमेव वाक्यार्थं प्रमापयति। अभिहितान्वयवादे तु पदेभ्यः पदार्थानुभावकशक्तिरेका, यया पदार्थानामनु-भवो जायते। अयं चानुभवः न स्मृतिर्नाप्यनुभव इति अभिधानपदेन व्यवह्रियते। एवं च पदैः पदार्था अभिधीयन्ते। तदुक्तम्—

अभिहितघटना यदा तदानीं स्मृतिसमबुद्धियुगं पदे विधत्तः।
परदृशि पुनरन्विताभिधाने पदयुगलात् स्मृतियुग्ममेव जन्यम्" इति।

अभिहितेषु च पदार्थेषु एका शक्तिः, या स्वरूपसती वाक्यार्थमनुभावयति। अस्मिंश्च मते वाक्यं न वाक्यार्थं प्रमापयति, किन्तु अभिहिताः पदार्था एव। तत्रतु पदार्थद्वारकं परम्परया जनकत्वमादाय वाक्यस्यापि प्रमाणत्वेन व्यवहारः। तदुक्तं शाबरभाष्ये—"तस्माद्वाक्यव्यतिरेकेऽपि पदार्थान्वयेऽन्वीयमानः पदार्थनिमित्त एव वाक्यार्थप्रत्ययः। श्लोकवार्तिकेऽप्युक्तम्—

"पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः।
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित्।
मानसेनापराधेन पदार्थान् ये नाऽऽगच्छते।
ते तद्वाक्यं गृहीत्वापि नार्थं गच्छन्ति कर्हिचित्।" इति॥

**यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न**

न्यायरत्नेप्युक्तं—"उक्तं तावत् पदार्थानामाकाङ्क्षासन्निधियोग्यतावशेन सामान्यतोऽन्वयबोधनम्, तद्विशेषनियमस्त्वर्थापत्त्येति ॥ श्लोकवार्तिकेऽप्युक्तम्—

"साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ।" इत्यादि ।

तथाच पदार्थनिष्ठैव वाक्यार्थानुभावकशक्तिरिति अभिहितान्वयवादाशयः ॥

तत्रान्विताभिधानवादे वाक्यसामान्यस्य संसर्गविषयकत्वमावश्यकम् । अभिहितान्वयवादेऽप्येवमेवेति मीमांसका मन्यन्ते । ब्रह्मानन्दसरस्वत्यस्तु मतद्वयेऽपि तात्पर्यविषयार्थबोधकत्वमेव । तात्पर्यविषयश्च क्वचित् संसर्गः यथा "गामानय" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ, क्वचित्त् अखण्डस्वरूपम्, यथा "सोऽयं देवदत्तः" तत्त्वमसी" इत्यादौ । अन्वितपदस्य तात्पर्यविषय इत्यर्थं इत्यादिकं न्यायरत्नावल्यां निरूपयन्ति । तथाच तात्पर्यविषयार्थानुभावकवाक्यत्वं शब्दप्रमाणत्वमिति वेदान्तिनां सिद्धान्तः । तमिमं सिद्धान्तं मनसि निधाय वाक्यप्रमाणं लक्षयति—**यस्य वाक्यस्येति** । संसर्ग इति प्रायिकाभिप्रायम्, नतु वाक्यसामान्यस्य संसर्गविषयकत्वमावश्यकमित्यभिप्रायम् । तेन न पूर्वापरविरोधः ।

**मानान्तरेण न बाध्यते इति ।** मानान्तराबाधिततात्पर्यविषयार्थानुभावकवाक्यत्वं वाक्यप्रमाणत्वमिति निष्कर्षः । मानान्तरपदेन चात्र वेदान्तेतरप्रमाणस्य परिग्रहः । तेन—"घटमानय" ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि वाक्यानां नासंग्रहः ।

यत्तु—आशुबोधिन्यां "मानान्तरेण सजातीयमानान्तरेणेत्यर्थः । सजातीयं च—व्यावहारिकतत्त्वावेदकवाक्यापेक्षया व्यावहारिकतत्त्वावेदकवाक्यान्तरं व्यावहारिकतत्त्वावेदकप्रत्यक्षादि च । पारमार्थिकतत्त्वावेदकवाक्यापेक्षया पारमार्थिकतत्त्वावेदकवाक्यान्तरमेवेति व्याख्यातम् । तत्र व्यावहारिकतत्त्वावेदकस्य व्यावहारिकतत्त्वावेदकप्रमाणान्तरबाध्यस्याप्रसिद्धया पारमार्थिकतत्त्वावेदकप्रमाणस्य च तादृशप्रमाणबाध्यस्याप्रसिद्धया चिन्त्योपपत्तिकं तदिति मन्तव्यम् ।

**बाध्यते तद्वाक्यं प्रमाणम्। वाक्यजन्यज्ञाने च आकाङ्क्षा-योग्यतासत्तयस्तात्पर्यज्ञानं चेति चत्वारि कारणानि।**

नन्वग्निना सिञ्चतीत्यादिवाक्यं व्यावहारिकतत्त्वावेदकप्रमाणान्तरबाध्यं स्वयमपि व्यावहारिकतत्त्वावेदकम्। नहि बाध्यबाधकाभ्यामुभाभ्यामप्येकसत्ताकं वस्तु बोध्यते इति कुत्रापि दृष्टम्। न च—स्वप्नस्थले उभयोरपि एकसत्ताकपदार्थ-विषयकत्वं दृष्टमिति—वाच्यम्; बाधकस्य व्यावहारिकतत्त्वावेदकत्वस्थले तथाऽदर्शनात्। एवंच वेदान्तेतरप्रमाणाबाधितमित्यर्थं परित्यज्य व्यावहारिक-तत्त्वावेदकप्रमाणान्तरबाधितत्वमित्यर्थस्वीकारे स्वाप्निकप्रत्यक्षबाधिते स्वाप्निकेऽग्निना सिञ्चतीति वाक्येऽतिव्याप्तिः स्यादिति मानान्तरपदेन न व्यावहारिक-तत्त्वावेदकप्रमाणान्तराबाधितत्वमित्यर्थ एव विवक्षणीयः। "नेह नानास्ति"-त्यादिश्रुतीनां यथा न प्रत्यक्षेणानुमानादिना वा बाधस्तथाऽन्यत्र विस्तृतमिति न तेषु वाक्येषूक्तलक्षणस्याव्याप्तिः।

**प्रमाणमिति।** व्यापारवत्तासम्बन्धेन प्रमाऽसाधारणकारणमित्यर्थः। अत्र च वाक्यशब्देन न वाक्यसामान्यं विवक्षितम्, किन्तु आकाङ्क्षायोग्यतादि-मद्वाक्यविशेष एवेति सूचयन् आकाङ्क्षायोग्यतादिकमपि कारणतावच्छेदकतया विवक्षितमित्याह -**वाक्यजन्यज्ञाने चेति।** एतेन वाक्यजन्यज्ञाने वाक्यस्य करणत्वमुक्त्वा पुनराकाङ्क्षादीनां कारणत्वोक्तिरनुपपन्नेति शङ्का परास्ता॥

**कारणानीति।** सहकारिकारणानीत्यर्थः। यथाभिहितान्वयवादे परम्परया शब्दस्योपयोगित्वात् शाब्दबोध इति व्यवहारस्तथाऽऽकाङ्क्षादिजन्यस्यापि ज्ञानस्य शाब्दबोध इति व्यवहारः कथं नोपपन्न इति भावः। एतेन—अनुमान-विधया शब्दप्रामाण्यवादः—परास्तः; न ह्यनुमितौ आकाङ्क्षायोग्यतासत्तीनां तात्पर्यज्ञानस्य वा कारणत्वमिति भावः।

**ननु**—का नामाऽऽकाङ्क्षेति चेदत्र नैयायिकाः—"येन विना यस्यान्वयाननु-भावकत्वं तादृशपदवत्त्वमाकाङ्क्षेति वर्णयन्ति, इदमभिहितान्वयवादे आकाङ्क्षायाः पदार्थधर्मत्वात् पदधर्मत्वभावात् न संभवति। अन्विताभिधान-

**तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वम् आकाङ्क्षा । क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इति-कर्त्तव्यतायाश्च जिज्ञासाविषयत्वात् । अजिज्ञासोरपि वाक्यार्थ-बोधात् योग्यत्वमुपात्तम् ।**

पक्षेऽपि "वाजिभ्यो वाजिनमि"त्यादौ वाजिपदस्य वाजिनपदादिं विनाऽन्वयानु-भावकत्वाभावात् वैश्वदेवयागविवक्षायामपि आकाङ्क्षासत्त्वात् द्वितीयाध्याये गुणात् तत्र कर्मभेदवर्णनमनुपपन्नं स्यात् । अतोऽन्यथैवाकाङ्क्षास्वरूपं मीमांसक-मतानुसारेण वर्णनीयमित्याशयेनाह—**तत्रेति** ॥ आकाङ्क्षायोग्यता—सत्तितात्पर्यज्ञानानां मध्ये इत्यर्थः ।

**पदार्थानामिति** वाक्यार्थानामप्युपलक्षणम् । तेन करणश्रवणे इति-कर्तव्यतायाश्चेत्युत्तरग्रन्थस्य न विरोधः । इतिकर्तव्यतात्वं हि उपकारकत्वम् । तच्च फलवत एव करणस्य । एवं च फलसम्बन्धानन्तरमेव करणस्येति-कर्तव्यतासम्बन्धः । न चैकस्मिन्नेव वाक्ये करणं फलमितिकर्तव्यताश्च विधीयन्ते । एकेन वाक्येन फलसम्बन्धेऽपरेण वाक्येनेतिकर्तव्यतासंबन्ध इत्येव हि दर्शपूर्णमासप्रयाजयोर्दृष्टम् । अत उत्तरग्रन्थोपपत्त्यर्थं पदार्थपदं वाक्यार्थस्या-प्युपलक्षणमित्यङ्गीकरणीयमिति भावः । **परस्परजिज्ञासा**—एकपदार्थज्ञानजन्यापरपदार्थज्ञानेच्छा । **योग्यत्वम्** अर्हत्वम् । ननु परस्परजिज्ञासाविषयतायोग्यत्वं तदवच्छेदकनिर्णयं विना न संभवति, अतस्तदवच्छेदकसूचनपूर्वकं लक्ष्ये लक्षणसमन्वयमातनुते—**क्रियाश्रवण इति** । क्रियाविषयकशब्दज्ञाने सति । **कारकस्य** कर्मादिकारकस्य **कारकश्रवणे** कर्मादिकारकश्रवणे । **क्रियायाः**—आख्यातार्थभावनायाः । **करणश्रवणे**—धात्वर्थश्रवणे । **इतिकर्तव्यतायाः** उपकारकक्रियायाः । जिज्ञासाविषयत्वादिति योजना । **अयं भावः**—पचतीत्युक्ते पाकं करोति इति विवरणम् पचति ओदनमित्युक्ते पाकेनौदनं करोतीति च विवरणं

दृश्यते । इदं च विवरणं धात्वर्थस्य कर्मत्वेन करणत्वेन वाऽन्वयं आख्यातार्थकृतौ गमयति । आख्यातार्थश्च यदि कर्ता स्यात्, तर्हि तस्यापि कारकस्य क्रियाया-मेकस्यामन्वयोऽङ्गीकरणीयः । क्रिया च नात्र धात्वर्थः; द्वितीयान्तपदेन तृतीयान्तपदेन वा विवरणेन तस्या अपि कारकत्वात् तयाऽपर्यवसितार्थबोधकं वाक्यसामान्यमापद्येत । अतः कृतिरेवाख्यातार्थः । सैव क्रिया "कृतिः भावना इत्यादिपदैः व्यवह्रियते । तत्रैव सुबुपात्तलिङ्गसंख्याव्यतिरिक्तानां निपातोपसर्ग-प्रातिपदिकातिरिक्तशब्दगम्यानाञ्चार्थानामन्वयः । तदुक्तं—

भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता" इति ॥

तत्र च साध्यत्वेनान्वययोग्यद्वितीयान्तादिपदसन्निधाने धात्वर्थस्य करण-त्वेनान्वयः । यथा ओदनं पचति, व्रीहीनवहन्तीत्यादौ । गुणत्वेनान्वययोग्य-तृतीयान्तादिपदसमवधाने तु धात्वर्थस्य कर्मत्वेनान्वयः, यथा दध्ना जुहोतीत्यादौ । फलगुणवाचकशब्दसमवधानेऽपि धात्वर्थस्य प्रमाणान्तरेणाप्राप्तौ धात्वर्थस्य करण-त्वेनैवान्वयः । धात्वर्थस्य प्रमाणान्तरेण प्राप्तौ तु आश्रयत्वेनान्वयः । यथा सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः, दध्नेन्द्रियकामस्य जुहुयादित्यादौ । तत्र च भावनायाः करोतिपदविव्रियमाणाया एककर्मकत्वं नियतम् । करणमपि तत्रा-सति बाधके एकमेव युक्तम् । अतः सोमेन यजेतेत्यादौ धात्वर्थस्य सोमस्य वैकस्य करणत्वेऽङ्गीकर्तव्ये धात्वर्थस्यैव तत्र करणत्वेनान्वयः तस्यचेतिकर्तव्यताकाङ्क्षायां प्रयाजादीनामन्वयः । सोमशब्दे तु मत्वर्थलक्षणाऽङ्गीक्रियत इत्यादि प्रतिपदाधि-करणभावार्थाधिकरणादिषु व्यक्तम् ।

यस्त्वत्र आशुबोधिन्यामुक्तम्—"केन भावयेदित्याकाङ्क्षायां धात्वर्थो यागादिः करणत्वेनान्वेति ; यागादेः स्वजन्यपरमापूर्वद्वारा स्वर्गादिजनकत्वात् । अत एवोक्तम्—

"विधाने वानुवादे वा यागः करणमिष्यते ।
तत्समीपे तृतीयान्तं तदाचित्वं न मुञ्चति" इति ॥

तत्र विधाने वानुवादे वेति वार्त्तिकं आपातप्रतीत्यवलम्बम्, अधिकारविध्यभिप्रायं वेति न्यायप्रकाशकारैर्योजितमिति न सर्वत्र धात्वर्थकरणत्वे तत् वार्तिकं प्रमाणं

तदवच्छेदकञ्च क्रियात्वकारकत्वादिकमिति नातिव्याप्तिः गौरश्वः इत्यादौ। अभेदान्वये च समानविभक्तिकपदप्रति-

भवति। दध्ना जुहोतीत्यादिगुणविधावपि मत्वर्थलक्षणया दधिविशिष्टहोमस्यैव विधानमिति भामतीकल्पतरुपरिमलकारादिसिद्धान्तानुसारे तु तेनापि वार्त्तिकेन सर्वत्र निर्वाहः संभवत्येव। तदुक्तं भामत्याम्—

"सोमेन यजेतेतिवत् दधिसंततताविशिष्टहोमाधारविधानादि"ति॥ कुवलयानन्दव्याख्यायां चन्द्रिकायामपि—हेतुत्प्रेक्षोदाहरणप्रघट्टके दध्ना जुहोतीत्यत्र विशिष्टविधिपक्षः स्वीकृतः। सर्वथा तु प्रकृतग्रन्थस्याधिकारविधिमभिप्रेत्यैव प्रवृत्तत्वात् धात्वर्थो भावनायां करणत्वेनान्वेतीत्यादिकमुपपन्नमेव।

ननु—क्रियाश्रवणे कारकस्य तस्य श्रवणे क्रियायाः करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वादिति ग्रन्थेन पदार्थद्वन्द्वगतं क्रियात्वकारकत्वान्यतरत्वं करणत्वेतिकर्तव्यतात्वान्यतरत्वं वाऽऽकाङ्क्षाघटकयोग्यतावच्छेदकं निरूपितम्। एतावता च पदैकवाक्यतायां क्रियात्वकारकत्वान्यतरत्वं वाक्यैकवाक्यतायां करणत्वेतिकर्तव्यतात्वान्यतरत्वं चाकाङ्क्षेति पर्यवस्यति, तदिदं न युक्तम्, इतिकर्तव्यताया अपि कारकविशेषत्वेन क्रियायामेवान्वयेन क्रियात्वकारकत्वयोर्योग्यतावच्छेदकत्वेनैवोपपत्त्या योग्यतावच्छेदकद्वयाङ्गीकारायोगात्। नच—प्राथमिकबोधे सर्वेषामपि भावनान्वयेऽपि पाष्ठिकबोधे धात्वर्थस्य द्रव्येण द्रव्यस्य धात्वर्थादिना चान्वयस्वीकारात् तत्र च करणेतिकर्तव्यतयोश्चान्वयास्वीकारात् युक्तमवच्छेदकभेदनिरूपणमिति—वाच्यम्; पाष्ठिकबोधे कारकत्वादिनाऽन्वयासंभवेन क्रियात्वकारकत्वयोरप्यवच्छेदकत्वायोगात्। अतः किमभिप्रायमिदमवच्छेदकभेदनिरूपणमिति—चेत्,

अत्रोच्यते—यथाहि करणत्वेन धात्वार्थस्यान्वये साध्यत्वेन फलादेरन्वयः, न तथा इतिकर्तव्यतात्वेनान्वयकाले साध्यत्वेन करणस्यान्वयः, भावनाया एककर्मकत्वभङ्गापत्तेः। अतः कारकविशेषस्याऽपीतिकर्तव्यताया इतिकर्तव्यतात्वेनैवान्वयो न कारकत्वेनेति सूचयितुं तदाश्रयणमिति॥ तमिममर्थं मनसि निधायाह—तदवच्छेदकं च क्रियात्वकारकत्वादिकमिति॥

पाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः। एतादृशाकाङ्क्षाभिप्रायेणैव बलाबलाधिकरणे "सा वैश्वदेव्या-

यत्रैतादृशाकाङ्क्षाया अभावः, यथा गौरश्वः इत्यादौ, न तत्र तादृशं वाक्यं प्रमाण-मित्याह—इति नातिव्याप्तिर्गौरश्व इत्यादाविति। आदिपदेन करणत्वेतिकर्त्तव्यतात्वादिसंग्रहः।

ननु—तत्त्वमसीत्यादि वाक्यं न प्रमाणम्; तत्पदार्थेन त्वंपदार्थेन च क्रियात्वकारकत्वादिबोधाभावेनाकाङ्क्षाभावादित्यत आह—अभेदान्वये चेति। क्रियाबोधं विना स्वरूपमात्रान्वये इत्यर्थः। क्रियाबोधस्थले तु नीलं घटमानये-त्यादावपि नीलमित्यस्य भावनायामेवान्वयः, नतु घटपदार्थेनेति हि सिद्धान्त इति भावः। ननु—येन विना यस्यान्वयाननुभावकत्वं यदि नाकाङ्क्षा, परस्परजिज्ञासाविषयत्वमेव च यद्याकाङ्क्षा, तर्हि अन्वयबोधोत्तरमपि योग्यता-लक्षणाकाङ्क्षादिसत्त्वेन शाब्दबोधापत्तिः। स्वसमानजातीयपदार्थान्वयबोध-विरहसहकृतजिज्ञासाविषयतायोग्यत्वमेव शाब्दबोधं प्रति कारणमिति कल्पनायां गौरवादन्वयबोधाभाव एवाकाङ्क्षाऽङ्गीक्रियताम्; न च गौरश्व इत्यादिवाक्यस्य प्रामाण्यापत्तिः; तत्राभेदस्य बाधितत्वेन योग्यताज्ञानाभावेनैवाबोधकत्वोपपत्तेः। किञ्चाकाङ्क्षाया जिज्ञासाविषयत्वरूपत्वे घटः कर्मत्वम् आनयनं कृतिरिति वाक्य-मपि प्रमाणं स्यात्, अतो येन विना यस्यान्वयाननुभावकत्वं तत्त्वमाकाङ्क्षात्वेव युक्त-मित्यत आह—एतादृशाकाङ्क्षाभिप्रायेणेति॥ एवंच येन विना यस्यान्वया-ननुभावकत्वं तत्त्वमाकाङ्क्षात्वङ्गीकारे तादृशाकाङ्क्षायाः वाजिभ्यो वाजिनमित्यत्र वाजिनस्य विश्वदेवयागसम्बन्धेऽपि सत्त्वात् उक्तबलाबलाधिकरणविरोधः समापद्येतेति तत्परिहारार्थं जिज्ञासाविषयत्वयोग्यत्वं पदार्थनिष्ठमेवाकाङ्क्षेति युक्तम्। घटः कर्मत्वमित्यादितस्तु न शाब्दबोधः; पदविशेषोपस्थितत्वस्यापि कर्मत्वादौ योग्यतावच्छेदके विवक्षणेनादोषात्।

बलाबलाधिकरण इति॥ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति तार्तीयसूत्र इत्यर्थः। तृतीयाध्यायस्य हि अङ्गाध्याय इति नाम। तत्राङ्गत्वे लक्षणप्रमाणानि प्रमाणानां बलाबलादिकं

च विचार्यते। तत्राङ्गत्वं नाम—परोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वम्। परोद्देशप्रवृत्तविधिविषयभूतकृतिकारकत्वमिति यावत्। अस्य च दध्ना जुहोतीत्यादिविहितदध्यादौ समन्वयः। तत्र परं होमः, तदुद्देश्या तद्भाव्यका कृतिः, तत्र कारकं विहितं दधीति। तत्र परं हुधातुना, कृतिराख्यातेन, तयोरुद्देश्यविधेयभावसम्बन्धः संसर्गमर्यादया, कारकं दधिपदेन गम्यते इति अवशिष्टकारकत्वबोधनार्था तृतीयाविभक्तिः श्रुतिपदेन व्यवह्रियते। तस्याश्च लक्षणम्—अङ्गत्वघटकीभूतकृतिकारकत्वस्य प्राधान्येन वाचकः शब्दः इति।

यत्र तु अर्थज्ञाने क्रतुनिरूपितकरणताबोधकतृतीयादिविभक्तेरभावः तत्रार्थज्ञानं विनाऽनुपपत्तिरूपेणार्थज्ञानगतेन लिङ्गेन 'अर्थज्ञानेन क्रतुं संपादयेदि'ति अर्थज्ञानपदात् तृतीयाविभक्तिं कल्पयित्वाऽर्थज्ञानं क्रतोरङ्गमिति निर्णीयते। इदं सामर्थ्यं लिङ्गमित्यभिधीयते।

तदिदं द्विविधं सामान्यसंबन्धबोधकप्रमाणान्तरनिरपेक्षम्, तत्सापेक्षं चेति। आद्यमर्थगतं सामर्थ्यं यथाऽर्थज्ञानगतं पूर्वोक्तम्। द्वितीयं मन्त्रगतम्। यथा—"बर्हिर्देव सदनं दामी"तिमन्त्रस्य दर्शपूर्णमाससम्बन्धिलवनप्रकाशकत्वं लिङ्गं तस्य तादृशलवनाङ्गत्वं गमयति। अयं मन्त्रः दर्शपूर्णमासप्रकरणगतत्वात् सामान्यतो दर्शपूर्णमासाङ्गमिति ज्ञाते कथं तदङ्गत्वमिति संशये लवनक्रियाप्रकाशकत्वरूपलिङ्गेन लवनप्रकाशनद्वारेति निर्णीयते। अस्य च लिङ्गस्य लक्षणम् उक्तविधश्रुतिकल्पनानुकूलपदपदार्थान्यतरनिष्ठा योग्यता॥

"धेनुर्दक्षिणा" इत्यादिना दक्षिणां प्रति धेनोरङ्गत्वं गम्यते। तच्चाङ्गत्वं न श्रुत्या भवति। न हि दध्ना जुहोतीत्यत्र दधिपदोत्तरमिव धेनुपदोत्तरं तृतीया विभक्तिरत्र समस्ति। नापि लिङ्गेन; अर्थज्ञानं विना क्रत्वनुपपत्तेरिव धेनुं विना दक्षिणानुपपत्तिर्हि नास्ति; द्रव्यान्तरेणापि संभवात्। द्रव्यान्तरेण दक्षिणासंपादने च धेनुर्दक्षिणेति वाक्यं वितथं भवति। अतोऽङ्गत्वे श्रुतिलिङ्गे इव वाक्यं नामापरमपि प्रमाणमङ्गीकरणीयम्। वाक्यं नाम—अङ्गत्वघटकीभूतकृतिकारकताकल्पनानुकूलः श्रुतपदसन्निधिः। अस्ति चेदं लक्षणं धेनुर्दक्षिणेत्यत्र। धेनुदक्षिणापदयोः यत् सन्निधानं तद् तयोः साध्यसाधनभावमन्तरा नोपपद्यते। अतो दक्षिणासाधनत्वं धेनौ कल्प्यते। ततश्च धेनुर्दक्षिणाङ्गमिति।

एवं प्रकरणमप्यङ्गत्वे प्रमाणम् । अत एव प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । प्रकरणं नाम—सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्षणम् । "समिधो यजती"त्यादिवाक्यविहितप्रयाजादिसन्निधौ श्रूयमाणौ फलवन्तौ यौ दर्शपूर्णमासौ तयोः इतिकर्तव्यतात्वेनोपकारकत्वेन प्रयाजादीनामपेक्षणं विद्यते । न हि प्रयाजादीनाम् अन्यं प्रति अङ्गत्वं प्रमाणान्तरेण ज्ञातम् । एतदभिप्रायमेव फलवत्सन्निधावफलं तदङ्गम् इति वचनम् ।

स्थानलक्षणं तु इतिकर्तव्यतात्वेनान्वयायोग्ययोर्वाक्यार्थयोः सन्निधिः । यथा विकृतिवाक्यस्य तत्सन्निधिपठितवाक्यस्य च यावर्थौ तयोरङ्गाङ्गिभावः स्थानप्रमाणेन । यद्यपि प्रयाजादिकमिवोपहोमादिकमप्यफलम्; तथापि तस्य विकृतौतिकर्तव्यतात्वेनान्वययोग्यता नास्ति; प्राकृतैरेवाङ्गैर्विकृतौतिकर्तव्यताकाङ्क्षायाः शान्तत्वात् ।

एवंच श्रुतिलिङ्गवाक्यप्रकरणस्थानानि यथाङ्गत्वे प्रमाणानि, तथा समाख्याऽपि तत्प्रमाणम् । समाख्या नाम प्रकृतविध्यर्थान्वयायोग्यकृत्स्नावयवशक्तिकं पदम् । यथाध्वर्यवादिसमाख्या । नहि आध्वर्यवेण यजेतेत्यत्राध्वर्युसम्बन्धादेरन्वययोग्यता ।

अत्र श्रुतिरितरानपेक्षं कारकत्वं बोधयति, लिङ्गं श्रुतिकल्पनाद्वाराऽङ्गत्वं बोधयति, वाक्यं लिङ्गश्रुतिकल्पनया, प्रकरणं वाक्यलिङ्गश्रुतिकल्पनाद्वारा, समाख्या तु स्थानप्रकरणवाक्यलिङ्गश्रुतिकल्पनाद्वाराऽङ्गत्वे प्रमाणमिति पूर्वपूर्वप्रमाणोपजीव्यमुत्तरोत्तरं प्रमाणं पूर्वपूर्वप्रमाणाद्दुर्बलम् । उत्तरोत्तरोपजीवकप्रमाणापेक्षया पूर्वं पूर्वं प्रबलमिति यस्मिन्नधिकरणे निरूप्यते, तत् बलाबलाधिकरणम् ।

अत्र ह्यधिकरणे—श्रुत्या ऐन्द्र्या ऋचः गार्हपत्योपस्थानाङ्गत्वम् अवगम्यते । मन्त्रलिङ्गपर्यालोचने तु सा ऋक् इन्द्रोपस्थानाङ्गमिति ज्ञायते । किमत्र युक्तमिति सन्दिह्य ऐन्द्र्येति तद्धितेनेन्द्राङ्गत्वानुवादेन तदविरोधेन गार्हपत्यशब्दस्य तत्समीपलक्षणामङ्गीकृत्येन्द्रोपस्थानाङ्गत्वमेवेति पूर्वपक्षय्य तद्धितस्य सूक्तवाकतद्धितत्वेनाङ्गत्वाबोधकत्वेन तृतीयया गार्हपत्याङ्गत्वमेवाङ्गीकरणीयम् । मन्त्रगतमिन्द्रपदं तु लक्षणयाऽग्नेरेव बोधकमिति श्रुतिलिङ्गविरोधे श्रुतिरेव बलीयसीति निरूपितम् ।

यद्यपि बलाबलाधिकरणेऽस्मिन्—वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति

मिक्षा वाजिभ्यो वाजिनमि"त्यत्र वैश्वदेवयागस्य आमिक्षान्वितत्वेन न वाजिनाकांक्षेत्यादिव्यवहारः।

वाक्यं न विचारितम्, द्वितीयाध्याये द्वितीयपादे गुणाधिकरण एवेदं विचारितम्, तथापि अत्राधिकरणे श्रुतिलिङ्गविरोधे यथा श्रुतिर्बलीयसी, एवं श्रुतिवाक्यविरोधेऽपि श्रुतिरेव बलीयसीत्यर्थोऽपि विवक्षितः। तत्र चोदाहरणम्—वाजिभ्यो वाजिनमिति वाक्यं भवत्येव। नचोत्पत्तिशिष्टगुणावरोधे गुणान्तरावरोधो न न्याय्य इति न्यायेनैव वाजिनस्य वैश्वदेवयागसंबन्धाभावस्य ज्ञातत्वात् वाजिनस्य वाक्यप्रमाणेन वैश्वदेवाङ्गत्वशङ्कैव नोदेतीति वाच्यम्; उत्पत्तिशिष्टन्यायो हि तदैवात्र प्रवर्तेत, यदि वैश्वदेव्यामिक्षेति वाक्यार्थपर्यवसानानन्तरमेव वाजिभ्यो वाजिनमिति वाक्यं प्रवर्तते इति स्यात्, न चैतदस्ति; उभयोरपि समसमयप्रवृत्तत्वेनामिक्षाया उत्पत्तिशिष्टत्वाभावात्। तदुक्तं भामत्याम्—"उभयोरपि वाक्ययोः समसमयप्रवृत्तेरामिक्षावाजिनयोरुत्पत्तौ समं शिष्यमाणत्वेन नामिक्षाया उत्पत्तिशिष्टत्वमि"ति। ततः—वाक्यात् वैश्वदेवीति तद्धितश्रुतिबलीयस्त्वेनैव वाजिनस्य वैश्वदेवयागसम्बन्धोऽत्र निवारणीयः। तदुक्तं भामत्याम्—"तद्धितश्रुत्यवगतामिक्षालक्षणगुणावरोधात्पूर्वकर्मासंयोगिवाजिनद्रव्यं पूर्वस्माद्भिनत्ती"ति। एवं बलाबलाधिकरणे इति परिभाषाकृतासुक्तिरुपपन्नैव॥

यथा हि द्वितीयाध्याये भाविनम् उत्पत्तिशिष्टगुणन्यायाभिधं गुणाधिकरणमुपजीव्य प्रथमाध्याये वैश्वदेवाधिकरणे वैश्वदेवपदनामत्वं व्यवस्थापितमेवं तृतीयाध्यायगतबलाबलाधिकरणन्यायमुपजीव्य गुणाधिकरणप्रवृत्तिरप्युपपद्यते।

कल्पतरुपरिमले—"द्विविधोऽस्मिन्नधिकरणे सिद्धान्तन्यायः प्रवर्त्यते। उत्पत्तिशिष्टामिक्षागुणावरुद्धे यागे वाक्यान्तरेण वाजिनं निवेशं न लभत इत्युत्पत्तिशिष्टबलीयस्त्वन्याय एकः। श्रौतामिक्षावरुद्धे विश्वदेवयागे वाक्येन वाजिनं निवेशनं न लभते इति श्रुतिबलीयस्त्वन्यायो द्वितीयः। तत्राद्यस्य सिद्धान्तन्यायस्य द्वेधोपमर्दः, यथा—आमिक्षा उत्पत्तिशिष्टा न भवतीत्येकः प्रकारः, यः समसमयेति भामत्या कण्ठतः उक्तः। द्वितीयस्तु—यथाभ्युदयेष्टौ श्रुतिबलीयस्त्वन्यायः पूर्वदेवतापनयनपूर्वकदेवतान्तरसंयोजनवचनबलात् बाध्यते,

ननु तत्रापि वाजिनस्य जिज्ञासाऽविषयत्वेऽपि तद्योग्यत्वमस्त्येव, प्रदेयद्रव्यत्वस्य यागनिरूपितजिज्ञासाविषयतावच्छेदकत्वात्।

एवं वाजिपदेनामिक्षाविशिष्टानुवादपूर्वकं वाजिनविधानेन वचनबलादुत्पत्तिशिष्टन्यायोऽपि बाध्यत इत्युक्त्वा श्रुतिबलीयस्त्वन्यायमादायैवात्र सिद्धान्त इति निरूपितम्। सर्वथा तु बलाबलाधिकरण इत्युक्तिर्नानुपपन्नेति मन्तव्यम्।

यदत्राशुबोधिन्याम्—"अत्र बलाबलाधिकरणपदं न "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति तृतीयाध्यायीयजैमिनिसूत्रावगतपूर्वबलीयस्त्वाधिकरणपरम्; तदधिकरणे भाष्यकृता न्यायमालाकृता चामिक्षावाजिनबलाबलविषयकविचारस्यानवतारितत्वात्, किन्तु द्वितीयाध्यायोक्तदेवताभेदकृतकर्मभेदाधिकरणपरम्; तत्रैव कर्ममीमांसाभाष्यकृता आमिक्षावाजिनयोर्बलाबलभावस्य दर्शितत्वादित्युक्तम्, तच्चिन्त्योपपत्तिकम्; बलाबलाधिकरणपदेन गुणात् कर्मभेदाधिकरणस्य कुत्रापि विवक्षाभावात्। श्रुतिलिङ्गेति तार्तीयाधिकरणविवक्षायामप्यदोषस्योपपादितत्वात्। यदत्र देवताभेदात् कर्मभेद इत्युक्तम्, तदप्यत्राधिकरणे द्रव्यभेदेन कर्मभेदस्यैव साधितत्वात् चिन्त्योपपत्तिकम्। नहि पूर्वपक्षिणा वाजिपदेन देवतान्तरं विवक्षितमित्यङ्गीकृतम्। तदुक्तं भामत्याम्—"तद्धितश्रुत्यवगतामिक्षालक्षणगुणावरोधात्पूर्वकर्मासंयोगि वाजिनद्रव्यं पूर्वस्मात् भिनत्ती"ति।

अत्रेदमधिकरणशरीरम्—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि"त्यत्र "वाजिभ्यो वाजिनमित्यंशो विषयः। तत्र सन्देहः—वाजिशब्दस्य वाजमन्नमामिक्षारूपं यस्येति व्युत्पत्त्या विश्वदेवपरत्वमङ्गीकृत्य किं वैश्वदेवयाग एव वाजिनमपि द्रव्यं विधीयते, उत वाजिनद्रव्यकवाजिनामकदेवताविशेषविशिष्टक्रियान्तरं विधीयत इति। **पूर्वपक्षस्तु**—वाक्यात् वाजिनं विश्वदेवाङ्गमेव। वाजिभ्य इति शब्दस्तु इनन्ततया इनप्रत्ययस्य सर्वनामार्थे स्मरणात् सन्निहितस्य च सर्वनामार्थत्वात् विश्वदेवपदोपस्थापितानेव देवताविशेषान् गमयति, नतु देवतान्तरम्। विश्वदेवानामामिक्षासम्बन्धोऽपि आमिक्षापदसन्निधानप्रयुक्त एवेति वाक्यीय एव न श्रौत इति नामिक्षया वाजिनस्य बाधो युक्त इति॥ **सिद्धान्तस्तु**—"आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः"

त्वादिति चेत्, न; स्वसमानजातीयपदार्थान्वयबोधासहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजातीयामिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेदकत्वाभावात् ।

इति वचनानुसारेण वैश्वदेवीपदेनैवामिक्षाया अपि बोधितत्वात् आमिक्षासम्बन्धः विश्वदेवानां श्रौतः, तदनन्तरं च वाक्येन वाजिनद्रव्यसम्बन्धबोधनासंभवात् वाजिपदेनैवन्क्तेनापि न विश्वदेवानां ग्रहणमिति क्रियान्तरमेव "वाजिभ्यो वाजिनमि"त्यत्र विवक्षितमिति । अत्र च बलाबलाधिकरणनिर्णयं वाजिनासम्बन्धमात्रम्, प्रयोजनं तु कर्मभेद इति न विरोधः ।

अत्र वाजिनस्य वैश्वदेवयागेन नाकाङ्क्षेति यो व्यवहारः, स जिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेत्यङ्गीकार एवोपपद्यते, नान्वयबोधाभाव आकाङ्क्षेत्यङ्गीकार इति सैवाकाङ्क्षा ।

ननु—यागद्रव्ययोराकाङ्क्षा यागत्वप्रदेयद्रव्यत्वान्यतरत्वमेव । तच्च—वैश्वदेवयागवाजिनयोरप्यविशिष्टम्, एवं चाकाङ्क्षाभावात् न वाजिनस्य वैश्वदेवसम्बन्ध इत्यसङ्गतमित्याशयेन शङ्कते—**नन्विति** । **तच्चापि** । वैश्वदेवयागेऽपि । **तद्योग्यत्वम्** तन्निरूपितजिज्ञासाविषयतावच्छेदकप्रदेयद्रव्यत्वम् । यागद्रव्ययोर्यागत्वप्रदेयद्रव्यत्वान्यतरत्वमेवाकाङ्क्षा, नतु करणेतिकर्तव्यतात्वान्यतरत्वम् । नहि द्रव्यमितिकर्तव्यताकाङ्क्षाग्रहणयोग्यम । तदुक्तं—नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः"—इति ॥

एतेन करणश्रवणे इतिकर्तव्यताया जिज्ञासाविषयतायोग्यताङ्गीकारात् यज्ञीयद्रव्यस्येतिकर्तव्यतान्तःपाताच्चेत्याद्युबोधिन्युक्तिः परास्ता ।

नहि प्रदेयद्रव्यत्वमात्रम् अवच्छेदकम्, किन्तु स्वसमभिव्याहृतपदस्मारितसजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वम्, तच्च यागनिरूपितं वाजिनस्य नास्ति । स्वसमभिव्याहृतामिक्षापदस्मारितपदार्थान्वयबोधसहकृतत्वाद्वैश्वदेवयागस्य । नच—वाजिनान्वयेन यागस्याकाङ्क्षत्वात् आमिक्षाया एव प्रदेयद्रव्यत्वेनान्वयो मा भवत्विति—वाच्यम्; आमिक्षासंबन्धस्य श्रौतत्वेन प्राथम्यस्यैवात्र नियामकत्वात् । "दध्ना जुहोति" "पयसा जुहोति" "यवाग्वा जुहोति" त्यादौ

आमिक्षायान्तु नैवम्; वाजिनोऽन्वयस्य तदा अनुपस्थितत्वात्। उदाहरणान्तरेष्वपि दुर्बलत्वप्रयोजक आकाङ्क्षाविरह एव द्रष्टव्यः।

योग्यता च तात्पर्य्यविषयसंसर्गाबाधः। वह्निना सिञ्चतीत्यादौ तादृशसंसर्गबाधान्न योग्यता। "स प्रजापति-

तु खलेकपोतन्यायेन सर्वेषामपि प्रदेयद्रव्याणां युगपद्धोमान्वयान्न दध्ना पय आद्यनाकाङ्क्षापादनमिति न दोषः। एवञ्च स्वसमानजातीयान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वमेवावच्छेदकमिति न विरोध इत्याह—स्वसमानेति॥

अग्नीषोमीयं पशुमालभेते"ति वाक्ये उत्पत्तिशिष्टपश्ववरोधेऽपि "हृदयस्याग्रेऽवद्यती"त्यादिवाक्येन हृदयादिप्रदेयद्रव्यान्वयस्तु न विरुद्धः, पशोः प्रकृतिद्रव्यत्वेन प्रदेयद्रव्यत्वाभावेन स्वसमानजातीयत्वाभावात्। एवम्—"आग्नेयोऽष्टाकपालः" इति वाक्ये उत्पत्तिशिष्टपुरोडाशावरोधेऽपि "व्रीहिभिर्यजेते"ति वाक्येन प्रकृतिद्रव्यसमर्पणं न विरुद्धमिति मन्तव्यम्; अन्यथा एषु स्थलेष्वपि गुणात्कर्मभेदापत्त्या पशुसोमाधिकरणादिविरोधः समापद्येत॥

यथा वाक्यश्रुतिविरोधे आकाङ्क्षाविरहेण वाक्यस्य दौर्बल्यम्, एवं विरोधान्तरोदाहरणेष्वपि तत्प्रयुक्तमेव दौर्बल्यम्। यथा श्रुतिलिङ्गविरोधे लिङ्गदौर्बल्यम्। इदं श्रूयते—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते"इति, अनेन चैन्द्रमन्त्रस्य गार्हपत्योपस्थानाङ्गत्वे बोधिते लिङ्गकल्पितश्रुत्याऽग्न्युपस्थापनाङ्गत्वमस्य मन्त्रस्य बोधयितुं न शक्यते; कल्पितवाक्यस्याकाङ्क्षाभावेनाबोधकत्वात्। एवं लिङ्गवाक्यविरोधादावपि पूर्वपूर्वप्रमाणकल्पितविधिना किञ्चिदङ्गत्वे निर्णीते उत्तरोत्तरप्रमाणकल्पितश्रुतेराकाङ्क्षाभावेनाबोधकत्वेन विनियोजकत्वाभावेन दौर्बल्यमनुसन्धेयम्। तमिममर्थं मनसि निधायाह—उदाहरणान्तरेष्वपि दुर्बलत्वप्रयोजक आकाङ्क्षाविरह एव द्रष्टव्य इति॥

क्रमप्राप्तां योग्यतां निरूपयति—योग्यता चेति॥ तात्पर्यविषयसंसर्गाबाध इति। अत्र संसर्गपदमविवक्षितार्थम्। तात्पर्यविषयाबाधस्यैव योग्यतात्वात्। तदुक्तमद्वैतसिद्धौ—"तात्पर्यविषयाबाध एव योग्यते"ति।

रात्मनो वपामुदखिददि"त्यादावपि तात्पर्य्यविषयीभूतपशुवपा-प्राशस्त्याबाधाद् योग्यता। तत्त्वमस्यादिवाक्येष्वपि वाच्या-भेदबाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावाद् योग्यता।

योग्यताज्ञानस्य शाब्दबोधं प्रति कारणत्वाङ्गीकारस्य प्रयोजनमाह—वह्निना सिञ्चतीति॥

वस्तुतस्तु अयोग्यतानिश्चयस्य प्रतिबन्धकत्वेन प्रतिबन्धकाभावविधया कारणत्वे-नैवातिप्रसङ्गनिरासात् योग्यताज्ञानकारणत्वं नापेक्षितमित्यन्यत्र विस्तरः॥ तात्पर्यविषयेति विवक्षायाः प्रयोजनमाह—स प्रजापतिरिति।

पूर्वमीमांसायां प्रथमाध्यायस्य द्वितीयपादे चिन्तितम्—"स प्रजापति-रात्मनो वपामुदखिदद्" इत्याद्यर्थवादो धर्मे प्रमाणं न वेति। तत्र पूर्वपक्षः "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधेः स्वर्गार्थमध्ययनविधाने एव तात्पर्यात् अर्थज्ञानार्थत्वे प्रमाणाभावात् न धर्मपर्यवसायित्वमपेक्षितम्। अतस्तदुपवर्ण्यं लक्षणया प्राशस्त्यं नार्थं इति। सिद्धान्तस्तु—दृष्टफले संभवति अदृष्टफल-कल्पनस्यान्याय्यत्वाद् अर्थज्ञानार्थमेवाध्ययनम्। तच्च धर्मपर्यवसाय्येव विवक्षितम्। एवं च सर्वेणापि वेदेन धर्मपर्यवसायिना भवितव्यमित्यर्थवाद-स्यापि धर्मपर्यवसानार्थं लक्षणया प्राशस्त्यमर्थं इत्यङ्गीकरणीयम्; अतएव तात्पर्यादिति। एवं च प्रतीयमानार्थस्य स प्रजापतिरित्यादौ बाधितत्वेऽपि तात्पर्यविषयस्य प्राशस्त्यस्य प्रमाणान्तरेणाबाधितत्वात् नार्थवादवाक्यस्या-प्रामाण्यम्॥ लक्ष्यस्वरूपाभेदे। अभिन्नस्वरूपचैतन्यमात्रे। न ह्यस्मिन् वाक्ये संसर्गमर्यादयाऽभेदो भासते, अखण्डार्थत्वभङ्गापत्तेरिति पूर्वमेव निरूपितम्। अतो न विरोधः॥

अभिहितान्वयवादिनः—अव्यवधानेन पदार्थोपस्थितिरेवासत्तिः, तस्याः-पदजन्यत्वमौत्सर्गिकम्। विनापि पदं "पश्यतः श्वेतिमारूपमि"ति वार्तिकानु-सारेणाकाङ्क्षादिमद्भिताभ्यामुपस्थिताभ्यामर्थाभ्यामेव शाब्दबोधसंभवादिति—वर्णयन्ति, इदं तु मतं न युक्तम्; नहि प्रमाणान्तरोपस्थापितस्यापि पदार्थस्य

आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः । मानान्तरोपस्थापितपदार्थस्यान्वयबोधाभावात् पदजन्येति । अत एव अश्रुतपदार्थस्थले तत्तत्पदाध्याहारः—द्वारमित्यादौ पिधेहि

शाब्दबोधे भानसंभवः । अन्यथा "इषे त्वा" "ऊर्जे त्वे"त्यादौ छिनद्मीति पदाध्याहार आवश्यक इति "समेषु वाक्यभेदः स्यादि"त्यत्र यन्निरूपितम्, तद्विरोधापत्तेः ।

तस्य ह्यधिकरणस्येषे त्वा ऊर्जे त्वा इत्यादिकं विषयः । तत्र सन्देहः—किमिषेत्वोर्जेति एकं यजुः, आहो भिन्नं यजुरिति । एकमेव यजुरिति पूर्वपक्षः । भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यं ह्यर्थैकत्वे प्रयोजकम् । न चात्रानेकेषां मुख्यविशेष्याणां बोधो विद्यते इति । सिद्धान्तस्तु—"इषे त्वेति शाखामाच्छिनत्ती"ति विनियोगविध्यनुसारेण छिनद्मीत्यादिपदाध्याहारेण "इषे त्वा" ऊर्जे त्वे" त्यनयोर्भिन्नप्रतीतिविषयानेकमुख्यविशेष्यकत्वेनार्थैक्याभावाद्यजुर्भेद एवात्र युक्त इति ।

इदं च पदाध्याहारपक्ष एवोपपद्यते, नार्थाध्याहारपक्षे । अतः पदजन्यपदार्थोपस्थितिरेवासत्तिरित्यङ्गीकरणीयम् । अतएव—"अग्नये जुष्टं निर्वपामीति मन्त्रस्य प्रकृतावाग्नेययागे विद्यमानस्यातिदेशेन" "सौर्यं चरुं निर्वपेदि"ति वाक्यविहिते विकृतौ सौर्ययागे उपकारपृष्ठभावेनागतस्य सूर्यदेवताप्रकाशनोपपत्त्यर्थं अग्नयेपदस्य स्थाने सूर्यायेतिपदनिक्षेपः करणीय इति" जैमिनीयैर्निरूपितमप्युपपद्यते । अन्यथाऽर्थाध्याहारेणाग्नयेपदेनैव कथंचित् सूर्यदेवतोपस्थापनादूहं विनैवोपपत्तेर्वितथ एवोहाध्यायः समापद्येत । एवंचोहामन्त्रताधिकरणमपि सार्थकं भवति । तथा चान्विताभिधानवादस्यैवाङ्गीकारेण पदजन्यपदार्थोपस्थितिरेवासत्तिरित्यङ्गीकरणीयमित्याशयेनाह-——आसत्तिश्चेति । वस्तुतस्तु—अभिहितान्वयवादेन पदार्थोपस्थितिमात्रस्यासत्तित्वेऽपि न क्षतिः । नच "समेषु वाक्यभेदः स्यादि"त्यधिकरणविरोधः ; "इषेत्वे"ति "शाखामाच्छिनत्ती"ति विनियोगविध्युपस्थापितच्छेदनादिभावनानां मुख्यविशेष्याणामनेकासां भानेन पदाध्याहाराभावेऽपि वाक्यभेदसिद्धेः । नाप्यूहानुपपत्त्यादिकम् ; प्रकृतौ हि अग्निदेवतायाः पदजन्योपस्थितिः सिद्धा, विकृतावपि प्रकृताविव पदजन्यसूर्योपस्थितिस्तदेकरूप्यार्थं संपादनीयेत्यभिप्राये-

इति। अत एव "इषे त्वा" इत्यादिमन्त्रे छिनझीति पदाध्याहारः। अत एव विकृतिषु सूर्य्याय त्वा जुष्टं निर्वपामीति पदप्रयोगः।

पदार्थस्य द्विविधः शक्यो लक्ष्यश्चेति। तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः। यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः।

णोक्तसाधनात्। व्यक्तं चैतत् विन्दुटीकायामिति तत एव द्रष्टव्यम्। नच—वृत्त्युपस्थापितस्यैव शाब्दबोधे भानमिति नियमः; अतादृशस्यापि संसर्गस्य शाब्दबोधे भानात्। घटमानयेत्यादौ उपस्थितानामप्याकाशादीनामाकाङ्क्षाद्यभावेन शाब्दबोधे भानासंभवादाकाशे आसत्तिसत्त्वेऽपि न क्षतिः। अधिकमन्यत्र विस्तृतमिति मन्तव्यम्॥ अत एव पदजन्येति विशेषणादेव। निर्वपामीति। वाक्ये अग्नियेपदस्य स्थाने सूर्यायेति शेषः॥

पदजन्यपदार्थोपस्थितिरित्यत उपस्थितं पदार्थं विभजते—पदार्थस्येति। पदार्थः त्रिविधः शक्यो लक्ष्यो गौणश्चेति मतं न युक्तम्, गौण्या लक्षितलक्षणाया मन्तर्भावस्य वक्ष्यमाणत्वादित्याशयेनाह—द्विविध इति॥ शक्यः—शक्त्या बोध्यः। लक्ष्यः लक्षणया बोध्यः। शक्यपदार्थं निरूपयिष्यन् प्रथमं शक्तिं निरूपयति—तत्रेति॥ शक्यपदार्थघटका शक्तिरित्यर्थः। अर्थेषु अर्थविषयणी। मुख्या वृत्त्यन्तरोपस्थितिव्यवधानमन्तरेण भवन्ती। शक्तिज्ञानार्थं हि न वृत्त्यन्तरज्ञानापेक्षा विद्यते, यथा लक्षणाज्ञानतः पूर्वं नियमेन शक्त्युपस्थितिरपेक्ष्यते, घटपदस्य कम्बुग्रीवादिमदर्थे वृत्तिर्या सा शक्तिपदेन व्यपदिश्यते॥ बुध्नः मूलभागः, उदरं मध्यभागः॥

अथ केयं शक्तिः? अत्र नैयायिकाः—संकेत एव शक्तिः, नतु पदार्थान्तरम्; मानाभावात्। स च सङ्केतोऽस्मात् पदादयमर्थो बोद्धव्य इतीच्छा। तत्रापि न संकेतमात्रं शक्तिः, किन्तु ईश्वरसंकेत एवेति न पामरादिसंकेतितानामपभ्रंशितानामपि शक्तत्वम्। स चेश्वरसंकेतो नेश्वरसंकेतत्वेन गृह्यमाणः कारणम्, किन्तु संकेतत्वेन। अत ईश्वरमविदुषामपि घटादिशब्दात् शाब्दबोधोपपत्तिः।

**सा च शक्तिः पदार्थान्तरम् ; सिद्धान्ते कारणेषु कार्य्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् ।**

आधुनिकसंकेतितानां चैत्रादिशब्दानाम्—"द्वादशेऽह्नि पिता नाम कुर्यादि"ति सामान्यतः ईश्वरसंकेतितत्वमस्त्येवेति न दोष इति —वदन्ति ।

तदिदं मीमांसका न सहन्ते, तेषामयमाशयः—अभिधा नाम शक्तिः । सा च पदार्थान्तरम्, कारणेषु कार्यानुकूलशक्तिमात्रमतिरिक्तमङ्गीकरणीयम् । वह्निर्मणिसमवहितो दाहं न जनयति, मण्यसमवहितः उत्तेजकमण्यन्तरसमवहितो वा दाहं जनयतीत्यत्र हि शक्तिसत्त्वतद्विनाशावेव नियामकौ । सा च शक्तिः न द्रव्यं गुणः कर्मादिकं वा ; तद्‌गुणराहित्यादित्यतिरिक्तपदार्थः । एवंच शब्दनिष्ठा शक्तिरप्यतिरिक्तैवाङ्गीकरणीया । कस्मिन् पदे कोदृशार्थबोधनानुकूलशक्तिर्विद्यत इति तु व्यवहारादिसिद्धशक्तिविषयः पदार्थः शक्य इति सुस्थमिति । तमिममर्थं मनसि निधायाह—**साच शक्तिरिति । शक्तिमात्रस्य** शक्तिसामान्यस्य । **पदार्थान्तरत्वादिति** । यदि सर्वैव शक्तिः पदार्थान्तरम्, तदा किमु वक्तव्यं शक्तिविशेषस्य पदनिष्ठस्य पदार्थान्तरत्व इति भावः ।

**ननु** पदानां कुत्र शक्तिरिति चेदत्र न्यायसिद्धान्तमञ्जर्यां चूडामणि-जानकीनाथभट्टाचार्या वदन्ति—"गोत्वविशिष्ट एव शक्तिः, नचोक्तदोषः ; गोत्वसामान्यलक्षणया सकलस्य गोरुपस्थितौ सर्वत्रैव गवि शक्तिग्रहसंभवादि"ति ॥

इदं च वाक्यं तर्कप्रकाशे एवं व्याख्यातम्—जातौ व्यक्तौ वैशिष्ट्ये च शक्तिरित्यर्थः"—इति । ननु—तत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति तत्प्रकारकतद्विशेष्यकशक्तिज्ञानस्य हेतुत्वमित्यायातम्, तच्च काशीस्थायां गवि शक्तिग्रहाभावात् बोधानापत्तिरूपबाधकग्रस्तमित्याशङ्कते—**नचेति । उक्तदोषः** शक्तिग्रहाविषयव्यक्तिबोधानापत्तिरूपदोषः । समाधत्ते—**गोत्वेति** । तथा च सामान्यलक्षणप्रत्यासत्त्योपस्थापिते सर्वत्रापि गवि शक्तिग्रहाच्छक्तिग्रहाविषयव्यक्तेरलीकतया तद्बोधानुपपत्तिरिति भावः ॥ एवंचास्मिन् मते न कोऽपि दोषः समापततीति ।

यदि तु सामान्यलक्षणा नाङ्गीक्रियते, तर्हि जातिविशिष्टे गव्येव शक्तिरङ्गीक्रियताम्, सर्वथा तु आकृतिशक्तिवादो न युक्तः ; तदुक्तं न्यायसिद्धान्तमञ्जर्याम्

"अस्तु वा एकत्रैव गवि शक्तिग्रहः। न चान्यबोधानापत्तिः, अन्यशक्तिज्ञानादन्यव्यक्तिभानेऽतिप्रसङ्गात् इति वाच्यम्; गोत्वविशिष्टशक्तिग्रहः गोत्वविशिष्टप्रत्यायक इत्येवमनतिप्रसङ्गादिति संप्रदायविदः। नव्यास्तु गव्येव शक्तिः, नतु गोत्वेऽपि, लक्ष्यतावच्छेदके लक्षणाया इव शक्यतावच्छेदके शक्तेर्ग्रहानुपयोगात्। नचैवं गोत्वप्रत्ययानापत्तिः; गोत्वावच्छिन्नशक्तिग्रहस्य गोत्वविशिष्टप्रत्यायकत्वादि"ति। अयमेव नैयायिकानां राद्धान्तः।

**मीमांसकास्तु**—न व्यक्तौ जातिविशिष्टव्यक्तौ वा शक्तिः; अनेकशक्तिकल्पनाप्रसङ्गात्, न चैकत्रैव गवि शक्तिग्रहेऽप्यदोषस्य पूर्वमुपपादितत्वात् न शक्त्यानन्त्यदोष इति वाच्यम्; एवमपि, अन्याय्यं चानेकार्थत्वमिति न्यायेनैकस्य शब्दस्य गोत्वे व्यक्तौ वैशिष्ट्ये चानेकशक्तिकल्पनाऽयोगेनावश्यकजातिशक्त्यैवेष्टसिद्धौ व्यक्तिशक्तिवादायोगात्। एतेन—गव्येव शक्तिरिति नव्यमतमपि—प्रत्युक्तम्; गवान्तरबोधानापत्तेः। किंच व्यक्तिशक्तिवादेऽनेककार्यकारणभावकल्पनाप्रसङ्गेन गौरवं भवति, जातिशक्तिवादे तु नैवमित्याकृतिशक्तिवाद एव युक्तः।

तदुक्तं भट्टदीपिकायाम्—"घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्य कारणत्वम्, पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्ताज्ञानस्य वा कारणत्वमित्यत्र विनिगमनाविरहेणानन्तकार्यकारणभावप्रसङ्गः, अस्मन्मते तु घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटत्ववत्ताज्ञानस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनाल्लाघवम्, नच ममापि विपरीतमापादयितुं शक्यम्, तथा सति घटत्वस्य धर्मित्वे स्वरूपेण धर्मित्वायोगात् घटत्वत्वेन तस्य प्रवेशे गौरवस्य त्वयैवोक्तत्वात्" इत्यादि॥

अत आकृतिशक्तिवाद एव युक्तः। एवंच "श्येनचितं चिन्वीते"ति वाक्यमपि सार्थकं भवति; श्येनाकारचयनविधानात्। नहि श्येनपक्षिभिः चयनं कर्तुं योग्यम्। अधिकमन्यत्र विस्तृतम्।

नन्वाकृतिशक्तिवादे गामानय, व्रीहीन् प्रोक्षतीत्यादौ व्यक्तीनां बोधः कथमिति चेत्, आक्षेपादिति केचन मन्यन्ते।

तत्राक्षेपो नामार्थापत्तिः। तथा च व्यक्तिबोधं विनाऽऽनयनादिक्रियान्वयाऽनुपपत्त्या लक्षणयाऽत्र व्यक्तिबोध इति पर्यवस्यति॥

सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया। तादृशशक्तिविषयत्वं शक्यत्वम्। तच्च जातेरेव, न व्यक्तेः; व्यक्तीनामानन्त्येन गुरुत्वात्। कथं तर्हि गवादिपदाद्व्यक्तिभानमिति चेत्, जातेर्व्यक्तिसमानसंवित्संवेद्यत्वादिति ब्रूमः।

इदं तु मतं न युक्तम्; गौरस्तीत्यत्रापि तदभावेन व्यक्तिबोधासंभवादिति जातेर्व्यक्तिसमानसंवित्संवेद्यत्वेन जातिभासकसामग्र्यैव व्यक्तेरपि भानमित्यपरे मन्वते।

तेषामयमाशयः—जातिविषयकशाब्दज्ञाने जातिशक्तिज्ञानस्य हेतुतया तद्बलात् जातिशाब्दबोधे जायमाने व्यक्तिरपि भासते। तत्पदशक्यतदविनाभूतान्यतरविषयकशाब्दबोधे तत्पदनिरूपितशक्तिज्ञानस्य हेतुत्वादिति।

गुरुमते तु जातौ व्यक्तौ च शक्तिः, परन्तु जातौ सा ज्ञायमाना कारणम्, व्यक्तौ तु स्वरूपसती। नच—जातिविशिष्टव्यक्तिशाब्दबोधे व्यक्तिशक्तिरेव ज्ञानकारणम् जातिशक्तिस्तु स्वरूपसती कारणं भवत्विति—वाच्यम्; एवं सति देशान्तरस्थगोविषयकव्यक्तिज्ञानाभावेन तद्बोधानापत्तेः। एतेन—जातिशक्तिज्ञानेन व्यक्तिभाने घटादीनामपि गोपदात् प्रतीत्यापत्तिरिति शङ्काऽपि—परास्ता; तत्पदशक्यविषयकशाब्दबोधं प्रति तत्पदशक्तित्वेन कारणत्वेन घटादीनां गोपदाशक्यानामबोधाद् इति।

नेदं मतं भाट्टानामभिमतम्। ते हि व्यक्तौ स्वरूपसती शक्तिरपि न गौरवादङ्गीकरणीयेति मन्यन्ते। अयमाशयः—कुब्जशक्तिमते व्यक्तिशक्तिज्ञानस्याहेतुतया तत्स्वीकारे प्रयोजनाभावः। न च—जातिशक्तिज्ञानस्याशक्यव्यक्तिज्ञानहेतुत्वे गोपदादशक्यस्य घटादेरपि भानापत्तिरिति—वाच्यम्, तज्जातिप्रकारकव्यक्तिविशेष्यकज्ञाने जातिविषयकशक्तिज्ञानत्वेनैवागत्या कारणत्वाङ्गीकारात्। तदुक्तं तन्त्रवार्तिके—आकृतिव्यक्त्योरत्यन्तभेदाभावात् कदाचिद्व्यक्तिरूपेणाकृतिरभिधीयते, कदाचित्सामान्यरूपेण यथा विवक्षितं तथा, शब्दस्योभयरूपवस्त्वर्थत्वाद् इति॥ अत एव गामानयेति चोदितेऽर्थप्रकरणाभावे यां कांचित् सामान्ययुक्तां गामानयति, न सर्वां न विशिष्टाम्। तदुक्तं वार्तिके—"यदि च व्यक्तेरभिधेयत्वं स्यात्, ततः सर्वासां युगपदभिहितत्वात् अशेषानयनं स्यात्।" "यदिचैका व्यक्तिरभिधेया भवेत्, व्यक्त्यन्तरे प्रयोगो न स्यात्; यदि स्यात्,

यद्वा गवादिपदानां व्यक्तौ शक्तिः स्वरूपसती न तु ज्ञाता हेतुः, जातौ तु सा ज्ञाता हेतुः, न तु व्यक्त्यंशे शक्तिज्ञानमपि कारणम्; गौरवात्, जातिशक्तिमत्त्वज्ञाने सति व्यक्तिशक्तिमत्त्व-ज्ञानं विना व्यक्तिधीविलम्बाभावाच्च। अत एव न्यायमते(ऽपि) अन्वयेऽपि शक्तिः स्वरूपसतीति सिद्धान्तः। ज्ञायमानशक्ति-विषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या। अथवा व्यक्तेर्लक्षणया अवगमः। यथा नीलो घट इत्यत्र नीलशब्दस्य नीलगुणविशिष्टे लक्षणा, तथा जातिवाचकस्य तद्विशिष्टे लक्षणा। तदुक्तम्—"अनन्यलभ्यः शब्दार्थः" इति। एवं शक्यो निरूपितः।

अश्वव्यक्तावपि कुतो न गोशब्दप्रयोगः प्राप्नोति? जात्या यदि व्यवस्था, तर्हि न ज्ञानभिधाय गोत्वम् उपलक्षणं भवतीत्याकृतिरेव शब्दार्थः इत्यादि।

तदेषु पक्षेषु भाट्टाभिमतं सिद्धान्तमादाय प्रथमतो जातावेव शक्तिः, व्यक्तेस्तत्समानसंवित्संवेद्यतया भानमिति पक्षानुसारेणाह—**तच्च जातेरेवेति** ॥

ननु पदवृत्त्यविषयस्य शाब्दबोधे न भानम्, अन्यथाऽन्वयेऽपि शक्तिकल्पनाया अयोगात्। अन्वयेऽपि शक्तिर्भाट्टैरङ्गीकृता। तदुक्तं न्यायसिद्धान्तमञ्जर्यां—भाट्टास्तु—अन्वयविशिष्टे शक्तिग्रहादन्वयेऽपि शक्तिरेवेत्याहुरिति ॥ अतो व्यक्तावपि स्वरूपसती, शक्तिरपेक्षितैवेति—गुरुमतानुसारेणाह—**यद्वेति** ॥

**ननु** यदि व्यक्तावपि शक्तिः, तर्हि कथं तच्च जातेरेवेति जातेरेव शक्यत्वमुक्तमित्याशङ्कायामाह—**ज्ञायमानेति** ॥ ननु यदि पदवृत्तिविषय-स्यैव शाब्दबोधे भानमिति नियमस्तर्हि व्यक्तौ लक्षणैवाङ्गीकर्तुं योग्या, न हि पदशक्तेः स्वरूपसत्त्वेन कारणत्वं कुत्रापि दृष्टम्, इत्याशयेनाह—**अथवेति**।

ननु शक्तिलक्षणाभ्यां जातिव्यक्त्योरुपस्थितौ वृत्तिद्वयविरोध इति चेत्, गङ्गायां मीनघोषौ स्त इत्यत्रेव युगपद्वृत्तिद्वयोपगमेऽपि बाधकाभावात्,

यदि तु युगपद्वृत्तिद्वयेनोपस्थितयोः प्रवाहतीरयोरिव जातिव्यक्त्योरपि विशेषण-विशेष्यभावेनान्वयासंभवात् न जातिविशिष्टव्यक्तिभानं स्यादिति चिन्त्यते, तर्हि जातेरपि व्यक्तिविशेषणतया लक्षणयैव भानं नीलपदेन नीलगुणस्येव भवति। अतो न दोष इत्याह—**यथा नील इति**॥

इदं च निदर्शनं—परमतरीत्या, न स्वमतरीत्या; नीलशब्दस्य नीलगुणत्व एव शक्त्या गुणिऽपि लक्षणाया एव युक्तत्वेन यथाश्रुते विरोधात्। यदि तु—मीमांसकानां निखिलद्रव्यवृत्ति नैल्यादिकमेकमेवेति यन्मतं विद्यते, तन्मत-माद्रियते, तर्हि नीलादिपदस्य नीलगुण एव शक्तिरिति स्वमतरीत्यापि निदर्शन-मिदमुपपद्यते। तदुक्तं भाट्टदीपिकायां आकृत्यधिकरणसिद्धान्ते—एवम् रूपादि-शब्दानामपि गुण एव शक्तिरिति।

**ननु**—यथा आकाङ्क्षादिवशादेव संसर्गस्य वाक्यार्थरूपस्य शाब्दबोधे भानमिति नव्यन्यायमतानुसारिणो मन्यन्ते, एवं पदशक्त्यविषयस्यापि पदार्थस्य शाब्दबोधे भानं भविष्यतीति व्यक्तौ लक्षणाङ्गीकारोऽपि वितथ एवेति—**चेत्, न;** गङ्गायां घोष इत्यत्रापि तीरस्य विनैव लक्षणां शाब्दबोधे भानसंभवेन लक्षणो-च्छेदापत्तेः, वाक्यार्थस्य वृत्तिं विनाऽपि भानेऽपि पदार्थस्य तथा भानासंभवात्। अतो जातिविशिष्टव्यक्तौ लक्षणैव युक्तेत्याह—**तथा जातिवाचकशब्दस्येति।**

**अनन्यलभ्यः** शक्तिलक्षणान्यतरमात्रविषयः। **शब्दार्थः** पदार्थः। पदार्थः अन्यतरविषय इति नियम इति भावः॥ **एवं** जातिशक्तिवादसमर्थनपूर्वकं व्यक्तेः प्रकारान्तरेण भानमिति निरूपणपूर्वकं च। **शक्यार्थः** जातिरूपः॥

**अत्रेदमालोचनीयम्**—परिभाषाकाराणाम् आकृतिरेव शब्दार्थ इति मीमांसकमतं किमभिप्रेतम्, उताकृतिविशिष्टव्यक्तिपरत्वमिति नैयायिकमतम्? कोऽस्य विचारस्य प्रसंग इति चेत्, अत्र प्रकरणे आकृतिरेव शब्दार्थः इति निरूपितम्; उत्तरत्र त्वजहल्लक्षणोदाहरणविचारप्रकरणे आकृतिविशिष्टव्यक्तिपरत्वं पदानां स्वीकृतम्। वक्ष्यते हि—यत्र विशिष्टवाचकशब्दः 'स्वार्थैकदेशं विहायैकदेशे वर्तते तत्राजहल्लक्षणेति। नचेदं सांप्रदायिकमतनिरूपणप्रकरण एव विद्यते, न स्वमतनिरूपणप्रकरण इति वाच्यम्; वयं तु ब्रूमः इत्यारभ्य क्रियमाणे

स्वमतनिरूपणेऽपि—"सोऽयं देवदत्तस्तत्त्वमसीत्यादौ विशिष्टवाचकानामेकदेशपरत्वेऽपि न लक्षणा" इत्यादौ विशिष्टवाचकत्वपक्षस्यैव निरूपणात्। नच—इदं पक्षद्वयमपि नैयायिकमतानुसार्येव नाद्वैतमतानुसारि, तदुक्तं शिखामणौ—"आकृतिविशिष्टव्यक्तिवाचकत्ववादिमतेनैतल्लक्षणप्रणयनात्, सिद्धान्ते च जहदजहल्लक्षणाया एवासिद्धेः लक्षणात्रैविध्यस्य मतान्तराभिप्रायत्वात् जातिशक्तिवादस्य चेति न कोऽपि विरोध इति—वाच्यम्; नह्यत्र पदार्थविभागादिकं सर्वं मतान्तरानुसारेण करणीयम्, किन्तु स्वमतेनैव। अन्यथा तत्र जाताविवेति मतान्तरनिरासस्य भ्रान्तिविलसितत्वापत्तेः। अतोऽत्र परिभाषाकाराणां किं मतमिति चेत्, जातिशक्तिवाद एव तेषां मतम्। नचोत्तरग्रन्थविरोधः; तस्य ग्रन्थस्य जातिशक्तिवादपक्षेऽप्यविरोधात्। नीलादिपदानां गुणे शक्तिरिति मतमप्याकृत्यधिकरणे मीमांसकैरङ्गीकृतम्। ब्रह्मानन्दसरस्वत्योऽपि एकव्यक्तिस्थले व्यक्तिशक्तिवादोऽपि मीमांसकानां संमत एवेति बिन्दुटीकायां वदन्ति। सोऽयं देवदत्त इत्यत्र देवदत्तपदमपि तेन न्यायेन व्यक्तिपरमित्यङ्गीकारे न कोऽपि दोषः। नच—निर्धर्मितावच्छेदककशाब्दबोधाभावात् कोऽपि धर्मो वाच्यतावच्छेदकोऽङ्गीकरणीय इति—वाच्यम्, आकाशादिपदस्येव स्वरूपमात्रशक्तावपि निर्वाहसंभवात्। एवंच देवदत्तादिशब्दानां विशिष्टवाचकत्वोपन्यासमात्रेण नाकृत्यधिकरणादिविरोधः।

एतेन—तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वंपदवाच्येन किंचिज्ज्ञत्वादिविशिष्टेनैति ग्रन्थोऽपि—व्याख्यातः। तत्पदार्थस्येश्वरस्याप्येकव्यक्तित्वात्। अन्तःकरणविशिष्टजीवास्तु यद्यपि नाना; तथापि अन्तःकरणविशिष्टपदेनात्र किंचिज्ज्ञत्वविशिष्टस्वरूपमेव विवक्षितम्; सर्वज्ञत्वं प्रति किंचिज्ज्ञत्वस्यैव विरोधात्। तच्चाविद्योपाधिकं स्वरूपमेवेति तत्प्रतिबिम्बपक्षेण जीवस्याप्येकत्वान्न विरोधः।

वस्तुतस्तु—यथाऽऽकाशस्य घटमठाद्युपाधिनिबन्धनभेदवत्त्वेऽपि एकव्यक्तित्वमेव, तथा जीवस्यापि काल्पनिकस्यैव भेदस्याङ्गीकारादन्तःकरणोपाधिकत्वेऽप्येकव्यक्तित्वमेवेति त्वंपदस्यापि विशिष्टपरत्वे नाकृत्यधिकरणं विरुद्धम्॥ "यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वावगमः" इत्यादिनिदर्शनग्रन्थस्तु परमतानुसारेणेति न दोषः। एवंच जातिरेव शक्यार्थं इति युक्तम्॥

**अथ लक्ष्यपदार्थो निरूप्यते। तत्र लक्षणाविषयो लक्ष्यः। लक्षणा च द्विविधा—केवललक्षणा लक्षितलक्षणा चेति। तत्र शक्यसाक्षात्सम्बन्धः केवललक्षणा, यथा गङ्गायां घोष इति। अत्र**

एतेन—नन्वाकृतिः शब्दार्थं इत्युपगमाद्देवदत्तादेः शक्यैकदेशत्वाभावादसंभव इति चेत् न; आकृतिविशिष्टव्यक्तिवाचकत्ववादिमतेनैतल्लक्षणप्रणयनात्" इति शिखामणिग्रन्थ आपातरमणीय इति—सूचितमिति॥

ननु—अथवा व्यक्तेर्लक्षणया बोध इत्युक्तमसङ्गतम्; लक्षणायां मानाभावात्। नच गङ्गायां घोषः प्रतिवसतीति व्यवहारानुपपत्तिस्तत्र प्रमाणम्; तीरेऽपि शक्तिकल्पनयैव तदुपपत्तौ लक्षणाया निर्मूलत्वादिति—चेत्,

तत्र न्यायसिद्धान्तमञ्जरीकृतः—"लक्षणीयपदार्थानामनन्ततया सर्वत्र शक्तिकल्पने गौरवम्, शक्यसम्बन्धरूपा लक्षणा तु क्लृप्ता। एवमेकसम्बन्धि-ज्ञानस्यापरसम्बन्धिस्मारकतया गङ्गापदजन्योपस्थितेः शक्यसम्बन्धरूपलक्षणाजन्य-त्वमपि क्लृप्तमेव। लक्षणाजन्योपस्थितेः शाब्दबोधानुकूलत्वमात्रं कल्पनीयम्, शक्तिस्वीकारे त्वतिरिक्तधर्मिकल्पनमिति धर्मिकल्पनातो धर्मकल्पना साधीयसीति तीरे लक्षणैवेति—वदन्ति। तमिममर्थं मनसि निधायाह—**अथ लक्ष्यपदार्थो निरूप्यते इति**॥

ननु—एतावता वृत्तिर्द्विविधा शक्तिर्लक्षणा चेति निरूपितं भवति, नैतद्युक्तम्, गौण्यादिवृत्त्यन्तरस्यापि सत्त्वादित्यतः वृत्त्यन्तराणां लक्षणायामेवान्तर्भावं निरूपयितुं शक्यसम्बन्धस्य लक्षणासामान्यरूपत्वं सूचयन् लक्षणां विभजते—**लक्षणा द्विविधेति**॥

अत्र प्राचीननैयायिकाः—लक्षितलक्षणा वृत्त्यन्तरमेव। द्विरेफपदेन द्वौ रेफौ यत्रेति व्युत्पत्त्या भ्रमरपदं लक्ष्यते। भ्रमरपदेन स्वशक्यभ्रमरो लक्ष्यते इति द्विरेफपदे लक्षितलक्षणा। नच—द्विरेफलक्ष्यभ्रमरपदस्य शक्त्यैव निर्वाहेऽलं लक्षणयेति—वाच्यम्; प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमे-न भ्रमरस्य द्विरेफपदार्थत्वाभावे द्विरेफं पश्येति वाक्यानर्थक्यापत्त्या द्विरेफपदस्यैव लक्षितलक्षणया भ्रमरार्थकत्वावश्यकत्वात्। नच—शक्यतावच्छेदकस्यैव

प्रवाहसाक्षात्सम्बन्धिनि तीरे गङ्गापदस्य केवललक्षणा। यत्र शक्यपरम्परासम्बन्धेन अर्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा, यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपदघटितपरम्परासम्बन्धेन मधुकरेषु वृत्तिः। गौण्यपि लक्षितलक्षणैव, यथा सिंहो माणवक इति। अत्र सिंहशब्दवाच्यसम्बन्धिक्रौर्य्यादिसम्बन्धेन माणवकस्य प्रतीतिः।

लक्ष्यतावच्छेदकतया भानं नास्तीति शक्यादन्येन रूपेण लक्षणा भवतीत्यादि प्रमाणादेव गम्यते। एवंच लक्षितभ्रमरपदेन भ्रमरस्यालक्षणात् कथं लक्षितलक्षणात्वमिति—वाच्यम्; शक्यादन्येन रूपेण लक्षणेति नियमे शक्त्यैव बोधसंभवे लक्षणाकल्पनं विफलमित्येव बीजम्। अत्र तु विभक्त्यर्थान्वयानुपपत्त्या शक्यस्यैव लक्षणया भानमुपेयते। एवंच लक्षितस्य पदस्य लक्षणा। सा च द्विरेफपदस्य वृत्तिरिति—वदन्तीति प्राचीनमतमनूद्य न्यायसिद्धान्तमञ्जर्यां—तत्र शक्यसम्बन्धो हि लक्षणा न तु शक्यस्य साक्षात्सम्बन्धः; गौरवात्। एवं च साक्षात् परंपरासम्बन्धेन लक्षणैव लक्षणेति द्विरेफपदलक्षणयैवोपपत्तेर्नातिरिक्तवृत्तिकल्पनेति निरूपितम्॥

एतमर्थं मनसि निधायाह—लक्षितलक्षणा चेति। केवललक्षणां गङ्गायां घोष इत्यत्र समन्वयीकरोति—यथा गङ्गायामिति॥ लक्षितलक्षणालक्षणमुपपादयन् द्विरेफपदे तत्सङ्गमयति—यत्र शक्यपरम्परासम्बन्धेनेत्यादिना॥

ननु—सिंहो माणवक इत्यत्र सिंहशब्दस्य सिंहत्वसमानाधिकरणक्रौर्यसम्बन्धरूपपरम्परासम्बन्धेन माणवकवृत्तित्वात् गौण्यपि लक्षितलक्षणैव, न त्वतिरिक्ता वृत्तिरिति स्यादित्याशङ्कामिष्टापत्त्या परिहरति—गौण्यपीति॥ अत एव लक्षणा द्विविधा गौणी शुद्धा चेति न्यायसिद्धान्तमञ्जर्यां विभाग उपपद्यते॥

पुनर्लक्षणां विभजते—प्रकारान्तरेणेति॥ जहल्लक्षणाया विषयमाह—यत्रेति। अशक्यार्थमात्रवृत्तिर्लक्षणा जहल्लक्षणेति भावः।

प्रकारान्तरेण लक्षणा त्रिविधा—जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति। तत्र शक्यार्थमनन्तर्भाव्य यत्र अर्थान्तरप्रतीतिः तत्र जहल्लक्षणा, यथा विषं भुङ्क्ष्वेति। अत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते। यत्र शक्यार्थमन्तर्भाव्यैव अर्थान्तरप्रतीतिः तत्र अजहल्लक्षणा, यथा शुक्लो घट इति। अत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये

ननु—किमस्या लक्ष्यमिति चेत् गङ्गायां घोष इत्यत्र गङ्गापदमिति केचित्। अन्येतु—गङ्गापदेन गङ्गासम्बन्धितीरस्यैव लक्षणात् तत्राजहत्स्वार्थैवेति मन्यन्ते। अतो विवादग्रस्तत्वाद् विवादाविषयं लक्ष्यमाह—यथा विषं भुङ्क्ष्वेति॥

शत्रुगृहे भोक्तुं गच्छन्तं कमपि दृष्ट्वाऽऽप्तः कोऽपि वदति—विषं भुङ्क्ष्वेति। अस्य हि वाक्यस्याप्तोच्चारितस्य विषभोजनं कर्तव्यमिति नार्थः; तस्य प्रवृत्तिनिवृत्त्यन्यतरानुपयोगित्वेनाप्रामाण्यापत्तेः। न हि विषभोजने कोऽपि प्रवर्तेत। अतः—शत्रुगृहान्नं विषसदृशत्वात् विषपदेनात्रोच्यते। भुङ्क्ष्वेत्यनेन च तद्भोजनाकर्तव्यत्वं प्रतिपाद्यते। एवं च शत्रुगृहान्नं न भक्षणीयमित्ययमर्थः विषादिशक्यार्थानन्तर्भाविनैव पर्यवस्यतीति जहल्लक्षणासमन्वयः।

**स्वार्थं शुक्लगुणमिति।** यथा चात्र शुक्लशब्दस्य गुणत्वपरत्वाभावेऽपि गुणव्यक्तिपरत्वेऽपि च नाक्तव्यधिकरणविरोधस्तथा पूर्वमेव निरूपितम्। **तद्वति द्रव्ये लक्षणयेति।** लुप्तमतुबन्तस्याप्यस्य पदस्य न शक्त्या द्रव्यपरत्वम्, "गुणिलिङ्गास्तु तद्वति" इत्यनुशासनादीनां लाक्षणिकार्थमादायैव प्रवृत्तेः। अतो न विरोधः।

ननु—लक्षणा त्रिविधा, जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति लक्षणायास्त्रैविध्यं यदुक्तम्, तत्र जहदजहल्लक्षणाया उदाहरणाभावात्तदयुक्तमित्याशङ्कानिरासपूर्वकं तत्त्वमसीति वाक्यघटकयोस्तत्त्वम्पदयोस्तत्समन्वयं करोति—**यत्रेति।**

लक्षणया वर्त्तते। यत्र हि विशिष्टवाचकः शब्दः एकदेशं विहाय एकदेशे वर्त्तते तत्र जहदजहल्लक्षणा, यथा सोऽयं देवदत्त इति। अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम्। यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वम्पदवाच्येन अन्तःकरणविशिष्टेनैक्यायोगात् ऐक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिकाः।

यथा चात्र विशिष्टवाचकत्वोपन्यासो नाकृतिशक्तिवादप्रतिकूलस्तथा पूर्वमेव विवेचितम्। एवं च सिद्धान्ते जहदजहल्लक्षणाया एवासिद्धिरिति शिखामणिग्रन्थचिन्त्योपपत्तिक एव।

ननु—तत्त्वमसीत्यत्र न जहदजहल्लक्षणा युक्ता। लक्षणाया हि वृत्तिरूपायाः शक्तेरिव ज्ञानद्वारा पदार्थोपस्थापकत्वेनैवोपयोगः। न चात्र स्वरूपचैतन्यस्य पूर्वमनुभवमन्तरा स्मरणं सम्पादयितुं शक्यते। तत्र स्वरूपचैतन्यस्य पूर्वमनुभवे वेदान्तवैयर्थ्यम्। एवं च लक्षणया स्वरूपचैतन्यस्य बोधो नात्र युक्तः। ननु—सुषुप्तौ स्वरूपचैतन्यस्याऽऽविद्यकवृत्तिविषयत्वाङ्गीकारात् तत्स्मरणोपपत्तिः। सुषुप्तौ आविद्यकवृत्त्यनङ्गीकर्तृवार्तिकमते त्वसंप्रज्ञातसमाधौ तदनुभवात्तदुपपत्तिः। यद्यप्यसंप्रज्ञातसमाधिः सकलचित्तवृत्तिनिरोध एव, न तु तत्र कस्या अपि वृत्त्या भानमिति केषांचन सिद्धान्तः; तथापि—आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीतेत्यादिवचनानुगृहीतवेदान्तसारानुसारिमतेऽसंप्रज्ञातसमाधावप्यात्ममात्रभानं विद्यत एवेति न दोषः। यदि तु गूढार्थदीपिकाकारसिद्धान्तेनासंप्रज्ञातसमाधिनाऽपूर्वद्वाराऽऽत्मसाक्षात्कारो जायते, न तु स एव साक्षात्कार इति मतमाद्रियते, एवमपि तेनानुभवेन स्मरणोपपत्तिरिति सिद्धान्तबिन्दुतट्टीकयोरुपवर्णितम्। एवंच लक्षणोपगमेऽपि तत्त्वमसीतिवाक्यस्य प्रामाण्योपपत्तिरिति—चेन्न; असंप्रज्ञातसमाधिं विनाऽपि तत्त्वमसीति वाक्यस्य प्रामाण्यस्यावश्यकत्वेनैवमपि तदसिद्धेः। अयं भावः—

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।
असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिर्णयः" ॥

वयन्तु ब्रूमः सोयं देवदत्तः तत्त्वमसीत्यादौ विशिष्ट-वाचकपदानाम् एकदेशपरत्वेऽपि न लक्षणा, शक्त्युपस्थितयोः विशिष्टयोरर्थयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थि-तयोरेवाभेदान्वयाविरोधात्। यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्य अयोग्यत्वेऽपि योग्यघटव्यक्त्या सह अनित्यत्वान्वयः। यत्र पदार्थैकदेशस्य विशेषणतया उप-स्थितिः तत्रैव स्वातन्त्र्येण उपस्थितये लक्षणाभ्युपगमः, यथा

इति योगवासिष्ठवचनेन ह्येदमवगम्यते, यद् योगमार्गं विनाप्यात्मसाक्षात्कारः कर्ममार्गेण संपादयितुं शक्यते इति। तत्र यदि योगमार्गं विना कर्ममार्गेण कोऽपि संचरते, तर्हि तत्त्वमसीतिवाक्यादात्मसाक्षात्कारो न भवेत्। अस्तु वा कथंचित् लक्षणापक्षेऽपि स्वरूपचैतन्योपस्थितिसंपादनम्, एवमपि लाक्षणिकं पदं नानुभावकमिति सिद्धान्तात् सर्वपदलाक्षणिकत्वेऽनुभावकत्वं तत्त्वमसीति वाक्यस्य न स्यात्। एवं च तत्त्वमसीतिवाक्यस्य प्रामाण्यं तल्लाक्षणिकत्वपक्षे न स्यादित्यस्वरसात् सांप्रदायिकमतं परित्यजन् स्वाभिप्रायमाह—वयं तु ब्रूम इति॥ अन्वयबोधाविरोधादिति।

अयं भावः—विशिष्टशक्तिज्ञानेनोपस्थापितयोर्विशेषणविशेष्ययोस्तात्पर्याद्यनु-सारेण विशेष्यमात्रान्वयबोधोऽपि संभवति, न हि शक्तिज्ञानेनोपस्थितस्य सर्वस्यापि शाब्दबोधे भानमिति नियमः। अत एव हि शब्दाश्रयत्वविशिष्टशक्तेनाकाशपदेनो-पस्थितस्यापि शब्दाश्रयत्वस्य तात्पर्याभावे शुद्धाकाशस्याकाशोऽस्तीत्यादौ बोध इति मणिकाराद्युक्तमुपपद्यते। विस्तरस्त्वस्य बिन्दुटीकायां द्रष्टव्यः। एवं च लक्षणां विनाऽपि शक्त्यैव तत्त्वमसीतिवाक्यस्याखण्डार्थत्वमुपपद्यते इति॥ शक्त्युपस्थापितस्य सर्वस्यापि नान्वयबोधो नियत इत्यत्र परेषामपि संमतिमाह—यथेति॥

अयं तु ग्रन्थः परमतानुसार्येव, न स्वमतानुसारी, स्वमते घटपदस्य विशिष्टशक्तत्वाभावात्। नच—घटोऽनित्य इत्यत्रापि जहदजहल्लक्षणैव विव-

नित्यो घट इत्यत्र घटपदात् घटत्वस्य शक्त्या स्वातन्त्र्येण अनुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा। एवमेव तत्त्वमसीत्यादिवाक्येऽपि न लक्षणा, शक्त्या स्वातन्त्र्येण उपस्थितयोः तत्त्वम्पदार्थयोरभेदान्वये बाधकाभावात्। अन्यथा गेहे घटः, घटे रूपम्, घटमानय, इत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वे लक्षणा स्यात्। तस्मात् तत्त्वमसीत्यादिवाक्येष्वाचार्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या। जहदजहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्याद्येव, तत्र शक्यकाकत्वपरित्यागेन अशक्यदध्युपघातकत्वपुरस्कारेण काकेऽकाकेऽपि काकशब्दस्य प्रवृत्तेः।

चिता न तु शक्तिरिति लक्षणां विना शक्यैकदेशोपस्थितिः कुत्रापि न दृष्टेति—वाच्यम्; जहदजहल्लक्षणोदाहरणं तत्त्वमसीति वाक्यमेवेति नैयायिकानामुद्घोषेण घटोऽनित्य इत्यादौ शक्त्यैव विशेष्यमात्रबोधस्य निर्वहणीयत्वात्। तथा च विशिष्टशक्तिज्ञानेन विशेष्यमात्रान्वयबोधस्तात्पर्यानुसारेण भवतीत्यस्य परेषामपि संमतत्वात् यथा घटोऽनित्य इत्यत्र व्यक्तिमात्रस्यानित्यत्वेन सहान्वयः, तथा तत्त्वमसीत्यत्रापि विशेष्यमात्रयोस्तात्पर्यानुसारेण स भवतीति न तदर्थं जहदजहल्लक्षणोरीकरणीया। न च तावता त्रैविध्यविभागानुपपत्तिः; काकेभ्यो दधि रक्ष्यतामिति विषयमादाय जहदजहल्लक्षणाया अपि सार्थकस्य वक्ष्यमाणत्वात्॥

नन्वेवं सति नित्यो घट इत्यत्रापि शक्त्यैव घटत्वस्य बोधोपपत्त्या तत्र लक्षणया तद्बोध इति प्रामाणिकव्यवहारो नोपपद्यते इत्यत आह—यत्रेति॥ स्वातन्त्र्येणोपस्थितये विशेष्यतयोपस्थितये। पदार्थः पदार्थेनान्वेति न तदेकदेशेनेति न्यायोऽपि पदजन्यप्रतीतिविशेष्ययोरेव परस्परान्वय इत्यभिप्राय एव।

ननु—विशिष्टवाचकस्य विशेष्यमात्रपरत्वमपि लक्षणाधीनमेव, तदेकदेशत्वसाम्यात्, वाच्यैकदेशपरत्वस्य तत्र प्रयोजकत्वात्। एवं च घटोऽनित्यः

लक्षणाबीजन्तु तात्पर्यानुपपत्तिरेव, न तु अन्वयानुपपत्तिः। काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्तेरभावात्, गङ्गायां घोष इत्यादौ तात्पर्यानुपपत्तेरपि सम्भवात्।

तत्त्वमसीत्यादावपि लक्षणैवेत्यत आह—**अन्यथेति**। विशेष्यमात्रस्यान्वयबोधार्थमपि लक्षणास्वीकारे। **स्यादिति**। न चेष्टापत्तिः; अपसिद्धान्तात्, शक्त्यैव स्वातन्त्र्येणोपस्थित्याऽन्वयबोधोपपत्तौ पुनस्तदुपस्थित्यर्थमेव लक्षणाकल्पनस्यान्याय्यत्वादिति भावः।

ननु—काकेभ्यो दधि रक्ष्यतामित्यत्र शक्याशक्योभयोपस्थितिः कथम्? अनुगतलक्ष्यतावच्छेदकाभावादित्यत आह——**अशक्यदध्युपघातकत्वधर्मपुरस्कारेणेति**॥ तथाचेदमेवानुगतलक्ष्यतावच्छेदकमिति भावः। अत्रादिपदेन छत्रिणो गच्छन्ति इत्यादिवाक्यसंग्रहः। तत्र तु छत्राच्छत्रिघटितसमुदायघटकत्वधर्मपुरस्कारेण छत्रिणामच्छत्रिणाम् उभयेषां च परिग्रहः—स्रष्टारूपदधातीत्यत्र स्रष्टिपदेन स्रष्टिपदघटिततदघटितमन्त्रसमुदायघटकमन्त्रोपधेयानां सप्तदशानामिष्टकानां ग्रहणमिव। स्रष्टिपदस्य स्रष्ट्यस्रष्टिमन्त्रसमुदायोपधेयेष्टकापरत्वं तत्सिद्धिपिटिकायां भूमोदाहरणविचारे पूर्वमीमांसायां प्रथमाध्यायस्य चतुर्थपादे निर्णीतम्॥ **अकाकि** श्वमार्जारादौ। **काकि** वायसे च। **प्रवृत्तेः** बोधकत्वात्।

एतावता प्रबन्धेन लक्षणावृत्तिर्निरूपिता, इदानीं तत्र बीजं तात्पर्यानुपपत्तिरेव नान्वयानुपपत्तिरिति निरूपयति—**लक्षणाबीजं त्विति**॥ "लक्षणाबीजत्वं हि न लक्षणाजनकत्वम्; गङ्गातीरयोः सम्बन्धस्यानुपपत्तिज्ञानजन्यत्वाभावात्, नापि तज्ज्ञापकत्वम्; अनुपपत्तिज्ञानमन्तरेणापि सम्बन्धस्य चक्षुरादिना ग्रहात्। नापि तात्पर्यग्राहकत्वम्, उपक्रमोपसंहारादितोऽपि तद्ग्रहात्। अथ लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेन्न; यष्टीः प्रवेशयेत्यत्र व्यभिचारात्। तात्पर्यविषयानुपपत्तिरप्यत्रास्तीति चेत्, तर्हि तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्तु" इत्यादिना लक्षणायां तात्पर्यानुपपत्तिरेव बीजम्,

न मुख्यार्थेन इतरपदार्थान्वयानुपपत्तिरित्युक्तं न्यायसिद्धान्तमञ्जर्याम्, तदनुसारेणाह—**तात्पर्यानुपपत्तिरेवेति। नत्वन्वयानुपपत्तिरिति ॥**

सामान्यतोऽन्वयानुपपत्तिः काकेभ्यो दधि रक्ष्यतामित्यत्र नास्तीति तात्पर्यविषयान्वयानुपपत्तिरेव बीजमित्यङ्गीकरणीयम्, तत्र च लाघवात् तात्पर्यानुपपत्तिरेव तद्बीजमिति युक्तमिति भावः। गङ्गायां घोष इत्यत्रापि तात्पर्यानुपपत्त्यैव लक्षणाश्रयणमिति न दोष इत्याह—**गङ्गायामिति ॥**

एतेन—व्यञ्जनाया अपि वृत्त्यन्तरत्वं—प्रत्युक्तम्; लक्षणयैव निर्वाहात् ॥ इयं च लक्षणा पदमात्रवृत्तिर्न वाक्यवृत्तिरिति नैयायिका मन्यन्ते। तेषामयमाशयः—शक्यसम्बन्धो हि लक्षणा, शक्तिश्च पद एव न वाक्ये इति वाक्ये लक्षणाया असंभवः। नच—स्वबोध्यसम्बन्ध एव लक्षणेति वाच्यम्; अन्यथा गभीरायां नद्यां घोष इत्यत्र गभीरनदीपदाभ्यां सप्तम्यन्ताभ्यां गभीरनदीसम्बन्धितीरप्रतीत्यसंभवेन तदसाधुतापत्तेः। एवं च वाक्येऽपि लक्षणा सिद्धैव। वाक्येन हि यद्यपि न शक्यगभीरत्वविशिष्टतीरं बोध्यते; तथापि समभिव्याहारादिना तत् बोध्यते इति सर्वमुपपद्यते इति—वाच्यम्; स्वबोध्यसम्बन्धस्य लक्षणात्वेऽपभ्रंशानामपि लाक्षणिकत्वेन साधुतापत्तेः शक्यसम्बन्धस्यैव लक्षणात्वोपगमस्यावश्यकत्वात्। किंच गभीरायां नद्यामित्यत्र न विभक्त्यन्तभागस्य तीरे लक्षणा; घोषे तदाधारकताप्रत्ययानापत्तेः, नापि गभीरायां नदीतिभागस्य; अस्याबोधकत्वात्, बोधकत्वे वा लक्ष्ये विभक्त्यर्थानन्वयापत्तेः। नहि स भागः प्रकृतिः, येन तदर्थस्य विभक्त्यर्थेनान्वयः स्यात्। अतएव हि गभीरायामिति सप्तमीश्रवणोपपत्तिः; अन्यथा सुपो धातुप्रातिपदिकयोरिति तस्यालुक्प्रसङ्गात्। तथा च पदमात्रवृत्तिर्लक्षणेति।

तदिदं मीमांसका न सहन्ते। अयमेषामभिप्रायः—"वाक्येऽपि लक्षणा विद्यते एव। नहि शक्यसम्बन्ध एव लक्षणा, किन्तु बोध्यसम्बन्ध एव। बोधकत्वं च वाक्यस्यापि विद्यते। अतो वाक्येऽपि लक्षणाऽङ्गीकरणीया। अतएव गभीरायां नद्यां घोष इति वाक्यप्रामाण्यं सिध्यति। तत्र हि गभीरायां नद्यामिति पदद्वयेऽपि गभीरनदीतीराधारत्वे लक्षणाङ्गीकरणेनैव प्रामाण्यनिर्वाहः। यदि गभीरपदमात्रे लक्षणा, तर्हि नद्यांपदवैयर्थ्यापत्तिः। यदि नद्यांपदे लक्षणा, तर्हि गभीरायामिति पदवैयर्थ्यापत्तिः। अभ्युपगतं हि नैयायिकैरपि पङ्कजादिशब्दानामनेकवाचकघटितानां वाक्यानामपि लक्षणया पद्ममात्रबोध-

लक्षणा च न पदमात्रवृत्तिः, किन्तु वाक्यवृत्तिरपि, यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्यामिति पदद्वय-समुदायस्य तीरे लक्षणा।

ननु वाक्यस्याशक्ततया कथं शक्यसम्बन्धरूपा लक्षणा? उच्यते, शक्त्या यत् पदसम्बन्धेन ज्ञाप्यते तत्सम्बन्धो लक्षणा, शक्तिज्ञाप्यश्च यथा पदार्थः तथा वाक्यार्थोऽपि इति न काचिद् अनुपपत्तिः।

एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा। सोऽरोदीत् इत्यादिनिन्दार्थवादवाक्यानां निन्दितत्वे लक्षणा। अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन

कत्वम्। किंच यदि वाक्ये न लक्षणा, तर्हि "वायुर्वै क्षेपिष्ठा देवते"त्यादिवाक्यानां बहूनामानर्थक्यापत्तिः। "स्वाध्यायोऽध्येतव्य" इति हि विधिः क्रतुपर्यवसान-द्वाराऽपूर्वोपयोग्यर्थज्ञानजनकत्वं संभवतां सर्वेषामपि वैदिकानां पदानां नियमयति। यदि पदमात्रे लक्षणा, तर्हि "वायुर्वै" इत्यादौ एकेनैव पदेन कर्मप्राशस्त्यलक्षणोपपत्तेः सर्वेषां पदानां वैयर्थ्यापत्तिः। यदि तु वाक्ये लक्षणा, तर्हि सर्वेषामपि सार्थक्यं स्पष्टमिति। तदिदं मीमांसकमतं मनसि निधायाह—

लक्षणा चेति॥ तीरे इति॥ तीराधारत्वे इत्यर्थः। एतेन—विभक्त्यन्तस्य तीरलक्षकत्वे घोषे तदाधारकत्वप्रतीत्यनुपपत्तिरिति न्यायसिद्धान्त-मञ्जरीप्रतिपादितो दोषः—परास्तः॥

वाक्यस्याशक्ततयेति। नैयायिकानां मते आकाङ्क्षादिभिरेव संसर्गस्य ज्ञातत्वात् न वाक्ये शक्तिः, मीमांसकानां मते तु यद्यप्यन्विताभिधानवादे पदे स्वरूपसतो संसर्गेऽपि शक्तिर्विद्यते; तथाप्यभिहितान्वयवादे पदे संसर्गशक्तेरनभ्यु-पगमात् न वाक्यस्य पदसमुदायस्य शक्तत्वमिति भावः॥

तथा वाक्यार्थोऽपीति॥ अन्विताभिधानवादे संसर्गेऽपि स्वरूपसत्याः

लक्षणया तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात्। एवञ्च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतया अर्थवादपदसमुदायस्य पदस्थानीयतया विधिवाक्येनैकवाक्यत्वं भवतीति अर्थवाद-वाक्यानां पदैकवाक्यता। क्व तर्हि वाक्यैकवाक्यता? तत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोः वाक्ययोः आकाङ्क्षावशेन

शक्तेः पदेष्वभ्युपगमात् संसर्गरूपो वाक्यार्थः शक्तिग्राह्य इत्यत्र न विवादः। अभिहितान्वयवादेऽपि पदाभिहितपदार्थनिष्ठायाः शक्त्याः वाक्यार्थानुभाविकाया अङ्गीकारात् परंपरया शक्तिग्राह्यत्वं वाक्यार्थस्य सुसंपादमिति शक्तिग्राह्यसम्बन्ध-रूपा लक्षणा वाक्येऽपि संभवतीति भावः।

एवं वाक्यलक्षणासिद्धौ। निन्दा, प्रशंसा, परकृतिः पुराकल्पश्चेति चतुर्विधत्वेनार्थवादस्य परिगणनेऽपि परकृतिपुराकल्पयोरपि निन्दाप्रशंसयोरेवान्तर्भावात् वस्तुगत्याऽर्थवादस्य द्वैविध्यमेव। तत्र च प्रशंसार्थवादानां प्राशस्त्येऽध्ययनविधि-सार्थक्यार्थं लक्षणाऽङ्गीकृता। एवं निन्दार्थवादानां निन्दायाम्। विधिर्हि पुरुषं प्रवर्तयितुं भिषग्वाक्यमिव स्वविषयस्य कथमपि प्राशस्त्यमपेक्षते, तच्च प्राशस्त्यम् अर्थवादेन ज्ञाप्यते। तच्च प्राशस्त्यम् अर्थवादज्ञापितं विधौ इति-कर्तव्यतात्वेन पदैकवाक्यतयाऽन्वेतीति बहवः।

माधवाचार्यास्तु न प्राशस्त्यमितिकर्तव्यता, किन्तु तज्ज्ञानमेव; तच्च प्राशस्त्यस्यार्थवादार्थत्वेऽपि तज्ज्ञानस्यातथात्वात् "नहि शाब्दमशाब्देनान्वेती"ति न्यायेन न प्राशस्त्यज्ञानस्य विधौ पदैकवाक्यतयाऽन्वयः, किन्तु वाक्यैकवाक्यतयेति मन्यन्ते। अयं च पक्षो जैमिनीयन्यायमालाविस्तरेऽर्थवादाधिकरणे भाट्ट-मतनिरूपणावसरे निरूपितः।

खण्डदेवास्तु—भाट्टरहस्ये प्राशस्त्यमेवेतिकर्तव्यता, न तु तज्ज्ञानमिति विध्यर्थवादयोः पदैकवाक्यतैव; अर्थवादानां स्वार्थबोधेन समाप्तप्रभावात्। तत्रापि—यजमानः प्रस्तरः इत्यादौ वाक्यैकवाक्यतैवेत्यादि—निरूपयन्ति।

तत्र बहुसंमतत्वात् पदैकवाक्यतैव विध्यर्थवादयोर्युक्तेत्यभिप्रेत्याह—एवंच विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतयेति॥

महावाक्यार्थबोधकत्वम्, यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिवाक्यानां "समिधो यजती"त्यादिवाक्यानाञ्च परस्परापेक्षिताङ्गाङ्गिभावबोधकवाक्यतया एकवाक्यता। तदुक्तं भट्टपादैः—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते। इति।

एवं द्विविधोऽपि पदार्थो निरूपितः, तदुपस्थितिश्च आसत्तिः,

यत्र शक्तिलक्षणान्यतरज्ञानाधीनस्मृतिविषययोः पदार्थयोः परस्परान्वयः तत्र पदैकवाक्यता, यत्र तु अन्विताभिधानमतेन—पदनिष्ठस्वरूपसच्छक्तिज्ञाप्ययोः वाक्यार्थयोरभिहितान्वयवादेनाभिहित-पदार्थनिष्ठ-शक्तिज्ञाप्ययोर्वाक्यार्थयोरन्वय-बोधस्तत्र वाक्यैकवाक्यतेति निष्कर्षः। अर्थवादानां तु लक्षणाज्ञानद्वारैव प्राशस्त्यस्मारकत्वात् विध्यर्थेन पदैकवाक्यतैव, प्रयाजदर्शपूर्णमासयोस्तु वाक्यैक-वाक्यतयाऽन्वय इत्यन्यत्र विस्तरः॥

**परस्परापेक्षिताङ्गाङ्गिभावबोधकतयेति॥** दर्शपूर्णमासापेक्षिता-ङ्गबोधकं प्रयाजवाक्यं प्रयाजापेक्षिताङ्गिबोधकं दर्शपूर्णमासवाक्यमिति भावः। वाक्यैकवाक्यत्वं पर्यवसितार्थानामेव वाक्यानामित्यत्र भट्टपादोक्तिं प्रमाणं दर्शयति—**तदुक्तमिति। अङ्गाङ्गित्वाद्यपेक्षयेति।**

एकवाक्यत्वमित्यनेन सम्बन्धः। स्वघटकपदाभिहितपदार्थानुभावितयो-र्वाक्यार्थयोः पुनरपि वाक्यलिङ्गकल्पनाद्वाराऽङ्गाङ्गिभावबोधकत्वादेकवाक्यत्वं भवति—प्रयाजैर्दर्शपूर्णमासौ संपादयेदिति भावः।

**तदुपस्थितिरिति।** तत्स्मरणमित्यर्थः। अत्र तदुपस्थितिर्येत्यस्या-व्यवधानेनेति शेषः पूरणीयः। तेन न विरोधः॥

आसत्तिः शाब्दबोधं प्रति कारणम्; अन्वयव्यतिरेकाभ्यां तदवगमात्, इत्याह-

सा चेति।

सा च शाब्दबोधे हेतुः, तथैवान्वयव्यतिरेकदर्शनात्। एवं महावाक्यार्थबोधे अवान्तरवाक्यार्थबोधो हेतुः, तथैवान्वयाद्यवधारणात्।

क्रमप्राप्तं तात्पर्यं निरूप्यते। तत्र तत्प्रतीतीच्छयोच्चरितत्वं न तात्पर्यम्। अर्थज्ञानशून्येन पुरुषेणोच्चरितात् वेदात् अर्थप्रत्ययाभावप्रसङ्गात्, अयमध्यापकोऽव्युत्पन्न इति

तथैवेति। यथा हेतुस्तथैवेत्यर्थः॥ यदा यदा आसत्तिः, तदा तदा शाब्दबोधः, इत्यन्वयदर्शनम्, यदा यदाऽऽसत्त्यभावः तदा तदा शाब्दबोधाभाव इति व्यतिरेकदर्शनम्। तदन्वयव्यतिरेकदर्शनमात्रं न हेतुत्वगमकम्, किन्तु स्वेतरयावत्कारणसमवधानकालिकमेव। तच्चासत्तौ नास्तीति कथं तत्कारणतानिर्णय इति शङ्काऽप्येतेन परास्ता; तथैवेति पदेन कारणान्तरसमवधानकालिकस्यान्वयव्यतिरेकदर्शनस्यासत्तेः शाब्दबोधहेतुत्वगमकत्वस्य प्रतिपादनेनादोषात्। इयं चासत्तिः स्वरूपसती हेतुः, नतु ज्ञाता सती। ननु—शाब्दबोधसामान्यं प्रति आसत्तिर्न कारणम्। न चान्वयव्यतिरेकदर्शनात्तत्कारणत्वमिति वाच्यम्; न हि व्यतिरेकदर्शनमत्र विद्यते; व्यभिचारात्। वाक्यं हि द्विविधं पदैकवाक्यं वाक्यैकवाक्यं च। तत्र पदैकवाक्यस्य शाब्दबोधजनने आसत्तेरपेक्षितत्वेऽपि वाक्यैकवाक्यस्य तत्त्वे तन्नापेक्षितम्। पदजन्यपदार्थोपस्थितिः खलु आसत्तिः, सा हि यत्र पदार्थयोरन्वयधीस्तत्रैव संभवति, वाक्यैकवाक्यस्थले हि न पदार्थयोरन्वयधीः किन्तु वाक्यार्थयोरेव। एवं च सामान्यतः आसत्तेश्शाब्दबोधहेतुत्वं यदुक्तं तदसङ्गतमित्यत आह—एवं महावाक्यार्थबोधे इति।

एवंचासत्तिर्द्विविधा, पदजन्यपदार्थोपस्थितिः, अवान्तरवाक्यद्वयजन्यावान्तरवाक्यार्थोपस्थितिश्च, आद्या पदैवाक्यतास्थलेऽपेक्ष्यते, द्वितीया तु वाक्यैकवाक्यतास्थले इति न व्यभिचारः। तदुत्तरशाब्दबोधं प्रत्येव तस्या हेतुत्वादिति भावः। तथैवेत्यादिकं पूर्ववदेव व्याख्येयम्। अवधारणात् नियमात्॥

क्रमप्राप्तम्। आकाङ्क्षा योग्यता आसत्तिस्तात्पर्यज्ञानं चेति क्रमे आकाङ्क्षायोग्यतासत्तिस्वरूपतत्कारणत्वादिविचारे समाप्ते निरूपणीयत्वेनावशिष्टं तात्पर्य-

विशेषदर्शनेन तात्पर्यभ्रमस्याप्यभावात्। न च ईश्वरीयतात्पर्यज्ञानात् तत्र शाब्दबोध इति वाच्यम्; ईश्वरानङ्गीकर्त्तुरपि तद्वाक्यार्थप्रतिपत्तिदर्शनात्।

ज्ञानं तात्पर्यस्वरूपनिरूपणद्वारा प्रसक्तमित्यर्थः॥ अत्र नैयायिकाः—तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम्, मौनिश्लोकादावपि सूक्ष्मोच्चारणस्य सत्त्वात् तात्पर्यनिर्णयसंभवः। शुकवाक्ये तु भगवदिच्छैव गतिरिति—वदन्ति। तत्र तात्पर्यं न स्वरूपसत् कारणम्, किन्तु तज्ज्ञानमेव। तदपि निश्चयात्मकमेव। तदुक्तं न्यायसिद्धान्तमञ्जर्याम्—"तस्य च (तात्पर्यस्य च) निश्चयो हेतुः। अस्य च संशये व्यतिरेकनिश्चये चान्वयाबोधात्" इति। एवं च यत्रायं वक्ता व्युत्पन्न इत्यादिनिर्णयेनैव तदर्थप्रतीतीच्छयाऽनेनायं शब्द उच्चरित इति ज्ञानसंभवस्तत्रान्वयबोधेऽपि यत्रार्थज्ञानशून्येनाध्यापकेनोच्चरिताद्वेदात् श्रोतुरर्थप्रतीतिर्भवति, तत्र तादृशतात्पर्यज्ञानरूपकारणाभावेन व्यभिचारात् तस्य कारणत्वं न स्यादिति अन्यादृशमेव तात्पर्यं निर्वक्तव्यम्। अत एव शुकादिवाक्यादप्यन्वयबोध उपपद्यते। न हि वयमास्तिका अपि शुकादिवाक्यश्रवणकाले अनेन वाक्येनायमर्थो बुध्यतामिति भगवदिच्छामपि जानीमः। येन भगवदिच्छैव तत्र गतिः स्यात्। ये पुनर्नास्तिकाः निरीश्वरसाङ्ख्यादयश्च तत्र भगवदिच्छां शशविषाणकल्पां मन्यन्ते, तेषामपि शुकादिवाक्यादर्थावबोधोऽनुभवसिद्धः। एतेन—अव्युत्पन्नाध्यापकवाक्येऽपि भगवदिच्छैव नियामिका भवत्विति शङ्काऽपि—परास्ता। अतो नैयायिकमतमिदं न युक्तमित्याह—तत्र तत्प्रतीतीच्छयोच्चरितत्वमित्यादिना। तत्र तात्पर्यज्ञानघटकतात्पर्यम्। ईश्वरानङ्गीकर्तुरपि। निरीश्वरसाङ्ख्यादेरपीत्यर्थः। प्रतिपत्तीति। प्रमेत्यर्थः।

वाक्यार्थप्रमा हि तात्पर्यप्रमाऽधीना, न तु तत्संशयाद्यधीना। सा च निरीश्वरसाङ्ख्यादेर्न संभवति, तेषां हि विपरीतनिश्चय एव भवतीति कथं प्रमात्मकः शाब्दबोध इति भावः। चार्वाकादीनां तु शब्दप्रामाण्यं वेदप्रामाण्यं वा न संमतमिति तेषां नात्र ग्रहणम्। यदत्राशुबोधिन्यां ईश्वरानङ्गीकर्त्तृणां चार्वाकादीनां मते वेद-

उच्यते। तत्प्रतीतिजननयोग्यत्वं तात्पर्यम्। गेहे घट इति वाक्यं गेहघटसंसर्गप्रतीतिजननयोग्यं न तु पटसंसर्गप्रतीतिजननयोग्यमिति तद्वाक्यं घटसंसर्गपरम्, न तु पटसंसर्गपरमित्युच्यते।

ननु सैन्धवमानयेत्यादिवाक्यं यदा लवणानयनप्रतीतीच्छया प्रयुक्तम्, तदापि अश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्त्वात्

स्वेश्वरप्रणीतत्वाभावेऽपि भण्डधूर्तवञ्चकप्रणीतत्वावधारणात् तत्तात्पर्यग्रहादेव शाब्दबोधोपपत्तिः संभवति; तथापीश्वरानङ्गीकर्तॄणां वेदस्यापौरुषेयत्ववादिनां साङ्ख्यमतावलम्बिप्रभृतीनामर्थज्ञानरहितोच्चरितवेदवाक्यादर्थप्रतिपत्तिर्नतरां भवतीति बोध्यमिति व्याख्यातम्, तदेतेन परास्तम्। न हि चार्वाकाणां मते शब्दः प्रमाणम्, नवा वेदस्य धूर्तादिरचितस्य कथमपि प्रामाण्यशङ्का, प्रामाण्येऽपि वेश्वरीयतात्पर्यज्ञानसंपादनसंभवः। अतः ईश्वरानङ्गीकर्तुरपीति ग्रन्थो हि ईश्वरेच्छायास्तात्पर्यरूपताङ्गीकारे तद्व्यतिरेकनिश्चयेन शब्दस्याप्रामाण्यमेव स्यादिति बोधनार्थमेव।

उच्यते इति। किं तर्हि तात्पर्यमित्यादिः। तत्प्रतीतिजननयोग्यत्वमिति। यस्य वाक्यस्य यत्प्रतीतिजननयोग्यत्वं विद्यते तत् तत्परमिति भावः। गेहे घट इति वाक्यस्य पटसंसर्गप्रतीतिजननयोग्यत्वस्याभावात् घटसंसर्गप्रतीतिजननयोग्यत्वस्यैव विद्यमानत्वाल्लक्षणसमन्वय इत्याह—गेहे घट इति॥ ननु तत्प्रतीतीजननयोग्यत्वं न तात्पर्यम्, सैन्धवमानयेति वाक्यस्य भोजनकाले लवणेच्छया प्रयुक्तस्याश्वानयनान्वयबोधकत्वापत्तेः। अतस्तत्प्रतीतीच्छयोच्चरितत्वमेव तात्पर्यमित्यङ्गीकरणीयमित्याशयेन शङ्कते—नन्विति। यदेति। भोजनकाले इत्यर्थः।

ननु सैन्धवशब्दस्य न लवणमश्व इत्युभयमभिधेयं सिद्ध्यति, अन्याय्यश्चानेकार्थत्वमिति न्यायेनैकस्य शब्दस्यानेकार्थकत्वायोगात्, अन्यथानेकशक्तिकल्पनाप्रसङ्गादिति चेत्, यत्र प्रचुरप्रयोगोऽपि विद्यमानः कुत्रचिच्छक्तिरपरत्र लक्षणेति निर्वाहमाप्नोति

लवणपरत्वज्ञानदशायामप्यश्वादिसंसर्गज्ञानापत्तिरिति चेत्, न ; तदितरप्रतीतीच्छयानुच्चरितत्वस्यापि तात्पर्य्यं प्रति विशेषणत्वात्।

तत्र नानेकार्थत्वम्, यथा गङ्गाशब्दस्य, प्रकृते तु लवणाश्वयोः प्रसिद्धस्य कस्यापि सम्बन्धस्याभावाद्विनिगमनाविरहादर्थद्वयमप्यभिधेयमित्यूरीक्रियत इति न दोषः । न केवलं तत्प्रतीतिजननयोग्यत्वमात्रं तात्पर्यम्, किन्तु तदितरप्रतीती-च्छयानुच्चरितत्वमपि तत्र विवक्षितम्, एवं च सैन्धवमानयेति वाक्यस्य लवणेतराश्वप्रतीतीच्छयानुच्चरितस्य यथा लवणपरत्वं नैवमश्वेतरलवण-प्रतीतीच्छयोच्चरितस्य तस्याश्वपरत्वमिति न दोष इत्याह—**तदितरेति** ।

यत्परत्वं वाक्यस्य साधनीयं तदत्र तच्छब्दार्थः । एवं च गेहे घट इति वाक्यस्य घटसंसर्गे तात्पर्यसमन्वयावसरे तच्छब्देन घटसंसर्गस्य ग्रहणे तदितरपटसंसर्ग-प्रतीतीच्छयाऽनुच्चरितत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः । पटसंसर्गेच्छया तु न गेहे घट इति वाक्यप्रयोगः, किन्तु गेहे पट इति वाक्यस्यैव सः । शुकादि-वाक्येऽव्युत्पन्नोच्चरिते वेदवाक्ये चार्थप्रतीत्युद्देश्यताया एवाभावेन तदितरप्रतीती-च्छयाऽनुच्चरितत्वलक्षणं तात्पर्यमप्रत्यूहं सिद्ध्यति । **तात्पर्यं प्रति विशेषणा-त्वादिति** । तात्पर्यस्वरूपव्यावर्तकत्वात् तात्पर्यलक्षणत्वादिति यावत् । तथाच —तत्प्रतीतिजननयोग्यत्वं तदितरप्रतीतीच्छयाऽनुच्चरितत्वं च तात्पर्यलक्षणम् । आद्यं गेहे घट इत्यादिवाक्ये, द्वितीयमनेकार्थसैन्धवादिपदघटितवाक्ये शाब्दबोधं प्रति कारणमिति विवेकः ।

**एतेन**—तदन्यप्रतीतीच्छयानुच्चरितत्वस्यैव तात्पर्यलक्षणत्वे तत्प्रतीति-जननयोग्यत्वरूपविशेष्यभागवैयर्थ्यमिति शङ्कापि—**परास्ता ;** मिलितस्या-लक्षणत्वात् । तदुक्तं शिखामणौ—"तत्प्रतीतीच्छयोच्चरितत्वं तदन्यमात्र-प्रतीतीच्छयाऽनुच्चरितत्वं च तात्पर्यम् । न च—परस्परव्यभिचारान्नोभयमपि हेतुः स्यादिति—वाच्यम् ; तदन्यमात्रप्रतीत्युद्देश्यकज्ञानविरोधिज्ञानविषय-ज्ञानत्वेनानुगतेन हेतुत्वाभ्युपगमादिति शिखामणिग्रन्थमनुसरतामाशयः । अत्र च व्याख्याने—"तथा च यद्वाक्यं यत्प्रतीतिजननयोग्यत्वे सति तदन्यप्रतीती-च्छयानुच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते" इत्युपरितनमूलग्रन्थविरोधः

**तथाच यत् वाक्यं यत्प्रतीतिजननस्वरूपयोग्यत्वे सति यदन्यप्रतीतीच्छया नोच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते । शुकादिवाक्येऽव्युत्पन्नोच्चरितवेदवाक्यादौ च प्रतीतीच्छाया एवाभावेन तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन**

समापतति । अनेन हि ग्रन्थेन तत्प्रतीतिजननयोग्यत्वविशिष्टतदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वं विशिष्टमेव तात्पर्यं गम्यते, न तूभयमपि । अतो विशिष्टमेव लक्षणमङ्गीकरणीयम् । तथा तात्पर्यं प्रति विशेषणत्वादित्यस्य तदितरप्रतीतीच्छयाऽनुच्चरितत्वविशिष्टतत्प्रतीतिजननयोग्यत्वस्यैव तात्पर्यलक्षणत्वमित्येवाशयः । न च तत्प्रतीतिजननयोग्यत्वदलवैयर्थ्यम् ; तदितरप्रतीतीच्छयाऽनुच्चरितस्य "जरद्गवः कोमलकम्बलाभ्यां द्वारि स्थितो गायति भद्रकाणि ॥ तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः" इत्यनर्थकवाक्यस्य डुंफडादेश्च घटसंसर्गादितात्पर्यवत्त्ववारणार्थं तत्प्रतीतिजननयोग्यत्वस्यापि विवक्षितत्वात् । शिखामणिकारा हि—तत्प्रतीतिजननयोग्यत्वदलवैयर्थ्यापत्त्या खलूभयं तात्पर्यमिति वर्णयन्ति, तत्र यदि उक्तवाक्यातिप्रसङ्गवारणेन तत्साफल्यम्, तर्हि कथमिवोक्तव्याख्यानमुपपद्येत । अतो यथाश्रुतमेव रमणीयमिति परे मन्यन्ते ॥

**योग्यत्वे सतीति ।** "यद्यपि तदितरप्रतीतीच्छयाऽनुच्चरितत्वस्यापि तात्पर्यं प्रति विशेषणत्वात्" इति पूर्वतनग्रन्थे तत्प्रतीतिजननयोग्यत्वं विशेषणमिति प्रतिपादितम् ; तथापि फलतोऽवैषम्यात् अत्र विपरीतं विशेषणविशेष्यभावः स्वीकृत इति न दोषः । ननु—यत्रानेकार्थेन शब्देनोभयार्थविवक्षा तत्रोक्तं तात्पर्यं न संभवति । तथा हि—सैन्धवमानयेति वाक्यं यदा लवणाश्वोभयप्रतीतीच्छया प्रयुज्यते, तदाऽपि न युगपदर्थद्वयप्रत्यायकत्वम्, सकृत्प्रयुक्तः शब्दः सकृदेवार्थबोधकं इति न्यायात्, किन्तु आवृत्त्या पर्यायेणार्थद्वयप्रत्यायकः । तत्र च यदा लवणप्रत्यायकत्वम्, तदा लवणतात्पर्यकत्वं तस्य वाक्यस्य वक्तव्यम् ; न चेतत् शक्यम् ; लवणेतराश्वप्रतीतीच्छयाऽपि प्रयोगात् तदितरप्रतीतीच्छयोच्चरितभिन्नत्वाभावात् । नच—सकृत् प्रयुक्तः

लक्षणासत्त्वात् नाव्याप्तिः। नचोभयप्रतीतीच्छयोच्चरितेऽव्याप्तिः; तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वस्य विवक्षितत्वात्। उक्त-

शब्दः सकृदेवार्थबोधक इति न्याये हि प्रयुक्तशब्दस्योच्चरित इत्येवार्थः; एवं च यदि तन्न्याय आद्रियते, तर्हि नोभयप्रतीतीच्छया सकृत् प्रयोग उपपद्यते इति—वाच्यम्; वक्ता तन्त्रेण प्रयोगेऽप्यावृत्त्या श्रोतुरर्थप्रत्ययः इति सकृत्प्रयोगेऽप्यनेकार्थबोधकत्वं हि सकृत्प्रयोगन्यायाविरोधेन वैयाकरणैः समर्थितमेव। व्यक्तं चैतत् शब्दरत्नादौ, तथाचोभयप्रतीतीच्छया प्रयुज्यमाने सैन्धवादिपदघटिते वाक्ये तात्पर्यलक्षणमिदं न सङ्गच्छत इत्याशयेन शङ्कते—**नचोभयेति**॥ तदितरप्रतीतीत्यत्र तदितरपदेन तदितरमात्रं विवक्षितम्, एवं च तदितरमात्रप्रतीतीच्छयाऽनुच्चरितत्वमेवात्र विशेष्यपदार्थः। तथा च प्रकृते सैन्धवादिपदानां लवणेतराश्वमात्रप्रतीतीच्छयो-च्चरितत्वं नास्ति; लवणाश्वोभयप्रतीतीच्छयोच्चरितत्वात्, तथाच न विरोध इत्याशयेन समाधत्ते—**तदन्यमात्रेति**।

ननु एवमपि तात्पर्यस्य ज्ञानद्वारा शाब्दबोधहेतुत्वे किं मानम्, न च—तात्पर्यज्ञानस्याकारणत्वे तात्पर्यनिर्णयार्था विचारप्रवृत्तिर्नोपपद्यते इति—वाच्यम्; तात्पर्यसंशयतद्व्यतिरिक्तनिश्चययोश्शाब्दबोधं प्रति प्रति-बन्धकत्वेन तदभावसंपादकतया विचारसाफल्यात्। अत एव तात्पर्यज्ञानस्य शाब्दज्ञानहेतुत्वनिराकरणं चतुर्थवर्णके विवरणाचार्याणामुपपद्यते। तदुक्तं विवरणप्रमेयसङ्ग्रहे—"अत्र केचिदाहुः विचारावगम्यस्यार्थस्यार्थप्रमितिहेतुत्वा-द्विचारोऽप्यर्थप्रमितेरेव हेतुर्न प्रतिबन्धनिरासस्येति, तदसत्; किं तात्पर्यमविज्ञातमर्थप्रमितिहेतुरुत विज्ञातम्। नाद्यः; सर्वत्र लौकिकवाक्येषु तात्पर्यावगमफलकविचारवैयर्थ्यापातात्, अनवगतेऽपि तात्पर्येऽन्यथाप्रतिपत्त्य-भावात्। द्वितीयेऽपि न तावत्तात्पर्यं पदार्थविषयम्; तस्य वाक्यार्थप्रमि-तावनुपयोगात्, वाक्यार्थविषयत्वे चान्योन्याश्रयत्वम्। वाक्यार्थस्य विशेषण-स्यावगतौ तद्विशिष्टतात्पर्यावगतिः, तात्पर्यावगतौ च वाक्यार्थप्रमिति-रिति। अथ मन्यसे पदेभ्यः पदार्थानवगम्यानन्तरं नूनमेषां संसर्गोऽस्ति

प्रतीतिमात्रजननयोग्यतायाश्चावच्छेदिका शक्तिः। अस्माकं तु मते सर्वत्र कारणतायाः शक्तेरेवावच्छेदकत्वात् न कोऽपि दोषः।

एवं तात्पर्यस्य तत्प्रतीतिजनकत्वरूपस्य शाब्दज्ञानजनकत्वे

सह प्रयुज्यमानत्वादित्युत्प्रेक्षया वाक्यार्थावगतौ नोक्तदोष इति, तदयुक्तम्; तत्र न तावदुत्प्रेक्षा स्मृतिः; अनवगतार्थगन्तृत्वात्, नापि संशयः, कोटिद्वयाभावात्। किं च तात्पर्यं यदि वाक्यार्थप्रमितिहेतुः स्यात्, तदा वाक्यार्थोऽशाब्दः स्यात्। तस्माच्छाब्दत्वसिद्धये शब्द एवार्थप्रमितिहेतुः, तात्पर्यावबोधस्तु प्रतिबन्धनिरासोत्येवाभ्युपेयमि"ति। तथाच कथं तात्पर्यज्ञानं शाब्दबोधं प्रति कारणमित्यत आह—एवं तात्पर्यस्येति।

अयं भावः—तात्पर्यज्ञानस्य स्वतन्त्रं कारणत्वं शाब्दबोधव्यवहारसिद्ध्यर्थं किं निराक्रियते, उत सहकारिकारणत्वम्। आद्ये आकाङ्क्षायोग्यतासत्तीनामपि कारणताभावप्रसङ्गः; तेषामपि स्वतन्त्रकारणत्वस्यैवाङ्गीकरणीयत्वापत्तेः। यदि आकाङ्क्षादिजन्येऽपि ज्ञाने परंपरयोपयोगिन शाब्दत्वव्यवहारस्तर्हि तात्पर्यज्ञानकारणत्वेऽपि तदुपपत्तिरिति न दोषः। अत एव शब्दान्वयव्यतिरेकदर्शनमपि व्याख्यातम्। "शाब्दत्वसिद्धये शब्द एवार्थप्रमितिहेतुरिति विवरणप्रमेयसङ्ग्रहवाक्यं हि संसर्गबोधानुकूलाऽपि शब्द एव काचन शक्तिरभ्युपगन्तव्या इति बोधयति। इदं च पुरुषाभिप्रायो न तात्पर्यम्, किन्तु शब्दनिष्ठ एव कश्चन धर्म इत्येव गमयति। एवं च पुरुषाभिप्रायरूपस्य तात्पर्यस्य शाब्दबोधे निराकरण एव विवरणाचार्याणामाशयः। अतएव—"पूर्वपक्षमाह—किंचिदिति। पुरुषाभिप्रायस्तात्पर्यं तदर्थप्रमितिजनकमित्यर्थः। विकल्पासहत्वान्नैतन्मतं साध्वित्याह—तत्र किमिति"—इति तत्त्वदीपनमुपपद्यते। अत्र हि स्पष्टमेव ज्ञायते यत् पुरुषाशयरूपस्यैव तात्पर्यस्यार्थप्रमितिजनकत्वं निराक्रियते इति। पुरुषाभिप्रायरूपतात्पर्याजन्यत्वे प्रमाणमाह—न तात्पर्येति। तत्त्वदीपनावतरणम्, संसर्गबोधः, शक्तिमात्रनिबन्धनः; शाब्दत्वात्, पदार्थबोधनवत्, शक्तिपदेन च शब्दतात्पर्यरूपशक्तिविशेषस्य

सिद्धे चतुर्थवर्णके तात्पर्यस्य शाब्दज्ञानहेतुत्वनिराकरणवाक्यम् तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यनिराकरणपरम्; अन्यथा तात्पर्यनिश्चयफलकवेदान्तविचारवैयर्थ्यप्रसङ्गात्।

विवक्षा" इत्यादितत्त्वदीपनोक्तयोऽप्यत्रानुकूलाः। तथा चाकाङ्क्षायोग्यताऽऽसत्तीनां कथञ्चित्सहकारिकारणत्वेऽपि नानुपपत्तिः, तात्पर्यं तु स्वतन्त्रकारणमित्यवश्यमभ्युपेयमित्येव चतुर्थवर्णकगतविवरणाशयः, न तात्पर्यस्य शाब्दबोधहेतुतानिरास इति विशदमेव विवरणतत्त्वदीपनविवरणप्रमेयसङ्ग्रहादिदर्शने प्रतिभातीति तात्पर्यज्ञानहेतुत्वमवश्यमङ्गीकरणीयम्। अत एव तात्पर्यनिश्चयफलकवेदान्तविचारादिः सफलो भवति। विचारस्य हि संशयनिवृत्तिपूर्वको निश्चय एव भावरूपं फलम्, न तु संशयाद्यभावमात्रम्, येन प्रतिबन्धकाभावसंपादनेन तत्सार्थक्यम्। "तात्पर्यबोधस्तु प्रतिबन्धनिरासो"त्यादि वाक्यं तु पुरुषाभिप्रायरूपतात्पर्याभिप्रायम्। अतो न कोऽपि दोषः। तदिदं मतमभिप्रेत्याह—

**तात्पर्यस्य शाब्दज्ञानहेतुत्वनिराकरणवाक्यं तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यनिराकरणपरमिति ॥ निराकरणवाक्यम्** "तदसत् किं तात्पर्यमविज्ञातमर्थप्रमितिहेतुरुत विज्ञातमि"त्यादिपूर्वोक्तविवरणप्रमेयसङ्ग्रहवाक्यसमानार्थं विवरणवाक्यम्। **तत्प्रतीतीच्छयोच्चरितत्वरूपेति ॥** पुरुषाभिप्रायरूपेत्यर्थः। एवं व्याख्याने च तत्त्वदीपनोक्तयोऽवलम्ब्या इति पूर्वमेव निरूपितम्। **तात्पर्यनिश्चयफलकवेदान्तविचारेति ।** समन्वयाध्यायेत्यर्थः। **केचित्तु**—अभेदरत्नाकरकाराः। केचित्तु इत्यनेनास्वरसः सूचितः। तत्र तत्त्वदीपनादिविरोध एव निमित्तम्। **तात्पर्यसंशयविपर्ययोत्तरेति ॥** तथा च तात्पर्यज्ञानं शाब्दबोधविशेषं प्रत्येव हेतुरिति भावः। अत्र च पुरुषाभिप्रायविशेषतात्पर्यविवक्षायां तत्त्वदीपनादिविरोधः, शाब्दनिष्ठशक्तिविशेषविवक्षायां तु तस्य शाब्दज्ञानसामान्यहेतुत्वस्य लाघवात् संभवेन तद्विशेषहेतुत्वोक्तिविरोध इति ग्रन्थकृता चतुर्थवर्णकस्याभिप्रायान्तरं वर्णितम्।

केचित्तु शाब्दज्ञानत्वावच्छेदेन न तात्पर्यज्ञानं हेतुरित्येवं परं चतुर्थवर्णकवाक्यम् । तात्पर्यसंशयविपर्य्ययोत्तरशाब्दज्ञानविशेषे च तात्पर्यज्ञानं हेतुरेव । इदं वाक्यम् एतत्परम् उत अन्यपरमिति संशये तद्विपर्य्यये च तदुत्तरवाक्यार्थविशेषनिश्चयस्य तात्पर्यनिश्चयं विनानुपपत्तेरित्याहुः ।

तच्च तात्पर्यं वेदे मीमांसापरिशोधितन्यायादेवावधार्य्यते,

**ननु**—उक्तविधं तात्पर्यं कथं गृह्यते ? न च प्रमाणान्तरेण ; प्रमाणान्तरविषयार्थबोधकेषु लौकिकेषु वाक्येषु तथा संभवेऽपि वैदिकेषु वाक्येषु तथाऽसंभवात्, न च—कर्मबोधकानां वाक्यानां प्रमाणान्तराविषयत्वेऽप्युपनिषदां प्रमाणान्तरविषयार्थविषयत्वमावश्यकमेव, तद्विषयस्य ब्रह्मणः सिद्धरूपत्वेन मानान्तरविषयत्वात् । तदयं प्रयोगः—वेदान्ताः, प्रमाणान्तरसापेक्षाः, भूतार्थविषयवाक्यत्वात्, गौरस्तीतिवाक्यवदिति । अत्र प्रत्यक्षे व्यभिचारवारणार्थं वाक्यत्वादिति, ज्योतिष्टोमेनेत्यादौ तद्वारणार्थं भूतार्थविषयेतीति भामत्यादौ व्यक्तम् । तथा चोपनिषदां प्रमाणान्तरेण तात्पर्यग्रह इति—वाच्यम् ; उक्तानुमाने पौरुषेयत्वस्योपाधित्वेन वेदान्तानामपि निरपेक्षप्रमाणत्वात् । अतः प्रकरणोपक्रमोपसंहारादिभिः मीमांसादिन्यायैरेव तात्पर्यग्रह इत्याह——**तच्च तात्पर्यमिति** ॥ **मीमांसापरिशोधितेति** ॥ विषयसंशयपूर्वपक्षसिद्धान्तादिरूपमधिकरणजातं मीमांसाशब्दार्थः । तत्र परिशोधितः निर्दोषत्वेन निर्णीतो यो भागः स मीमांसापरिशोधितपदेन विवक्ष्यते । स चासौ न्यायश्चेति विग्रहः । सिद्धान्तावयव इति यावत् ; यद्यपि न्यायेनावयवपञ्चकमेव व्यपदिश्यते ; तथापि गौण्या एकस्मिन्नप्यवयवे तथा व्यपदेशो युक्त इति भावः ।

**ननु**—यदि लौकिकानां वैदिकानां च वाक्यानां प्रकरणादिभिस्तात्पर्यज्ञाने सति प्रामाण्यम्, तर्हि लोकवेदयोः किं वैलक्षण्यम्, नहि प्रमाणानां सर्वेषामपि प्रामाण्यं विलक्षणं भवति, यथावस्थिततत्त्वविषयकत्वस्य समानत्वादित्यत आह—**तत्र लौकिकानामिति** ।

**लोके तु प्रकरणादिना। तत्र लौकिकवाक्यानां मानान्तरा-**

लौकिकानि हि वाक्यानि प्रत्यक्षानुमानादिभिरर्थंज्ञानपूर्वकं प्रयोक्त्रा विरचय्य प्रयुज्यन्ते, वेदवाक्यानि तु नित्यानि न केनापि अर्थं बुद्ध्वा रचितानि, इति मानान्तराधिगतविषयतया लौकिकवाक्यानामनुवादकत्वम्, अतादृशतया वेदवाक्यानामतत्त्वमिति विशेषात्। तदुक्तं न्यायवार्तिके—"आप्तपुरुषप्रणीतानि शास्त्राणि अधिगतविषयतया स्वतोऽनुवादकान्येव, प्रमातृदृष्ट्या तु कदाचिदनुवादकानि कदाचिन्नानुवादकानि च भवन्ति। इदं चानुवादकत्वं अग्निर्हिमस्य भेषजमित्यादिगुणार्थवादानामिव नाप्रामाण्यसंपादकम्, येन लौकिकवाक्यानामप्रामाण्यमापतेत्" इति। तदुक्तं भामत्याम्—"यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिद्ध्यति ; द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थे प्रवृत्तेः, प्रमात्रपेक्षया त्वनुवादकत्वम्। प्रमाता ह्यव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्योऽर्थमवगच्छति, न तथाऽऽम्नायतः ; तत्र व्युत्पत्त्याद्यपेक्षत्वात्, न तु प्रमाणापेक्षया ; द्वयोः स्वार्थेऽनपेक्षत्वात्" इत्युक्तम्॥ अत्र कल्पतरुः—"नन्वनुवादकार्थवादानामप्रमाणत्वात् कथं विधिभिरेकवाक्यता ? अत आह—यत्र त्विति॥ न स्मृतिवत् सापेक्षत्वम्, किन्तु प्रत्यक्षादिभिस्तुल्यविषयत्वम्, न चैतावता भवत्यप्रमाणता। कथं तर्ह्यनुवादकत्वसिद्धिरत आह—प्रमात्रपेक्षयेति। प्रमातरि चरमप्रत्ययाधायकत्वात्तदाश्रयस्यानुवादकत्वप्रसिद्धिरित्यर्थः" इति॥ तदयं निष्कर्षः—लौकिकानि वाक्यानि प्रमाणान्तरावगतविषयाण्यपि पुरुषं प्रति प्रमाणम्, वेदवाक्यानि तु प्रमाणान्तरानवगतविषयाणि तं प्रति प्रमाणमिति प्रमाणत्वेन साम्येऽपि प्रमाणदृष्ट्याऽनुवादकत्वाननुवादकत्वाभ्यां तेषां परस्परवैलक्षण्यम्, अतो न दोष इति भावः॥

ननु लोकवेदयोरुभयत्रापि वाक्यस्य प्रामाण्यं कार्यार्थपरस्यैव भवेत्, न तु सिद्धार्थपरस्य, प्रवर्तकवाक्यैरेव व्यवहारद्वारा शक्तिग्रहेण सिद्धेऽर्थे पदानां व्युत्पत्तिग्रहसंभवात्, एतदेवाभिप्रेत्योक्तम्—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" इति इत्यत आह—**लोके वेदे चेति॥ कार्यपराणां** 'गामानय' "ज्योतिष्टोमेन स्वर्गकामो यजेत"इत्यादीनाम्। **सिद्धार्थानां** "वज्रहस्तः पुरन्दर" इत्यादिभूतार्थवादानामपि।

वगतार्थतयाऽनुवादकत्वम्। वेदे तु वाक्यार्थस्यापूर्वतया नानुवादकत्वम्। तत्र लोके वेदे च कार्य्यपराणामिव सिद्धार्थाना-

अपूर्वतया स्वाव्यवहितपूर्वज्ञानान्तराविषयतया। इदम् अबाधितत्वेनेत्यस्याप्युपलक्षणम्। प्रामाण्यम् अनधिगताबाधितार्थविषयकज्ञानजनकत्वम्। तथाच प्रमासामान्यलक्षण एव स्मृतिव्यावर्तनार्थमनधिगतत्वविशेषणम्, न तु तत्तत्प्रमाविशेषे, प्रमाविशेषेऽधिगतविषयत्वं द्वितीयान्तरीयज्ञानस्येव नाप्रामाण्यप्रयोजकम्; स्वाव्यवहितपूर्वक्षणावच्छिन्नाज्ञानविषयत्वस्याबाधितत्वात्। एतदभिप्रायेणैव मूलेऽपि वाक्यप्रमाणस्वरूपविवेचनावसरे "यस्य वाक्यस्य तात्पर्यविषयोऽर्थः प्रमाणान्तरेण न बाध्यते तद्वाक्यं प्रमाणमि"ति अबाधितत्वमात्रमेव विशेषणं दत्तम्, नत्वनधिगतत्वमपीत्यलमतिविस्तरेण।

सिद्धार्थे कथं सङ्गतिग्रह इत्यत आह—पुत्रस्ते जात इति। यो हि देशान्तरस्थस्य स्वस्य पुत्रं जातमजानन् कुत्रापि क्लेशकरे कार्यान्तरे व्यापृतो वर्तते, स पुत्रस्ते जात इति वाक्यश्रवणसमनन्तरमेवातीव प्रसीदति, तत्र तद्वाक्यार्थश्रवणमेव कारणम्। तथाच तदीयमुखविलासादिकं दृष्ट्वा बालोऽपि अस्य वाक्यस्य पुत्रजन्मैवार्थः इति जानाति। तदुक्तम्—"दृष्टचैवसुखोत्पत्तेश्चरणाक्लिन्नवाससा। वार्ताद्वारेण यातस्य परिशेषविनिश्चितिः" इति। एवं सिद्धार्थेऽपि शक्तिग्रहात् वेदान्तानामपि क्रियासम्बन्धमन्तरेण प्रामाण्यं संभवतीति भावः।

ननु—यद्यपि मुद्रितपुस्तकेषु सर्वत्रापि "लोके वेदे च कार्यपराणामिव सिद्धार्थानामप्यपूर्वतया प्रामाण्यम् पुत्रस्ते जात" इत्येव मूलपाठो दृश्यते; तथापि नायं पाठोऽत्र योग्यः। पूर्ववाक्ये हि—"तत्र लौकिकानां वाक्यानां मानान्तरावगतविषयानुवादकत्वम्, वेदे तु वाक्यार्थस्यापूर्वतया नानुवादकत्वमित्युक्तम्। तत्र यदि लोकेऽपि कार्यार्थस्य सिद्धार्थस्य चापूर्वत्वमत्रोच्यते, तर्हि असमाधेयो विरोधः समापतति। अत इदं प्रतिभाति, यत्—"तत्र च वेदे कार्यपराणामिव सिद्धार्थानामप्यपूर्वतया प्रामाण्यम् लोके पुत्रस्ते जातः इत्यादौ सिद्धार्थेष्वपि पदानां सामर्थ्यावधारणात्"

**मप्यपूर्वतया प्रामाण्यम्; पुत्रस्ते जात इत्यादिषु सिद्धार्थेऽपि पदानां सामर्थ्यावधारणात्। अत एव वेदान्तवाक्यानां ब्रह्मणि**

इत्येव मूलपाठोऽत्र युक्त इति चेदत्राहुः—अपूर्वत्वं द्विविधम्—एकमननुवादत्वप्रयोजकम् परं प्रामाण्यप्रयोजकम्, द्वितीयमनुवादकस्यापि संभवत्येवेति देवताधिकरणे भामत्यादावुक्तत्वान्न यथाश्रुतपाठे कोऽपि विरोधः। उपपादितं चैतत् पूर्वमेवेति।

**अत एव** सिद्धेऽपि वस्तुनि सङ्गतिग्रहादेव। **वेदान्तवाक्यानां** निर्गुणस्वरूपमात्रपरोपनिषद्भागानाम्। ननु—सिद्धे वस्तुनि सङ्गतिग्रहेऽपि वेदान्तानां न ब्रह्मणि प्रामाण्यम्, प्रवृत्तिनिवृत्तिप्रयोजनं खलु शास्त्रम्; नहि वेदान्ताः प्रवर्तका निवर्तका वा। तदुक्तम्—प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्येति। तथाच प्रवृत्त्यादियोग्यपरत्वेन तदन्वयित्वेन तच्छेषपरत्वेनैवच वाक्यप्रामाण्यमिति उपास्यस्वरूपसमर्पणेनैव वेदान्तानामुपयोगः। एवंच वाचं धेनुमुपासीतेत्यादिवत् न विषयसमर्पका वेदान्ता इत्यत आह—**ब्रह्मणि प्रामाण्यमिति।**

सप्रयोजनं वाक्यं शास्त्रम्, न तु प्रवृत्त्यादिप्रयोजनम्। वेदान्तानामपि नित्यशुद्धबुद्धमुक्ताद्वितीयस्वरूपचैतन्यमात्रसाक्षात्कारेण निखिलसंसारबन्धस्य समूलस्य निवृत्त्या सप्रयोजनत्वं विशदमेव। "ब्रह्मविदाप्नोति परमि"त्यादौ ज्ञेयमेव ब्रह्मस्वरूपं विवक्षितम्, नोपास्यम्। यद्यपि उपासनाऽपि ज्ञानमेव; तथापि विद्धिधात्वर्थः ज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रम्, उपासना तु पुरुषतन्त्रेति विशेषो द्रष्टव्यः। वस्तुतन्त्रं च ज्ञानं प्रमाणान्तराबाधितं वस्तुयाथात्म्यं गमयतीति दृष्टम्। अतो ब्रह्मज्ञानमपि ब्रह्मयाथात्म्यं गमयतीति वेदान्तानां ब्रह्मणि प्रामाण्यमनपोह्यं सिद्ध्यतीति भावः।

ननु—तत्त्वमस्यादिवाक्यानां ब्रह्मणि प्रामाण्यं न संभवति; नाहमीश्वर इति प्रत्यक्षेण विरुद्धधर्माश्रयत्वलिङ्गकानुमानेन "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती"ति श्रुत्या च बाधितार्थविषयत्वात्, इत्यत आह—**यथाचैतत्तथा विषय-**

प्रामाण्यम्। यथाचैतत् तथा विषयपरिच्छेदे वक्ष्यते।

परिच्छेदे वक्ष्यते इति॥ भेदप्रत्यक्षस्य संभावितकरणदोषस्यासंभावित-दोषवेदजन्यज्ञानेन बाध्यमानत्वादित्यादिना वेदान्तानां प्रमाणान्तराबाधो निरूपयिष्यत इत्यर्थः।

यद्वा—ननु वेदान्तानां ब्रह्मणि प्रामाण्यमित्यत्र वेदान्तशब्देन सगुण-वाक्यानि निर्गुणवाक्यानि सृष्ट्यादिवाक्यानि च विवक्षितानि; स्वारस्यात्, तत्र च सगुणवाक्यानां सृष्टिवाक्यानां चाद्वितीये ब्रह्मणि तात्पर्यं कथं सिद्ध्यति? इत्यत आह—यथा चैतत् तथेति। न हि सृष्टिवाक्यानां सृष्टौ तात्पर्यम्, किन्तु अद्वितीये ब्रह्मणीत्यादिना सर्वेषामपि वाक्यानां ब्रह्मणि पर्यवसानं वक्ष्यते; तत्रैव तस्य सङ्गतत्वादित्यर्थः॥

शिखामणिकृतस्तु—"ननु तथापि वेदान्तानां ब्रह्मणि न प्रामाण्यम्; तेषां प्रतिपत्तिविधिपरत्वेन तत्परत्वाभावात्, सत्यं ज्ञानमित्यादीनां च विध्यपेक्षित-समर्पकत्वात्। तथा च "वाचं धेनुमुपासीते"तिवद्विदितब्रह्मपरा वेदान्ता इति तत्राह—यथाचेति इत्यवतारयन्ति, न च—अस्मिन् व्याख्याने विषयपरिच्छेदे-मूले उपासनाविधिशेषत्वनिराकरणभागो नोपलभ्यत इति न साधुतेति—वाच्यम्; "नच—कार्यपराणामेव प्रामाण्यम्; पुत्रस्ते जात इत्यादौ सिद्धेऽपि सङ्गतिग्रहादि"ति मूलग्रन्थेन विषयपरिच्छेदान्तर्गतेन तस्य सूचितत्वेन तदसाधुताऽसंभवात्। अत्र द्वितीयव्याख्याने—वेदान्तवाक्याना-मित्यनेन सृष्ट्यादिवाक्यानां ग्रहणं क्लेशसाध्यम्, सृष्ट्यादिवाक्यसाधारण्येन ब्रह्मणि पर्यवसाननिरूपणमत्रानवसरग्रस्तं च; तृतीयव्याख्याने तु नैवं कोऽपि दोषः; तथापि सिद्धार्थानामप्यपूर्वतया प्रामाण्यम्; पुत्रस्ते जातः इत्यादिषु सिद्धार्थेष्वपि पदानां सामर्थ्यावधारणात् "इत्यत्रत्यग्रन्थादधिकस्यार्थस्य तत्रानिरूपणात् निःस्वरसता भवति। अतः प्राथमिकमेव व्याख्यानं निर्दोषमिति मन्तव्यम्॥

एतत् प्रामाण्यम्। यथा येन प्रकारेण भवतीति शेषः। तथा तेन प्रकारेण। विषयपरिच्छेदे ब्रह्मस्वरूपनिरूपणार्थे प्रकरणे सप्तमे।

**तत्र वेदान्तानां नित्यसर्वज्ञपरमेश्वरप्रणीतत्वेन प्रामाण्यमिति**

वक्ष्यते उपपादयिष्यते। लक्षणप्रमाणाभ्यां स्वरूपस्थापनम् **निरूपणम्**, उपपादनं तु सयुक्तिकं स्वरूपस्थापनम्। एवंच प्रामाण्यलक्षणादीनां विषयपरिच्छेदेऽनुपपादनेन ब्रह्मण एव च लक्षणप्रमाणाभ्यां तत्रोपपादनेन च प्रामाण्यनिरूपणाभावेऽपि तदुपपादनम् अव्याहतमिति भावः। अत्र द्वितीयव्याख्याने यथाचेतत् इत्यस्य स्रष्ट्रादिवाक्यानामपीति शेषपूरणम्, तृतीयव्याख्याने सिद्धेऽपि ब्रह्मणि इति शेषपूरणं च कर्तव्यम्, प्रथमव्याख्याने तु न किमपि पूरणीयमित्यपि ध्येयम्।

ननु—इदं सर्वं वेदप्रामाण्यसिद्धाविव युज्यते, न तु वेदस्य प्रामाण्यम्, तस्य धूर्तवञ्चकादिप्रणीतत्वेनाप्रामाण्यात् इति चेत्, अत्र नैयायिकाः—वेदस्य सर्वज्ञेश्वरप्रणीतत्वेन प्रामाण्यमिति मन्यन्ते, मीमांसकास्तु तस्य न जन्यत्वं किन्तु नित्यत्वमित्यभिप्रयन्ति, वयं तु जन्यस्यापि तस्येश्वरस्याप्यस्वातन्त्र्यादपौरुषेयत्वमूरीकुर्मः; तथाच निखिलतीर्थदर्शनविरुद्धत्वात् शब्दाप्रामाण्यवादिनश्चार्वाकवाक्यस्य सर्वथाप्रमाणत्वाच्च सर्वमुपपन्नमिति सूचयन् नैयायिकानां मतमुपनिबध्नाति—**तत्र वेदान्तानामिति**।

वेदान्तानामित्यवयुत्यानुवादः। सर्वस्यापि वेदस्येत्यर्थः। ननु ईश्वरस्याप्यस्मदादिवद्वेदरचनानुपपत्तिरित्यत आह—सर्वज्ञेति। मन्वादीनामपि सर्वज्ञत्वात् सादित्वमेव नेश्वररचितत्वमित्यत आह—नित्येति। तेषामनित्यत्वेन नानात्वात् गौरवेण च न तत्प्रणीतत्वमिति भावः। ननु वेदस्यानित्यत्वमिदं नैयायिकसंमतं न युक्तम्, वर्णसमुच्चयरूपस्य तस्य हि वर्णानां नित्यत्वेन नित्यत्वमेवाङ्गीकरणीयम्, इदं च नित्यत्वं न कूटस्थनित्यत्वम्, येन क्रमविनाशात् पदस्यापि विनाशित्वमापद्येत, किन्तु अनिदंप्रथमत्वरूपं प्रावाहिकनित्यत्वमेव। तदुक्तं श्लोकवार्तिके—

"नन्वानुपूर्व्यनित्यत्वादनित्यो वाचको भवेत्।
यथासत्यणुनित्यत्वे घटे तद्रचनात्मके।
न नित्यतैवं वर्णेषु नित्येषु पदनाशिता।
न च क्रमादिना वर्णा विज्ञाताः प्रतिपादकाः।
क्रमस्यैव पदत्वं वस्तस्मादेवं प्रसज्यते" ॥

नैयायिकाः। वेदानां नित्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमिति अध्वरमीमांसकाः। अस्माकं तु मते वेदो न

"न तावदानुपूर्व्यस्य पदत्वं नः प्रसज्यते ।
न हि वस्त्वन्तराधारमेतत् दृष्टं प्रकाशकम् ।
इष्टे सत्यपि तेनाच विज्ञेयोऽर्थस्य वाचकाः ।
वर्णाः किन्तु क्रमोपेताः किन्नु वर्णाश्रयः क्रमः ।
क्रमः क्रमवतामङ्गमिति किं युक्तिसाध्यता ।
धर्म्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते ।
न चाक्रमस्य कार्य्यत्वं पूर्वसिद्धपरिग्रहात् ।
वक्ता नहि क्रमं कश्चित् स्वातन्त्र्येण प्रपद्यते ।
यथैवास्य परैरुक्तिस्तथैवेनं विवक्षति ।
तेनैवं व्यवहारात् स्यादकौटस्थ्येऽपि नित्यता ।
यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ।
वर्णानामपि नन्वेवमकौटस्थ्येऽपि सेत्स्यति ॥" इति ।

घटादिपदोच्चारणार्थं हि न क्रमविशेषं प्रथमतो रचयामः, अनादिः खलु स क्रमः। एवंच लौकिकं घटादिपदमपि पूर्वतनक्रमापेक्षक्रमकमपौरुषेयमेव, न हि कस्यापि पुरुषस्य तत्र स्वातन्त्र्यं वर्त्तते। तथा च वर्णनित्यत्वेन पदनित्यत्वेन च वेदवाक्यस्य नित्यत्वं भवति। न चैवमपि स्वरूपतो वाक्यस्य पदसमुदायरूपस्यानित्यत्वमङ्गीकरणीयमेव, यथा हि वर्णविशेषाणां क्रमविशेषरचनया स्वतन्त्रं पदं रचयितुं प्रवर्तामहे, न तथा पदविशेषाणां क्रमविशेषादिना वाक्यविशेषं रचयितुं न प्रवर्तामहे। अतो वाक्यमनित्यमित्येव मीमांसकैरप्यङ्गीकरणीयम्। अन्यथा रघुवंशादीनामप्यपौरुषेयत्वापत्तेः। तथाच वेदवाक्येऽपि पुरुषाणां स्वातन्त्र्यमवश्यमुपेयमिति वर्णानां पदस्य च नित्यत्ववादिनामपि वेदपौरुषेयत्वमापततीति वाच्यम्; यदि रघुवंशादाविव दृढ़मेव कर्तुर्वेदेऽपि स्मरणं स्यात्, तर्हि कथमपि तस्यानित्यत्वेन पौरुषेयत्वं भवेत्, न चैतदस्ति। तदुक्तं श्लोकवार्तिके—

"सम्बन्धाकरणन्यायादत्रत्या वाक्यनित्यता ।
सङ्घातत्वस्य वक्तव्यमीदृशं प्रतिसाधनम् ।

नित्यः। उत्पत्तिमत्त्वञ्च "अस्य महतो भूतस्य निश्वसितमेतत् यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद" इत्यादिश्रुतेः। नापि

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनवाच्यत्वादधुनाऽध्ययनं यथा।
भारते तु भवेदेवं कर्तृस्मृत्या तु बाध्यते।
पारम्पर्येण कर्तारं नाध्येतारः स्मरन्ति हि॥" इति॥

अत्रायं निष्कर्षः। वर्णाः कूटस्थनित्याः विभवश्च। पदं तु अनिदंप्रथमं प्रवाहतो नित्यम्, वाक्यं तु लौकिकं पुरुषस्वातन्त्र्यक्रमविशेषविशिष्टमनित्यम्। वेदवाक्यं तु क्रमे पुरुषस्वातन्त्र्याभावात् पदमिव प्रवाहतो नित्यम्। वेदान्तिनां मते तु वेदस्यानिदंप्रथमत्वमात्रं न संमतम् सर्गप्रलयाद्यङ्गीकारात्, मीमांसकानां न कदाचिदनीदृशं जगदिति सिद्धान्तादनिंदप्रथमत्वमिति विशेषः। सर्वथा च नैयायिकमतमिदं न समीचीनमित्यभिप्रायेण मीमांसकमतेन वेदान्तिनां मतेन च वेदप्रामाण्यमाह—**वेदानां नित्यत्वेनेति॥**

**नित्यत्वेन** कर्तृपारतन्त्र्याभावेन। तदुक्तं तन्त्रवार्तिके—"तेन वेदस्वतन्त्रत्वं रूपादेरिवावगम्यते" इति॥ **निरस्तसमस्तपुंदूषणतया।** अप्रामाण्यहेतुदोषशङ्कानिरासेन। **प्रामाण्यम्** नाप्रामाण्यग्रहः। मीमांसकानां मते हि स्वतोग्राह्यं प्रामाण्यं ज्ञानस्य, परतो ग्राह्यं चाप्रामाण्यमिति न प्रामाण्यग्रहं प्रति पुंदोषशङ्काविरहः कारणम्, ज्ञानग्राहकसामग्र्येव प्रामाण्यस्यापि ग्रहात्, अतोऽप्रामाण्यशङ्काविरह एवात्र प्रतिपाद्यः न तु प्रामाण्यग्रहणमिति भावः। वेदान्तिनां वेदनित्यत्वं न संमतम्, नापि तत्पौरुषेयत्वमिति मीमांसकनैयायिकाभ्यां विशेषं सूचयन्नाह—**अस्माकं त्विति॥** तुशब्दो वैलक्षण्यसूचकः।

ननु—वाचा विरूपनित्ययेति श्रुत्या वेदस्य नित्यत्वावगमात् कथं वेदोऽनित्य इत्यत आह—**उत्पत्तिमत्त्वं चेति॥ श्रुतेरिति॥** तथाच "वाचा विरूपनित्यये"ति नित्यत्वश्रवणं "आभूतसंप्लवस्थानममृतत्वं हि कथ्यते" इति न्यायात् प्रलयकालपर्यन्तस्थायित्वाभिप्रायम्। "तस्माद्यज्ञात् सर्वहुतः। ऋचः

**वेदानां त्रिक्षणावस्थायित्वम्; य एव वेदो देवदत्तेनाधीतः स**

सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत”त्यादिश्रुतिरादि पदग्राह्या । दृष्टो हि उत्पत्तिमत्स्वपि बहुकालावस्थानमात्रेण नित्यपदप्रयोगः । यथा—“आकाशवत्सर्वगतश्च नित्य”इति । व्यक्तं चैतत् शास्त्रयोनित्वाधिकरणे भाष्यभामत्यादिषु ॥

**महतो भूतस्य** अपरिच्छिन्नस्य वस्तुनः परमात्मनः । **निश्वसितम्** निश्वसितमिवाप्रयत्नतो लीलान्यायेनाभिव्यक्तम् । **ऋग्वेदः** ऋङ्मन्त्रप्रचुरो वेदः । **यजुर्वेदः** यजुर्मन्त्रप्रचुरो वेदः । **सामवेदः** गीत्यात्मकसाममन्त्रप्रचुरो वेदः । **अथर्ववेदः** अभिचारप्रयोगबहुलो वेदः । **नापि वेदानां त्रिक्षणावस्थायित्वमिति ॥** शब्दजशब्दवादः संयोगविभागजशब्दवादश्च प्रत्यक्षपरिच्छेद एव वार्तिकाद्युपष्टम्भेन निराकृत इति न पिष्टं पुनः पिष्यते । अत उत्पत्तिमत्त्वेऽपि न नैयायिकानामिव त्रिक्षणावस्थायित्वं संमतमिति भावः । नित्यस्यापि शब्दस्य न स्फोटरूपत्वम्; अदृष्टकल्पनापत्तेरित्यादि शाबरभाष्यादौ व्यक्तम् । अतो वर्णा एव शब्दाः, ते च नित्या एव । तदुक्तम्—“गकारौकारविसर्जनीया इति भगवानुप(१)वर्ष”—इति ।

---

(१) उपवर्षाचार्यो हमे बोधायनाचार्यो इति तत्त्वटीकायां वेदान्तदेशिकैः—“उपवर्षाचार्योऽयं बोधायनो वा स्यात्”इति स्फोटवादनिरासप्रकरणगत श्रीभाष्यव्याख्यायां संभावनीयत्वेपमवलम्ब्य प्रोफसर श्रीकुप्पुस्वामिशास्त्रिपादाः प्रयागनगरसंक्रान्तप्राच्यविद्यातुरीयाधिवेशने विवेचयन्ति ।

वयं तु प्रतीमः—यत् भट्टभास्करभाष्ये द्वितेषु स्थानेषु मुद्रितपुस्तके १२५ तमादिपृष्ठेषु “शास्त्रसंप्रदायप्रवर्तकश्चोपवर्षाचार्यश्चे”त्यादिनिर्देशेनोपवर्षाचार्याणां स्वशास्त्रसंप्रदायप्रवर्तकत्वोल्लेखेन श्रीभास्करसंप्रदायप्रवर्तकत्वेनोपवर्षाचार्येषु स्वीकरणीयत्वात्, श्रीभगवद्भास्करभाष्यस्य स्वरूपतो जीवविभुत्वसिद्धान्तपरस्य श्रीभगवद्रामानुजभाष्यस्य च तदणुत्वपरराद्धान्तपरस्यैकाचार्यमूलमूलभावस्य व्याहतत्वात्, उपवर्षाचार्यमते च जीवसर्वगतत्वमिव, न तु तदणुत्वमिति कुमारिलपादैर्वार्तिकारम्भोपसंहारावसरे—

“इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।

दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ।” इति

वार्तिकेन सूचनाच्च नोपवर्षाचार्या हमे बोधायनाचार्याः, किन्तु अन्य एवेति ।

अयं भावः—कुमारिलपादाः—“ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् । देहान्तरक्षमः कस्मात् सोऽनन्यस्यैव गच्छति” (७३) इत्यात्मवादप्रकरणे स्वरूपतो व्यापकत्वमिवमप्यौपाधिकं देहान्तरगमनादिकमिति

**एव वेदो मयापि अधीत इत्यादिप्रत्यभिज्ञाविरोधात्। अत एव**

अत्रेदं प्रष्टव्यम्—वेदस्य क्षणावस्थायित्वं किं वर्णानित्यत्वेन, उत पदानित्यत्वेनाहोस्वित् वाक्यानित्यत्वेनाथ वाक्यसमुदायरूपस्यानित्यत्वेन। अत्रान्त्ये वेदत्वं हि सर्वेषु वाक्यसमुदायेषु पर्याप्तम्, मन्त्रत्वं प्रतिवाक्यपर्याप्तमिति भाट्टदीपिकादौ व्यक्तम्। तत्र न तावत् स्वरूपतो वेदस्य क्षणावस्थायित्वमित्याह—**य एव वेद इति। प्रत्यभिज्ञाविरोधादिति॥** अबाधितप्रत्यभिज्ञाविरोधादित्यर्थः।

---

व्यवस्थाप्यान्ते "इदन्त्वमितद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन" इति विवेचनेनात्मवादप्रकरणेन भाष्यकारव्यवस्थाप्यस्यात्मनः स्वरूपतो व्यापकत्वमौपाधिकं परिच्छिन्नत्वमिति भास्करसिद्धान्तैकवाक्यतां सूचयन्तीत्यतिरोहितमिदम्। शाबरभाष्यगत आत्मवादग्रन्थस्तु वृत्तिकाराणामेवोपवर्षाचार्याणाम्। अतएव शास्त्रदीपिकायां वृत्तिकारग्रन्थावतारणावसरे "उपवर्षमतेन" इति वृत्तिकाराणामुपवर्षाचार्यत्वं स्पष्टमेवास्ति विवेचितम्। तथाचोपवर्षाचार्याणां स्वरूपतो जीवव्यापकत्वादिसिद्धान्तपक्षपातिनां जीवाणुत्वसिद्धान्तव्यवस्थापनपरभगवद्रामानुजाचार्यमूलाचार्यत्वं व्याहतमेवेति, सिद्धमिदं नोपवर्षाचार्या इमे बोधायनाचार्याः—इति।

यत्तु Madras oriental research पत्रिकायाः तृतीयेऽङ्के वृत्तिकारग्रन्थोऽयमात्मवादपूर्वतनग्रन्थ एव, नत्वात्मवादोऽपि वृत्तिकारग्रन्थ इति विवेचितम्, इदमेवात्र वक्तव्यम्—यत् "विद्यमानोपलम्भनत्वात्" इति भाष्यस्य "सत्संप्रयोगे" इति सूत्रगतस्य वेदाप्रामाण्योपपादकतया वृत्तिकारमतेन योजनावसरे उपस्थितस्य शरीरात्मवादस्यैव निरासः, "अव्यतिरेकः" इति "औत्पत्तिक" सूत्रस्यांशस्य योजनव्याजेनात्मवादेनावतारितो भाष्यकारेण। तत्राक्षेपांशस्य वृत्तिग्रन्थत्वं समाधानग्रन्थस्य भाष्यग्रन्थत्वमिति कल्पनायां वृत्तिकारैः शरीरात्मवादनिरासो न कृत इति कल्पनापत्तिः। न चेदं युक्तम्। यथा च सत्यप्येवम्—"एक आत्मनः शरीरे भावात्" इति सूत्रगतं "इत एवाकृष्याचार्येण शबरस्वामिना" इति शाङ्करभाष्यम् समाधानग्रन्थस्य "एक आत्मनः" इति सूत्रगतोपवर्षग्रन्थत्व आकृष्येत्येवं परतयोपपन्नं तथात्र व्यक्तम्। यथा च भास्करसिद्धान्तस्यानेकजीववादादिपराद्वैतसिद्धान्तस्य च यावत्सर्वमुक्ति फलतो न भेदस्तथात्र भूमिकायां विस्तरतस्समालोचितमिति न विरोधः। अधिकं चात्र वक्तव्यमस्मदीयशाबरभाष्यटिप्पण्यां विवेचितम्। सर्वथा तु नात्मवादग्रन्थो भाष्यकाराणाम्, किन्तूपवर्षाचार्याणामेव; तेषामेव भाष्यं "वेदान्तनिषेवणेन" इत्यत्र वेदान्तपदेन कुमारिलेनाट्टङ्कितम्, तस्य शाङ्करभाष्यस्य चानेकजीववादे यावत्सर्वमुक्ति फलतो न विशेषः, उपवर्षाचार्याणां भास्कराचार्याणां च संप्रदायैक्यम्। सति चैवं "शास्त्रसंप्रदायप्रवर्तकस्योपवर्षाचार्यस्य" इति भास्कराचार्यभाष्यस्य स्वसिद्धान्तमूलाचार्यत्वमुपवर्षाचार्याणामित्यत्रैव तात्पर्यात्, बोधायनाचार्याणां भगवद्रामानुजाचार्यमूलाचार्याणां नोपवर्षाचार्यपदव्यपदेश्यत्वं संभवद्युक्तिकमिति प्रतिभाति। इतः परं सर्वतन्त्रस्वतन्त्राः पण्डितप्रवरा एव प्रमाणमित्यलमतिविस्तरेण।

गकारादिवर्णानामपि न क्षणिकत्वम् ; सोऽयं गकार इति प्रत्यभिज्ञाविरोधात् । तथा च वर्णपदवाक्यसमुदायस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं प्रलयकालीनध्वंसप्रतियोगित्वञ्च, न तु मध्ये वर्णानामुत्पत्तिविनाशौ, अनन्तगकारकल्पने गौरवात् । अनुच्चारणदशायां वर्णानामनभिव्यक्तिः तदुच्चारणरूपव्यञ्जकाभावात् न विरुद्ध्यते ; अन्धकारस्थले घटानुपलम्भवत् । उत्पन्नो गकार इत्यादिप्रत्ययस्तु सोऽयं गकार इति प्रत्यभिज्ञाविरोधादप्रमाणम्, वर्णाभिव्यक्तिजनकध्वनिगतोत्पत्तिनिरूपित-

एतेन—स्वतन्त्रं बहुभिः प्रयुज्यमानानां बहूनां लौकिकानां वाक्यानां तदेवेदं वाक्यमनेनापि प्रयुक्तमिति प्रत्यभिज्ञया बाधात् यथा तत्सदृशमेतद्वाक्यमित्येवमिदंपरतयाऽविरोधो न तथाऽत्र मध्ये विनाशेऽपि सादृश्यविषयतया प्रत्यभिज्ञाऽविरोधः संभवतीति—सूचितम् ; स्वतन्त्रपुरुषैर्बहुभिः कृतानामेकरूपाणामपि वाक्यानां क्रमधर्मिभूतोच्चारणादिभेदात् भेद इत्येव हि मीमांसकादीनां मतम् । अतो वेदस्य मध्ये नोत्पादविनाशौ इति भावः ।

वर्णानां मध्ये उत्पादविनाशाभ्यां वेदस्य तत्र तौ निरस्यति—अत इति । वक्ष्यमाणहेतोरित्यर्थः । तमेव हेतुमाह—सोऽयं गकार इति ॥

तत्र यथा क्रमविनाशेऽपि पदानां नित्यत्वम् केनापि स्वतन्त्रं क्रमविशेषारचनात्, तथा वेदेऽपि स्वतन्त्रकर्तुरस्मरणात् वाक्यसमुदायस्यापि नित्यत्वमिति न दोषः । अत्र च वर्णसमुदायो वाक्यसमुदायो वा वेद इति मतमनुसृत्याह—तथा च वर्णपदवाक्यसमुदायस्येति ।

ननु यदुत्पद्यते तत् प्राक्प्रलयादुत्पादविनाशशालि, यथा घटादिकमित्यत आह—वियदादिवदिति । ननु वर्णानां नित्यत्वे कथमनुच्चारणदशायामपि नोपलम्भ इत्यत आह—अनुच्चारणेति । नच्चावृतमनुपलभ्यमानं

परम्परासम्बन्धविषयत्वेन प्रमाणं वा। तस्मात् न वेदानां क्षणिकत्वम्।

ननु क्षणिकत्वाभावेऽपि वियदादिप्रपञ्चवत् उत्पत्तिमत्त्वेन परमेश्वरकर्त्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेत्, न; नहि तावत् पुरुषेण उच्चार्य्यमाणत्वं पौरुषेयत्वम्, गुरुमतेऽपि अध्यापकपरम्परया पौरुषेयत्वापत्तेः। नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वम्, नैयायिकाभिमतपौरुषेयत्वानुमाने अस्मदादिना सिद्धसाधनत्वा-

न सदिति भवतीत्याह—अन्धकारस्येति। उत्पन्नो गकार इति। व्याख्यातपूर्वोऽयं ग्रन्थः।

ननु—वियदादिवत् वेदस्येश्वरप्रणीतत्वाङ्गीकारे वेदस्यापौरुषेयत्वसिद्धान्तो भज्येतेत्याशयेन शङ्कते—नन्विति॥ किमिदं पौरुषेयत्वमापाद्यते—किं पुरुषेणोच्चार्यमाणत्वरूपम्, उत पुरुषाधीनोत्पत्तिकत्वमाहो स्वतन्त्रपुरुषोच्चार्यमाणत्वम्। नाद्य इत्याह—नहीति। न द्वितीय इत्याह—नापीति॥ तृतीयमिष्टापत्त्या परिहरति—किन्तु सजातीयेति। न सजातीयाच्चारणानपेक्षेति। तदुक्तं न्यायप्रकाशे—"ईश्वरो गतकल्पीयं वेदं स्मृत्वोपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्ते"रिति।

अयं भावः—अर्थं बुद्ध्वा शब्दरचनेति न्यायेन वेदरचनातः पूर्वं वेदार्थज्ञानं नियमेनापेक्षितम्। न हि वेदार्थज्ञानं वेदमन्तरा प्रमाणान्तरेण भवति। विद्यमानविषयं प्रत्यक्षं न भाविनं धर्मं गोचरयितुमर्हति, प्रत्यक्षमूलकत्वाच्चानुमानादेर्न तस्याप्यवकाशः। तदुक्तं—धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति॥ नच कल्पान्तरीयं वेदं दृष्ट्वा वेदान्तरं भगवता रचितमिति वाच्यम्। तत्र यदि कल्पान्तरीयवेदस्यानुपूर्वी एतत्कल्पीयानुपूर्वीतोऽभिन्ना, तर्हि इष्टापत्तिः। यदि तु भिन्ना, तर्हि नेदमुपपद्यते। "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या-

पत्तेः, किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम्। तथाच सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदमिति सजा-

प्रयुक्तो न तमर्थमाह॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादि"ति स्वरादिमात्रेणान्यथाभावं वेदस्य न सहते श्रुतिः, किं पुनः प्रपाठकादिचतुष्षष्टिपरिमितस्यानेकशाखादिभिन्नस्येयतो वाक्यजातस्य? एवंच वेदापौरुषेयत्वं पारिभाषिकमिदं न कथमपि भवतीति भावः। एतेन—काठककालापादि समाख्यापि—व्याख्याता; कठादिप्रवक्तृत्वेन तदुपपत्तेः। तदुक्तं—समाख्याऽध्यापकत्वेनेति। यदत्र नैयायिकानामनुमानं—वेदः, स्वतन्त्रपुरुषप्रणीतः, वाक्यत्वात् भारतादिवत् इति, तत्र वाक्यत्वपुरुषप्रणीतत्वयोरेव व्याप्यव्यापकभावात्साध्याप्रसिद्धिः, स्मर्यमाणकर्तृकत्वेन सोपाधिकत्वम्, वेदः अपौरुषेयः अस्मर्यमाणकर्तृकत्वादिति प्रतिसाधनं च भवतीति न तत् प्रयोजकम्। यदि स्वतन्त्रपुरुषप्रणीतो वेदः स्यात्, तर्हि कर्तुरपि स्मरणं भारतादाविव स्यात्। तदुक्तं श्लोकवार्तिकव्याख्यायां न्यायरत्नाकराख्यायां—"वेदानां हि कर्ता त्ववश्यं तत्कालभवैः पुरुषैः प्रत्यक्षेणानुभूयेत, तैश्चान्येभ्यः कथ्येत तैश्चान्येभ्य इत्येवं परंपरया नियतरूपमिव कर्तुर्मन्वादीनामिवाध्येतृभिः स्मरणं स्यात्, न तु तदस्ति" इति। तथाच न वेदः स्वतन्त्रपुरुषप्रणीत इति भावः।

ननु—एवं सति भारतादीनामपि अपौरुषेयत्वं भवतु, वैयासिकादिसमाख्यायाः व्यासादिप्रवक्तृत्वेन काठकादिवदुपपत्तेः, यथा हि ऋग्वेदप्रतिपादिता अर्था यजुर्वेदेऽपि प्रतिपाद्यन्ते चेदपि न ऋग्वेदमूलकत्वं यजुर्वेदस्यैवं भारतेऽपि वेदार्थोक्तावपि न वेदस्तत्र मूलम्, अत एव वेदानध्यापयामास महाभारतपञ्चमानित्यादिवचनोपपत्तिरित्यत आह—भारतादीनां त्विति। तु शब्देन भारतस्य वेदवैलक्षण्यं सूचितम्, तदेवाह—सजातीयेति।

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं पुराणं मुनिना कृतमित्यादौ व्यासकृतत्वमिव स्पष्टतोऽवगम्यते। अर्थज्ञानं तु वेदमूलकं संभवति, ऋग्वेदो यजुर्वेदः सामवेद इति चतुर्धैव वेदस्य विभागो दृश्यते, तत्र

तीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदानाम्। भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्। एवं पौरुषेयापौरुषेयभेदेन द्विविध आगमो निरूपितः।

इति वेदान्तपरिभाषायामागमपरिच्छेदः।

च भारतस्य गणना नास्ति, महाभारतपञ्चमानिति तु भारतस्यावेदत्वेऽपि "मनःषष्ठानीन्द्रियाणि" "यजमानपञ्चमा इडां भक्षयन्ती" त्यादिवदुपपन्नमिति कल्पान्तरीयैवानुपूर्वी अत्र कल्पनीया; मन्त्रो हीन इत्यस्यात्राप्रवृत्तेः। अतश्च वेदापौरुषेयत्वं नानुपपन्नमिति भावः।

ननु भारतादीनां वेदमूलकत्वे तदधिगतार्थविषयत्वात् प्रामाण्यासंभव, अतस्तेषामपि स्वतन्त्रत्वमङ्गीकरणीयमिति चेत्, अत्रेदं प्रष्टव्यं किमनधिगताबाधितार्थविषयकज्ञानत्वरूपम् अननुवादकत्वं तेषां न संभवेदित्यापाद्यते? उताबाधितार्थविषयकज्ञानत्वरूपं प्रामाण्यम्? आद्ये इष्टापत्तिः, उक्तं हि मूलकता—तत्र लौकिकानां वाक्यानां मानान्तराधिगतविषयतयाऽनुवादकत्वमिति। द्वितीये तु उक्ताधिगतविषयत्वस्य प्रामाण्याविरोधित्वान्नोक्तासंभवः। एवं च तत्र तत्र लौकिकवाक्यानां प्रमाणत्वेन व्यवहार उपपन्न एवेति न किञ्चिदनुपपन्नम्। तमिममर्थं सूचयन् आगमप्रकरणमुपसंहरति—

एवमिति। आगमो द्विविध इति॥

यद्यपि वेद एवागमपदं मुख्यम्, तथापि गौण्या प्रमाणवाक्यत्वसाम्येन लौकिकवाक्यस्याप्यागमपदेन व्यवहार इति शिवम्॥

इति वेदान्तपरिभाषाप्रकाशिकायामागमपरिच्छेदः।

## पञ्चम परिच्छेदः ।

इदानीमर्थापत्तिर्निरूप्यते । तत्र उपपाद्यज्ञानेन उपपादक-कल्पनमर्थापत्तिः ।

### अथार्थापत्तिपरिच्छेदः ॥

क्रमप्राप्तमर्थापत्तिप्रमाणं निरूपयितुं प्रतिजानीते—**इदानीमिति** ॥ **अर्थापत्तिरिति** ॥ वक्ष्यमाणरीत्या षष्ठीसमासबहुव्रीहिभ्यां फलरूपा करणरूपा चार्थापत्तिरित्यर्थः ।

**ननु**—अर्थापत्तिनिरूपणस्य किं फलमद्वैतिनामभिमतम्, श्लोक-वार्तिके हि—

स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिन् लिङ्गादिभिर्या विनियोजिका च ॥
फलादिभिर्यत् परिपूरणं च सम्बन्धकृत्तत्र न काचिदस्ति ।
तत्सर्वमित्याद्यसमञ्जसं स्यात् न चेदियं स्यादनुमानतोऽन्या ॥

इत्यनुमानात्पृथगर्थापत्तिप्रमाणस्वीकारस्य यानि प्रयोजनानि स्मृत्या श्रुतिकल्पनादीन्युक्तानि न तानि अद्वैतिनामसाधारणानि प्रयोजनानि, इति चेत् प्रपञ्चमिथ्यात्वसिद्धिरेव तत् फलमिति दृष्टार्थापत्त्युदाहरणेन स्वयमेव ग्रन्थकारः सूचयिष्यति ॥

अत्रैवं नैयायिका मन्यन्ते—अर्थापत्तिर्नातिरिक्तं प्रमाणमनुमान एवान्त-र्भावात् इति, तदिदं मीमांसका न सहन्ते, पक्षद्वयेऽप्युपपत्तयः तत्तत्संमतास्तत्र-तत्र व्यक्तीभविष्यन्ति । तत्र "व्यवहारे भाट्टनय" इति प्रमाणप्रमेयविभागस्याद्वैतिनां भाट्टसिद्धान्तानुसारित्वात् तन्मतानुसारेणार्थापत्तिप्रमाणस्वरूपमाह—**तत्रेति** ॥

फलकरणरूपार्थापत्तिघटकेत्यर्थः । **अर्थापत्तिरिति** । फलार्थापत्ति-रित्यर्थः । उपपादकज्ञानमिति यावत् । अत्रोपपाद्यज्ञानेनेति पदम् उपपाद्य-ज्ञानस्य तत्त्वेन करणत्वम्, नतु व्यतिरेकव्याप्तिज्ञानत्वादिना ; येनानुमान एवान्त-र्भावः स्यादिति सूचयितुं स्वरूपकथनरूपम्, नतु लक्षणघटकम् ॥

जीवन् देवदत्तो गृहे नास्तीत्येष जीवनसंशयो बहिर्भावं कल्पयतीति संशय एवार्थापत्तौ करणमिति केचन मन्यन्ते, तदिदं मतं न युक्तम् ;

तत्र उपपाद्यज्ञानं करणम्, उपपादकज्ञानं फलम् । येन विना यत् अनुपपन्नं तत् तत्र उपपाद्यम् । यस्य अभावे यस्य अनुपपत्तिः तत्तत्र उपपादकम् । यथा रात्रिभोजनेन विना दिवा अभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वम् उपपाद्यम् । यथा वा रात्रिभोजनस्य अभावे तादृशपीनत्वस्या-

गृहाभावनिश्चयसहितेन जीवनसंशयेन बहिर्भावनिश्चये स्थाणुर्वा पुरुषो वेत्यत्र स्थाणुत्वसंशयेन स्थाणुत्वनिश्चयापत्तेः । यदि 'शतवर्षजीवी देवदत्तः' 'जीवन् देवदत्तो गृह एवे'ति नियमद्वयबलाबलाज्ञानजनित एव संशयोऽर्थापत्तौ करणम्, तादृशस्तु संशयो न स्थाणुत्वसंशय इति नातिप्रसङ्गः, एवमपि अर्थापत्तेरतिरिक्तप्रमाणत्वं नाङ्गीकरणीयम् ; जीवन् देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहेऽभावादित्यनुमानेनेवेष्टसिद्धेः, न च हेतुविशेषणासिद्धिः ; अनयोरेकं बाध्यं विरुद्धार्थग्राहकत्वादिति सामान्यतोऽनुमानेन लाघवतर्कसहितेन गृह एवेति नियममात्रस्य बोधेन तत्सिद्धेः । किं च संशयकरणत्वेऽर्थापत्तेराभासत्वं न सिद्धेरत्, यथोक्तसामग्रीजन्यसंशयकार्यापत्तेराभासत्वायोगात् । अतोऽनुपपत्तिज्ञानमेवार्थापत्तौ करणमित्यभिप्रायेणाह—**तत्रेति** ॥

**उपपाद्यज्ञानं करणमिति** । एवंच जीवन् देवदत्तो गृहे नास्तीत्यत्र जीवनं बहिःसत्त्वं विनाऽनुपपन्नत्वेन ज्ञायमानं बहिः सत्त्वं कल्पयतीति न दोषः । उपपाद्योपपादकयोः स्वरूपं विवेचयति—**येनेति** ॥ दृष्टार्थापत्तिविशेषे समन्वयमातनुते—**यथेति** ॥

**रात्रिभोजनेनेति** ॥ यद्यपि श्लोकवार्तिकादौ श्रुतार्थापत्तेरेवोदाहरणं पीनत्वज्ञानेन रात्रिभोजनकल्पनमिति निरूपितम् । तदुक्तं श्लोकवार्तिके—"पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ । रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते" इति ; तथापि पीनत्वादिप्रत्यक्षतादशायां रात्रिभोजनकल्पनमपि संभवतीति न दोषः । एतेन—शतवर्षजीवी देवदत्तो गृहे नेति वाक्यश्रवणसमनन्तरबहिःसत्त्वकल्पनाया उत्तरत्र ग्रन्थकारैः श्रुतार्थापत्तित्वेन व्यपदेशोऽपि—व्याख्यातः ।

नुपपत्तिरिति रात्रिभोजनमुपपादकम् । रात्रिभोजनकल्पनारूपायां प्रमितौ अर्थस्यापत्तिः कल्पनेति षष्ठीसमासेन अर्थापत्तिशब्दो वर्त्तते, कल्पनाकरणपीनत्वादिज्ञाने तु अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्त्तते इति फलकरणयोः उभयोः तत्पदप्रयोगः ।

सा च अर्थापत्तिः द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिः यथा, इदं रजतमिति पुरोवर्त्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं

अर्थापत्तिशब्दस्य करणफलोभयपरत्वं व्युत्पत्तिविशेषेण साधयति—**अर्थास्यापत्तिरिति ।** कल्पनेनेति आपत्तिपदविवरणम् । **षष्ठीसमासेनेति ।** षष्ठ्यन्तेनार्थपदेन सहापत्तिशब्दस्य षष्ठी चेति सूत्रविहितसमासेनेत्यर्थः । प्रतिपदविधाना षष्ठी न समस्यते इति परिभाषायाः कृद्योगषष्ठी समस्यते इत्यनेन अपवादात् कर्तृकर्मणोः कृतीति सूत्रविहितषष्ठ्यन्तेनापि समास उपपन्न इति भावः ॥

अत्र च पक्षे आपत्तिपदं भावव्युत्पन्नम् । यदि तु आपद्यतेऽनयेति करणव्युत्पत्तिराश्रीयते, बाहुलकत्वात् करणेऽपि क्तिन् प्रत्ययश्च क्रियते, तदा करणपरम् । अत्रापि षष्ठीसमास एव । परंतु स्त्रियां क्तिनो भावाधिकारत्वेन बाहुलकत्वेन करणपरत्वाश्रयणमयुक्तं मत्वा बहुव्रीहिसमासेनैव करणपरत्वमङ्गीकरणीयमित्यभिप्रायेणाह—**अर्थस्यापत्तिरिति ॥**

कल्पनेति पूर्ववत् । व्यधिकरणबहुव्रीहिसमासस्यापि ज्ञापकसिद्धस्य प्रामाणिकत्वान्न दोषः । अर्थापत्तिं विभजते—**सा चेति ॥**

दृष्टार्थापत्तेरुदाहरणं श्लोकवार्तिकादौ जीवन् देवदत्तो गृहे नास्तीति बहिःसत्त्वकल्पनमुक्तम्, केचित्तु पीनत्वेन रात्रिभोजनकल्पनं तदुदाहरणं मन्यन्ते । तदुभयं यद्यपि नानुपपन्नम्; तथाप्यसाधारणमुदाहरणं वर्णनीयमित्यभिप्रायेणाह—**यथेदं रजतमिति । मिथ्यात्वं कल्पयतीति ॥**

सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्यत्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं कल्पयति। श्रुतार्थापत्तिः यथा, श्रूयमाण-वाक्यस्य स्वार्थानुपपत्तिमुखेन अर्थान्तरकल्पनम्, यथा "तरति शोकमात्मविदिति। अत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिवर्त्त्यत्वस्य अन्यथानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते। यथा वा जीवी देवदत्तो गृहे न इति वाक्यश्रवणानन्तरं जीविनो गृहासत्त्वं बहिःसत्त्वं कल्पयति।

प्रातिभासिकत्वं कल्पयतीति भावः। परोक्षस्थले परिभाषाकारैरन्यथा-ख्यातिस्वीकारात् अपरोक्षरजतनिषेध एव प्रातिभासिकत्वसाधक इति भावः।

कल्पयतीति॥ सा दृष्टार्थापत्तिरिति सम्बन्धः॥

दृष्टेनार्थेनादृष्टस्यार्थस्यापत्तिरिति भावः। तदुक्तं श्लोकवार्तिके—प्रमाण-षट्कविज्ञातो यत्रार्थो नान्यथा भवेत्। अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता। इति॥ अत्र च दृष्टपदेन शब्देतरप्रमाणजन्यज्ञानविषयो विवक्षित इत्यादि श्लोकवार्तिके सोदाहरणं प्रपञ्चितम्।

**ननु**—दृष्टपदस्य प्रमाणषट्कजन्यज्ञानविषयत्वमङ्गीकृत्यैकैवार्थापत्तिरङ्गी-क्रियताम्, किं श्रुतार्थापत्त्या अतिरिक्ताया विभागेनेति चेत्,—

अत्र कुमारिलपादाः—प्रमाणग्राहकत्वेन यस्मात् पूर्वविलक्षणेति वदन्ति॥

अयमाशयः—दृष्टार्थापत्तौ अर्थस्यैव कल्पनम्, श्रुतार्थापत्तौ तु शब्दस्य प्रमाणस्य कल्पनमिति वैषम्यात् भेदेन विभाग इति॥

यदि हि श्रुतार्थापत्तौ अर्थस्यैव कल्पनमिति स्यात्, तर्हि श्रुतस्यैव वचनस्य सोऽर्थः कल्पनीयः, न चेदं युक्तम्; तदुक्तं श्लोकवार्तिके—"न तावत् श्रूयमाणस्य वचसोऽर्थोऽयमिष्यते। नह्यनेकार्थता युक्ता वाक्ये वाचकता तथा। पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते। न रात्र्यादिपदार्थस्य दिवावाक्येन गम्यते॥ न दिवादिपदार्थानां संसर्गो रात्रिभोजनम्। अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना। "तस्मात् वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते" इति। अतोऽर्थापत्तिद्वैविध्यमिदमुपपन्नमिति भावः॥

श्रुतार्थापत्तिश्च द्विविधा, अभिधानानुपपत्तिः अभिहितानुपपत्तिश्च। तत्र यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगिपदान्तरं कल्प्यते, तत्र अभिधानानुपपत्तिः; यथा द्वारमित्यत्र पिधेहीति पदाध्याहारः। यथावा, "विश्वजिता यजेत" इत्यत्र स्वर्गकामपदाध्याहारः। ननु द्वार-

अर्थान्तरकल्पनमिति। स्वोपपादकार्थान्तरबोधकवाक्यान्तरकल्पनमित्यर्थः। कल्पितं च वाक्यं यदि वेदवाक्यमूलकम्, तर्हि वैदिकम्; यदि लौकिकवाक्यमूलकम्, तर्हि लौकिकमिति ज्ञाननिवर्त्त्यत्वानुपपत्तिज्ञानमूलकं प्रपञ्चमिथ्यात्वमप्यागमिकमेव। एतेन—अर्थापत्तिप्रमाणनिरूपणमद्वैतिनां सफलमिति—सूचितम्।

बहिःसत्त्वं बहिःसत्त्वबोधकवाक्यमित्यर्थः। श्रुतार्थापत्तिं विभजते—श्रुतार्थापत्तिश्चेति॥ अभिधानानुपपत्तिः अन्वयानुपपत्तिरित्यनुपदं मूल एव स्फुटम्। स्वर्गकामपदाध्याहार इति॥ स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादिति चातुर्थिकन्यायसाधितत्वादिति भावः॥

ननु—अर्थापत्तिर्न प्रमाणान्तरम्; अनुमान एवान्तर्भावात्। तथाहि—जीवन् देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहेऽभावादित्यनुमानेन जीवतो गृहेऽसतश्च देवदत्तस्य बहिःसत्त्वं सिद्धम्। एवं दिवाऽभुञ्जानो देवदत्तः रात्रिभोजनवान् भोजनसाध्यपीनत्ववत्त्वात् इत्यनुमानेन रात्रिभोजनसिद्धिः। एतेन—रजतमिथ्यात्वादिकमपि व्याख्यातम्; न चान्वयदृष्टान्ताभावः; यो विद्यमानत्वे सति गृहे नास्ति स बहिरस्तीति सामान्यव्याप्तौ यज्ञदत्तादिविशेषदृष्टान्तसंभवात्॥

ननु गृहाधिकरणकाभावस्य देवदत्ताधर्मत्वात् पक्षधर्मताज्ञानाभावः, गृहाधिकरणकाभावप्रतियोगित्वस्य हेतुघटकत्वेऽपि तस्यासन्निकृष्टदेवदत्तधर्मत्वाग्रहणाच्च तत्, तदुक्तम्—चैत्राभावस्य हेतुत्वं गेहेऽभावश्च संस्थितः। पूर्वं न चागृहीतस्य धर्मिणः स्यात् प्रमेयतेति।

मित्यादौ अन्वयाभिधानात् पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विना अनुपपन्नमिति कथं ज्ञातमिति चेत्, न, अभिधानपदेन करणव्युत्पत्त्या तात्पर्य्यस्य विवक्षितत्वात्। तथाच द्वारकर्मकपिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विनाऽनुपपन्नमिति ज्ञानं तत्रापि सम्भाव्यते ।

अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन् अर्थान्तरं कल्पयति तत्र द्रष्टव्या, यथा "स्वर्गकामो ज्योतिष्टोमेन यजेत" इत्यत्र स्वर्गसाधनत्वस्य क्षणिकयागगततयाऽवगतस्यानुपपत्त्या मध्यवर्त्त्यपूर्वं कल्प्यते ।

न चेयमर्थापत्तिरनुमानेऽन्तर्भवितुमर्हति ; अन्वयव्याप्तिज्ञानेनान्वयिनि अनन्तर्भावात् । व्यतिरेकिणश्चानुमानत्वं

न च—स्मर्यमाणे देवदत्ते गृहाभावप्रतियोगित्ववैशिष्ट्यग्रहात् पक्षधर्मताज्ञानसंभवः । तदुक्तं दीधितौ—"अनतिप्रसक्तसहकारिवशान्मनसैव स्मृतदेवदत्तविशिष्यकस्तृतीयलिङ्गपरामर्शः" इति, तथाच न दोष इति—वाच्यम् ; एवमपि विद्यमानत्वरूपहेतुविशेषणज्ञानस्य बहिःसत्त्वज्ञानाधीनत्वेन विद्यमानत्वज्ञानाधीनत्वेन च बहिःसत्त्वज्ञानस्यान्योन्याश्रयात्नानुमानेन बहिःसत्त्वज्ञानमित्यर्थापत्तिरतिरिक्तं प्रमाणमङ्गीकरणीयमिति चेत्,

न ; अर्थापत्तिप्रमाणवादिनामपि परस्पराश्रयदोषस्योक्तस्य समानत्वेनादोषेणातिरिक्तप्रमाणाङ्गीकारस्य निरर्थकत्वादित्याशङ्क्य समाधत्ते—

न चेयमिति ॥

व्यतिरेक्यनुमानाङ्गीकारे खलु अर्थापत्तिप्रमाणवैतथ्यम् ; न तु तदङ्गीकृतम् ; अतोऽर्थापत्तिप्रमाणान्तरताङ्गीकार आवश्यक एव । न च विनिगमनाविरहादर्थापत्तेरेव निरासो भवत्विति वाच्यम् ; जीवतो देवदत्तस्य बहिःसत्त्वस्यान्योन्याश्रयेणाऽऽनुमानिकत्वाभावात् । न चार्थापत्तावपि समानोऽयं दोष

प्रागेव निरस्तम् । अर्थापत्तिस्थलेऽनुमिनोमीति नानुव्यवसायः, किन्तु अनेन इदं कल्पयामीति । ननु अर्थापत्तिस्थले इदमनेन विनाऽनुपपन्नमिति ज्ञानं करणमित्युक्तम् ? तत्र किमिदं तेन विनाऽनुपपन्नत्वम् ? तदभावव्यापकाभावप्रतियोगित्वमिति ब्रूमः । एवमर्थापत्तेर्मानान्तरत्वसिद्धौ व्यतिरेकि नानुमानान्तरम् । 'पृथिवी इतरेभ्यो भिद्यते' इत्यादौ गन्धवत्त्वमितरभेदं विनाऽनुपपन्नमित्यादिज्ञानस्य करणत्वात् । अत एवानुव्यवसायः पृथिव्यामितरभेदं कल्पयामीति ।

## इति वेदान्तपरिभाषायामर्थापत्तिपरिच्छेदः ।

इति—वाच्यम् ; तत्र तस्यादोषत्वात् । तदुक्तं न्यायरत्नाकरे—ईदृग्रूपमेव ह्येतत् प्रमाणम्, यदर्थं च यस्यासत्यर्थान्तरे मिथः प्रतिघातेनासंभवमालोच्यार्थान्तर-कल्पना प्रतिघातं परिहृत्य संभवतीत्यत एव विलक्षणसामग्रीत्वेन प्रमाणान्तर-त्वम् इति ।

श्लोकवार्तिकेऽप्युक्तम्—पक्षधर्मादिविज्ञानं वह्निः संबोधतो यदि । तेष तद्बोधतोऽवश्यमन्योन्याश्रयता भवेत् । अन्यथाऽनुपपत्तौ हि प्रमेयानुप्रवेशिता ॥ ताद्रूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः । इति । एवंचार्थापत्तिरतिरिक्त-प्रमाणमिति भावः । **ब्रूम इति ॥** श्लोकवार्तिकादौ सादरम् अर्थापत्ति-प्रमाणस्य साधनादादरविशेषेणास्मद्बहुवचनम् । **वस्तुतस्तु**—मीमांसकानां मतेऽपि व्यतिरेक्यनुमानेनैवेष्टसिद्ध्या प्रमाणान्तरस्वीकारे न तावदाग्रहो विद्यते । तदुक्तं श्लोकवार्तिकेऽर्थापत्तिप्रकरणान्ते—"एवंस्वभावाऽप्यनुमानशब्दं लभेत चेदस्तु यथेप्सितं नः" इति ॥

इति वेदान्तपरिभाषाप्रकाशिकायामर्थापत्तिपरिच्छेदः ।

---

# अथानुपलब्धिपरिच्छेदः ।

**इदानीम् षष्ठमनुपलब्धिप्रमाणं निरूप्यते । ज्ञानकरणा-जन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् ।**

## अथानुपलब्धिपरिच्छेदः ।

**इदानीमिति ।** यथावसरमित्यर्थः । अनेनावसरसङ्गतिः सूचिता । षष्ठं प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदेन विभक्तप्रमाणेषु षष्ठं प्रमाणाभावरूपं प्रमाणं निरूप्यते इत्यर्थः ॥

अनुपलब्धिप्रमाणाङ्गीकारस्य प्रयोजनं श्लोकवार्तिके—वस्त्वसंकरसिद्धिश्च तत्प्रामाण्यसमाश्रया । इत्यादिनाऽसद्रूपेण घटादिज्ञानमित्युक्तम् । एवं च ब्रह्मणि प्रपञ्चाभावसिद्धिद्वाराऽद्वितीयब्रह्मस्वरूपसिद्धिरद्वैतिनामसाधारणं फलमिति सिद्धमिति न तत्प्रमाणविचारोऽद्वैतिनां निष्प्रयोजनः ॥

ननु—किं नामानुपलब्धिप्रमाणस्य लक्षणम् ? इति ?

अत्र वार्तिककाराः—"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्ताव-बोधार्थं तत्राभावप्रमाणते"ति श्लोकेन प्रमाणपञ्चकाभावोऽनुपलब्धिप्रमाणलक्षण-मिति वदन्ति ॥

शबरस्वामिनोऽपि अभावोऽपि प्रमाणाभावोऽपि नास्तीत्यस्यार्थस्यासन्निकृष्टस्य इति वदन्त एतमेवार्थमभिप्रयन्ति ।

अत्र च प्रमाणाभावः स्वरूपत एव चक्षुरादीन्द्रियवत् प्रमाणम्, न तु ज्ञायमानः ज्ञानद्वारेति नाभावहेतुकानुमानस्याप्यनुपलब्धित्वमिति न दोष इति सूचयन् उक्तवार्तिकादिसिद्धमनुपलब्धिलक्षणमाह—**ज्ञानकरणेति** ॥

ज्ञानकरणाजन्येति अनुमानादिनिरासः, अभावानुभवेत्यनेन प्रत्यक्षस्मृत्योर्निरासः ॥

**ननु**—प्रमाणाभावो न प्रमाणम्, प्रत्यक्षेणैवेष्टसिद्धेः, तथाहि- इन्द्रियार्थ-सन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्, तत्र सन्निकर्षः षड्विधः, संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-संयुक्तविशेषणताभेदेन । स च

संयोगेन द्रव्यस्य संयुक्तसमवायेन द्रव्यगतरूपादेः तज्जातेः संयुक्तसमवेतसमवायेन शब्दस्य समवायेन समवेतसमवायेन शब्दत्वस्याभावस्य तु संयुक्तविशेषणत्वेनेति किमर्थमिदं प्रमाणान्तरमिति—चेत्,

अत्र श्लोकवार्तिककाराः—

"न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥
ननु भावादभिन्नत्वात्संप्रयोगोऽस्ति तेन च ।
नह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः ।
धर्मयोर्भेद इष्टो हि धर्म्यभेदेऽपि नः स्थिते ।"
"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ॥
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात् ।
संयोगसमवायादिसंबन्धो नैव विद्यते ॥
नागृहीते हि धर्मत्वं गृहीते सिद्धसाधनम् ॥"

इत्यादिनाऽनुपलब्धेरतिरिक्तप्रमाणत्वं साधयन्ति । एवंच नास्य प्रत्यक्षाद्यन्तर्भावः ।

**अयं भावः**—अभावस्तु अधिकरणात्मक एव ; भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ।" इति वचनात् । भावस्य च घटादेः प्रत्यक्षविषयत्वमिवेष्टमिति कथं भूतलादिरूपस्याभावस्य प्रमाणान्तरगम्यत्वमिति चेत्,

अयमाशयः—ये हि मीमांसकाः अभावस्याधिकरणात्मत्वं मन्यन्ते, तेषां हि—"स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किंचित् रूपं कैश्चित् कदाचने"ति श्लोकवार्तिकात् भावस्यैवाधिकरणस्य रूपान्तरेणासद्रूपरूपस्यैवाभावपदेन व्यवहारः । एवं चाभावाख्यातिरिक्तधर्म्यनङ्गीकारेऽपि भाव एव रूपान्तरेणाभावत्वधर्मोऽङ्गीक्रियत एव । तदुक्तम्—भावान्तरमभावो हि कयाचित्तु व्यपेक्षयेति ।

एवंच भूतलत्वेन रूपेण चक्षुरिन्द्रिययोग्यस्यापि भूतलस्य घटादिरूपेण तद्योग्यत्वं न संभवति । अन्यथा घटवत्तादशायामपि घटाभावप्रत्यक्षताऽपत्त्या सर्वसंकरप्रसङ्गः ।

तदुक्तं श्लोकवार्तिके—दध्नि क्षीरम्, घटे पटः । शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि । अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह । व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता" इति ।

नच—“नहि भिन्नेन्द्रियग्राह्यं किंचिदस्त्यनुरागकृत्” इति वार्त्तिकात् प्रमाणान्तरगम्याभावभूतलयोर्वैशिष्ट्यग्रहणासंभवात् अभावप्रत्यक्षस्य विशिष्टवैशिष्ट्यविषयत्वनियमः कथं निर्वाह्यत इति—वाच्यम्; इदं हि वार्त्तिकं सम्बन्धाविशिष्टप्रत्यक्षत्वाभावाभिप्रायम्; एवं च प्रकृते भूतलाभावयोः संबन्धस्याभावप्रमाणग्राह्यत्वस्यैवोपगमेन विशिष्टज्ञानमपि अभावप्रमाणकमेव, नतु प्रात्यक्षिकम्। यथा पर्वतस्य प्रत्यक्षत्वेऽपि तत्र वह्निसम्बन्धज्ञानस्यानुमानिकत्वेन पर्वतविशिष्टज्ञानमानुमानिकं तद्वत्। एवंचाभावज्ञानं न प्रत्यक्षप्रमाणजन्यम्; नह्यीन्द्रियस्याभावग्राहकत्वशक्तिर्विद्यते।

न चानुपलब्धेरपि सा कल्पनीयैवेति—वाच्यम्; यदाहि कश्चित् प्रातःकाले कंचन देशमध्यासीनस्तत्र व्याघ्रादिकमदृष्ट्वा तदस्मरणाच्च तदभावमगृहीत्वा देशमात्रं दृष्ट्वा देशान्तरगतो मध्येदिनं पृच्छ्यते—कच्चित् प्रातःकाले तस्मिन् देशे व्याघ्रो गजः सिंहो वा समागतः? इति, स तदा तं देशमवगतत्वात्स्मरन्नपि तत्र देशेऽन्येषां व्याघ्रादीनामभावं प्रागगृहीतं तदैव गृह्णाति। न च मध्यदिने प्रातःकालिकस्याभावस्यानिन्द्रियसन्निकृष्टस्य संभवति प्रत्यक्षेण ग्रहणम्; तस्येन्द्रियसन्निकृष्टवर्त्तमानविषयत्वात्। एवंच प्रकृतेऽभावज्ञानमभावप्रमाणेनैव वर्णनीयं न प्रत्यक्षेणेति न प्रत्यक्षेणेष्टसिद्धिः॥

यद्यपि मध्याह्नसमये प्रातःकालिकव्याघ्राद्यभावज्ञानं नाभावप्रमाणकम्; योग्यानुपलब्ध्या एव कारणत्वात्, अन्यथा धर्माद्यभावस्यापि अभावप्रमाणकत्वापत्तेः; तथापि स्मृतियोग्यत्वात् अभावप्रमाणकत्वं नानुपपन्नम्॥

तदुक्तं न्यायरत्नाकरे—“ननु—प्रमाणाभावः प्रमाणमिति भाष्यम्, तत्कथं स्मरणाभावस्य प्रामाण्यम्? स्मरणाभावोऽपि फलतः प्रमाणाभाव एव। स्मरणस्य प्रमाणफलत्वात्” इति। एवं चाभावस्यापि प्रमाणत्वं क्लृप्तमेवेति नातिरिक्तप्रमाणकल्पनाप्रसङ्गः। तथाच न फलवैलक्षण्यात् स्वरूपवैलक्षण्याच्चानुपलब्धेः प्रत्यक्षादावन्तर्भावः॥

तदुक्तं वार्त्तिके—नास्तीतिधीः फलं चेषा प्रत्यक्षादेरजन्मनः। विलक्षणेन या बुद्धिर्जन्यते सानुमेष्यते। न चानुत्पत्तिरूपस्य कारणापेक्षिता क्वचित्— इति॥

न च—प्रमाणानां भावत्वं नियतम्, विषयवैचित्र्येण प्रमाणवैचित्र्योपपत्तेः,

अनुमानादिजन्यातीन्द्रियाभावानुभवहेतावनुमानादावति-व्याप्तिवारणायाजन्यान्तं पदम् । अदृष्टादौ साधारणकारणेऽति-व्याप्तिवारणाय असाधारणेति पदम् । अभावस्मृत्यसाधारण-हेतुसंस्कारेऽतिव्याप्तिवारणाय अनुभवेति विशेषणम् । न च

तदुक्तं वार्तिके—

"मानं कथमभावश्चेत् प्रमेयं चास्य कीदृशम् ? ॥
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ।
भावात्मके यथा मेये नाभावस्य प्रमाणता ।
तथाऽभावप्रमेयेऽपि न भावस्य प्रमाणता ।
भावात्मकस्य मानत्वं न च राजाज्ञया स्थितमि"ति ।

तथाचानुपलब्धेः षष्ठप्रमाणत्वात् तल्लक्षणस्य प्रत्यक्षादिव्यावृत्तस्यात्र निरूपण-मुपपन्नमिति भावः ।

**अतीन्द्रियेति ।** इन्द्रिययोग्यपदार्थाभावविषयानुभवस्यानुमानाजन्यत्वात् इदं विशेषणम् । अनुमानजन्यः अतीन्द्रियस्य योऽनुभव इत्यर्थः । एवं चातीन्द्रिय-पदं स्वरूपकीर्तनार्थमेवेति सूचयति—**अजन्यान्तं पदमिति ॥ अनुमाने ।** रूपं गुणाभाववत्, गुणत्वादित्यनुमाने इत्यर्थः । गुणाननुमानेन गुणाभावज्ञानं तु अभावप्रमाणकमेव ।

असाधारणपदनिवेशप्रयोजनमाह——**अदृष्टादाविति ।** आदिपदेन कालादिपरिग्रहः । ननु—अनुभवपदं किमर्थम् ? न च—संस्कारजन्यस्मृति-मादायातिव्याप्तिवारणार्थं तदिति—वाच्यम्; स्मृतौ अनुभवस्य करणत्वेनाभाव-स्मृतेर्ज्ञानकरणजन्यत्वेनाजन्यान्तपदेनैव तत्रातिव्याप्तिवारणात्, इत्यत आह—**स्मृतीति ॥**

**अयं भावः**—यथा घटानुपलब्धजन्यं घटाभावज्ञानमनुभवात्मकम्, एवं पूर्वाह्णमध्यन्दिनसमयासादितव्याघ्रादिस्मरणाभावजन्यज्ञानमप्यनुभवात्मकमेव, नतु स्मरणात्मकम्; व्याघ्राभावसंस्कारादीनामभावात्, प्रमाणविभाजक-वाक्यगतप्रमायाः स्मृतिव्यावृत्ताया एव विवक्षणात् । अन्यथा स्मृतिकरणे

प्रमाणत्वाङ्गीकारे संस्कारस्यापि सप्तमस्य प्रमाणस्याङ्गीकारप्रसङ्ग इति । एवंच संस्कारेऽतिव्याप्तिवारणायेत्यस्य संस्कारस्यातिरिक्तप्रमाणत्वापत्तिवारणार्थमित्यर्थोऽनुसन्धेयः ।

न च — **स्मृतीति** । प्रत्यभिज्ञेत्यर्थः — ज्ञानकरणेत्यत्र हि ज्ञानपदेन स्वान्यूनविषयकज्ञानमेव विवक्ष्यते । अनुमित्यादीनां स्वान्यूनविषयज्ञानजन्यत्वान्न दोषः, प्रत्यभिज्ञायां स्वन्यूनविषयानुभवस्यैव संस्कारद्वारा करणत्वात् तत्करणे संस्कारेऽतिव्याप्तिवारणार्थमनुभवपदमिति — वाच्यम् ;

अनुभवपदनिवेशेनाप्युक्तदोषावारणात् उपमानार्थापत्त्योरतिव्याप्तिपरिहारार्थं ज्ञानपदेन ज्ञानसामान्यस्यैव विवक्षणीयत्वात्, प्रत्यभिज्ञायां च संस्कारसहितचक्षुःसन्निकर्षस्यैवासाधारणकारणत्वेन ज्ञानस्यातथात्वात्, अभावप्रत्यभिज्ञाया अपि लक्ष्यत्वाच्च ।

यदितु ज्ञानकरणाजन्येतिविशेषणादानकाल एवायं दोषः, तन्निवेशानन्तरं तु अनुभवपदं नापेक्षितमेव, दृश्यते ह्ययमपि प्रकारोऽविद्यानुमाने विवरणे इति — विभाव्यते, तदा स्मृतीतिग्रन्थो यथाश्रुत एव न दुष्टो भवति ।

केचित्तु — ज्ञानकरणाजन्येत्यत्र करणपदेन प्रमाकरणस्यैव विवक्षणम् , तथाच ज्ञानात्मकप्रमाणमात्राजन्याभावज्ञानं स्मरणमपीति तदसाधारणहेतौ संस्कारेऽतिव्याप्तिग्रन्थ उपपन्न एवेति वदन्ति । अत्र करणपदेन प्रमाणमात्रविवक्षायां प्रमाणाभावः । अतएव ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति लक्षणस्य स्मृतौ नातिव्याप्तिः, अन्यथा तत्रापि अनुभवपदानिवेशन्यूनताप्रसङ्गात् ।

अन्येतु तत्त्वचिन्तामणौ प्रत्यभिज्ञायाम् अनुभवस्य न करणत्वम् ; अन्यथासिद्धत्वात्, किन्तु संस्कारस्यैव करणत्वमित्युक्तम्, तेन न्यायेन स्मृतावप्यनुभवस्याकरणत्वात् नोक्तग्रन्थानुपपत्तिरिति व्याचक्षते । तत्रापि तत्त्वचिन्तामणावेव तस्मिन् एव प्रकरणे स्मृतिं प्रति त्वनुभवः करणमेवेति निरूपितत्वान्न स्वारस्यं भवति ।

अयं निष्कर्षः — प्रमाणपञ्चकाभावोऽनुपलब्धिः । तत्र प्रत्यक्षप्रमाणाभावजन्याभावानुभवः प्रत्यक्षजातीय एव, अनुमानप्रमाणाभावाधीनाभावानुभवोऽनुमितिजातीय एवेत्यादि मूल एव निरूपयिष्यते । इति ॥

ननु — इदं न युक्तं एकप्रमाणजन्यज्ञानानामैकरूप्यस्यावश्यकत्वात् प्रत्यक्ष-

अतीन्द्रियाभावानुमितिस्थलेऽपि अनुपलब्धेरेवाभावो गृह्यतां विशेषाभावादिति वाच्यम् ; धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात् ।

प्रमाणाभावेन घटाभावस्य प्रत्यक्षजातीयग्रहणम् अनुमानप्रमाणाभावेनाभावस्यानुमानजातीयमित्यादिभेदायोगात् इति चेन्न,

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणते"ति श्लोकवार्तिकेन प्रमाणपञ्चकाभावस्य प्रमाणाभावपदार्थत्वोक्त्याऽनुपलब्धिप्रमाणस्यापि पञ्चधाऽवान्तरभेदाभ्युपगमेनादोषात् ॥

एवंच यस्य प्रतियोगिनो यत्प्रमाणविषयत्वयोग्यता तादृशप्रमाणाभावेन तज्जातीयतदभावानुभवो जायते, धर्माभावादिकमनुपलब्धिभेदगम्यमेव, नानुमानादिगम्यः कोऽप्यभावः। तदुक्तं श्लोकवार्तिके—"न चात्राप्यनुमेयत्वं लिङ्गाभावात् प्रतीयते।" इत्यादिना—"नचानवगतं लिङ्गं गृह्यते चेदसावपि। अभावत्वादभावेन गृह्येतान्येन हेतुना ॥ स चान्येन ग्रहीतव्यो नागृहीते हि लिङ्गता। तद्गृहीतिर्हि लिङ्गेन स्यादन्येनेत्यनन्तता ॥ क्वाप्यस्य स्यात् प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम्" इत्यन्तेन।

एवंच अनुमानादिप्रमाणाभावेन प्राथमिकधर्माभावादिज्ञानम्, पश्चात्तु धर्माभावाद्यनुमितिरपि न दोषायेति। तदुक्तं न्यायरत्नाकरे—"तस्मादवश्यं प्रत्यक्षाद्यनुत्पत्तेस्तल्लिङ्गत्वरहिताया एव प्रमाणान्तरतयैव क्वचिदभावप्रमाणत्वमङ्गीकरणीयम्, पश्चात्तु भवत्वनुमानम्" इतीति ॥

ननु—प्रमाणाभावेनातीन्द्रियप्रतियोगिकाभावज्ञानमपि घटाभावादिज्ञानमिव सत्तानिश्चयात्मकग्रहणरूपमेव भवेत्, नत्वनुमित्यादिजातीयम्; प्रमाणाभावत्वसामान्येन तज्जन्याभावज्ञानस्याप्यैकरूप्यस्योचितत्वात्, एवंच पूर्वमतीन्द्रियाभावज्ञानस्य घटाद्यभावज्ञानस्य च यद्वैलक्षण्यमुक्तं तन्नोपपन्नमित्याशयेन शङ्कते—नचेति ॥

अभावानुमितिस्थलेऽपीति ॥ प्रमाणाभावजन्यातीन्द्रियाभावज्ञानेऽपि। अनुपलब्धेरवेत्येवकारस्य गृह्यतामित्यनेन सम्बन्धः ॥

ननु केयं योग्यानुपलब्धिः? किं योग्यस्य प्रतियोगिनोऽनुपलब्धिः? उत योग्येऽधिकरणे प्रतियोग्यनुपलब्धिः? नाद्यः, स्तम्भे पिशाचादिभेदस्याप्रत्यक्षत्वापत्तेः। नान्त्यः, आत्मनि धर्माधर्माद्यभावस्यापि प्रत्यक्षत्वापत्तेरिति चेत्, न; योग्या चासौ अनुपलब्धिश्चेति कर्मधारयाश्रयणात्। अनुपलब्धेः योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोग्युपलब्धिकत्वम्। यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेन अधिकरणे तर्कितेन प्रसञ्जनयोग्यमापादनयोग्यं प्रतियोग्युपलब्धिस्वरूपं यस्य अनुपलम्भस्य तदनुपलब्धेः योग्यत्वमित्यर्थः। तथाहि स्फीतालोकवति भूतले यदि घटः स्यात्, तदा घटोपलम्भः

यत्तु—शिखामण्यासुबोधिन्योरतीन्द्रियाभावज्ञानस्यानुमानिकत्वमेव, नानुपलब्धिग्राह्यत्वमिति सिद्धवत्कृत्यानुपलब्धिप्रमाणविषयविवेचनपरतयोक्तसंदर्भो योजितः, तत् पूर्वोदाहृतश्लोकवार्तिकानुसारेण प्रमाणपञ्चकाभावस्यैवाभावप्रमाणत्वस्य साधितत्वात् प्रत्यक्षप्रमाणाभावमात्रस्यानुपलब्धिपदार्थत्वाभावाच्चिन्त्योपपत्तिकम्॥

धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि धर्मप्रमाणाभावेऽपि। तदभावानिश्चयेन तदभावविषयकसत्तानिश्चयरूपग्रहणात्मकज्ञानाभावेन। योग्यानुपलब्धेरेव प्रत्यक्षयोग्यप्रतियोगिविषयकप्रमाणाभावस्यैव। अभावग्राहकत्वात् सत्तानिश्चयात्मकानुभवहेतुत्वात्।

ननूक्तयोग्यानुपलब्धिपदेन योग्यप्रतियोगिकानुपलब्धिर्विवक्षिता, उत योग्याधिकरणकानुपलब्धिः? आद्ये स्तम्भे पिशाचभेदस्य प्रमाणाभावजन्यप्रत्यक्षजातीयज्ञानविषयत्वेन तत्रोक्तयोग्यानुपलब्धेरभावेन व्यतिरेकव्यभिचारः, द्वितीये चात्मनि धर्माद्यभावज्ञानस्य प्रमाणाभावाधीनस्य प्रत्यक्षजातीयत्वाभावेनान्वयव्यभिचारः, एवं च प्रमाणाभावस्य योग्यानुपलब्धित्वरूपेण प्रमाणत्वाभावात्

स्यादिति आपादनसम्भवात् तादृशभूतले घटाभावोऽनुपलब्धि-गम्यः, अन्धकारे तु तादृशापादनासम्भवात् नानुपलब्धिगम्यता । अत एव स्तम्भे पिशाचसत्त्वे स्तम्भत्ववत् प्रत्यक्षत्वापत्त्या तदभावोऽनुपलब्धिगम्यः । आत्मनि धर्माऽधर्मादिसत्त्वेऽपि तस्यातीन्द्रियतया निरुक्तोपलम्भापादनासम्भवात् न धर्माद्यभावस्यानुपलब्धिगम्यत्वम् । ननु उक्तरीत्या अधिकरणेन्द्रियसन्निकर्षस्थले अभावस्य अनुपलब्धिगम्यत्वं त्वदनुमतम् ; तत्र क्लृप्तेन्द्रि-

धर्माद्यभावस्यापि घटाद्यभावस्येव ग्रहणात्मकज्ञानविषयत्वं तदवस्थमेव । अतः प्रत्यक्षानुमानादिभिरेव घटाद्यभावोऽनुभूयत इति नानुपलब्धिर्मानान्तरमित्याशयेन शङ्कते—ननु केयं योग्यानुपलब्धिरिति ॥ प्रत्यक्षत्वापत्तेरिति । प्रत्यक्षजातीयत्वापत्तेरित्यर्थः ।

योग्या चासावनुपलब्धिश्च योग्यानुपलब्धिरिति कर्मधारयसमासेन तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोग्युपलब्धिकत्वरूपानुपलब्धेरेव घटाभावादिग्राहकत्वाङ्गीकारात् नातीन्द्रियाभावस्यापि प्रमाणाभावेन ग्रहणमित्यनुपलब्धेर्मानान्तरत्वे न कोऽपि दोष इत्याशयेन समाधत्ते—योग्या चेति ।

यस्याभावोऽनुपलब्ध्या गृह्यते तत्प्रतियोगिनस्तदधिकरणे—यद्यत्र घटः स्यादिति सत्त्वप्रसङ्गेन तर्कितेनानुपलब्धप्रतियोग्युपलम्भः—'उपलभ्येत' इति यदि आपादयितुं योग्यो भवति, तर्हि अनुपलब्धिप्रमाणजन्यग्रहणात्मकज्ञानविषय इति भावः । प्रतियोग्युपलम्भापादनाभावश्च क्वचित् विषयस्यायोग्यतया क्वचिदुपलम्भकसामग्र्यभावेन क्वचित् कारणान्तरेणेत्यन्यदेतत् । एवं चालोकाभावेनान्धकारे घटोपलम्भापादनासंभवेनायोग्यत्वेनात्मनि धर्मोपलम्भायोगेन च नान्वयव्यभिचारः ॥

व्यतिरेकव्यभिचारं परिहरति—अत एवेति ।

उक्तविधयोग्यानुपलब्धेरभावग्राहकत्वादेव, तत्प्रत्यक्षत्वापत्त्या तदुपलम्भापादनसंभवेन ॥ तदभावः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकपिशाचाभावः ।

यमेव अभावाकारवृत्तावपि करणम्; इन्द्रियान्वयव्यतिरेकानुविधानादिति चेत्, न; प्रतियोग्यनुपलब्धेरप्यभावग्रहे हेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनात्, इन्द्रियस्य चाभावेन समं

अनुपलब्धिगम्यः उक्तविधयोग्यानुपलब्धिगम्यः। तस्यातीन्द्रियतया धर्माधर्मादेः प्रत्यक्षायोग्यतया। अनुपलब्धिगम्यत्वम् उक्तविधयोग्यानुपलब्धिगम्यत्वम् ॥

ननु यदि प्रतियोग्युपलम्भकनिखिलसामग्रीसमवधानदशायामेव घटाद्यभावस्यानुपलब्धिग्राह्यत्वम्, तर्हि तस्य प्रमाणान्तरस्योपगमो वितथः; क्लृप्तेनेन्द्रियेणैवाभावाकारवृत्तेरपि संभवात्, नचाभावेनेन्द्रियस्यासन्निकर्षः, संयुक्तविशेषणतायाः सन्निकर्षत्वात्, नच घटवत्तादशायामपि घटाभावप्रत्यक्षत्वापत्तिरिति—वाच्यम्; अनुपलब्धेरिन्द्रियसहकारित्वेन घटोपलम्भदशायां तदनापत्तेः।

नच—भवतामपि कारणत्वमनुपलब्धेरङ्गीकरणीयमिति—वाच्यम्; अगत्या कारणत्वकल्पनेऽपि करणत्वकल्पनायोगात्, करणत्वकल्पनायां हि व्यापारवदसाधारणकारणस्यैव करणत्वात् व्यापारादिकमपि कल्पनीयमिति गौरवम्, इन्द्रियस्य तु करणत्वमुभयवादिसिद्धम्, तत्राभावज्ञाननिरूपितत्वमात्रं कल्प्यमिति लाघवम्। एवंच नानुपलब्धेः प्रमाणान्तरत्वमित्याशयेन शङ्कते—नन्विति ॥

अनुपलब्धिः प्रमाणान्तरमङ्गीकरणीयमेव। नच गौरवम्, कारणत्वेन क्लृप्तस्य तस्य करणत्वमात्रकल्पनेनागौरवात्, न हि व्यापारवदेव करणमिति नियमः। तदुक्तं दीधितिचिन्तामणौ—"करणे सव्यापारकत्वनियमाभावात्" इति, जागदीश्यामपि फलायोगव्यवच्छिन्नकारणत्वस्य करणत्वात् न व्यापारवत्त्वनियम इति व्याख्यातम्।

नचेन्द्रियस्य करणत्वमपि न कल्पनीयमिति लाघवमिति वाच्यम्; तत्र किमिन्द्रियस्य व्यापारवत्कारणत्वं क्लृप्तम्, उताव्यवहितकारणत्वमात्रम्, नाद्यः; अभावज्ञाने तस्याक्लृप्तत्वात्। नह्यभावेनेन्द्रियस्य सन्निकर्ष उभयवादिसिद्धः।

वस्तुतस्तु—पूर्वोदाहृतं माध्याह्निकं प्रातःकालिकव्याघ्राभावज्ञानं न प्रत्यक्षेण भवतीति अभावग्रहहेतुत्वमपि तस्य कल्पनीयमिति विपरीतमेव गौरवमित्यनुपलब्धिः प्रमाणान्तरमेव, एतत् सर्वं मनसि निधायाह—न करणत्वमात्रस्येति ॥

सन्निकर्षाभावेन अभावग्रहाहेतुत्वात्, इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानाद्युपक्षीणत्वेनान्यथासिद्धेः।

ननु भूतले घटो न इत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयसिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यस्येव तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमातृभिन्नतया घटाभावस्य प्रत्यक्षतैव सिद्धान्तेऽपीति

अभावग्रहाहेतुत्वात्। इन्द्रियं हि विषयसम्बन्धेनैव ज्ञानं जनयति, नान्यथा, विषयेण चाभावेन सम्बन्धो नोभयवादिसिद्ध इति अभावग्रहहेतुत्वमिन्द्रियस्य न क्लृप्तम्। एवंच हेतुत्व एव विसंवादे करणत्वकल्पनायाः कोऽवसर इति भावः। इन्द्रियान्वयव्यतिरेकानुविधानस्य तर्हि क उपयोग इत्यत आह— इन्द्रियेति॥ अधिकरणज्ञानाद्युपक्षीणत्वेनेति। अनुपलब्धौ योग्यत्वसंपादनेन तत्साफल्यमिति भावः॥ यत्तु—पूर्वं प्रत्यक्षप्रमाणाभावजन्यम् अभावज्ञानं प्रत्यक्षजातीयमित्युक्तम्, तदिदमुपपादयितुं शङ्कते—नन्विति॥ घटाभावावच्छिन्नचैतन्यस्यापि प्रमातृभिन्नतयेति॥

अत्रेदं विचारणीयम्—कथम् अभावावच्छिन्नचैतन्यं प्रमातृचैतन्याभिन्नमिति? वृत्तिविषयान्तःकरणानामेकदेशस्थत्वेन खलु विषयचैतन्यस्य प्रमात्रभेदः। तेषामेकदेशावस्थानं च विषयदेशेऽन्तःकरणनिर्गमेण भवति। अन्तःकरणनिर्गमस्य चक्षुरादिद्वारक एव; चक्षुरादिकं च तत्रैव द्वारं यत्र तस्य संयोगादिसम्बन्धो भवति। नचाभावेन चक्षुरादेः सम्बन्धो विद्यते; अन्यथाऽनुपलब्धिप्रमाणान्तरताया एव भङ्गापत्तेरित्यभावाकारान्तःकरणवृत्तिनिर्गमाभावेनाभावांशे प्रत्यक्षतापादनमिदं न सङ्गतम्।

यत्तु—भूतलाकारवृत्तिनिर्गममात्रेण तत्रत्यानां सर्वेषामपि प्रमातृचैतन्याभिन्नत्वमित्याद्यबोधिन्यां विवृतम्, तदिदं चिन्त्योपपत्तिकम्; नहि पर्वताकारान्तःकरणवृत्तिनिर्गममात्रेण वह्निचैतन्यस्यापि प्रमात्रभेदः। अन्यथा पर्वतांशे प्रत्यक्षत्वं वह्न्यंशेऽनुमितित्वमिति सिद्धान्तभङ्गापत्तेः।

चेत्, सत्यम्; अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्यानुपलब्धेर्मानान्तरत्वात्। न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति; दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात्। फलवैजात्यं विना कथं

ननु—भूतलस्येव घटाभावरूपत्वात् अभावाकारवृत्तिरपि चक्षुरिन्द्रियद्वारा निर्गच्छतीति न दोष इति—वाच्यम्; अभावत्वेन रूपेण भूतलाकारवृत्तिं प्रति तद्रूपेण चक्षुरिन्द्रियसम्बन्धस्यापेक्षितत्वेन तस्य चात्राभाविनाभावाकारवृत्त्यसंभवात्, अन्यथा प्रत्यक्षप्रमाणेनैवेष्टसिद्ध्याऽतिरिक्तप्रमाणाङ्गीकारवैयर्थ्यप्रसङ्गात्। एवं चाभावावच्छिन्नचैतन्यस्य प्रमात्रभेदाभावात् नाभावांशे ज्ञानस्य प्रत्यक्षत्वापत्तिरिति कथमुक्ताशङ्कोपपत्तिरिति चेत्,

अत्रेयमुपपत्तिः प्रतिभाति—यथा चक्षुरादिकं सन्निकृष्टमन्तःकरणनिर्गमस्य द्वारम्, एवमनुपलब्धिरपि योग्या तद्द्वारमेव। अत एव शाब्दापरोक्षवाद उपपद्यते। तत्र हि चक्षुरिन्द्रियसन्निकृष्टत्वेन देवदत्तादेः शब्दप्रमाणजन्यवृत्तेरपि बहिर्निर्गम ऊरीक्रियत एव। तथाचाभावप्रतियोगिनो योग्यत्वस्थलेऽनुपलब्धिजन्यवृत्तेरपि बहिर्निर्गमोरीकारात् न दोषः। प्रत्यक्षादिस्थले यथा चक्षुरादिकं वृत्तिजनन उपयुज्यते एवमनुपलब्धावपि। इयान् विशेषः—यत् प्रत्यक्षस्थले साक्षादन्यत्र तु सहकारितयेति। ननु—अनुपलब्धिप्रमाणजन्यज्ञानस्य कथं प्रत्यक्षत्वम्; प्रमाणभेदेन प्रमाभेदस्यापि दृष्टत्वेन तदयोगादित्यत आह—

**अभावप्रतीतेरिति। तत्करणस्येति॥** तत्प्रत्यक्षजन्यत्वसंपादकाभावाकारवृत्तिनिर्गमद्वारतया तत्करणस्य। **अनुपलब्धेः** प्रमाणाभावस्य। **मानान्तरत्वात्** षष्ठप्रमाणत्वात्। न हि प्रमाणपञ्चकान्यतमप्रमाणाभावः प्रमाणपञ्चकान्तर्भावमर्हति। न हि चक्षुरादीन्द्रियमेव प्रत्यक्षप्रमाजनकमिति नियमः; शब्दे व्यभिचारादित्याह—**नहीति।**

**प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात्।** पराभिमतानि यानि प्रत्यक्षप्रमाणानि तद्भिन्नत्वाभ्युपगमात्। अस्मन्मते तु शब्दस्यापि विषयविशेषे

प्रमाणभेद इति चेत्, न; वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः। तथाच घटाद्यभावाकारवृत्तिर्नेन्द्रियजन्या; इन्द्रियस्य विषयेणासन्निकर्षात्, किन्तु घटानुपलब्धिरूपमानान्तरजन्येति भवत्यनुपलब्धेर्मानान्तरत्वम्।

प्रत्यक्षप्रमाणत्वमिष्टमेव। तथाच शब्दस्येवानुपलब्धेरपि विषयविशेषे प्रत्यक्षप्रमाणत्वेऽपि अनुपलब्धिप्रमाणान्तरत्वं निरपोहमेव; यथा चानुपलब्धेर्नानुमानादावन्तर्भावस्तथा पूर्वमेव श्लोकवार्तिकोपष्टम्भेन निरूपितमिति न विरोधः।

अयमाशयः—यथा शब्दस्यातिरिक्तप्रमाणत्वेऽपि विषयविशेषे शब्दः प्रत्यक्षप्रमाकरणमिति दशमस्त्वमसीत्यादौ क्लृप्तम्; तत्र हि विषयविशेषे शब्दस्य प्रत्यक्षप्रमाकरणत्वं न प्रमाणस्वभावविशेषकृतम्, किन्तु विषयस्वभावकृतमिति तत्रातिरिक्तस्यैव शब्दप्रमाणस्य प्रत्यक्षप्रमाकरणत्वमप्यर्थतः पर्यवस्यति, एवं विषयविशेषेऽनुपलब्धिजन्यवृत्त्यवच्छिन्नस्य विषयचैतन्याभेदेनानुपलब्धेरप्रमाणान्तरत्वेऽपि तस्या अतिरिक्तप्रमाणत्वं नानुपपन्नम्।

तथाच शब्दजन्यवृत्तेः स्वभावतोऽन्तःकरणदेशस्थायाः पदार्थविशेषमात्रे विषयदेशस्थत्वस्याप्यवर्जनीयत्ववत् अनुपलब्धिजन्यवृत्तेरपि स्वभावतोऽन्तःकरणस्थायाः सन्निकृष्टविषयविशेषमात्रे विषयदेशस्थत्वमप्यवर्जनीयमिति न दोषः॥

**ननु**—अनुपलब्धिर्नामोपलम्भाभावः प्रत्यक्षाभाव इति यावत्, तथाच प्रत्यक्षप्रमाणाभावस्यैवानुपलब्धिप्रमाणत्वात्, अनुपलब्धिजन्यं सर्वं ज्ञानमपरोक्षमेवेति फलवैजात्याभावात् कथमनुपलब्धेः प्रमाणान्तरत्वमित्याशयेन शङ्कते—**नन्विति**॥

न हि प्रत्यक्षप्रमाणाभावमात्रमनुपलब्धिः, किन्तु प्रमाणपञ्चकाभाव इति वृत्तिवैजात्येन प्रमाणवैजात्योपपत्तिरित्याह—**वृत्तिवैजात्येति**। वृत्त्यवच्छिन्नचैतन्यमेव जन्यप्रमास्वरूपचैतन्यमिति वृत्तिभेदेन प्रमाभेदोऽपि संभवत्येव। यथाच शब्दादिजन्यवृत्तेरान्तरत्वेऽपि नानुमानत्वादिकमेवमनुपलब्धेरपीति पूर्वमेव सूचितम्॥

ननु—अनुपलब्धिरूपमानान्तरपक्षेऽप्यभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावोऽभ्युपगम्येत। न चेष्टापत्तिः, तस्य मायोपादानकत्वेऽभावत्वानुपपत्तेः। मायोपादानकत्वाभावे

ननु—एवमपि प्रमाणपञ्चकाभावोऽनुपलब्धिरिति न युक्तम्, प्रत्यक्षेणैव निर्वाहात् इत्यत आह—तथाच घटाभावाकारा वृत्तिर्नेन्द्रियजन्येति॥

विषयेण अभावाख्येन विषयिणासन्निकर्षात् संयोगादिसम्बन्धाभावात्। अधिकरणात्मत्वेऽप्यभावस्याभावत्वेन भूतलत्वादिना चाधिकरणाभावयोर्भेदात् नेन्द्रियेणाभावस्य सन्निकर्षः॥

यत्तु—आशुबोधिन्याम्—नचाभावस्याधिकरणकेवलस्वरूपतयेन्द्रियस्याधिकरणसन्निकर्षादेवाभावेन सन्निकर्ष इति—वाच्यम्; शब्दाद्यधिकरणानामाकाशादीनां तत्तदिन्द्रियाग्राह्यत्वेन शब्दगन्धरसाद्यभावानां प्रत्यक्षानुपपत्तेरित्युक्तम्, तत्र—आकाशादीनाम् आकाशत्वादिना श्रोत्रेन्द्रियाग्राह्यत्वेऽपि शब्दाभावत्वेन श्रोत्रग्राह्यत्वोपपत्त्या समवेतविशेषणतादिसन्निकर्षस्य तत्रापि विद्यमानत्वात् प्रत्यक्षोपपत्तिर्नैयायिकमते, मीमांसकमते तु घटाभावादावपि सन्निकर्षाभावः शब्दाभावादावपीति न विशेषः। नहि मीमांसकाः संयुक्तविशेषणतादिकं सन्निकर्षमुपयन्तीति पूर्वमेव निरूपितम्।

ननु अनुपलब्धिरूपमानान्तरपक्षेऽप्यभावप्रतीतेः प्रत्यक्षत्वे इति। इयमाशङ्का छान्तेवासिनाम्। तेषामयमाशयः—यद्यपि भ्रमः परोक्षापरोक्षभेदेन द्विविधः; तथापि परोक्षभ्रमेऽन्यथाख्यातिरेव, प्रत्यक्षस्थले त्वनुर्वचनीयख्यातिरिति हि सांप्रदायिकः पन्थाः। तथाचानुपलब्धिजन्यज्ञानस्य प्रत्यक्षत्वे तत्राप्यनिर्वचनीयघटाभावाभ्युपगमापत्तिः। भावरूपस्याज्ञानं भावरूपस्यैव घटादेर्जनकं दृष्टम्, नत्वभावस्यापि तज्जनकमिति युक्तम्। यद्यपि उपादानोपादेययोरत्यन्तसाजात्यं न भवति, उपादानोपादेयभावस्यैवाभावप्रसङ्गात्; तथापि भावत्वापरित्यागेनैव मिथ्यात्वादिना साजात्यं विवक्षणीयम्। अत एवोक्तम्—"नासतो विद्यते भावो नाभावो विद्यते सतः" इति॥

**मायायाः सकलकार्योपादानत्वानुपपत्तिरिति चेत्, न ; घटवति**

एतेन—"भावान्तरमभावो हि कयाचित्तु व्यपेक्षये"ति वार्तिकादभावस्यापि भावरूपत्वात्रोक्तशङ्कानुपपत्तिरिति शङ्कापि—परास्ता ; भावान्तरभूतलादिरूपस्याप्यभावस्य भावत्वेनाज्ञानसाजात्याभावात्, अभावरूपधर्मिमात्रनिषेध एव हि "भावान्तर"मिति वार्तिकतात्पर्यम्, नतु अभावत्वनिषेधेऽपीति भावात् ।

व्यावहारिकघटाभावो हि भावाद्वैतमते सत्य एवेति तस्याकार्यत्वात् न व्यावहारिकघटाभावेऽप्युक्तशङ्कोदयः । न च घटाभावभ्रमस्थलेऽपीयमेव गतिरिति—वाच्यम् ; तत्र बाधानन्तरं प्रतियोगिप्रतीत्यभाव इवात्र तदभावेन तुलाविद्याकार्यत्वस्यात्यन्तबाधस्य चाभावेऽप्युरीकर्तव्यत्वात् ॥

अभावाद्वैतेऽपि व्यावहारिकघटाभावस्य ब्रह्मरूपत्वेनाबाधात्राज्ञानकार्यत्वम्, प्रातिभासिकघटाभावस्तु न ब्रह्मरूपः, किन्तु शुक्त्यवच्छिन्नचैतन्यरूप इति नाबाध्य इत्यज्ञानकार्यत्वं तस्यापेक्षितमिति अनिर्वचनीयघटाभावाभ्युपगमानुपपत्तिः । **मायायाः सकलकार्योपादानत्वानुपपत्तिरित्यत्र** कार्यपदप्रयोगेण चायमर्थः सूचितः ॥

न चात्राप्यन्यथाख्यातिरेवेति—वाच्यम् ; भूतल एव घटाभावस्यापि विद्यमानत्वेऽपि अनादिदृढवासनासहितघटवत्ताज्ञानस्य तत्र घटाभावज्ञानप्रतिबन्धकत्वस्य लघुचन्द्रिकादावुपपादितत्वेन तन्निष्ठघटाभावस्यायोग्यस्य तत्र प्रतीत्यसंभवात् । एतेन रूपनिष्ठघटाभावस्यापि न तत्र भानमिति सूचितम् ; रूपवद्भूतले घटाभावप्रत्यक्षे तथाऽन्यथाख्यातावपि भूतले घटाभाव इति प्रतीतौ तदसंभवात् । "यत्र जपाकुसुमं द्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियतामिति चेत्, न इष्टत्वात्" इति प्रत्यक्षपरिच्छेदगतपरिभाषावाक्ये हि यन्निष्ठस्य यस्यान्यथाख्यातिरन्यत्र, तत्रोपाधेरपि सन्निकर्षोऽपेक्षित इति हि निरूपितमिति प्रकृतेऽप्यनिर्वचनीयख्यातिरेवोरीकरणीयेति तदनुपपत्त्या नानुपलब्धिप्रमाणजन्यं प्रत्यक्षरूपमिति ॥

आचार्यः प्रतिवदति—**नेति** ॥ यद्यपि नवीनाः—परोक्षस्थलेऽप्यनिर्वचनीयख्यातिरेव, न कुत्रापि भ्रमस्थलेऽन्यथाख्यातिरिति निरूपयन्ति ; तथापि

घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः, किन्तु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतल आरोप्यत इति, अन्यथाख्यातिरिव ; आरोप्यसन्निकर्षस्थले सर्वत्रा-न्यथाख्यातेरेव व्यवस्थापनात् ।

अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्या-

प्राचीनमतानुसारेण परोक्षभ्रमस्थल एवान्यथाख्यातिपक्षेण पूर्वपक्षकरणात् तेनैव पक्षेण समाधातुमुपक्रमते—घटवतीति ।

अत्र घटवतीति स्वरूपकथनम्, न प्रतीतिकोटौ तस्यापि भानम् । तथाच भूतलं घटाभाववत् इत्येव प्रतीतेराकारः, नहि घटवत्ताज्ञानदशायां शुक्तिज्ञानदशायामिव भ्रमः संभवति । तथाच भूतलरूपादिनिष्ठघटाभावस्यैवान्यथाख्यातिरित्याह—किन्तु भूतलरूपादाविति ॥

लौकिकः व्यावहारिकः । यथाच न तस्याविद्यानुपादानकत्वं मतद्वयेऽपि तथा पूर्वमेवोक्तमिति न पुनः प्रत्यवस्थानापत्तिः । अभावो भूतले आरोप्यते इति । अभावस्य भूतले संसर्गमात्रमध्यस्यते इति भावः । नीरूपस्याप्रत्यक्षत्वात् द्रव्यप्रत्यक्षतादशायां रूपसन्निकर्षोऽप्यवर्जनीय इति रूपाकारवृत्त्यनिर्गमदशायामपि तत्सन्निकर्षस्य तन्निष्ठघटाभावसन्निकर्षस्य च चाक्षुषस्य संभवान्न दोष इत्यभिप्रायेणाह—आरोप्यसन्निकर्षस्थले इति ॥

नवीनमतरीत्या सर्वत्र भ्रमस्थलेऽनिर्वचनीयख्यात्यङ्गीकारस्यावश्यकत्वात् घटाभावभ्रमस्थलेऽप्यनिर्वचनीयघटाभावाभ्युपगमोऽपि न दोषायेत्याह—अस्तु वेति ॥

घटवत्यपि भूतले व्यावहारिकघटाभावस्य सर्वदा विद्यमानत्वेऽपि प्रतियोगि-सत्तादशायां तदभानात् भूतलनिष्ठ इव रूपनिष्ठोऽपि स न भात्येव । नहि भूतल-निष्ठस्य रूपनिष्ठस्य चाभावस्य किमपि वैषम्यमस्ति । यद्यपि प्रतियोगिज्ञान-दशायां भ्रमोऽपि नाभावस्य संभवति, तथाप्याहार्यभ्रमः संभवत्येव, तत्र चानिर्वचनीयस्य घटाभावस्यैवाभ्युपगमनीयत्वात् यथोपपत्तिस्तथा प्रतियोगिज्ञान-

निर्वचनीयत्वम्; तथापि तदुपादानं मायैव। न हि उपादानोपादेययोरत्यन्तसाजात्यम्; तन्तुत्वपटत्वादिना वैजात्यात्। यत्किञ्चित्साजात्यस्य मायाया अनिर्वचनीयस्य च मिथ्यात्वधर्मस्य विद्यमानत्वात्। अन्यथा व्यावहारिकं घटाभावं प्रति कथं मायोपादानमिति कुतो नाशङ्केथाः। न

विरहस्थलेऽप्यज्ञानेनाभावोत्पत्त्युपपत्त्या नानिर्वचनीयाभावाभ्युपगमविरोध इत्याह तदभावस्येति ॥

ननु अनिर्वचनीयस्याभावस्य नाज्ञानमुपादानम्; भावस्याभावाकारणत्वादित्यत आह—तदुपादानं मायैवेति। अघटितघटनापटीयस्त्वान्मायायास्तत्त्वं तत्रोपपन्नमिति भावः ॥

यथा हि व्यावहारिको घटाभावो मायोपादानकः, एवमनिर्वचनीयघटाभावोऽपीति यावत्। व्यावहारिकघटाभावो हि घटाभावत्वोपलक्षितस्वरूपत्वेनैव भावाद्वैतमते सत्यः, अभावाद्वैतमतेऽपि ब्रह्मरूपो न तु अभावत्वविशिष्टरूपेणेति लघुचन्द्रिकायां व्यक्तमिति विशिष्टरूपेण तस्यापि कार्यत्वादज्ञानोपादानत्वमङ्गीकरणीयम् ॥

कथमेतदुपपद्यते इति चेदत्र ब्रह्मानन्दसरस्वत्यो लघुचन्द्रिकायाम् अज्ञानं न भावरूपं नाप्यभावरूपं किन्तु भावाभावविलक्षणम्। तथाच भावत्वांशस्येव तत्राभावादाज्ञानस्याभावोपादानत्वानुपपत्तिः। नचात्र मते "नासतो विद्यते भावो नाभावो विद्यते सतः" इति स्मृत्यनुपपत्तिरिति निरूपयन्ति ॥

तदस्मिन् परिहारे स्थितेऽपि भावरूपत्वमज्ञानस्याङ्गीकृत्यैवात्रोपपत्तिं परिभाषाकारा निरूपयन्ति—नह्युपादानोपादेययोरिति ॥

नह्युपादानोपादेययोरत्यन्तसाजात्यमिति पूर्वमेवोपपादितम्, येन केनापि धर्मेण साजात्यं तु भावाभावयोरपि संभवत्येव। घटाद्युपादानत्वमप्यज्ञानस्य न भावत्वेन, किन्तु केवलमिथ्यात्वेनैवेति न दोष इत्याह—यत्किञ्चित् साजात्यस्येति ॥ घटतदभावोभयोपादानत्वं मिथ्यात्वेनैवोरीकरणीयमिति भावः।

च विजातीययोरपि उपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादिति वाच्यम् ; प्रपञ्चविभ्रमाधिष्ठानत्वरूपस्य तस्येष्टत्वात्, परिणामित्वरूपस्योपादानत्वस्य निरवयवे ब्रह्मणि अनुपपत्तेः। तथाच प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति सिद्धान्त इति, अलमतिप्रसङ्गेन।

स चाभावश्चतुर्विधः, प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति। मृत्पिण्डादौ कारणे कार्य्यस्य घटादेरुत्पत्तेः पूर्वं योऽभावः स प्रागभावः स च भविष्यतीति प्रतीतिविषयः।

तदेतदाह—**अन्यथेति**। भावत्वेनैव साजात्यमित्यङ्गीकारे। **घटाभावं प्रति**। घटप्रतियोगिकाभावत्वविशिष्टाभावं प्रति। अन्तेवासिप्वाचार्यस्योपादानत्वपर्यनुयोगो न युक्त इत्यभिप्रायेण **कुतो नाशङ्क्या इत्युक्तम्**॥

ननु विजातीययोरप्युपादानोपादेयभावे ब्रह्मापि जगदुपादानं स्यात्, इत्याशयेन शङ्कते—**नचेति**॥ उपादानत्वं हि द्वेधा भवति परिणामित्वेन विवर्तमानत्वेन च, तत्रान्त्ये इष्टापत्तिरित्याह—**प्रपञ्चभ्रमाधिष्ठानत्वरूपस्येति**। नाद्य इत्याह—**परिणामित्वेति**॥

परिणाम्युपादानत्वं केनापि धर्मेण सजातीयस्यैव भवति, तत्राज्ञानं मिथ्यात्वेन यथा प्रपञ्चं प्रति परिणाम्युपादानम्, न तथा ब्रह्म निर्गुणं केनापि धर्मेण तदुपादानं भवतीति तु तत्त्वम्। भावरूपस्याज्ञानस्याभावोपादानत्वनिरूपणमिदं प्रसङ्गागतं नातिप्रपञ्चयितुं युक्तमित्यभिप्रायेण तदुपसंहरति—**इत्यलमप्रतिसङ्गेनेति**॥

अनुपलब्धिप्रमाणगम्याभावस्य चतुर्धा विभागं प्राचीनसंमतमत्र निरूपयति—**सचेति**॥ अनुपलब्धिगम्य इत्यर्थः, प्रागभावं परिचाययति—**तत्रेति**॥ अभावचतुष्टयघटकः प्रागभावः सः, यो घटादेरुत्पत्तेः पूर्वं मृत्पिण्डादौ कारणे कार्यस्याभावः इति योजना। अभावप्रतीतिमाकारतो निर्दिशति—

तत्रैव घटस्य मुद्गरप्रहारानन्तरं योऽभावः स प्रध्वंसाभावः, ध्वंसस्यापि स्वाधिकरणकपालनाशे नाश एव। न चैवं घटोन्मज्जनापत्तिः; घटध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात्, अन्यथा प्रागभावध्वंसात्मकघटस्य विनाशे प्रागभावोन्मज्जनापत्तिः ।

न च—एवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंसनाश इति—वाच्यम्; तादृशमधिकरणं यदि चैतन्यव्यति-

भविष्यतीति। तत्रैव मृत्पिण्ड एव। घटस्य योऽभावः प्रतियोगितासम्बन्धेन घटजन्यो योऽभाव इति योजना। प्रतियोगिजन्याभावत्वं ध्वंसत्वमिति फलति ॥

यत्तु नैयायिकाः—ध्वंसोऽपि नित्य एवेति—वदन्ति, तद्दुरदासायाह—ध्वंसस्यापीति। ध्वंसनाशकसामग्रीमाह—स्वाधिकरणकपालनाश इति। आश्रयनाशे आश्रितनाशनियमादिति भावः ॥

ननु—भूतले घटाभावाभावे यथा घटसत्त्वम्,एवं कपाले घटध्वंसस्य ध्वंसानन्तरं घटस्योन्मज्जनापत्तिरित्याशयेन शङ्कते—नचेति ॥ घटनाशविनाशो हि कपालनाशानन्तरमेव भवति, न तु पूर्वम्, घटाभावाभावस्तु न भूतलाभावप्रयुक्त। तथाच घटनाशनाशानन्तरं न कपाले घटोन्मज्जनमापद्येत, अन्यत्र तु घटसत्त्वं बाधितमेव। अत एव कपालनाशानन्तरमपि घटो नष्ट इति प्रतीतिः। यत्तु अभावाभावे प्रतियोग्युपलम्भस्स प्रतियोगिभेदप्रयुक्तः, अत्र तु घटध्वंसं ध्वंसध्वंसं प्रति च घट एक एव प्रतियोगी न तद्भेदो वर्तते। यत्र तु प्रतियोग्यभावयोरेकं निषिध्यतावच्छेदकं तत्राभावनिषेधे न प्रतियोगिसत्त्वमिति तत्त्वेव मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वं नापततीति सिद्धयादौ निरूप्यते। घटतद्ध्वंसान्यतरत्वादिकमत्र तादृशमिति न दोष इत्यभिप्रायेणाह—घटध्वंसध्वंसस्यापीति। ध्वंसे ध्वंसध्वंसे चैकं प्रतियोगितावच्छेदकमन्यत्र क्लृप्तमित्याह—अन्यथेति ॥

रिक्तम्, तदा तस्य नित्यत्वमसिद्धम्; ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मज्ञाननिवर्त्त्यतया वक्ष्यमाणत्वात्। यदि च ध्वंसाधिकरणं चैतन्यम्, तदासिद्धिः, आरोपितप्रतियोगिकध्वंसस्याधिष्ठाने प्रतीयमानस्याधिष्ठानमात्रत्वात्। तदुक्तम्—

अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इति। एवं शुक्तिरूप्यविनाशोऽपि इदमवच्छिन्नचैतन्यमेव।

यत्राधिकरणे यस्य कालत्रयेऽप्यभावः सोऽत्यन्ताभावः। यथा वायौ रूपात्यन्ताभावः। सोऽपि वियदादिवत् ध्वंसप्रतियोग्येव।

इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः। अयमेव

ननु—यत्र ध्वंसाधिकरणं नित्यम्, तत्राधिकरणनाशाभावात् ध्वंसाविनाशापत्तिरिति शङ्कते—**नचेति**। ननु अधिकरणपदेनाधारस्वरूपं विवक्षितम्, आहो स्वजनकाज्ञानविषयत्वरूपाधिष्ठानत्वम्। आद्ये तादृशनित्यपदार्थाप्रसिद्धिः, द्वितीये आधारनाशस्यैव ध्वंसनाशसामग्रीत्वान्नोक्तदोष इत्याह—**तादृशमधिकरणमिति**॥

**तदासिद्धिः** तदा असिद्धिरिति च्छेदः। कुतोऽधिष्ठाननाशोऽपि आधारनाश इव ध्वंसनाशकसामग्री न भवतीत्यत आह—**आरोपितेति**। **अधिष्ठानमात्रत्वात्**। अधिष्ठानस्वरूपचैतन्यातिरेकिवस्तुन एव तस्याप्रसिद्ध्याऽधिष्ठाननाशः ध्वंसनाशप्रयोजक इति न सिद्ध्यति॥

**यत्रेति**। ध्वंसप्रागभावयोरुपादानकारणमेवाधारः, अत्यन्ताभावस्य न स नियम इत्याशयेनाह—**अधिकरणे इति**। अत्यन्ताभावोऽपि नश्वर एवेत्याह—**सोऽपीति**। तर्हि नित्यत्वप्रसिद्धिस्तस्य कथमुपपद्यते इत्यत आह—**वियदादिवदिति**। बहुकालस्थायित्वेन नित्यत्वव्यपदेश इति भावः॥

भेदातिरिक्तविभागपदार्थान्तरे न मानम्, इत्याह—**अयमेवेति**॥

विभागो भेदः पृथक्त्वं चेति व्यवह्रियते ; भेदातिरिक्तपृथक्त्वादौ प्रमाणाभावात् । अयं चान्योन्याभावोऽधिकरणस्य सादित्वे सादिः, यथा घटे पटभेदः ; अधिकरणस्यानादित्वे अनादिरेव । यथा जीवे ब्रह्मभेदः ब्रह्मणि वा जीवभेदः । द्विविधोऽपि भेदो ध्वंसप्रतियोग्येव ; अविद्यानिवृत्तौ तत्परतन्त्राणां निवृत्त्य-वश्यम्भावात् ।

पुनरपि भेदो द्विविधः—सोपाधिको निरुपाधिकश्चेति । तत्र उपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वम् । तच्छून्यत्वं निरुपाधिकत्वम् । तत्राद्यो यथा एकस्यैवाकाशस्य

अनादिरिति । अनादिपदार्थस्यापि विनाशः बहुतन्त्रसिद्धः । यथा नैयायिकानां प्रागभावविनाशः, परमाणुगतश्यामरूपविनाशस्तेषामेव । बौद्धानामनादिवासनाविशेषाणां निवृत्तिः । यथावाऽस्माकमविद्यादिनिवृत्तिरिति । भेदोऽपि नश्वर एवेत्यभिप्रायेणाह—द्विविधोऽपि भेद इति ॥

ननु सादिभेदनिवृत्तिरुपादानभूताविद्यानिवृत्त्या संभवति ; ज्ञानाज्ञानयोर्निवर्त्त्यनिवर्तकभावादज्ञानस्याप्यनादिनो ज्ञानेन निवृत्तिर्भवति, जीवादिभेदस्यानादेः कथं विनाश इत्यत आह—अविद्यानिवृत्तौ तत्परतन्त्राणामिति ॥ अविद्यानिवृत्तौ तत्कार्याणां यथा बाधः, तथा तत्प्रयुक्तानामपि स भवत्येव । दृश्यते हि शुक्तिज्ञानात् शुक्त्यज्ञानस्येव शुक्त्यज्ञानसम्बन्धस्यापि बाधः । नहि सम्बन्धोऽविद्याजन्यः, अनादित्वात्, किन्तु तत्प्रयुक्तः । अज्ञानप्रयुक्तत्वं चात्र ब्रह्मभिन्नत्वे सति तत्कालिकत्वरूपमिति सिद्धान्तबिन्दुटीकायां ज्ञाननिवर्त्त्यत्वमिथ्यात्वविवरणप्रकरणे व्यक्तम् । तथाचानादिभेदस्यापि अविद्याकालिकत्वेन तत्प्रयुक्तत्वात् बाधः संभवत्येवेति भावः ॥ अधिकमस्मदीयाद्वैतदीपिकायां व्यक्तम् । यथाच अनुपलब्धिप्रमाणमिदं ब्रह्मणि प्रपञ्चाभावसमर्पणद्वाराऽद्वैतिनामुपयोगि, तथा पूर्वमेव निरूपितमिति सर्वमनवद्यम् ॥ पुनरित्यादि स्पष्टम् ।

घटाद्युपाधिभेदेन भेदः, यथा वा एकस्य सूर्य्यस्य जलभाजनभेदेन भेदः, तथा चैकस्यैव ब्रह्मणोऽन्तःकरणभेदात् भेदः । निरुपाधिकभेदो यथा घटे पटभेदः । न च ब्रह्मण्यपि प्रपञ्चभेदाभ्युपगमेऽद्वैतविरोधः; तात्त्विकभेदादेरनभ्युपगमेन वियदादिवत् अद्वैताव्याघातकत्वात्, प्रपञ्चस्य अद्वैते ब्रह्मणि कल्पितत्वाङ्गीकारात् । तदुक्तं सुरेश्वराचार्य्यैः—

अक्षमा भवतः केयं साधकत्वप्रकल्पने ?
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ? इति ।

अत एव विवरणे—अविद्यानुमाने प्रागभावव्यतिरिक्तत्वविशेषणम्, तत्त्वप्रदीपिकायाम् अविद्यालक्षणे भावत्वविशेषणं

ननु—घटे पटभेदादेः जीवे ब्रह्मभेदादेर्वाऽधिकरणनाशप्रयुक्तो नाशो भवितुमर्हति, ब्रह्मणि प्रपञ्चभेदस्य कथं विनाश इत्यद्वैतासिद्धिरित्याशयेन शङ्कते—**नचेति । भेदाभ्युपगमे ।** अधिकरणनाशाभावेनेति शेषः ॥ नाशो हि द्विविधः—निवृत्तिर्बाधश्चेति पूर्वमेवोक्तम् । तत्र निवृत्तौ अधिकरणनाशः प्रयोजकः, बाधे तूपादाननाश इति ब्रह्मणि प्रपञ्चभेदस्याविद्यकत्वात् उपादाननाशप्रयुक्तः तन्नाश इति न दोष इत्यभिप्रायेण समाधत्ते—**तात्त्विकेति ।** भेदसामान्यस्याविद्यकत्वेनेत्यादिः । ब्रह्मणि सर्वस्य कल्पितत्वे सुरेश्वरसम्मतिं संवादयति—**तदुक्तमिति । अज्ञानकल्पितमिति ।** भावरूपत्वादज्ञानस्याऽऽवरणविक्षेपशक्तिद्वयीरीकारात् तस्य कल्पकत्वमिति भावः । **अत एव**—अज्ञानस्य कल्पकत्वोरीकारादेव । **अविद्यानुमाने ।** प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वादित्यनुमाने । **विशेषणमिति ।** स्वप्रागभावमादायार्थान्तरवारणार्थमित्यादि । अनेनह्यनुमानेनाज्ञानस्य भावरूपत्वमेव साध्यते नाज्ञानस्वरूपम्, येन अज्ञानविषयाज्ञानानङ्गीकारेण प्रकृतानुमान एवास्य व्यभिचार-

च सङ्गच्छते । एवं चतुर्विधानामभावानां योग्यानुपलब्ध्या प्रतीतिः । तच्चानुपलब्धिर्मानान्तरम् ।

इति वेदान्तपरिभाषायामनुपलब्धिपरिच्छेदः ।

शंका श्रीभाष्यकाराणामुपपद्येत । सर्वथाऽनुपलब्धिप्रमाणान्तरत्वमुपपन्नमेवेत्याह— तच्चेति ।

इति वेदान्तपरिभाषाप्रकाशिकायामनुपलब्धिपरिच्छेदः ।

---

## अथ स्वतःप्रामाण्यवादः ।

**एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते**

## अथ स्वतःप्रामाण्यवादः ।

**एवमिति ।** पूर्वोक्तप्रकारेणेत्यर्थः **उक्तानां प्रमाणानां** निरूपितानां प्रत्यक्षादीनां षण्णां प्रमाणानाम्, प्रमितीनामिति यावत् । प्रामाण्यं प्रमात्वम् इत्यर्थः । इदं च वस्तुगत्यनुरोधेन । स्वतःप्रामाण्यविचारो हि ज्ञान-सामान्यं संशयातिरिक्तमुद्दिश्यैव, नतु प्रमाणान्यधिकृत्य ।

तदुक्तं न्यायरत्नमालायाम्—"यदि प्रमाणान्येव विषयीकृत्य चिन्त्येत, ततो यान्युभयोः प्रमाणतया प्रसिद्धानि तेषामेव प्रामाण्यं स्वत इत्येतावत् सिद्ध्येत । ततश्च वेदस्योभयवादिसिद्धप्रामाण्याभावेन विचाराविषयत्वात् नास्य स्वतःप्रामाण्यं साधितं स्यात् । तत्र वेदप्रामाण्यानुपयोगिनी चिन्ता काकदन्तपरीक्षावदकर्तव्या स्यात् । ज्ञानमात्रं त्वधिकृत्य स्वतःप्रामाण्ये परतश्चाप्रामाण्ये साध्यमाने वेदस्यापि स्वतस्तावद्विषयतथात्वरूपं प्रामाण्यमवगतं सत् कारणदोषज्ञानादेर-भावान्निरपवादं स्थितं भवतीति प्रयोजनवती चिन्ता" इति ।

तथाच संवादिप्रवृत्तिप्रयोजकत्वरूपं प्रामाण्यम् कस्य ज्ञानस्य ? कस्य च ज्ञानस्य विसंवादिप्रवृत्तिजनकत्वरूपमप्रामाण्यम् ? तच्च कथमुत्पद्यते ? कथं च ज्ञायते ? इत्येवात्र विचारणीयम् । यद्यपि न स्मृतिः प्रमा इति पूर्वमुक्तम् ; तथापि प्रकृतविप्रतिपत्तिविषयं प्रमात्वं स्मृतिसाधारणमेव । प्रामाण्यघटकोऽन-धिगतत्वांशः साक्षिगम्यः, न गुणादिज्ञानगम्यः। अर्थतथात्वमेव खलु स्वतः इत्यत्र विचार्यते ॥

तच्च प्रामाण्यं स्मृतिसाधारणमेव । तत्र चानुभवात्मकज्ञानगतं प्रामाण्यं स्वतः, स्मृतिगतं तु तत् परत एवेति सिद्धान्तबिन्दुटीकायामुक्तमन्यदेतत् ।

तथाच ज्ञानसामान्ये प्रामाण्यं स्वतो भवदपि बाधकारणात् दुष्टत्वज्ञानाच्च भ्रमज्ञाने तस्यापवाद एव विवक्षितः । तदुक्तं श्लोकवार्तिके—

'यस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वबोधाभ्यां तदपोद्यते ॥ इति ।

अत एव—

"अप्रमाणमपि स्वार्थे प्रमाणमिव हि स्वतः"

इति वार्तिकमप्युपपद्यते । एतदभिप्रायेणैव बिन्दुटीकायां—मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं प्रामाण्यं स्मृतिभ्रमानुभवसाधारणमित्युक्तम् । तथाच—अत्र प्रमाणानाम् इत्यस्य ज्ञानानामित्येवार्थं इति ज्ञानसामान्यप्रामाण्यं स्वतः सिद्धं ज्ञानविशेषेऽपोद्यते इत्येवाभिप्रायो विवक्षित इति सर्वमनवद्यम् ॥

न्यायरत्नमालायां पार्थसारथिमिश्रा हि एवं वर्णयन्ति—प्रामाण्यं स्वतो यदि जन्यते, तर्हि अप्रामाण्यमपि परतो जन्यते इति वक्तव्यम् । न चैतत् संभवति । उत्पन्नस्य हि भ्रमज्ञानस्य बाधकज्ञानेनाप्रामाण्यमुत्पद्यते इति कल्पनायां पूर्वं प्रामाण्यं यदुत्पन्नं तस्य निरासः कृत इति स्यात् । अप्रमाणमेवोत्पद्यते इति खलु वक्तव्यमित्यादिना प्रामाण्यम् अप्रामाण्यं च स्वतो गृह्यते इत्येव युक्तमिति ॥ एतन्मते च प्रामाण्यज्ञानं स्वतः, परतस्त्वप्रामाण्यग्रहणमिति विवेकः ।

अत्र न्यायरत्नमालोक्तपक्षे यथा पूर्वं ज्ञातं प्रामाण्यं पश्चादपोद्यते, एवं जातमपि प्रामाण्यं दोषबाधकज्ञानादिभिरपोद्यते इति कल्पनायां न दोषः । तत्र यथा गृहीतस्यापि प्रामाण्यस्य परतो गृहीतेनाप्रामाण्येन तिरोभावात् न कार्यकारित्वमेवमुत्पन्नस्यापि सर्वं समानमिति प्रामाण्यं स्वत उत्पद्यते, अप्रामाण्यं तु परत उत्पद्यते इति पक्षोऽपि समीचीन एव । यदितु स्वत इत्यस्य तत्तज्ज्ञानविशेषकारणपरत्वम् उत्पत्तौ स्वशब्दस्यात्मीयपरत्वं भाने आत्मपरत्वं च स्वीक्रियते, तर्हि भ्रमज्ञाने दोषस्यापि परस्य प्रमाकारणातिरिक्तस्य कारणत्वात् अप्रामाण्यं स्वत उत्पद्यते इति न्यायरत्नमालापक्षस्य परत इति परिभाषापक्षस्य च न फलतो भेदः । मतद्वयेऽपि प्रामाण्यग्रहणांशे न लेशतोऽपि मतभेद इति विवेकः । सर्वथातु प्रमाणानामित्यस्य ज्ञानानामिति विवरणमुपपन्नमेवेति केचित् मन्यन्ते ॥

यदि तु मूले वक्ष्यमाणरीत्या दोषाभावसहितज्ञानसामग्र्या एव प्रामाण्यहेतुत्वम्, तर्हि न प्रामाण्यस्यापवादादिकमत्र वर्णनीयम् । प्रमाणानामित्यस्य

ज्ञानानामित्यर्थोऽपि न कल्पनीयः । प्रामाण्यस्य प्रमाणमात्रनिष्ठत्वेन ज्ञान-सामान्यागतत्वात् । अयं हि ग्रन्थो वेदप्रामाण्यसाधनानन्तरमेव प्रवृत्त इति न्यायरत्नमालाकारोक्तरीत्या नात्र वेदाप्रामाण्यशङ्कादिप्रसरः ॥

अतएव—स्मृत्यनुभवसाधारणं संवादिप्रवृत्तिजनकं तद्वति तत्प्रकारकज्ञानं स्वत उत्पद्यते इति ग्रन्थ उपपद्यते । ज्ञानानामिति पूर्वतनविवरणे तु भ्रमज्ञान-साधारणस्यापि तस्योत्पत्तेर्वर्णनीयतया तदकरणेन ग्रन्थोऽनुपपन्नः स्यात् ॥

यद्यपि वेदान्तिनां मते तद्वति तत्प्रकारकत्वरूपं प्रामाण्यं भ्रमसाधारणमेव; तथापि संवादिप्रवृत्तिजनकत्वविशिष्टं तत् न तत्साधारणमिति न दोषः । तथाचाबाधितार्थविषयत्वरूपमेव प्रामाण्यं स्वतोग्राह्यत्वविप्रतिपत्तिविषय इति न कोऽपि विरोधः ॥

**एतेन**—अबाधितार्थविषयत्वरूपं प्रामाण्यं पूर्वमुपवर्ण्यात्र तद्वति तत्प्रकारक-ज्ञानत्वरूपं नैयायिकसंमतमेव प्रामाण्यमुक्तमिति ग्रन्थकर्तुर्न तस्मिन् लक्षणेऽनादरः इति शङ्काऽपि—**परास्ता**; संवादिप्रवृत्तिजनकं तद्वति तत्प्रकारकं ज्ञानं प्रमेत्यत्रोक्त्या केवलं तद्वति तत्प्रकारकं ज्ञानं प्रमेति प्रमालक्षणं ग्रन्थकर्तुः संमतमिति कल्पनाया असंभवात् । अन्यथा कथमिव पूर्वोक्तभ्रमज्ञानातिव्याप्तिः परिहृता भवेदिति सर्वं एव विवेचयन्तु ॥

**स्वत इति ॥** ज्ञानगतं प्रामाण्यं स्वतो वा परतोऽवेति विप्रतिपत्तौ स्वशब्दस्य केचिदात्मवाचिनः ज्ञानपरत्वमभिप्रयन्ति । तेषामाशयस्तु—प्रामाण्यं ज्ञानस्वरूपादेव भाति, न गुणज्ञानात् संवादज्ञानाद्वा; अनवस्थाप्रसङ्गात् । अयमनवस्थाप्रकारः—येन संवादज्ञानेन ज्ञानस्य पूर्वतनस्य प्रामाण्यं गृह्यते, तस्य संवादज्ञानस्य प्रमात्वं ज्ञानान्तरेणावधार्यम्, एवं तस्यापि तस्यापीति । तथाचान्ततो गत्वाऽन्तिमस्य कस्यापि ज्ञानस्य स्वतःप्रमात्वमित्यङ्गीकरणीयमिति घट्टकुट्यां प्रभातापत्त्या प्रथमस्यैव ज्ञानस्य तदूरीकरणीयमिति स्वत एव ज्ञानस्य प्रामाण्यं जायते ज्ञायते चेति ॥ यत्तु वार्तिके—

आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥
जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद्भवेत् ॥

ज्ञायते च। तथाहि—स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यम्। तच्च ज्ञानसामान्यसामग्रीप्रयोज्यम् न तु अधिकं गुणमपेक्षते; प्रमामात्रे अनुगतगुणाभावात्। नापि प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः, रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात्, सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वाच्च। अत एव न

इति प्रमाणज्ञानस्य गुणजन्यत्वम्, तत्प्रामाण्यस्य तु ज्ञानत एवेति वर्णितम्, तदिदं स्वशब्दस्य जन्मांशे आत्मीयपरत्वं भानांशे स्वात्मपरत्वमभिप्रेत्योक्तम्। वस्तुतस्तु भानांशेऽपि आत्मीयपरत्वेऽपि फलतो न विशेषो भाट्टमते इत्यभिप्रेत्यैव तत्त्वचिन्तामण्यादौ स्वशब्दस्यात्मीयपरत्वमुक्तम्। व्यक्तं चैतन्न्यायरत्नाकरे।

स्वत इति। तत्र हि स्वशब्दः आत्मीयवाचीत्यादिरीत्या स्वीयात् कारणादेव प्रामाण्यं ज्ञानस्योत्पद्यते, न गुणादित्युक्तम्। एतेन—तच्च ज्ञानसामान्यसामग्रीप्रयोज्यमिति ग्रन्थोऽपि—व्याख्यातः॥

एतदभिप्रायेणैव न्यायरत्नमालायां स्वशब्दस्यात्मीयवचनत्वपक्षं स्वतः प्रामाण्यस्योत्पत्तिमात्रं न ज्ञानमपीत्येवमाशयं योजयन्ति पार्थसारथिमिश्राः।

अतः स्वशब्द आत्मात्मीयवचन इत्युपपन्नमेवेति भावः॥

ननु—प्रामाण्यं परत एवोत्पद्यते, न तु स्वतः; किं तत् परमिति चेत् गुण इत्याशङ्कायामाह—नत्विति। प्रमात्वं प्रति गुणसामान्यं कारणं वा उत प्रमाविशेषं प्रति गुणविशेषः कारणं वा। नाद्य इत्याह—प्रमामात्रे इति। न द्वितीय इत्याह—नापीति।

विषयेन्द्रियसन्निकर्षस्य गुणत्वं संभवतीत्यत आह—आत्मप्रत्यक्षे इति॥ आत्मप्रत्यक्षे मनसः करणत्वेऽपि न मन इन्द्रियमिति भावः। ननु आत्मनः स्वप्रकाशत्वात् स्वतोऽपरोक्षरूपस्य न जन्यत्वमपीति जन्यप्रत्यक्षं प्रत्येव गुणजन्यत्वस्य प्रयोजकत्वान्नोक्तदोष इत्यत आह—सत्यपीति। तस्मिन् इन्द्रियसन्निकर्षे॥

सल्लिङ्गपरामर्शादिकमपि अनुमित्यादिप्रमायां गुणः, असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेन अनुमित्यादेः प्रमात्वात्।

न चैवम्—अप्रमापि प्रमा स्यात्, ज्ञानसामान्यसामग्र्या अविशेषादिति—वाच्यम्; दोषाभावस्यापि हेतुत्वाङ्गीकारात्। न चैवं परतस्त्वम्; आगन्तुकभावकारणापेक्षायामेव परतस्त्वात्। ज्ञायते च प्रामाण्यं स्वतः।

स्वतो ग्राह्यत्वञ्च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्। स्वाश्रयो वृत्तिज्ञानम्, तद्ग्राहकं साक्षिज्ञानम्;

न चादुष्टेन्द्रियसन्निकर्ष एव कारणमिति न दोष इति वाच्यम्; एवमपि पीतः शङ्ख इति ज्ञानस्य सर्वांशेऽपि भ्रमत्वस्यैव प्रसङ्गेन सत्यासत्यविषयकत्वरूप भ्रमत्वमिद्रासंभवात्। अयं विषयः भ्रमत्वादित्यनेन सूचितः। दोषाभावस्यापीति।

ननु—दोषाभावस्यापि प्रमोत्पत्तिप्रयोजकत्वे ब्रह्मज्ञानव्यतिरिक्तसर्वप्रपञ्चविज्ञानस्याविद्यारूपदोषजन्यत्वेन न प्रमात्वमुपपद्यते, एतेन सर्वस्योक्तज्ञानस्याप्रामाण्यमपि व्याख्यातम्, दोषजन्यत्वात्। यदि तु अविद्यातिरिक्तापेक्षत्वमेव पारतन्त्र्यम्, तर्हि दोषाभावापेक्षयाऽपि पारतन्त्र्यमापद्येतेत्याशयेन शङ्कते—नचेति॥ आगन्तुकेति॥

अविद्यातिरिक्तेत्यर्थः। सादीति यावत्। अविद्या हि न सादिदोष इति सर्वविदितमिदम्।

अयं भावः—अविद्यातिरिक्तदोषाभावस्य प्रमायां दोषाभावत्वेन कारणत्वम्। तथाचाविद्यातिरिक्तदोषापेक्षत्वस्य तत्त्वाभोक्तविरोध इति भावः॥ तथाच प्रामाण्यं स्वत उत्पद्यते इत्यनेन स्वाश्रयोत्पादकसामग्र्यत्पाद्यत्वं विवक्षितमिति भावः। प्रामाण्यस्वतोग्राह्यत्वं निष्कर्षति—स्वाश्रयेति।

अयं भावः—भट्टमते मिश्रमते च गुरुमत इव ज्ञानसामान्यस्य 'घटमहं जानामीत्यादिरूपेण मितिमातृमेयरूपत्रिपुटीविषयकत्वं नोरीक्रियते। अयं घटः

इति प्रथमं ज्ञानम्, अनन्तरं घटमहं जानामीति ज्ञानान्तरं ज्ञानविषयकम्, तेनैव च प्रामाण्यग्रहणमिति तत्सिद्धान्तात्। यद्यपि मतत्रयेऽपि ज्ञानविषयकज्ञानेनैव प्रामाण्यग्रह इत्यविशेषः; तथापि त्रिपुटीभाननियमो गुरुमते, इतरयोस्तु न स इति, प्रथमज्ञानस्यैव व्यवसायानुव्यवसायोभयरूपत्वं गुरुमते, इतरयोस्तु प्रथमज्ञाने विषयमात्रभानम्, न तु ज्ञानात्मनोरपीति च विशेषो नापह्नवमर्हति। तथाच भट्टमिश्रमतयोः ज्ञानजन्यज्ञानस्यैव प्रामाण्यग्राहकत्वं न तु प्रथमज्ञानस्येति ज्ञानग्राहकसामग्रीग्राह्यत्वम्; गुरुमते तु ज्ञानजनकसामग्र्या एव ज्ञानतत्प्रामाण्यग्राहकत्वम्। तत्र मिश्रमते ज्ञानग्राहकसामग्री प्रथमव्यवसायः, भट्टमते च ज्ञाततालिङ्गकानुमानमिति त्वन्यदेतत्। तत्र प्रथममते घटमहं जानामीति लौकिकमानससाक्षात्कारः, द्वितीयमते त्वनुमितिरिति साक्षात्कारत्वानुमितित्वाभ्यां विशेषेऽपि ज्ञानाकारे न विशेषलेशोऽपि। तदुक्तं तत्त्वचिन्तामण्यालोके (158 page) "व्यवसायोत्पत्त्यव्यवहितोत्तरक्षणोत्पन्नानुव्यवसायव्यक्तेरेव भाट्टैः ज्ञाततालिङ्गकानुमितित्वेन मिश्रादिभिश्च साक्षात्कारत्वेनाभ्युपगमात्" इति। एवंच मतत्रयसाधारणस्वपदार्थो नात्मा, किन्तु स्वीय इत्येवोरीकर्तव्यम्। तत्र गुरुमते ज्ञानसामग्र्या एव ज्ञानग्राहकसामग्रीत्वम्, भट्टमिश्रमतयोः स्वीयपदेन ज्ञाततालिङ्गकानुमानग्रानुव्यवसायसामग्र्याश्चेति भेदस्त्वकिंचित्करः। एतदेवाभिप्रेत्य तत्त्वचिन्तामण्यालोके—"स्वतः स्वकीयेभ्यः एव; स्वजनकसामग्री—स्वजन्यप्रत्यक्षसामग्री—स्वजन्यज्ञाततालिङ्गकानुमितिसामग्र्यन्यतमेभ्य इति विवृतम्। अयमेव विषयः—भाट्टचिन्तामणि-नीलकण्ठी-न्यायसिद्धान्तमञ्जरी-तर्कप्रकाश-मुक्तावलीदिनकर्यादिषु न्यायकोशे च संगृहीत इति तत एवाधिकं द्रष्टव्यम्। अत्र स्वाश्रयज्ञानग्राहकत्वस्य दोषसाधारण्यात् दोषातिरिक्तसामग्र्या एव ग्रहणमिति—"तत्त्वचिन्तामणौ तदप्रामाण्याग्राहकेति सामग्रीविशेषणेन सूचितमादायैवात्रापि **दोषाभावे सतीति** विशेषणं दत्तम्। तथाच स्वशब्दस्यात्मीयपरत्वमिवेत्यभिप्रायेणोक्तमत्र—**स्वाश्रयेति**। ननु परिभाषाकारा अत्र किं मतमभिप्रयन्ति? नहि गुरुमतमेतेषां संमतम्; व्यवहारे भाट्टनयस्यैव स्वीकारात्, नापि भाट्टमतम्, भाट्टमत इव ज्ञानानुमेयत्वस्यानङ्गीकारात्। अन्यथा ज्ञानप्रत्यक्षत्वादिनिर्वचनासाङ्गत्यप्रसङ्गात्; नापि मिश्रमतम्; स्वरूपेतरप्रत्यक्षस्थले इत्थवच्छिन्नविषयावच्छिन्नान्तःकरणावच्छिन्नचैतन्यानामभेदीकरणेन

तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यं गृह्यते। नचैवं प्रामाण्यसंशयानुपपत्तिः; तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात्। यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वम्। संशयस्थले प्रामाण्यस्य उक्तयोग्यतासत्त्वेऽपि दोष-

त्रिपुटीभाननियमोरीकारात्। नचैवं सति प्रकृते विषये गुरुमतमेव वेदान्तिनामपि मतमिति वाच्यम्; वेदान्तिमते प्रमात्वाप्रमात्वादिविभागस्य वृत्तिज्ञानमादायैव प्रवृत्तत्वेन वृत्तिज्ञानस्य च जडस्य स्वप्रकाशत्वायोगेन साक्ष्यधीनभानस्यैव स्वीकारेण च गुरुमतसाधारण्यासंभवात्। यत्तु वृत्तेः स्वप्रकाशत्वं परिभाषायां प्रत्यक्षपरिच्छेदे वर्णितम्, तदिदं स्वविषयत्वरूपमेव न तु साक्ष्यनपेक्षत्वरूपमिति न कोऽपि दोषः। तथाच नात्र स्वाश्रयग्राहकपदार्थनिष्कर्षसंभव इत्यत आह—**स्वाश्रयेति।** यत्तु न्यायरत्नमालायाम्—"आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता" इति स्वशब्दस्यात्मपरत्वं वर्णितम्, तदिदं भाट्टमते त्रिपुटीभानाभावात् ज्ञाततालिङ्गकानुमित्यैव प्रामाण्यग्रहणाच्च न भाट्टमतनिरूपणपरम्, किन्तु पूर्वपक्ष्याशयसंकलनपरमिति मन्तव्यम्।

ननु स्वतः प्रामाण्यग्रहणे सत्तानवधारणरूपत्वं ज्ञानस्य कस्यापि न सिद्ध्येदिति श्रवणजन्यज्ञानं प्राथमिकं सत्तानवधारणरूपत्वान्नाज्ञाननिवर्तकमिति सिद्धान्तो भज्येतेति चेत्, अत्र न्यायरक्षामणिकाराः स्वकारणोत्पन्नस्यापि भेदवासनादिदोषात्सत्तानवधारणरूपत्वम्। अत एव चक्षुरादिनिर्णयकारणजन्यस्यैकाकारस्याप्यनभ्यासदशापन्नजलादिज्ञानस्य सत्तानवधारणत्वेन तत्र जलादिसंशय उपपद्यते। तथाच दोषाभावसहितज्ञानग्राहकसामग्र्या एव प्रामाण्यग्राहकत्वमिति समन्वयाधिकरणे निरूपयन्ति, अमुमेव विषयमाशङ्कापरिहाराभ्यामुपपादयति—**नचैवमिति॥ प्रामाण्यस्यैवाग्रहादिति च॥** सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति सिद्धान्तात् वृत्तिज्ञानाद्युपनीतानामेव साक्षिणा भानमिति मिथ्यात्वेनानिश्चीयमानत्वरूपमर्थतथात्वं तथा तद्ग्राह्यम्, न तथा मिथ्यात्वेन निश्चीयमानत्वम्; भ्रमदशायां तदभावात्, अतो बाधकज्ञानादिभि-

वशेनाग्रहात् न संशयानुपपत्तिः। अप्रामाण्यन्तु न ज्ञानसामान्यसामग्रीप्रयोज्यम्; प्रमायामपि अप्रामाण्यापत्तेः, किन्तु दोषप्रयोज्यम्। नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यम्; अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा

रेवाप्रामाण्यं ग्रहीतुं योग्यमिति, स्वग्राहकसामग्रीग्राह्यत्वमप्रामाण्यस्य न संभवतीत्याह—अप्रामाण्येति। विसंवादीति। विफलेत्यर्थः॥ परत एव—ज्ञानसामान्यसामग्रीव्यतिरिक्तकारणान्तरेण दोषेण तथा स्वाश्रयज्ञानातिरिक्तबाधज्ञानादिभिरित्यर्थः। उत्पद्यते। भ्रमोत्पत्तौ चक्षुरादीनामपि करणत्वेऽपि दोषस्यापि कारणत्वात् परत उत्पत्तिरिति भावः।

तदयं संग्रहः—अनधिगताबाधितार्थविषयकज्ञानत्वमबाधितार्थविषयकज्ञानत्वं वा प्रामाण्यम्। इदं च प्रमात्वं धारावाहिकद्वितीयज्ञानादिषु सर्वत्राविशिष्टम्। तादृशप्रमाजनकं प्रत्यक्षादि प्रमाणम्। तच्च षड्विधम्। स्वरूपचैतन्यस्यैव प्रत्यक्षप्रमारूपत्वेऽपि वृत्तिसम्बन्धात् वृत्त्यवच्छिन्नचैतन्यमपि प्रमैवेति तत्करणत्वेन चक्षुरादिकं प्रमाणम्। सा च वृत्तिः अहमनुभवादौ भासमानस्यानिन्द्रियस्य च मनसः सम्बन्धविशेषः परिणामविशेषो वा। मनसोऽनिन्द्रियत्वेऽपि सुखादिप्रत्यक्षमुपपद्यते। विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यं ज्ञानगतं प्रत्यक्षत्वम्। प्रमातृचैतन्याभिन्नविषयत्वं विषयगतं प्रत्यक्षत्वमिति विवेकः। भ्रमस्थलेऽन्यथाख्यात्याद्यसंभवादनिर्वचनीयख्यातेरेव युक्तत्वात् विषयप्रत्यक्षत्वसमन्वयो भवत्येव। बाधितार्थविषयत्वमिदं रजतम् इत्यादीनां भ्रमत्वम्, अन्येषां तु प्रमात्वम्। तत्र चक्षुरादीन्द्रियसन्निकर्षस्य वृत्तिनिर्गम एवोपयोगः। तत्र केषांचन विषयाणाम् इन्द्रियदेशगमनं केषां चन स्वस्थले स्थितानामेवेन्द्रियैरागतैः सम्बन्धः। तत्र प्रत्यक्षं सविकल्पकं निर्विकल्पकं च। तथाच सगुणवाक्यार्पितार्थसमर्पकत्वेन सविकल्पप्रत्यक्षं स्वरूपसाक्षात्काररूपद्वारा निखिलसंसारनिवृत्तिद्वारा निर्विकल्पप्रत्यक्षं चोपयुक्तम्। एवमनुमानमपि प्रपञ्चमिथ्यात्वसमर्पणेन सप्रयोजनम्। उपमानार्थापत्त्यादीनामपि तत्र तत्रोपयोगो वर्णित इति यावद्दोष-

गृहीतुमशक्यत्वात्, किन्तु विसंवादित्ववृत्त्यादिलिङ्गकानुमित्यादिविषय इति परत एव अप्रामाण्यमुत्पद्यते ज्ञायते च इति।

इति वेदान्तपरिभाषायां स्वतःप्रामाण्यवादः।

ज्ञानं यावद्बाधकज्ञानं च घटादिज्ञानस्य प्रमात्वेऽपि अखण्डाकारसाक्षात्कारानन्तरं घटादिज्ञानं सर्वमपि बाधितमेव। अखण्डाकारसाक्षात्कारस्तु विषयतः कदापि न बाधितः ज्ञानान्तरेणेति तत्समर्पितं ब्रह्मैव सत्यं नत्वन्यदिति॥

इति स्वतःप्रामाण्यवादः समाप्तः॥

---

## अथ विषयपरिच्छेदः

ब्रह्म तज्ज्ञानं तत्प्रमाणं च निरूप्यते इति प्रतिज्ञातेषु त्रिषु विषयेषु प्रमाणविभागो निरूपितः। तेन चार्थात् प्रमेयविभागोऽपि निरूपितप्राय एव। तथापि निरूपितानां प्रमाणानां मध्ये सर्वेषामपि समबलत्वमुत विषमबलत्वमपि आद्ये प्रत्यक्षादिप्रमाणानां सगुणवाक्यानां च विरोधेन निर्गुणवाक्यानामप्रमाणत्वात् ब्रह्मादिरूपविषयोऽसिद्धः। तथाच ब्रह्मैव प्रमेयमिति प्रतिज्ञावाक्ये ग्रन्थसूचितं तदिदमसङ्गतं भवति। नित्यनिरतिशयनित्यशुद्धबुद्धमुक्तासङ्गाद्वितीयब्रह्मस्वरूपस्य शशशृङ्गप्रायत्वात्। एतेन द्वितीयोऽपि परास्तः; प्रत्यक्षादेः प्रबलत्वे उक्तदोषस्य निर्गुणवाक्यप्राबल्ये सगुणवाक्यादिवैयर्थ्यमितिदोषस्य च प्रसङ्गात्। न च प्रत्यक्षादीनामप्रामाण्यमेव संमतमिति वाच्यम्; कस्यचन प्रमाणस्याप्रमाणत्वेऽवश्यवक्तव्ये "विप्रतिषेधे भूयसां स्यात् सधर्मत्वमि"ति न्यायेन निर्गुणवाक्याप्रमाणताया एव युक्तत्वात्। तथाच सगुणब्रह्माभिप्रायेण बहूनां ब्रह्मसूत्राणां कर्मकाण्डादीनां सर्वेषामन्येषां प्रमाणानां च प्रामाण्यं रक्षितं भवति॥ उपजीव्यत्वेन हि प्रत्यक्षम् आगमापेक्षया प्रबलम्। न च पूर्वोक्तप्रकारेण प्रत्यक्षागमयोर्भिन्नविषयत्वान्न विरोध इति वाच्यम्; व्यावहारिकत्वपारमार्थिकत्वादिविभागस्याद्ययावदसिद्धत्वेनोक्तविषयविवेकस्यासंभवदुक्तिकत्वात्। अतएवापच्छेदन्यायेनागमप्राबल्यमपि निरस्तम्; अपच्छेदन्यायो हि पूर्वतनस्य बाध्यस्य विषयान्तरे सावकाशत्वे प्रवर्तते, नत्वन्यथा। न च प्रत्यक्षादीनाम् आगमबाध्यानां कुत्रापि कथमपि सावकाशत्वम्। सगुणवाक्यानामनुवादत्वं हि तत्सिद्धानां सर्वेषामपि प्रमाणान्तरसिद्धत्वे उपपद्यते। न हि धर्माधर्मादिकं सगुणेश्वरस्वरूपादिकं वा प्रमाणान्तरेण सिद्धमिति नित्यनिरतिशयसमस्तकल्याणगुणैकतानाप्तकामादिस्वरूपनित्यविभूतिमद्भगवन्नारायण एव परं तत्त्वमिति अद्वैतमतमिदं नौपनिषदमिति बहवः प्रत्यवतिष्ठन्ते॥

नेदं प्रत्यवस्थानं सङ्गतम्। न हि सर्वेषां प्रमाणानाम् एकविधं प्रामाण्यमूरीकुर्मः। द्विविधं हि प्रामाण्यं व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वं च। आद्यं संसारकालाबाधितविषयत्वम्, द्वितीयं कालत्रयाबाध्य-

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधम्, व्याव-

विषयत्वम्। प्रमाणानां स्वविषयस्य यावद्बाधमबाध्यत्वमेव गोचरीक्रियते, नतु भाविबाधाभावोऽपि विषयस्य तत्र गम्यते। विस्तरश्चास्य भाविबाधोपपत्तिप्रकरणेऽद्वैतसिद्धितोऽवगन्तव्यः। तथाच सगुणवाक्यावगताबाध्यत्वस्य निर्गुणवाक्यावगतबाध्यत्वस्य च तत्त्वज्ञानपूर्वक्षणतदुत्तरक्षणावच्छेदेन कालभेदेनोपपत्त्या न काऽपि हानिः। न हि वयं व्यावहारिकत्वपारमार्थिकत्वादि किमप्यपूर्वं वस्तु वदामः। न हि प्रपञ्चस्य सत्त्वेनेदानीमनुभूयमानस्य बाधो न भवितेति पारयति शक्तोऽपि विषयमिमं परिच्छेत्तुम्। नहि इदं रजतमिति प्रतीतिकाले सत्त्वेनानुभूयमानं शुक्तित्वसाक्षात्कारपर्यन्तमबाध्यमानं च रजतं वस्तुसदित्यभ्रान्तः कोऽपि कल्पयेत्।

ये हि सत्ख्यातिवादिनः भ्रमस्थलेऽपि सत्यमेव रजतं भासमानं मन्यन्ते, ते हि मातरमपि निशि दोषवशेन दारत्वेन दृश्यमानां सत्यं मन्येरन्।

अपच्छेदन्यायेनागमप्राबल्यादिसिद्धान्तः सर्वोऽपि एतादृशद्विविधप्रामाण्याङ्गीकारेणैवेति नापच्छेदन्यायवैषम्यमपि संभवति। प्रमाणान्तरप्राप्तार्थानां सगुणवाक्यानामनुवादत्वमन्येषां तु निषेध्यसमर्पणेन निर्गुणशेषत्वमिति सर्वेषामपि वेदान्तानामद्वितीये पर्यवसानम्। अद्वितीयं हि ब्रह्मस्वरूपं तत्त्वमस्यादिमहावाक्यैरवगम्यते। तत्र कर्मवाक्यानि त्वंपदार्थशोधनतयोपासनावाक्यानि तत्पदार्थशोधनतया ज्ञानकाण्डवाक्यानि वाक्यार्थस्वरूपसमर्पकतयोपयुज्यन्ते इति वेदान्तिनामस्माकं मतेऽधिकारिभेदेनावस्थाभेदेन च सर्वेषामपि वेदवाक्यानां सर्वेषामपि दर्शनानां सर्वेषामपि विद्यास्थानानां सर्वेषामपि स्मृतिपुराणेतिहासकाव्याख्यानकाख्यायिकादीनां सार्थक्यं भवतीति सुष्ठु प्रमाणविभाग उपपद्यते इति ब्रह्मरूपविषयसिद्धौपनिषदमतमिदमत्यन्तमुपपन्नमिति सूचनपूर्वकं तत्पदार्थब्रह्मरूपविषयस्य लक्षणप्रमाणाभ्यां निरूपणमुपक्रमते—

एवं निरूपितानामिति॥

अबाधितार्थविषयकज्ञानत्वं प्रमात्वमित्यत्राबाधितपदेन व्यवहारकालाबाधितत्वस्यैव ग्रहणात् सर्वेषामपि प्रमाणानां प्रामाण्यमविशिष्टमिति भावः।

हारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वञ्च इति। तत्र ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तानां सर्वप्रमाणाना-माद्यं प्रामाण्यम्; तद्विषयाणां व्यवहारदशायां बाधाभावात्। द्वितीयन्तु जीवब्रह्मैक्यपराणां "सदेव सोम्येदमग्र आसीदि"त्येव-मादीनां तत्त्वमसीत्यन्तानाम्; तद्विषयस्य जीवब्रह्मैक्यस्य कालत्रयाबाध्यत्वात्।

व्यावहारिकतत्त्वावेदकत्वम् व्यवहारकालाबाध्यसत्त्वावगाहिज्ञानजनकत्वम् पारमार्थिकतत्त्वावेदकत्वम् कालत्रयाबाध्यसत्त्वावगाहिज्ञानजनकत्वम्॥

आद्यं व्यावहारिकतत्त्वावेदकत्वम्। द्वितीयं पारमार्थिकतत्त्वावेदकत्वम्॥ जीवब्रह्मैक्यपराणाम् ब्रह्मस्वरूपमात्रपराणाम्॥

ननु—तत्त्वमसीत्यादिवाक्यानां कथं ब्रह्मस्वरूपमात्रपरत्वम्; तत्र हि तस्य त्वं तत्त्वं तेन त्वं तत्त्वमिति वाऽन्यथा वा भगवदायत्तो जीव इति वा जीवशरीरकः परमात्मेति वा जीवब्रह्मणोः शरीरशरीरिभावबोधन एव तात्पर्यात्, इत्यत आह—सदेव सोम्येदमग्र आसीदित्यादीनामिति॥

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्याम्नातानामित्यर्थः। तथाचोपक्रमे एकमेवाद्वितीयमिति सजातीयविजातीयस्वगतभेदरहितस्वरूपचैतन्य-मात्राम्नानपूर्वकमुपसंहृतस्य तत्त्वमसीतिवाक्यस्य स्वरूपचैतन्यमात्रपरत्वमेव युक्तमिति भावः॥

जीवब्रह्मैक्यस्य असङ्कीर्णस्वरूपचैतन्यमात्रस्य। तद्विषयस्य उक्तवाक्य-गम्यस्य। कालत्रयाबाध्यत्वात्। साधिष्ठान एव बाध इति नियमात् स्वरूप-चैतन्यस्य चाधिष्ठानान्तराभावात् न तस्य बाधः; अन्यथा शून्यवादापत्तेरिति भावः। यद्यपि स्वरूपचैतन्यं तत्पदमात्रस्य त्वंपदमात्रस्यासिपदमात्रस्य वा लक्षणयाऽर्थः; तथाऽपि असङ्कीर्णं स्वरूपचैतन्यमात्रं वाक्यमात्रगम्यमिति पदत्रय-सार्थक्यमपि व्याख्यातं भवति। विस्तरस्त्वद्वैतसिद्ध्यादौ द्रष्टव्यः॥

**तच्च ऐक्यं तत्त्वंपदार्थज्ञानाधीनज्ञानमिति प्रथमं तत्पदार्थौ लक्षणप्रमाणाभ्यां निरूप्यते ।**

**ननु**—चैतन्यस्वरूपमात्रावबोधेनाज्ञाननिवृत्तिरिति वेदान्तिनां मते चैवो ब्रह्मेति वाक्यजन्यस्वरूपचैतन्यमात्रविषयज्ञानेनापि निखिलसोपादानप्रपञ्चनिवृत्ति-संभवात् तत्त्वमसीत्यादीनामेव महावाक्यत्वं किमर्थमङ्गीकरणीयमित्यत आह—**तच्चैक्यमिति ॥**

स्वरूपचैतन्यमात्रविज्ञानमज्ञाननिवर्तकमित्यद्वैतसिद्धान्तेऽपि जीवत्वेश्वरत्वोप-स्थितिपूर्वकस्वरूपचैतन्यज्ञानमेवाज्ञानस्य निवर्तकम्; अहंत्वाभिमानस्यैव बन्ध-मूलत्वेन तद्रहितत्वेनात्मविज्ञानं विना बन्धनिवृत्त्यसंभवात्—इति भावः ॥

**तत्त्वंपदार्थज्ञानाधीनम्** तत्त्वंपदजन्यस्वरूपमात्रोपस्थित्यधीनम्। यद्यपि विशिष्टशक्तेन तत्पदेन विशिष्टस्यैव स्मरणं स्यात्, नतु स्वरूपमात्रस्य; तथाऽपि विशिष्टवाचकानां पदानां विशेष्यमात्रोपस्थापकत्वेनापि शाब्दबोधस्य मूलकारैरुपपादितत्वान्नानुपपत्तिः। स्वरूपचैतन्यमात्रस्योपस्थितेः पूर्वतनानु-भवाधीनत्वेन पूर्वतनो योऽनुभवोऽपेक्षितः, स वेदान्तसारमतेनासंप्रज्ञातसमाधिर्वा वार्तिकेतरमतेन सौषुप्तानुभवो वा विवक्षणीय इति पदानुपस्थापितस्वरूपमात्रस्य शाब्दबोधो वेति सिद्धान्तबिन्दुटीकायां विस्तरेण प्रतिपादितम् यत्, तत् सत्यादि-लक्षणवाक्याभिप्रायेण। तत्त्वमसीतिमहावाक्यार्थबोधार्थमपेक्षिततत्त्वंपदार्थो-पस्थित्यर्थस्तदादिपदार्थानुभवस्तु सत्यादिलक्षणवाक्येनैवेति महावाक्यार्थबोधात् पूर्वं लक्षणवाक्यार्थज्ञानमपेक्षितम्।

तत्र च त्वंपादार्थज्ञानस्यैव प्रथमत उद्देश्यत्वात् संपादनं युक्तम्; तथाऽपि त्वंपदार्थस्य जीवस्य देहातिरिक्तत्वादिना पूर्वतन्त्रत एव सिद्धत्वात् तत्पदार्थस्य सर्वथा कथमप्यसिद्धस्यैव निरूपणमत्र बहुक्लेशसाध्यमिति मायाप्रतिबिम्बमीश्वरः अन्तःकरणप्रतिबिम्बं जीव इति पक्षे मायास्वरूपानाद्युपाध्युपहितस्वरूपस्य मायिकान्तःकरणप्रतिबिम्बापेक्षया प्राथमिकत्वेनेश्वरस्यैव प्रथमतो निरूपणं युक्तमिति वा बिम्बचैतन्यं ईश्वरः प्रतिबिम्बचैतन्यं जीव इति पक्षेऽपि बिम्बपूर्व-कत्वात् प्रतिबिम्बस्येश्वरस्यैव प्रथमतो निरूपणं युक्तमिति वाऽऽदितः तत्पदार्थ-

तत्र लक्षणं द्विविधम्, स्वरूपलक्षणं तटस्थलक्षणञ्च इति। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम्, यथा सत्यादिकं ब्रह्म स्वरूपलक्षणम्; "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानादि"ति श्रुतेः।

मेव लक्षणप्रमाणाभ्यां निरूपयति—प्रथमं तत्पदार्थ इति। पदार्थप्रतीति-दशायामुद्देश्यविधेयभावादिप्रतीतिविरहात् यथाश्रवणमेव पदानामर्थो वर्णनीय इत्यपि बोध्यम् ॥

लक्षणप्रमाणाभ्यामिति। यथाहि पृथिव्यादीनां गन्धवत्त्वज्ञानं प्रत्यक्षेण, इतरभिन्नत्वेन तत्स्वरूपानुसन्धानमनुमानेन अर्थापत्त्या वा, नैवं लक्षणं प्रमाणं च भिन्नभिन्नं भवति ब्रह्मणि। यस्य हि वस्तुनोऽनुमानप्रमाणेन व्यावृत्ताकारेण भानं तस्यैव प्रमाणान्तरेण व्यावर्तकज्ञानमपेक्षितम्, श्रुतिप्रमाणके तु ब्रह्मणि लक्षणवाक्यमेव प्रमाणवाक्यमपि। नहि प्रमाणान्तरेण ब्रह्मावगमस्संभवति। एवं च द्विविधलक्षणवाक्ये एव प्रमाणमपीतिलक्षणप्रमाणाभ्यामित्यस्य लक्षण-वाक्यरूपप्रमाणवाक्याभ्यामित्यर्थः, नतु लक्षणेन प्रमाणेन चेति ॥

ननु यदि ब्रह्मणि लक्षणवाक्यमेव प्रमाणमपि, तर्हि लक्षणप्रमाणेन निरूप्यते इति खलु वक्तव्यम्, नतु लक्षणप्रमाणाभ्यामिति द्विवचनेनेत्यत आह—तत्र लक्षणं द्विविधमिति। तत्रेति त्रल्प्रत्ययोऽभेदार्थः। तद्रूपं लक्षणं द्विविधमित्यर्थः। तथा च द्विविधलक्षणाभिप्रायेणात्र द्विवचनप्रयोग इति भावः ॥

स्वरूपलक्षणमिति कर्मधारयसमास इत्याह—स्वरूपमेवेति ॥ सत्या-दिकमिति। सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्योपात्तसत्त्वचिज्ज्ञानन्दत्वानि स्वरूप-लक्षणम्; तेषां ब्रह्मस्वरूपादत्यन्ताभेदादिति भावः। सत्यं सद्रूपं ज्ञानं चिद्रूपम् अनन्तं त्रिविधपरिच्छेदशून्यमित्यर्थः ॥

अत्र त्रितयं मिलितं लक्षणम्, न प्रत्येकम्; प्रत्येकलक्षणत्वेऽप्यतिप्रसङ्ग-निरासेऽपि ब्रह्मत्रितयशङ्कानिवृत्तिर्लक्षणत्रितयाविवक्षायाः प्रयोजनमिति पूर्वमुक्तं बिन्दुटीकाद्यनुसारेण। परिभाषाकृतस्तु "यतो वा इमानि भूतानि जायन्ते।

**ननु स्वस्य स्ववृत्तित्वाभावेन कथं लक्षणत्वमिति चेत्, न,**

येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्मे"तिवाक्ये एकस्यैव ब्रह्मशब्दस्य यच्छब्दत्रितयसामानाधिकरण्येनाम्नानान्यथानुपपत्त्यैवोक्ताशङ्कापरिहारसंभवात् प्रत्येकलक्षणत्वमपि न दोषायेत्यभिप्रायेणैव नव लक्षणानि संपद्यन्ते इति वर्णयिष्यन्तीति, तेनैव न्यायेनात्रापि सत्यं ज्ञानमनन्तमिति पदत्रयसामानाधिकरण्येनैकस्यैव ब्रह्मशब्दस्याम्नानात् प्रत्येकलक्षणत्वमपि न दोषायेति परिभाषाकृतामाशय इति परे मन्यन्ते। तदेतत्प्रकृतेऽपि सूचयति—**आनन्दो ब्रह्मेति॥** अन्यथा त्रितयस्योक्ताशङ्कापरिहारार्थं लक्षणत्वे आनन्दो ब्रह्मेतिवाक्यान्तरसिद्धलक्षणान्तरानुसारेण ब्रह्मान्तरशङ्कानिवृत्त्यर्थं चतुष्टयस्य मिलितस्य लक्षणत्वमपि कल्प्येत। निर्विशेषब्रह्मण एकस्यैव लक्ष्यत्वेऽपि असत्त्वजडत्वपरिच्छिन्नत्वादिभ्रमनिवर्तनात् नान्यतमपदवैयर्थ्यम्॥

**ननु** असाधारणधर्मस्यैव लक्षणत्वात् स्वरूपस्य च ब्रह्मरूपतया तद्धर्मत्वेन लक्षणत्वायोगात् कथं सत्यादिकं स्वरूपलक्षणम्? लक्षणं हि नामेतरव्यावर्तकम्। नहि स्वयमेव स्वस्य व्यावर्तकमित्याशयेन शङ्कते—**नन्विति॥ स्ववृत्तित्वाभावेन** स्वासाधारणधर्मत्वाभावेन। कथमाक्षेपे। न लक्षणत्वं संभवतीति भावः॥

नह्यसाधारणधर्म एव लक्षणमिति नियमः; स्वरूपस्यापि लक्षणत्वात्। नच लक्ष्यलक्षणभावायोगः, अन्तःकरणवृत्तिनिबन्धनाकारभेदेनोभयोपपत्तेः। तदुक्तं लघुचन्द्रिकायाम्—विभिन्नमनोवृत्तिरूपोपाधिभेदादेकस्याप्युपहितरूपेण भेदसंभवात् सम्बन्धसम्भवः। तादृशमनोवृत्तिश्च ब्रह्मपदार्थस्वरूपमात्रस्य लक्षणयोपस्थितिः, तद्विषयत्वेन लक्ष्यत्वम्, सत्यादिपदार्थस्वरूपमात्रस्य लक्षणयोपस्थितिश्च, तद्विषयत्वेन लक्षणत्वमिति॥

यथाच ज्ञातस्यापि स्वरूपस्य सत्यादिपदेन पुनर्ज्ञापनमपि प्रयोजनवद्वैवासंकीर्णस्वरूपावगमादिना, तथाऽद्वैतसिद्ध्यादौ व्यक्तम्। तथाच स्वोपाधिभेदेन भिन्नयोरिवोपहितयोः कल्पितं धर्मधर्मिभावमादाय लक्ष्यलक्षणभावोपपत्तिरिति न दोष इत्याशयेन समाधत्ते—**नेति।**

स्वस्यैव स्वापेक्षया धर्मिधर्मभावकल्पनया लक्ष्यलक्षणत्वसम्भवात्।
तदुक्तम्—

आनन्दो विषयानुभवो नित्यत्वञ्च इति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते इति।

लक्ष्यलक्षणत्वसंभवादिति॥ आनन्दादीनां ब्रह्मधर्मत्वं कल्पितं विद्यते इति। अत्र पूर्वाचार्यसंमतिमाह—तदुक्तमिति। विषयानुभवः चैतन्यम् ज्ञानपदबोध्यम्। नित्यत्वं सत्यत्वं सद्रूपत्वं सत्यपदार्थः। अपृथक्त्वेऽपि चैतन्यात् वस्तुगत्या चैतन्यात् भेदाभावेऽपि। पृथगिव नतु वस्तुगत्या भिन्नाः, किन्तु कल्पनेनेत्ययमर्थं इवेन सूचितः।

यद्यपि तटस्थलक्षणं सामान्यलक्षणं स्वरूपलक्षणं विशेषलक्षणमिति प्रथमतस्तटस्थलक्षणमनन्तरं स्वरूपलक्षणमेव वक्तुमुचितम्; तथाऽपि सामान्यस्य प्रथमतः विशेषस्यानन्तरं च निर्देश इति सामान्यस्वरूपस्य विशेषस्वरूपस्य चानुमानिकत्वे एव प्रवर्त्तते, नतु श्रौतत्वे। श्रौतत्वे तु सामान्यविशेषयोः श्रुतिक्रमानुसारेणैव लक्षणनिर्देशोऽपि युक्त इति श्रुतो सत्यादिवाक्यस्य प्राथम्यात् जन्मादिवाक्यस्य चोत्तरत्वात् सामान्यलक्षणस्य प्रथममत्र निर्देश इति न दोषः॥

वस्तुतस्तु यत्र यत्र स्वरूपलक्षणं तत्र तत्र तटस्थलक्षणमपेक्षितमिति न नियमः, विनाऽपि तटस्थलक्षणं प्रकृष्टप्रकाश इत्यादिस्वरूपलक्षणप्रवृत्तिदर्शनात्। नहि शाखा चन्द्रस्य लक्षणमिति ज्ञानानन्तरमेवोक्तप्रश्न इति नियमः। तथाच सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपलक्षणात् पूर्वं तटस्थलक्षणाभावेऽपि स्वरूपलक्षणमात्रनिर्देशोपपत्त्या न विरोधः॥

यत्तु जगज्जन्मादिकारणत्वरूपं तटस्थलक्षणम्, तदपेक्षितस्वरूपलक्षणं तु तदनन्तरप्रवृत्तेनानन्दो ब्रह्मेति व्यजानादिति वाक्येनैव समर्प्यत इति न तस्य सत्यादिलक्षणस्य च सामान्यविशेषभावः। तथाच तटस्थलक्षणस्यानन्तर आनन्दस्वरूपस्वरूपलक्षणनिर्देशोऽपेक्षितः पूरणीय एव॥

यातु सत्यादिकं ब्रह्मस्वरूपलक्षणम्; सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दो ब्रह्मेति व्यजानादिति श्रुतेरिति सत्यादिवाक्येनानन्दवाक्यस्यैकवाक्यता सूचिता,

**तटस्थलक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति**

सातु एकप्रकरणत्वादेकार्थे एव तात्पर्यात् नातिरिक्तब्रह्मग्रहणप्रसर इति सूचनार्थम्, नत्वानन्दमात्रस्य स्वरूपलक्षणत्वं न भवतीति ज्ञापनार्थम् ॥

यदि तु गुणोपसंहारन्यायेन सर्वस्य लक्षणवाक्यस्यैकवाक्यतया प्राथम्येण जन्मादिवाक्यस्यापि प्रथमतोऽपकर्षः, तर्हि वाक्यैकवाक्यतासमयेऽस्मिन् न तटस्थस्वरूपलक्षणादिविभाग इति वाक्यैकवाक्यतापूर्वकालिकत्वादेतल्लक्षण-विभागस्य न स्वरूपलक्षणस्य प्रथमतो निर्देशानुपपत्तिरिति प्रतिभाति। तत्र च विषये कृतधियः पण्डिताग्रगण्या एवास्माकं प्रमाणमिति दिक् ॥

अत्र स्वरूपमेव लक्षणं स्वरूपलक्षणमित्युक्त्या लक्ष्यात्यन्ताभिन्नस्वरूपं स्वरूप-लक्षणम्, नतु यावदाश्रयकालमवस्थितत्वे सति लक्षणत्वं स्वरूपलक्षणत्वमिति सूचितम्; अन्यथा कर्त्रभिन्नोपादानत्वरूपस्य जन्मादिकारणत्वस्य ब्रह्मकालत्वा-व्यापकत्वात् तस्यापि स्वरूपलक्षणत्वानापत्तेः। तदुक्तं लघुचन्द्रिकायाम्—"नच स्वाश्रयकालत्वव्यापकत्वस्यैव यावद्द्रव्यभावित्वरूपत्वेनाविद्याविषयत्वादिकमिव तादृशो धर्म इति तस्य स्वरूपलक्षणत्वं स्यादिति—वाच्यम्; जगत्कर्त्रभिन्नोपादानत्व-स्येवाविद्याविषयत्वादेरपि स्वरूपान्यत्वेन तटस्थलक्षणत्वोपचारात्" इति ॥

**ननु**—किं नाम तटस्थलक्षणम्? नच यावल्लक्ष्यकालमनवस्थितत्वे सति लक्षणत्वं तटस्थलक्षणत्वमिति—वाच्यम्; अविद्याविषयत्वादीनां लघुचन्द्रिकोक्त-तटस्थलक्षणत्वाभावप्रसङ्गात्। नापि स्वरूपलक्षणान्यलक्षणत्वम्; "जगदुपादान-त्वादेः स्वरूपतटस्थलक्षणोभयत्वस्यैकत्रासंभवाच्चे"ति लघुचन्द्रिकोक्त्या एकस्यैव स्वरूपलक्षणत्वस्य तटस्थलक्षणत्वस्योभयस्य च संमतत्वेन स्वरूपलक्षणभिन्नत्वस्य तत्रासंभवेनाव्याप्तेः। तथाच तटस्थलक्षणं न लक्षणतो निर्वक्तुं शक्यत इत्यत आह—

**तटस्थलक्षणं नामेति ॥**

लक्ष्यकालत्वाव्यापकव्यावर्तकधर्मत्वं तटस्थलक्षणत्वम्। जगज्जन्मादि-कारणत्वं च जगदुपादानकारणाभिन्नकर्तृत्वरूपमेव विवक्षितम्। कर्तृत्वं च मायापरिणामज्ञानेच्छाकृतिरूपमेवेति तस्य ब्रह्मकालत्वाव्यापकत्वात् तटस्थ-लक्षणत्वसमन्वयः। अविद्याविषयत्वं जगदुपादानत्वादिकं च स्वरूपलक्षणमेव। अत एव तटस्थलक्षणत्वोपचारात् इत्युपचारपदप्रयोगः। सर्वथा च तटस्थलक्षणं

यत् व्यावर्त्तकं तदेव। यथा गन्धवत्वं पृथिवीलक्षणम्; महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च गन्धाभावात्। प्रकृते च ब्रह्मणि जगज्जन्मादिकारणत्वम्। अत्र जगत्पदेन कार्य्यजातं विवक्षितम्। कारणत्वञ्च कर्त्तृत्वम्; अतोऽविद्यादौ नातिव्याप्तिः।

कर्त्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृति-

जगज्जन्मादिकारणत्वमित्युपपन्नमिति प्रतिपादयिष्यन्, पृथिव्या गन्धवत्त्वमपि तटस्थलक्षणमेव; पृथिवीकालत्वाव्यापकत्वात् इत्याह—यथा गन्धवत्त्वं पृथिवीति॥

जगज्जन्मादिकारणत्वमिति॥ अत्र कारणत्वमुपादानत्वसहित-कर्तृत्वम्, जगत्पदेन च कार्य्यजातं विवक्ष्यते; "यतो वा इमानि भूतानी"तीदं-पदभूतपदयोः सामानाधिकरण्यात्। तथाचाविद्यानिरूपितकर्तृत्वाभावेन नासंभवः, न वा कार्य्यप्रपञ्चोपादानत्वमात्रेणाविद्यायामतिव्याप्तिः, नापि वा जगन्निरूपितकर्तृत्वमात्रमादाय हिरण्यगर्भेऽतिव्याप्तिः॥

यद्यपि जगदुपादानत्वमात्रमपि लक्षणं भवति, उपादानत्वं त्वत्र विवर्त्तो-पादानत्वरूपमेव विवक्षितमिति नाविद्यायामतिव्याप्तिः। यद्यपि यावत्कार्य्य-प्रपञ्चनिरूपितकर्तृत्वं हि हिरण्यगर्भस्य नास्ति: हिरण्यगर्भस्यापि कार्य्यत्वेन स्वकर्तृत्वासंभवात्; तथाऽपि जगदुपादानत्वमात्रस्य स्वरूपलक्षणत्वेन तटस्थ-लक्षणत्वाभावात् इमानि भूतानीति परिदृश्यमानकार्य्यप्रपञ्चमात्रनिरूपित-कर्तृत्वस्य हिरण्यगर्भसाधारणत्वेन तत्रातिव्याप्त्या चोपादानत्वसहितकर्तृत्वमेवात्र तटस्थलक्षणतया विवक्षितमित्याह—अतेति॥

कर्त्तृत्वमिति। उपादानत्वसहितकर्तृत्वमित्यर्थः। तदुक्तं लघु-चन्द्रिकायाम्—"उपादानाभिन्नकर्तृत्वस्यैव मन्माते मुख्यतटस्थलक्षणत्वात्" इति॥ यदि तु कर्तृत्वं मायापरिणामरूपज्ञानेच्छाकृतिमत्त्वरूपम्, तर्हि हिरण्यगर्भे नाति-व्याप्तिः। तदीयज्ञानस्य समष्टिमनःपरिणामत्वादिति कर्तृत्वमात्रमपि लक्षणमेव॥

मत्त्वम्। ईश्वरस्य तत्तदुपादानगोचरापरोक्षज्ञानसद्भावे च "यः सर्वज्ञः सर्ववित्। यस्य ज्ञानमयं तपः। तस्मात् एतद् ब्रह्म नाम रूपमन्नं च जायते" इत्यादिश्रुतिर्मानम्। तादृशचिकीर्षासद्भावे च "सोऽकामयत बहु स्यां प्रजायेय" इति श्रुतिर्मानम्। तादृशकृतौ च "तन्मनोऽकुरुत" इत्यादि वाक्यम्। ज्ञानेच्छाकृतीनां मध्ये अन्यतमगर्भं लक्षणत्रितयं विवक्षितम्; अन्यथा व्यर्थविशेषणत्वापत्तेः। अत एव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः। एवञ्च प्रकृते लक्षणानि नव

तत्तदुपादानगोचरेति। कार्यप्रपञ्चोपादानमृदादिगोचरेति कार्यप्रपञ्चोपादानाविद्यागोचरेति वाऽर्थः। यत्तु—आशुबोधिन्यां जगत्पदेन ब्रह्मणो ग्रहणापत्त्याऽसंभव इति कार्यपरत्वमित्युक्तम्, तत् ब्रह्मलक्षणवाक्येऽत्र ब्रह्मणोऽव्ययावदसिद्धत्वेन जगत्पदेन विवक्षासंभवात्, सत्तादात्म्यवदर्थकभूतपदेनैव ब्रह्मव्युदासाच्च चिन्त्योपपत्तिकम्। तदुक्तं लघुचन्द्रिकायां प्रथममिथ्यात्वप्रकरणे —"भूतानि सत्तादात्म्यवन्ति। अविद्याद्यनादिवारणायेमानी"ति॥

ईश्वरस्योपादानगोचरापरोक्षज्ञाने तद्गोचरचिकीर्षायां तादृशकृतौ च क्रमेण प्रमाणान्याह—ईश्वरस्येति॥ बहु स्यां प्रजायेय बहु भवामीत्यर्थः। एकस्य परमात्मनो बहुभवनमेवात्र सृष्टिपदार्थत्वेन सूचितमिति ब्रह्मैव जगतो विवर्तोपादानकारणम्, निमित्तकारणं चेति फलति। अत्र ज्ञानादिकं मायापरिणामरूपमेव विवक्षितम्। अत एव तस्मादेतदिति हिरण्यगर्भस्यापि सृष्टिराम्नायमानोपपद्यते। एवं च ज्ञानाद्यन्यतमवत्त्वं लक्षणमिति विवक्षायामपि नातिव्याप्तिरिति जगज्जन्मकर्तृत्वत्रितयं जगत्स्थितिकर्तृत्वत्रितयं जगल्लयकर्तृत्वत्रितयमिति नव लक्षणानि संपद्यन्ते इत्याह—एवं चेति॥ यत्तु जन्माद्यधिकरणभाष्ये जन्मस्थितिभङ्गं समासार्थं इति जन्मस्थितिभङ्गानां समाहारेण निर्देशः, सोऽपि जन्मादीति सूत्रगतस्य नपुंसकस्य साधुताज्ञापनार्थं एवेति भामतीकल्पतर्वोर्व्यक्तम्। यत्तु परिमलादावन्यत्र च जन्मादित्रितयकारणत्वं ब्रह्मण

सम्पद्यन्ते । ब्रह्मणो जगज्जन्मादिकारणत्वे च "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति" इत्यादिश्रुतिर्मानम् ।

यद्वा निखिलजगदुपादानत्वं ब्रह्मणो लक्षणम् । उपा-

इति व्यपदेशस्य वस्तुगतिमनुसृत्य, नान्यतमस्यालक्षणत्वाभिप्रायेण । बिन्दुटीकायां प्रत्येकलक्षणत्वं यत् खण्डितम्, तत्र यद्वक्तव्यं तत्पूर्वमेवोक्तमिति न विरोधः ॥

तत्रापि यदि "यतो वा इमानि भूतानि जायन्ते, पाल्यन्ते, संह्रियन्ते चेत्येकमेव लक्षणवाक्यं स्यात्, तर्हि त्रितयकारणत्वं कथमपि श्रुत्युपदत्त्ययं मुच्येत, नत्वेतदस्तीति प्रत्येकलक्षणत्वमेव श्रुतिसंमतमिति सूचयन् ब्रह्मणो जगज्जन्मादिकारणत्वे प्रमाणमाह—**ब्रह्मण इति ॥** **आदीति ॥** "तदैक्षत बहु स्यां प्रजायेय" "तत्तेजोऽसृजत"त्यादीनां संग्रहः ॥

एतावता प्रपञ्चेन ब्रह्मणस्तटस्थलक्षणं स्वरूपलक्षणं च भिन्नभिन्नमुक्तम्, इदानीं तटस्थस्वरूपोभयात्मकमेकं लक्षणं "बहु स्यामि"ति श्रुतिसिद्धमाह—**यद्वा निखिलेति ॥** उक्तं हि लघुचन्द्रिकायां सत्यादिवाक्याखण्डार्थताप्रकरणे जगदुपादानत्वं स्वरूपलक्षणं तटस्थलक्षणं चेति पूर्वमेवास्माभिरुपक्षिप्तमत्राप्यनुसन्धेयम् ॥

यत्तु आशुबोधिन्यां जगज्जन्मादिकर्तृत्वं ब्रह्मणो न लक्षणम्, कार्यमात्रगोचरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वस्य प्रत्यक्षादिनिखिलप्रमाणागोचरत्वेन निखिलकार्यकर्तृत्वासंभवेनासंभवात् । नहीदानीन्तनघटं प्रत्यपीश्वरः कर्ता । नहि इषुक्षेपेण ब्रह्मवधः इषुकारस्यापि ब्रह्महत्यां गमयतीत्यस्वरसात् यद्वेति पक्षान्तरानुसरणमिति व्याख्यातम् ।

तदिदं चिन्त्योपपत्तिकम् । निरूपितं हि मनुपदमेव जगज्जन्माद्युपादानगोचरापरोक्षज्ञानादिमत्त्वे ईश्वरस्य श्रुतिकदम्बरूपं प्रमाणम् । कर्ता कारयिता चेवेत्यादौ ईश्वरस्येदानीन्तनघटादिसाधारण्येन कर्तृत्वमपि यथा निरूपितम्, नैवं इषुनिक्षेपजन्यब्रह्महत्यादिवधे इषुकारस्यापि वधकर्तृत्वं कथमपि सिद्धं

**दानत्वञ्च जगदध्यासाधिष्ठानत्वम्, जगदाकारेण विपरिणममान-**

भवति। अन्यथेदानीन्तनरज्जुसर्पाद्यध्यासाधिष्ठानत्वाभावेन पक्षान्तरेऽप्युक्तदोष-निवारणं कथं भविता? संमतमिदं कार्यसामान्यं प्रति ईश्वरो निमित्त-कारणमिति नैयायिकानामपि।

यत्तु ग्रन्थकृता सृष्ट्यादिवाक्यानां न सृष्टौ तात्पर्यम्, किन्त्वद्वये ब्रह्मणीत्युक्तम्, न तज्जगत्कारणत्वस्य तटस्थलक्षणत्वनिषेधाभिप्रायेण, किन्तु सृज्यमानस्य न सत्य-त्वमित्यभिप्रायेणेति तत्रैव व्यक्तम्, अन्यथा हि तेन न्यायेन निखिलजगदुपादानत्वे-ऽपि वक्ष्यमाणोक्तग्रन्थरीत्या तात्पर्याविषयत्वेन तस्यापि लक्षणत्वायोगः।

एतेन—नन्वेवमप्युत्पत्तिमात्रं सूत्र्यताम्, किं स्थितिभङ्गयोः सूत्रणेनेत्यादिना त्रिभिरस्योपादानत्वं सूच्यते इति प्रवृत्तो भामतीग्रन्थोऽपि—व्याख्यातः। तस्यापि उत्पत्त्यादिमात्रस्य तटस्थलक्षणत्वाभिप्रायत्वस्यैव तत्रैव स्फुटत्वात्।

**जगदध्यासाधिष्ठानत्वमिति।** अत्रापि जगत्पदं कार्यपरमेव। परिदृश्यमानसत्तादात्म्यवत्प्रपञ्चपरं वेति न ब्रह्मणोऽत्र ग्रहणापत्तिरिति नात्रा-संभवः। जगदध्यासाधिष्ठानत्वं जगत्तादात्म्याधिष्ठानत्वम्॥

ननु रज्जुसर्पादौ सर्पाध्यासाधिष्ठानत्वं रज्ज्ववच्छिन्नचैतन्यस्यैव, नतु शुद्धचैतन्यस्ये-श्वरस्य वेति जगत्पदेन तस्य ग्रहणे रज्ज्ववच्छिन्नचैतन्यादावतिव्याप्तिरित्यत आह—**जगदाकारेणेति।** तथाच रज्जुसर्पादीनां तूलाविद्यापरिणामत्वेन माया-परिणामत्वाभावात् न रज्ज्ववच्छिन्नचैतन्येऽतिव्याप्तिरिति भावः॥

यत्तु आशुबोधिन्याम्—जगदध्यासाधिष्ठानत्वमित्यत्र जगत्पदेन कार्यजात-मात्रस्य ग्रहणे मायायाः साधिष्ठानत्वानुपपत्तिः; तस्या अकार्यत्वात्। अस्या अपि मिथ्यात्वात् साधिष्ठानत्वं अवश्यवक्तव्यम्। यदि आरब्धकार्यत्वेन व्याकृतरूपाया मायाया "बहु स्यां प्रजायेये"ति ब्रह्मणो जन्मवत्त्वमङ्गीकार्यम्, तथा सति कार्यत्वेन तथाविधमायाया अपि अध्यासविषयतया ब्रह्माधिष्ठानकत्वं सिद्धमिति विभाव्यते, तदाऽपि ब्रह्मणो मायाधिष्ठानत्वं तत्परिणामरूपमृदाद्यधिष्ठानत्वं चेत्युभयाधि-ष्ठानत्वकल्पनापेक्षया उपादानभूतमायाधिष्ठानत्वकल्पनैवोचिता; लाघवात्। उपादानाधिष्ठानत्वे उपादेयाधिष्ठानत्वस्य सुतरां सिद्धत्वादित्यतः कल्पान्तरेण तदेवाङ्गीकरोतीति—जगदाकारेणेतिग्रन्थस्यावतरणं दत्तम्,

**मायाधिष्ठानत्वं वा। एतादृशमेवोपादानत्वमभिप्रेत्य "इदं सर्वं यदयमात्मा" "सच्च त्यच्चाभवत्," "बहु स्यां प्रजायेय"**

तत्र जगत्पदेन कार्यजातविवक्षणेऽपि मायाया अकार्याया अग्रहणेऽपि च प्रकृतलक्षणदोषाभावः। नहि अत्र लक्षणवाक्ये ब्रह्मैव जगत्कारणत्वेन ब्रह्माधिष्ठानकत्वेन ब्रह्मव्यतिरिक्तमपि लक्षणीयम्, येनाविद्यायां ब्रह्माधिष्ठानकत्वमवश्यं वक्तव्यं स्यात्। "यतो वा इमानि भूतानि जायन्ते" इत्यत्र हि इमानि भूतानीति पदद्वयसामानाधिकरण्यात् अविद्यातिरिक्तविवक्षणमेवेति लघुचन्द्रिकाद्यनुसारेण पूर्वमेव निरूपितम्। नहि ब्रह्म स्वरूपेण कार्यम्, किन्तु प्रपञ्चरूपेण; एवमविद्याऽपि कार्यरूपेण कार्या, नतु स्वरूपेणेति आरब्ध-कार्याया अपि कारणावस्थायाः तस्या अकार्यत्वात् तत्कार्यत्वग्रन्थोऽप्यप्रामाणिक एव। नहि कार्यकारणयोरस्माभिरत्यन्ताभेदः, किन्तु तादात्म्यमेव। यथा चात्यन्ताभेदेऽपि कार्यकारणयोः कारणधर्माणामेव कार्ये भानम्, नतु कार्य-धर्माणां कारणे, तथाऽन्यत्र विस्तृतम्। यथा हि उपादानाधिष्ठानत्वे उपादेया-धिष्ठानत्वं सुतरां सिद्ध्यति, एवं जगत्तादात्म्याध्यासाधिष्ठानत्वेनापि तदुपादा-नाधिष्ठानत्वमपि सिद्ध्यत्येव। नहि जगन्मिथ्यात्वं तदुपादानमायासत्यत्वे उपपद्यते। रज्जुसर्पादिस्थले हि सर्पादिकमिव तदुपादानं तूलाज्ञानमपि मिथ्यैव दृष्टमित्यन्यत्र विस्तरः॥

ननु एतादृशं जगदुपादानत्वं ब्रह्मस्वरूपलक्षणं तत्तटस्थलक्षणं वा न भवति। माया हि ईश्वरशक्तिविशेष इति तस्याःसत्यायाः परिणामभूतस्य जगतोऽपि सत्यत्वात् निर्गुणब्रह्मलक्षणत्वायोगात्। मायाधिष्ठानत्वं हि ब्रह्मणो मायाशरीरकत्वमेवेति नाद्वैतसिद्धिरित्यत आह—**एतादृशमिति॥**

मायाधिष्ठानत्वं हि कल्पितमायातादात्म्यवत्त्वमेव, नतु मायाशरीरकत्वम्; नहि तच्छरीरके तदधिष्ठानत्वेन व्यवहारः कुत्रापि विद्यते। अत एवेदं सर्वं यदयमात्मेति प्रपञ्चस्यात्मतादात्म्यमाम्नायमानमुपपद्यते। इदं हि तादात्म्यं न मायाकार्यत्वमात्रप्रयुक्तम्, नहि मायाकार्यं मायाशरीरकपरमात्मतादात्म्यमर्हति। "बहु स्यां प्रजायेये"त्यादीनां त्वस्मन्मत एवोपपत्तिः। अधिकमस्मदीयब्रह्मसूत्र-

इत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोः तादात्म्यव्यपदेशः। घटः सन् घटो भाति घट इष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात् ।

भाष्यभूमिकायां द्रष्टव्यम् । ब्रह्मविद्याभरणेऽप्ययमर्थः सविस्तरमुपपादितः समन्वयाधिकरणे । तथाच निर्गुणब्रह्मस्वरूपतटस्थलक्षणत्वमस्योपपन्नमेवेति भावः ॥ यत्तु श्रीमद्रामानुजाचार्यैस्तदनन्यत्वाधिकरणे—ब्रह्मण एव सूक्ष्मस्थूलचिदचिद्विशिष्टस्य कारणत्वं कार्यत्वं चेति वर्णितम्, तदिदं कार्यकारणयोस्तस्मिते वैलक्षण्यासंभवात् "न विलक्षणत्वादि"ति सांख्यप्रत्यवस्थानासंभवादसांप्रतम्—इति मन्तव्यम् । अधिकं तु भूमिकातोऽवगन्तव्यम् ।

न केवलं श्रौतस्तादात्म्यव्यपदेशोऽत्र प्रमाणम्, किन्तु सन् घट इत्यादिलौकिकव्यपदेशोऽपीत्याह—घटस्सन्निति ॥

घटस्सन् इत्यत्र हि न सत्ताजातिर्भासते, अभावस्सन् इत्याद्येकाकारप्रतीत्युपपादनं हि सत्तामादाय न भवति। नह्यभावेऽपि सत्ताजातिरस्ति। अनुगतैकाकारप्रतीतिर्हि सर्वात्मनाऽनुगतम् एकं धर्ममादायैव भवति। तच्चैकं सद्रूपं ब्रह्मैव। सद्रूपस्य च ब्रह्मणो घटेन साकमभेदस्तादात्म्याध्यासनिबन्धन एवेति सद्रूपे ब्रह्मणि घटस्याध्यासोऽपेक्षितः। अध्यासाधिष्ठानत्वं हि ब्रह्मणोऽज्ञानविषयत्वेनैव। न हि शुक्तितत्त्वसाक्षात्कारेण शुक्तित्वाज्ञानविनाशे रजतभ्रमो भवति। तथाच घटाद्याकारेण परिणममानाविद्याविषयत्वं ब्रह्मलक्षणमिति युक्तमेवेति; एतत् सर्वं मनसि निधायाह—सच्चिदानन्दरूपब्रह्मैक्याध्यासादिति ॥

सद्रूपेण ज्ञातब्रह्मतादात्म्यात् सन् घट इति प्रतीतिः। चिद्रूपेण ज्ञातब्रह्मतादात्म्यात् भातीति, आनन्दरूपेण ज्ञातब्रह्मतादात्म्यात् घट इष्ट इति प्रतीतिरिति भावः ॥

ननु सद्रूपस्य चिदानन्दादिरूपस्य च ब्रह्मण एकत्वात् घटादेरिव दुःखस्यापीष्टत्वेन प्रतीत्यापत्तिरिति शङ्कते—नन्विति। आपत्तिरिति ॥ यद्यपि "विपदस्सन्तु नः शश्वत् तत्र तत्र जगद्गुरो" इति भगवद्दर्शनव्याप्यतया दुःख-

ननु आनन्दात्मकचिदध्यासात् घटादेरिष्टत्वव्यवहारे दुःखस्यापि तत्राध्यासात् तत्रापीष्टत्वव्यवहारापत्तिरिति चेत्, न; आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोप इत्यभ्युपगमेन दुःखादौ सच्चिदंशाध्यासेऽपि आनन्दांशाध्या-

स्यापीष्टत्वेन प्रतीतिरस्ति; तथापि दुःखत्वेन तदिष्टत्वव्यपदेशः कुत्रापि नास्तीत्यापादनमिदं सङ्गतमिति भावः ॥

ननु सन् घट इति प्रतीतिसमये सत्पदेन चिदानन्दरूपस्यापि ब्रह्मणो विवक्षाऽस्ति वा, नवा ? आद्ये भातीत्यादावपि सदादिरूपस्य भानावश्यकत्वेन सच्चिदानन्दात्मकब्रह्मप्रतीतौ प्रपञ्चाध्यासस्यैवासंभवः । द्वितीये सद्रूपेण ज्ञातत्वात् सदंशमात्रस्यानन्दरूपेण ज्ञातत्वात् तन्मात्रस्य च भानमिति दुःखादीना-मप्यध्यासकाले आनन्दरूपेण ब्रह्मणो ज्ञाततायामिव तत्रेष्टत्वव्यवहारापत्त्या सद्रूपेण ज्ञाततायामपि तदापत्तिर्न संभवति । न च—सद्रूपेण ज्ञातमिवानन्दरूपेण ज्ञातमपि दुःखादेरधिष्ठानं भवितुं योग्यमेवेति—वाच्यम्; नह्ययं नियमः संभवति, यत् एकरूपेण ज्ञातमिव रूपान्तरेण ज्ञातमप्यधिष्ठानं भवतीति; अन्यथा गुरुत्वादीनामपि चिद्रूपेण ज्ञातब्रह्माधिष्ठानकत्वापत्त्या गुरुत्वं भातीति व्यवहार-प्रसङ्गात् । अपरोक्षाणामेव भातीति व्यवहारः, परोक्षाणां सदित्येवानुभव इत्यादि बिन्दुटीकादिषु व्यक्तम् । तत्र यदि गुरुत्वे भातीति व्यवहाराभावात् चिद्रूपेण ज्ञातं चैतन्यं नाधिष्ठानम्, तर्हि प्रकृतेऽपि आनन्दरूपेण ज्ञातब्रह्मणो दुःखाद्य-धिष्ठानत्वं दुःखमिष्टमिति प्रतीत्यभावात् न भवतीति नोक्तापत्तिरित्याह—आरोपे सतीति ॥

आरोपे सति दुःखादिनिष्ठेष्टतादात्म्यरूपाध्यासे सति निमित्तानु-सरणम् आनन्दत्वरूपेण ज्ञातब्रह्मचैतन्याधिष्ठानत्वानुसरणम् । न तु निमित्त-मस्तीति न तु यथाकथंचिन्निमित्तमस्तीति ॥

ननु—सन् घट इत्यादौ सत्तातादात्म्याध्यासनिबन्धन एव न सत्तादात्म्यानु-भवः । न हि घटो रूपवान् पटो रूपवान् इति एकाकारा प्रतीतिरेकमेव रूपमव-

साभावात् । जगति नामरूपांशद्वयव्यवहारस्तु अविद्यापरिणामात्मकनामरूपसम्बन्धात् । तदुक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥" इति ।

गाद्दति, नवा घटशब्देनैकेनैव सर्वस्यापि घटस्य व्यपदेशः । न हि ब्रह्मतादात्म्येन तदनुभवः, किन्तु स्वरूपेणैवेति तत्सामान्यादितरेषु तथात्वमिति न्यायेन स्वगतेनैव सत्त्वेन घटादिसत्त्वव्यवहारोऽपीत्यत आह—जगति नामरूपेति ॥

यथाहि घटविनाशे रूपस्यापि विनाशः, घटसत्त्वेतु तदनुभव इति घटाव्यभिचारात् रूपादिकं घटधर्मः नैवं घटविनाशे सत्ताविनाश इति घटव्यभिचारात् न सत्त्वं घटधर्मः, किन्तु ब्रह्मधर्म एवेत्यन्यधर्मस्यान्यत्र भानमन्यतादात्म्याध्यासनिबन्धनत्वान्न विरोध इति भावः ; सत्त्वं घटादिव्यभिचारीत्ययमर्थः नासतो विद्यते भाव इति श्लोके गीताभाष्ये व्यक्तमिति तत एवावगन्तव्यम् । अस्ति सत् भाति चैतन्यं प्रियम् आनन्दः रूपम् घटाद्यर्थप्रपञ्चगतावस्थाविशेषः । नाम नामधेयम् । ब्रह्मरूपम् ब्रह्मासाधारणस्वरूपम् । जगद्रूपम् जगदसाधारणस्वरूपम् । ब्रह्मणि नामादिसम्बन्धः प्रपञ्चे सदादिभावश्च परस्पराध्यासादिति भावः ।

एतावता प्रपञ्चेन सत्यज्ञानादिरूपं ब्रह्म जगज्जन्मादिकर्तृजगदध्यासाधिष्ठानं वा जगदाकारेण परिणममानमायाधिष्ठानं वेति निरूपितम् । तत्र "यतो वा इमानि भूतानि जायन्ते" इति पञ्चम्यन्तयच्छब्देन ब्रह्मण उपादानकारणत्वमात्रं श्रुतम्, नतु कर्तृत्वमपि, तथाऽपि तस्यैव कर्तृत्वमपीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाद्युपपत्त्यर्थं यदङ्गीक्रियते, तदिदं न सङ्गतम् ; स्वतन्त्रः कर्तेति भगवतो ब्रह्मणो यदि स्वतन्त्रकर्तृत्वम्, तर्हि वैषम्यनैर्घृण्यादिप्रसङ्गः । न चान्यत् ईश्वरस्य प्रथमसृष्टावुपकारकं निमित्तं विद्यते । एतेन जगदुपादानत्वमपि तस्य परास्तम् ; विना कर्तारम् उपादानमात्रेण कार्यजनने प्रधानकारणतावादस्यैव स्वीकारापत्त्याऽऽनुमानिकाधिकरणादिविरोधोऽपरिहार्यः । तथाच जगदध्यासाधिष्ठानत्वमपि ब्रह्मणो बाधितमेवेत्याशङ्कायाम्—ईश्वरः स्वतन्त्रकर्तैव । स्वतन्त्रोऽपि सृज्यमान-

**अथ जगतो जन्मक्रमो निरूप्यते। तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतोऽपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन्नामरूपात्मकं निखिलप्रपञ्चं प्रथमं बुद्धौ आकलय्य इदं करिष्यामीति सङ्कल्पयति ; "तदैक्षत बहु स्यां प्रजायेय" "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिश्रुतेः ।**

प्राणिकर्मानुसारेण सुखदुःखादीन् जीवस्य संपादयति। तदुक्तम्—"पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन"—इति। "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति" इति वैयासिकसूत्रमप्यत्र प्रमाणम्। तथाच तस्यैव कर्तृत्वमुपादानत्वं चोरीकुर्मः। तस्योपादानत्वं न परिणामित्वेन, किन्तु विवर्तमानत्वेनेत्यन्यत्र विस्तरः। तथाच जगज्जन्मादिकर्तृत्वं जगदध्यासाधिष्ठानत्वं जगदाकारेण परिणममानमायाधिष्ठानत्वं सर्वमत्रोपपद्यते इति प्रतिपादनपूर्वकं श्रुतिसिद्धं जन्मक्रमं निरूपयितुमुपक्रमते—**अथेति** ॥

ननु सृष्टिवाक्यानां सर्वेषामप्यद्वितीयब्रह्मतटस्थलक्षणसमर्पकत्वं न संभवति; नह्येकरूपेण सृष्टिवाक्यानि समाम्नायन्ते। क्वचिदाकाशादिका सृष्टिः, क्वचित् मन आदिका, क्वचित्तेजआदिका, क्वचित्सर्वमसृजतेति विना क्रमं यौगपद्येन, सांख्यादिमते तु एकरूपैव सृष्टिरभ्युपगम्यते प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् तन्मात्राणि, ततो दशेन्द्रियाणि मनः व्यक्तपञ्चभूतानि चेति। अतः सांख्यादिमतमेव युक्तं नाद्वैतमतमित्यत आह—**जन्मक्रम इति** ॥

न हि वयमक्रमामनियतक्रमां वा सृष्टिमङ्गीकुर्महे, आकाशादिका भूतभौतिकसृष्टिः, करणानामिन्द्रियाणामभौतिकत्वे मनआदिका करणसृष्टिः। न हि युगपत्सर्वेषामपि सृष्टिः, "तत्तेजोऽसृजत" इति च्छान्दोग्यवाक्ये हि क्रमो नाम्नात इति आकाशं वायुं च सृष्ट्वेति योजनयाऽविरोधः। अभौतिकानां भौतिकानां च स्वतन्त्रं क्रमान्तरमेवेति मन्तव्यमित्याशयाकरे व्यक्तमिति भूतभौतिकसृष्टिक्रमं निरूपयति—**तत्र सर्गाद्यकाले इति** ।

तत आकाशादीनि पञ्चभूतानि अपञ्चीकृतानि तन्मात्रपद-

आकाशादीनि पञ्चभूतानि अपञ्चीकृतानि तन्मात्रपदवाच्यानि उत्पद्यन्ते इति। यातु मनआदिका सृष्टिः "तन्मनोऽसृजत" त्यादिका, सेन्द्रियसृष्टि-क्रमविषया, न तु भौतिकसृष्टिक्रमस्य विरोधिनी। तदुक्तमाकरेऽन्तरा विज्ञानाधि-करणे—"अथ त्वभौतिकानि करणानि; तथाऽपि भूतोत्पत्तिक्रमो न विशिष्यते, प्रथमं करणान्युत्पद्यन्ते, चरमं भूतानि, प्रथमं वा भूतान्युत्पद्यन्ते, चरमं वा करणानीति। आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च, न तत्रोत्पत्तिक्रम उच्यते। तथाऽन्यत्रापि पृथगेव भूतक्रमात् करणक्रम आम्नायते "प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत् तदात्मानमैक्षत तद्वाच-मसृजत" ति।

यत्तु अत्र मूले भौतिकत्वमिन्द्रियादीनां निरूप्यते, तत्पक्षान्तरानुसारेण। तदप्युक्तमाकरे—यदि तावद्भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्या-मेवैषामुत्पत्तिप्रलयौ भवत इति नतयोः क्रमान्तरम्। भवति च भौतिकत्वे लिङ्गं करणानाम्—"अन्नमयं हि सोम्य मन" इत्यादिकम् इति॥

यत्तु इदं सर्वमसृजतेति, तदपि आकाशादितो भवतामपि वाय्वादीनां ब्रह्मकार्यत्वाभिप्रायेण। वाय्वादीनामपि ब्रह्मकार्यत्वं "तदभिध्यानादेव तु तल्लिङ्गात् स" इति सूत्रभाष्ये व्यक्तम्॥

सांख्यमतं हि करणाभौतिकत्वपक्षावलम्ब्येव, न तु तद् भौतिकत्व-पक्षावलम्बि। एवंच—"अभिमानादहंकारस्तस्मात् द्विविधः प्रवर्तते सर्गः। एकादशश्च गणकः तन्मात्रपञ्चक—इति सांख्यकारिकाऽपि न शङ्करभगवत्पादमत-विरोधिनी। परिभाषाकारास्तु करणभौतिकत्वमतमेवात्र समाद्रियन्ते इत्यन्य-देतत्। वेदान्तसारादिग्रन्थेषु हि करणभौतिकत्वपक्ष एव प्रपञ्चित इति तदनुसारिणीयं परिभाषेति न दोषः।

एवं सांख्यानां पञ्चविंशतितत्त्वानि योगिनां षड्विंशतितत्त्वानीत्यादि-सिद्धान्तः सर्वोऽपि प्रकृत्यादिसत्यत्वाभिप्रायेण, अस्माकं तु ब्रह्मैव सत्यमित्येकमेव पारमार्थिकतत्त्वम्, व्यावहारिकतत्त्वान्यस्माकमपि योगिनामिव षड्विंशति-तत्त्वान्येव। सर्वथा तु सृष्टिक्रमोऽयं योगिमतानुसारेण कल्प्यते चेदपि नास्माकं

काऽपि हानिः; स्रष्ट्रादीनां सर्वेषामपि व्यावहारिकत्वात्। इयान् विशेषः—यत् केवला प्रकृतिः परिणामिकारणम्, ईश्वरस्तु निमित्तकारणमिति योगिमतम्, अद्वैतमतं तु ब्रह्मैव परिणामिकारणं निमित्तकारणं च व्यवहारदृष्ट्या। सम्मतो हि ब्रह्मपरिणामितावादोऽपीति भोक्त्रापत्तिसूत्रे व्यक्तम्। उक्तं हि पूर्वं भाष्याद्यनुसारेण करणभौतिकत्वाभौतिकत्वपक्षावप्यस्माकं संमताविति॥

यत्तु ब्रह्मणोऽभिन्ननिमित्तविवर्त्तोपादानत्वं ब्रह्मेतरमिथ्यात्वादिकं जीवब्रह्माभेदादिकं चाद्वैतिनामभिमतम्, तत् पारमार्थिकमुख्यतत्त्वव्यवस्थापनार्थम्, न तु योग्यादिमतस्य व्यवहारतोऽप्यशुद्धत्वं प्रतिपादयितुम्॥ यथा चारम्भवादोऽपि विवर्तवादभूमिकात्वेनाद्वैतिनां न विरुद्धस्तथा संक्षेपशारीरकाद्वैतब्रह्मसिद्ध्योर्व्यक्तम्।

अयमेवाद्वैतमतस्य महानतिशयः—यत् सर्वाणि मतानि संस्थाप्यन्ते, स्वमतं च परिपाल्यते। श्रीमद्रामानुजादयस्तु अद्वैतमतमसत्यं स्थापयन्तः स्वमतं स्थापयन्तीति कीदृशीयं संमता बुद्धिरद्वैताचार्याणाम्! कीदृशी च विषमताऽन्येषामाचार्याणामिति सर्व एव विजानन्तु। प्रथमादिसोपानक्रमेण सर्वाण्यपि दर्शनान्यद्वैतिनामपेक्षितान्येव। तत्र कस्य दर्शनस्य प्रथमसोपानत्वम्। कस्य च द्वितीयसोपानत्वमिति प्रश्नः सम्यगेव समुदतारि ब्रह्मानन्दसरस्वतीभिर्बिन्दुटीकायां प्रथमश्लोकविवरण इति तत एव द्रष्टव्यम्॥

अत्र च सृष्टिक्रमे कर्मापेक्षमेव स्रष्टृत्वम् ईश्वरस्यापि, न स्वतन्त्रमिति निरूपणेन तादृशसगुणेश्वरभावेनापि नैकान्तिको मुक्तिर्भवेत्, किन्तु ब्रह्मभावेनैवेति सूचितम्। सर्वथा तु मुक्तभावस्यात्यन्तमेव प्रत्यासत्तिस्सगुणसारूप्यादौ वर्तते इति सगुणोपासनमप्यत्यन्तमस्माकमपेक्षितम्। तदुक्तम्—"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्—" इति। अत्रापरिमितानेकशक्तिविशेषविशिष्टमायासाहित्यवर्णनेन प्रपञ्चे कर्मवैचित्र्येण सुखित्वादिवैचित्र्यमिव रूपवैचित्र्यमपि मायाशक्तिवैचित्र्येणैव न ब्रह्मवैचित्र्येणेति निरूपणात् यतो वेत्यादौ, पञ्चम्यवगतमुपादानत्वं विवर्तोपादानत्वमेव न परिणाम्युपादानत्वम्, इति सूचितम्॥

**इदं करिष्यामीत्यस्य** इदं भविष्यामीत्यर्थः। **एतेन**—इदं करिष्यामीति संकल्पस्य कुलालादीनामिव निमित्तकारणत्वेऽप्युपपत्त्या न ब्रह्मण

प्रतिपाद्यानि उत्पद्यन्ते। तत्र आकाशस्य शब्दो गुणः, वायोस्तु शब्दस्पर्शौ, तेजसस्तु शब्दस्पर्शरूपाणि, अपान्तु शब्दस्पर्शरूपरसाः, पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः। न तु शब्दस्य आकाश-

उपादानत्वमपीति शङ्काऽपि—**परास्ता**। एवं च इदं करिष्यामीति ब्रह्मण-स्संकल्पसत्त्वेऽपि बहु स्यां प्रजायेयेति श्रुत्यपष्टम्भोऽप्युपपन्नः। न हि कुलालस्येदं करिष्यामि इति संकल्पः घटः स्यामित्याकारः॥

अत्र सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः—शब्दतन्मात्रात् आकाशं शब्दगुणम् शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्र-सहिताद्रूपतन्मात्रात् तेजः शब्दस्पर्शरूपगुणम्, शब्दस्पर्शरूपतन्मात्रसहिताद्र-सतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहितात् गन्ध-तन्मात्रात् पृथिवी शब्दस्पर्शरूपरसगन्धगुणा जायते इति "पञ्चभ्यः पञ्च भूतानी"ति कारिकांशं व्याचक्षते॥

इदं हि मतं करणाभौतिकत्वपक्ष एवोपपद्यते, नतु करणभौतिकत्वपक्षे। करणभौतिकत्वपक्षे त्वपञ्चीकृतभूतेभ्यः सूक्ष्मशरीराणां स्थूलभूतानामुभयेषामप्यु-त्पत्तिवर्णनार्थं सूक्ष्मभूतेषु सात्त्विकराजसतामसांशाः कल्पनीयाः, ते चांशा द्रव्य-स्यैव भवन्ति, नतु गुणमात्रस्य। अतः करणभौतिकत्वमतानुसारेण वेदान्तसारकृत इव परिभाषाकारा अपि शब्दमात्रगुणमाकाशं शब्दस्पर्शगुणको वायुः शब्द-स्पर्शरूपगुणको वह्निः शब्दस्पर्शरूपरसगुणका आपः शब्दस्पर्शरूपरसगन्धगुणका पृथिवी इति सगुणद्रव्याण्येव सूक्ष्मभूतानि इति मन्वाना आहुः—

**तत्राकाशस्य शब्दो गुण इति॥**

सूक्ष्माकाशस्य तन्मात्रपदवाच्यस्य शब्दमात्रं गुण इत्यर्थः। **वायोः** आकाशकार्यस्य वायोः **शब्दस्पर्शौ** शब्दः कारणगुणः स्पर्शः स्वासाधारणगुणः। एवं तेजसः शब्दस्पर्शरूपाणीत्यादावपि व्याख्येयम्॥

**ननु** नैयायिकाः शब्द आकाशमात्रस्य गुण इति वर्णयन्ति; एवंच कथमिद-मुपपद्यते वायादीनामपि शब्दो गुण इत्यत आह—**ननु शब्दस्येति**॥

नैयायिका हि नह्याकाशात् वायोरुत्पत्तिमभिप्रयन्तीति नाकाशगुणस्य शब्दस्य

मात्रगुणत्वम्, वाय्वादावपि तदुपलम्भात्। न चासौ भ्रमः; बाधकाभावात्।

इमानि भूतानि त्रिगुणमायाकार्याणि। अतस्त्रिगुणात्मकानि। गुणाः सत्त्वरजस्तमांसि।

वाय्वादिक्रमेण तेजआदिषु तेषामङ्गीकारो युक्तः, अस्माकं तु आकाशाद्वायुरिति श्रुतिप्रमाणपरतन्त्राणां न श्रुत्यपरतन्त्रनैयायिकमतादरणं युक्तमिति भावः॥

न केवलं श्रुतिविरोधो नैयायिकानाम्, किन्तु प्रत्यक्षविरोधोऽपीत्याह— वाय्वादाविति॥ बाधकाभावादिति॥ श्रुत्याद्युक्तस्याप्य प्रत्यक्षस्य नैयायिकस्वकपोलकल्पितनियमानुसारिकृत्रिमानुभावान्तरेण बाधायोगादिति भावः॥

तदुक्तं पञ्चदश्याम्—

"शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा इमे।
एकद्वित्रिचतुःपञ्चगुणा व्योमादिषु क्रमात्।
प्रतिध्वनिर्वियच्छब्दः वायौ वीसीतिशब्दनम्।
अनुष्णाशीतसंस्पर्शो वह्नौ भुगु भुगु ध्वनिः।
उष्णस्पर्शः प्रभारूपं जले बुलु बुलु ध्वनिः।
शीतस्पर्शः शुक्लरूपं रसो माधुर्यमीरितम्॥
भूमौ कड़कड़ा शब्दः काठिन्यं स्पर्श इष्यते
नीलादिकं चित्ररूपं मधुराम्लादिको रसः॥"—इति॥

**ननु**—करणानां भौतिकत्वपक्षोऽभौतिकत्वपक्षश्चाद्वैतिनां यद्यभिमतस्तर्हि कुतो वायं करणभौतिकत्वपक्ष एवात्राद्रियते, नच—"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमि"ति वचनानुसारेण सूक्ष्मशरीरस्वरूपोपपादानं हि पञ्चप्राणानां मनोबुद्ध्योर्दशेन्द्रियाणां च सूक्ष्मभूतकार्यत्वोपपादन एव संभवति नान्यथेति तत्पक्षादरणमिति—वाच्यम्; नहि भिन्नभिन्नस्वभावानां भिन्नभिन्नविषयाणां भिन्नभिन्नप्रयोजनानां च प्राणमनोबुद्धीन्द्रियाणाम् एकजातीयभूतोत्थत्वसंभवः इति—**चेत्, न**;

एतैश्च सत्त्वगुणोपेतैर्व्यस्तैः पृथक् पृथक् क्रमेण पञ्चभूतैः श्रोत्रत्वक्चक्षूरसनघ्राणानि पञ्चज्ञानेन्द्रियाणि जायन्ते। एतेभ्यः पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्यो मनोबुद्ध्यहङ्कार-चित्तानि जायन्ते। श्रोत्रादीनां पञ्चानां क्रमेणैव दिग्वातार्क-वरुणाश्विनोऽधिष्ठातृदेवताः। मनआदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुखशङ्कराच्युता अधिष्ठातृदेवताः। एतैरेव रजो-गुणोपेतैः पञ्चभूतैर्यथाक्रमेण वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते। तेषाञ्च क्रमेण वह्नीन्द्रोपेन्द्रमृत्यु-प्रजापतयोऽधिष्ठातृदेवताः। रजोगुणोपेतैः पञ्चभूतैरेव मिलितैः पञ्च वायवः प्राणापानव्यानोदानसमानाख्या जायन्ते। अत्र

पञ्चभूतानां सत्त्वरजस्तमोगुणात्मकानां व्यस्तानां समस्तानां च हि भिन्न-जातीयानेकत्वमविरुद्धमेव। एतेन—अपञ्चीकृतभूतात् पञ्चीकृतभूतोत्पत्तिरपि व्याख्यातेति। सर्वमिदं मनसि निधायाह—**इमानि भूतानीति**॥

कथं पञ्चभूतानां त्रैगुण्यमित्यतः कारणगुणादित्याह—**त्रिगुणमाया-कार्याणीति**॥ मायायास्त्रैगुण्ये प्रमाणं तु तत्कार्याणां पृथिव्यप्तेजआदीनाम-व्यक्तानाम् अजामेकां लोहितशुक्लकृष्णामिति त्रैगुण्याम्नानमेवेत्यादि पूर्वमेव सूचितम्॥ के नाम ते त्रयो गुणाः? इत्यत आह—**गुणास्सत्त्वरजस्त-मांसीति**॥ व्यस्तसत्त्वप्रधानपञ्चभूतकार्याणि श्रोत्रादीन्द्रियाणि। सत्त्वगुणकार्य-त्वात्प्रकाशस्य ज्ञानेन्द्रियाणां सत्त्वगुणकार्यत्वमुपपन्नमिति भावः। समस्तपञ्च-भूतकार्याणि मनोबुद्ध्यहंकारचित्तानीत्याह—**एतेभ्य एवेति**॥ ज्ञानसामान्य-कारणत्वान्मनसस्समस्तभूतकार्यत्वमुपपन्नम्॥ सर्वेषामपि जडानां तत्तदधिष्ठानोप-हितानामेव कार्योपयोगित्वात् श्रोत्रादीनामपि शब्दादिग्रहणोपयोगार्थं तत्त-दधिष्ठानोपहितत्वमपेक्षितमिति क्रमेण सर्वेषामपि ज्ञानेन्द्रियाणां मनसश्च चतुर्विधस्याधिष्ठानदेवता आह—**दिग्वातेत्यादिना**॥

प्राग्गमनवान् वायुः प्राणो नासादिस्थानवर्त्ती । अवाग्गमनवानपानः पाय्वादिस्थानवर्त्ती । विष्वग्गमनवान् व्यानोऽखिलशरीरवर्त्ती । ऊर्द्ध्वगमनवान् उत्क्रमणवायुरुदानः कण्ठस्थानवर्त्ती । अशितपीतान्नादिसमीकरणः समानो नाभिस्थानवर्त्ती ।

एतैश्च तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतभूतानि जायन्ते ; "तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति श्रुतेः पञ्चीकरणोपलक्षणार्थत्वात् ।

क्रियाशक्तेः रजोगुणकार्यत्वात् रजःप्रधानव्यस्तपञ्चभूतकार्यत्वं कर्मेन्द्रियाणाम्, तादृशसमस्तपञ्चभूतकार्यत्वं प्राणवायोरिति तत्तदधिष्ठानदेवतादिनिरूपणेनोपपादयति—एतैरेवेति ॥ एकस्यापि प्राणस्य वृत्तिभेदात् पञ्चधा व्यपदेशः प्रणोऽपानो व्यान उदानस्समान इति । तदुक्तम्—"प्राणो वृत्तिभेदात्स पञ्चधा ।" "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" "बहुवृत्तित्वमात्रेण मनः प्राणस्य निदर्शन"मिति च क्रमेण पञ्चदश्यां ब्रह्मसूत्रचतुरध्याय्यां भाष्ये च ॥

नासादीति ॥ आदिपदेन हृदयादिपरिग्रहः । एतेन हृदि प्राण इत्यपि न विरुद्धम् । अशितपीतान्नादीति । तदुक्तं प्रश्नोपनिषदि—"मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयती"ति ॥

तमःप्रधानपञ्चभूतकार्यत्वं पञ्चीकृतानां भूतानामित्याह—एतैश्चेति ॥ ननु पञ्चीकरणपक्षे तासां त्रिवृतं त्रिवृतमिति त्रिवृत्करणश्रुतिर्बाधिता स्यादित्यत आह—तासामिति ॥ तेजआदिसृष्टेरेव छान्दोग्य आम्नानात् तदनुसारिणेयं श्रुतिः । तथाच तस्याः तेजआदिकाया अपि पूर्वोक्तप्रकारेणाकाशादितायामिव तात्पर्यात् तेजआदित्वं यथाऽऽकाशादित्वस्योपलक्षणमेवं त्रिवृत्करणमपि पञ्चीकरणस्योपलक्षणमिति भावः ॥

पञ्चीकरणप्रकारस्त्वित्यमिति । पञ्चापि भूतानि प्रत्येकमष्टभागानि

पञ्चीकरणप्रकारश्च इत्थम्। आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्द्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्षु भूतेषु संयोजनम्। एवं वायुं द्विधा विभज्य तयोरेकं भागं चतुर्धा विभज्य तेषां चतुर्णामंशानामाकाशादिषु संयोजनम्। एवं तेजोऽप्पृथिव्यंशानामपि। तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकम्, अर्द्धान्तरञ्च चतुर्विधभूतमयमिति। पृथिव्यादिषु स्वांशाधिक्यात् पृथिव्यादिव्यवहारः। तदुक्तम्— "वैशेष्यात्तु तद्वादस्तद्वादः" इति।

कृत्वा एकैकस्मिन् स्थाने स्वकीयं भागचतुष्टयं स्थापयित्वा, अपरस्य भागचतुष्टयस्यावशिष्टेषु चतुर्षु भूतेषु योजनेनैकस्मिन् भूते पञ्चानामपि भूतांशानां संपादनात् पञ्चीकरणं संपद्यत इति भावः।

आकाशमादौ द्वेधा विभाज्य तयोरेकं भागं पुनश्चतुर्धा विभज्येत्यादिग्रन्थस्याप्ययमेवाशयः। ननु पञ्चीकरणप्रक्रियया सर्वेषां सर्वभूतात्मकत्वे पृथिव्यादिव्यवहारः किन्निबन्धन इत्यत आह—पृथिव्यादिष्विति॥

उक्तार्थे प्रमाणमाह—वैशेष्यात्तु तद्वादस्तद्वाद इति॥ ब्रह्ममीमांसाद्वितीयाध्यायस्यान्तिमं सूत्रमिदम्। अत एव तद्वादस्तद्वाद इति तद्वादपदावृत्तिः। अनेन सूत्रेण सर्वेषां पृथिव्यादीनां सर्वभूतात्मकत्वेऽपि पृथिव्याद्यंशाधिक्यात् भूतविशेषाणां पृथिव्यादिशब्दैरेव व्यवहारः, न तु सर्वेषां भूतानां सर्वैरपि पृथिव्यादिशब्दैर्व्यवहार इति निरूपितमिति प्रकृतार्थोपष्टम्भकत्वमस्य सूत्रस्योपपन्नमिति भावः।

एतावता प्रपञ्चेनापञ्चीकृतभूतकार्याण्येवेन्द्रियादीनि पञ्चीकृतभूतानि चेति यदुक्तं तच्चाप्यात्मस्वरूपविज्ञानार्थमेव, न तु स्वतन्त्रप्रयोजनान्तरार्थतया। नह्यात्मस्वरूपवत् प्रपञ्चोऽपि सत्यः। तथाच सृष्ट्याम्नानमिदमधिकारिविशेषमुद्दिश्य तत्तदुच्चानुगुणमन्नमयादिरूपोपदेशार्थमेव। तैत्तिरीयोपनिषदि—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः

पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुष" इति सृष्ट्याम्नान-पुरस्सरमेव अन्नमयस्वरूपमुपस्थापितम् । यत्तु मनइन्द्रियादिसृष्ट्याम्नानं श्रुत्यन्तरेषु, तदपि प्राणमयमनोमयविज्ञानमयस्वरूपोपस्थापकतयाऽवाप्यनुसन्धेयम् । शरीरान्तर्यामिणमात्मानमुपदिदिक्षु शास्त्रं प्रथमं शरीरमात्मेति निरूपयत् स्थूलारुन्धतीन्यायेन वस्तुसन्तमात्मानमानन्दमयवाक्येन पुच्छब्रह्मवाक्येन वोपदिशतीति खलु शास्त्राचार्यसंप्रदायः । तत्र स्थूलशरीरं पञ्चीकृतभूतकार्यम्, मनोबुद्धीन्द्रियादीनि भूतसूक्ष्मकार्याणि सूक्ष्मशरीराणि । अन्नमयकोशः स्थूलशरीरम्, कर्मेन्द्रिय सहितः प्राणः प्राणमयः, ज्ञानेन्द्रियसहितं मनो मनोमयः, ज्ञानेन्द्रियसहिता बुद्धिर्विज्ञानमय इति प्राणमयमनोमयविज्ञानमयात्मककोशत्रयात्मकं शरीरं सूक्ष्मशरीरमिति वेदान्तसारे व्यक्तम् । तदुक्तं वेदान्तसारे—"एतत्कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते" इति ॥ तथाचापञ्चीकृतभूतकार्याण्येव सूक्ष्मशरीराणि पञ्चीकृतभूतानि चेति फलितम् । तदप्युक्तं वेदान्तसारे—"एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपञ्चीकृतानि चोच्यन्ते । एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते" इति ॥

यत्तु आशुबोधिन्याम्—आकाशादितन्मात्राणां सूक्ष्मस्थूलभेदेन द्विविधं कार्यं दर्शितम् । सूक्ष्मं तावदिन्द्रियादि, स्थूलं तु पञ्चीकृतमाकाशादि । तत्र तन्मात्रविकाराणां सूक्ष्माणां कार्यमाहेति, एतैश्चापञ्चीकृतभूतैर्लिङ्गशरीरं जायते इति ग्रन्थोऽवतारितः, तदिदं चिन्त्योपपत्तिकम् । नह्यन्नमयस्य पञ्चीकृतभूतकार्यत्वमिव प्राणमयादेः प्राणादिकार्यत्वं कस्यापि संमतम् । अत एव न्यायरत्नामणौ—प्राणमयादिशब्दानां प्राणादिपरिच्छिन्नात्मपरत्वमेव, नतु प्राणकार्यात्मपरत्वमित्युक्तम् । आशुबोधिनीसंमतं विवरणं हि पूर्वोक्तवेदान्तसारादिविरुद्धमित्यपि सर्वविदितमेव । नहि भूतसूक्ष्मकार्येन्द्रियादिकस्येवेन्द्रियकार्यस्यापि परलोकयात्रानिर्वाहकत्वं कुत्राप्युक्तम् । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" त्यादिश्रुतयोऽपि प्राणादीनामेव सूक्ष्मशरीरत्वं गमयन्ति । वेदान्तसारेऽपि सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणीति बहुवचनप्रयोगः प्राणाद्यतिरिक्तं तत्कार्यं न सूक्ष्मशरीरमिति गमयति । तथाचापञ्चीकृतभूतकार्याण्येव सूक्ष्मशरीराणीति, अपञ्चीकृतभूतानां तत्कार्याणां च सर्वेषां परमात्मनि समष्टिव्यष्ट्यात्मनाऽभेदाध्यवसायेनैव जीवेश्वरादिविभाग इति, न सृष्ट्याम्नानमिदं प्रपञ्चसत्यतोप-

**एतैश्चापञ्चीकृतभूतैर्लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्ष-**

देशार्थम्, किन्तु अविवेकाध्यासनिबन्धनाभेदनिषेधेन सर्वत्राप्यात्मन्यध्यास इति निरूपणार्थमेव। अत एवा"न्योऽन्तर आत्माऽन्योऽन्तर आत्मे"ति अन्यत्वोपदेशपूर्वकान्तरात्मोपदेश उपपद्यते; अन्यथा केवलात्मोपदेशमात्रार्थत्वेऽन्तर आत्मेत्यनेनैवेष्टसिद्धाऽन्योऽन्य इति विवेकोपदेशोऽयमफलः संपद्येत। तथाच सृष्ट्याम्नानमिदं परम्परया ब्रह्मस्वरूपनिरूपणार्थमेवेति जगत्कारणत्वमिदं ब्रह्मणस्तटस्थलक्षणमेव, न स्वरूपलक्षणमिति सिद्धम्। तथाच जीवहिरण्यगर्भादिव्यवहारः शरीरभेदमात्रेण, वस्तुतस्तु तयोरप्यभेद एव। तदुक्तं वेदान्तसारे— "अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत् अभेद" इति॥ तदिदं सर्वं मनसि निधायाह—**एतैश्चेति**॥

मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपञ्चकादियुक्तं परलोकयात्रानिर्वाहकं मोक्षपर्यन्तस्थायि च लिङ्गशरीरं तैरपञ्चीकृतभूतैर्जायते इति योजना॥

अवयवातिरिक्तोऽप्यवयवी नावयवारब्धः, किन्तु अवयवसामग्रेवारब्धः। नहि नैयायिकमतसंमतमुपादानकारणत्वं समवायित्वनिबन्धनं वेदान्तिनां संमतम्। वेदान्तिनो हि अवयविन्येवावयवा विद्यन्ते तादात्म्येन, नावयवेष्ववयवी; वृक्षे शाखा इत्येवानुभवस्य सार्वत्रिकत्वादिति मन्यन्त इत्यद्वैतब्रह्मसिद्ध्यादौ व्यक्तम्। तथाचेन्द्रियादिसूक्ष्मभूतकार्यारब्धत्वमेव सूक्ष्मशरीरस्येति वादो न युक्त इति भावः॥

**लिङ्गशरीरम्** अप्रत्यक्षम् अनुमानागमादिमात्रगम्यं शरीरम्। **परलोकयात्रानिर्वाहकम्** "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"त्यादिश्रुत्या विभोर्जीवस्य भूतमात्राकार्येन्द्रियादिसाहाय्येनैव जन्मान्तरादिनिर्वाह इति जन्मान्तरानुपपत्त्या स्थूलशरीरातिरिक्तं सूक्ष्मशरीरमूरीकरणीयम्॥

**एतेन**—स्थूलशरीरस्यैवावयवविशेषरूपचक्षुरादिगोलकावच्छेदेन शक्तिविशेषविशिष्टस्य स्वकार्यप्रतिबन्धकदोषाभावविशिष्टस्य रूपादिग्राहकत्वोपपत्त्या न सूक्ष्मशरीराङ्गीकारे प्रयोजनमसाधारणं किमपि विद्यते इति शङ्काऽपि—**परास्ता**;

पर्यन्तस्थायि मनोबुद्धिभ्यामुपेतम् ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकप्राणादिपञ्चकसंयुक्तं जायते। तदुक्तम्—

"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्"॥ इति।

"विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" "तमुत्क्रामन्तमि"त्यादिवाक्यसिद्धपूर्वतनेन्द्रियादिसहितजन्मान्तरादिसिद्धान्तानुपपत्तेः।

ननु मरणानन्तरमपि जन्मान्तरादौ यदि पूर्वतनेन्द्रियादीनामनुवृत्तिस्तर्हि तेषां नित्यत्वमापद्येतेति स्थूलसूक्ष्मादिसर्वविधजगत्कारणत्वं ब्रह्मणः तटस्थलक्षणमिति यदुक्तं तदसङ्गतमित्यत आह—मोक्षपर्यन्तस्थायीति। जन्मान्तरादिस्वीकारस्य प्रारब्धकर्माधीनत्वात् यावत्प्रारब्धकर्मानुवृत्तीन्द्रियादिसत्त्वेऽपि प्रारब्धकर्मणो विनाशानन्तरं तत्त्वज्ञानिनः कर्मान्तराणामपि निवृत्त्या नेन्द्रियादीनां मोक्षकालेऽवस्थाने प्रमाणमस्ति। नहि मुक्तस्य परलोकयात्राविद्यते वहस्येव, येन तन्निर्वाहकं सूक्ष्मशरीरमपि तस्याङ्गीक्रियेत। तदुक्तम्—"अत्रैव समवनीयन्ते" "अत्र ब्रह्म समश्नुते" इति। नच नाशकाभावान्न सूक्ष्मशरीरविनाश इति वाच्यम्; तत्त्वज्ञानिनैवाज्ञानस्येव तत्कार्यस्य सूक्ष्मशरीरस्यापि विनाशात्। तथाच योऽयं दर्शनान्तरेषु मनोनित्यत्वादिव्यपदेशः, स बहुकालावस्थानसादृश्यात् गौण इति, निखिलजगत्कारणत्वस्य तटस्थलक्षणत्वमुपपन्नमिति भावः।

पर्यन्तेति॥ पूर्वक्षणं यावदित्यर्थः॥ मनोबुद्धिभ्यामुपेतमिति॥ अपञ्चीकृतभूतोत्थमिति॥ सात्त्विके राजसैश्चापञ्चीकृतैर्भूतैर्व्यस्तैस्समस्तैश्च संजातं ज्ञानेन्द्रियपञ्चकमनोबुद्धिद्विकात्मकं कर्मेन्द्रियपञ्चकप्राणपञ्चकात्मकं च सूक्ष्मशरीरमिति भावः॥

भोगसाधनमिति। परलोकयात्रानिर्वाहकमित्यस्याप्युपलक्षणम्। स्थूलशरीरं भोगावच्छेदकम्, सूक्ष्मशरीरं तु अनुभवविशेषात्मकभोगसाधनमिति वैषम्यम्। नहि स्थूलशरीरं विना सूक्ष्मशरीरमात्रेण भोगः संभवति। तदुक्तं चित्रदीपे—"स्थूलदेहं विना लिङ्गदेहो न क्वापि दृश्यते।" इति। अतएव गारुडादौ यातनाशरीरादिस्वीकारोपपत्तिरिति सर्वं सुस्थम्॥

तच्च द्विविधम्, परम्, अपरञ्च। परम् हिरण्यगर्भलिङ्गशरीरम्। अपरम् अस्मदादिलिङ्गशरीरम्। तत्र हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वम्, अस्मदादिलिङ्गशरीरञ्च अहङ्कारतत्त्वमित्याख्यायते।

एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्यो भूम्यन्तरिक्षस्वर्गमहर्जनस्तपःसत्यात्मकस्य ऊर्द्ध्वलोकसप्तकस्य, अतलवितलसुतलतलातलरसातलमहातलपातालाख्यस्य अधोलोकसप्तकस्य, ब्रह्माण्डस्य जरायुजाण्डजस्वेदजोद्भिज्जाख्यचतुर्विधस्थूलशरीराणाञ्च उत्पत्तिः। तत्र जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादिशरीराणि। अण्डजानि अण्डेभ्यो जातानि। स्वेदात् जातानि यूकामशकादिशरीराणि। उद्भिज्जानि भूमि-

समष्टिव्यष्टिभेदेन लिङ्गशरीरं विभजते—तच्च द्विविधमिति। परमिति॥ समष्ट्यात्मकमित्यर्थः। ननु—इन्द्रियाण्यभौतिकानीति मते "प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात्तन्मात्राणी"ति क्रमोपपत्तावपि तद्भौतिकत्वपक्षे तादृगक्रमो न संभवतीति चेदिष्टापत्तिः। सृष्ट्यादिवाक्यानां सर्वेषामपि ब्रह्मोपलक्षणार्थत्वेन क्रमविशेषे तात्पर्याभावेन प्रकृतेः पञ्चतन्मात्राणि, ततो महत्तत्वं तदनन्तरमहंतत्त्वम् इति क्रमेणाऽपि ब्रह्मोपलक्षणसंभवात्। यदि तु ईक्षणसङ्कल्पावेवेश्वरसम्बन्धिनौ महदहंतत्त्वे, तदा न काऽप्यनुपपत्तिरिति मन्तव्यम्। एतावता प्रबन्धेन सूक्ष्मशरीरमपञ्चीकृतभूतकार्यं निरूप्येदानीं स्थूलभूतकार्यं स्थूलशरीरादिकमाह—एवं तमोगुणयुक्तेभ्य इति॥

ब्रह्माण्डस्येति। उक्तं हि मनुना—

"तस्मिन्नण्डे स भगवानुषित्वा प्रतिवत्सरम्।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोत् द्विधा॥
ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम्॥"

मुद्दिश्य जातानि वृक्षादिशरीराणि । वृक्षादीनामपि पापफल-भोगायतनत्वेन शरीरत्वम् ।

तत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेत-लिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ च साक्षात्कर्तृ-त्वम्, इतरनिखिलप्रपञ्चोत्पत्तौ च हिरण्यगर्भादिद्वारा। "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतेः। हिरण्यगर्भो नाम मूर्त्ति-त्रयादन्यः प्रथमो जीवः।

इति। **चतुर्विधेति**। "तेषां खल्वेषां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजं उद्भिज्जमि"ति छान्दोग्यश्रुतौ त्रैविध्यकीर्तनं स्वेदजानामण्डजान्तर्भावाभि-प्रायेणेति भाष्ये व्यक्तम्। **जरायुजानि** जीवजानि। **वृक्षादीति**॥

ननु—वृक्षादीनामपि सजीवत्वमित्यत्र किं प्रमाणमिति चेत्, मनुस्मृतौ "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्युक्तत्वात् पापफलभोगावच्छेदकत्वेन वृक्षादीनामपि जीवशरीरत्वमवगम्यत इति न दोष इति शास्त्राचार्यादि-संप्रदायः। तमिमं मनसि निधायाह—**वृक्षादीनामपीति**॥

**ननु**—जगत्कारणत्वं ब्रह्मणस्तटस्थलक्षणमिति न युक्तम्; तत्र जगत्पदेन ब्रह्मव्यतिरिक्तस्य सर्वस्य विवक्षणेऽनाद्यविद्यानिरूपितकारणत्वस्यासिद्ध्याऽसंभवः, ब्रह्मव्यतिरिक्तानादिभिन्नसर्वकारणत्वस्य विवक्षणे तु इदानीन्तनघटादिकर्तृत्वस्य कुलालादाविव सत्त्वेन ब्रह्मण्यसंभवः, यत्किञ्चिद्धिरण्यगर्भशरीरादिमात्र-कारणत्वस्य विवक्षणे तु तस्य परोक्षत्वेन "यतो वा इमानि भूतानि" इति इदं पदनिर्देशानुपपत्तिरित्याशङ्क्याह—**तत्रेति**॥

तथाचोक्तप्रकारेण निखिलकार्यप्रपञ्चनिरूपितकारणत्वस्य ब्रह्मणि संभवात् लक्षणसमन्वयः संभवतीति भावः। इदानीन्तनघटादिकर्तृत्वं कुलालादि-जीवस्यैव, न तु ब्रह्मण इति शङ्का तु न युक्ता; जीवब्रह्मणोरभेदेन जीवात्मना

"स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत"।

"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य" इत्यादिस्मृतेः॥

एवं भूतभौतिकसृष्टिर्निरूपिता।

इदानीं प्रलयो निरूप्यते—

प्रलयो नाम त्रैलोक्यविनाशः। स च चतुर्विधः, नित्यः

ब्रह्मणः कर्तृत्वात्, तमिममर्थं श्रुतिप्रमाणोपदर्शनव्याजेन दर्शयति—हन्ताहमिमा इति॥ ननु हिरण्यगर्भस्य जीवत्वाभावात् तद्द्वारा भगवतः नामरूपप्रपञ्चकर्तृत्वमुक्तश्रुतिसिद्धं न भवतीत्यतस्तस्य जीवत्वं सप्रमाणमाह—हिरण्यगर्भो नामेति॥ समष्टिलिङ्गशरीराभिमानिन एव हिरण्यगर्भत्वादिति भावः। मूर्त्तित्रयं ब्रह्मविष्णुशिवात्मकं तु सत्त्वरजस्तमोगुणात्मकमायोपाधिकं चैतन्यमेवेति मायापरवशत्वाभावात् ईश्वरभावमेवार्हतीति सूचितम्॥ भूतभौतिकसृष्टिर्निरूपितेति॥ तथाच जगत्कारणत्वं ब्रह्मलक्षणमिति युक्तमिति भावः॥

एतावता प्रपञ्चेन "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिर्व्याख्याता। इतः परं "यत्प्रयन्त्यभिसंविशन्ति" इति श्रुतिर्व्याख्यास्यते। सृष्टिकारणत्वमात्रेण हि निमित्तकारणत्वमात्रं गम्येत, नोपादानत्वमपीति, अभिन्ननिमित्तोपादानत्वसमर्थनार्थं प्रलयकारणत्वमपि प्रलयाधिष्ठानत्वरूपं तस्यैव ब्रह्मण इति सूचयन् प्रलयनिरूपणं प्रतिजानीते—इदानीमिति॥ यथा महाप्रलयाधिष्ठानत्वं ब्रह्मणः, एवं सुषुप्त्यधिष्ठानत्वमपि तस्यैव। "सता सोम्य तदा संपन्नो भवति स्वमपीतो भवती"ति श्रुतेरिति न जीवेऽतिव्याप्तिरिति सूचयन् प्रलयं विभजते—स च चतुर्विध इति॥ तदुक्तम्—"नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विजाः। नित्यश्च सर्वभूतानां प्रलयोऽयं चतुर्विधः"—इति॥ यद्यपि प्रपञ्चानभिव्यक्तिकाल एव प्रलयकालः। स च प्रपञ्चास्रष्टृत्रा सृष्टानामप्यज्ञानिन च भवति। तत्राद्यः प्राकृतः, द्वितीयो नित्य इत्येवोरीकरणीयमिति प्रलयस्य

प्राकृतो नैमित्तिक आत्यन्तिकश्चेति। तत्र नित्यः प्रलयः सुषुप्तिः; तस्याः सकलकार्य्यप्रलयरूपत्वात्। धर्माधर्मपूर्वसंस्काराणाञ्च तदा कारणात्मनाऽवस्थानम्; तेन सुप्तोत्थितस्य न सुखदुःखाद्य

द्वैविध्यमेव युक्तम्; तथापि ब्रह्मभावदशाऽपि प्रलयपदेन गौण्या व्यवह्रियत इति त्रिविधत्वंपद्यते, तत्र च व्यष्टिजीवापेक्षया नित्य इति समष्टिजीवापेक्षया नैमित्तिक इति विशेषात् चतुर्विधत्व सिद्ध्यतीति भावः।

**ननु**—अत्र वचने कीदृशः क्रमो विवक्षितः? किंच तत्र कारणमित्याशङ्कां नित्यः प्राकृतिक इत्यादिना तत्तत्स्वरूपनिरूपणेन निराकरोति—**नित्य इति।** प्रत्यहं जायमान इत्यर्थः। तत्स्वरूपमाह—**सुषुप्तिरिति॥** सुषुप्तिकाले हि—"यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुस्सर्वै रूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैस्सहाप्येति मनस्सर्वैर्ध्यानैस्सहाप्येति। स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतस्सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं प्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका"इति श्रुतिः सर्वेषां कार्य्याणाम् आवरणशक्तिमदविद्यात्मनाऽवस्थानं बोधयति। अत एव न किंचिदवेदिषमित्येव प्रतीतिः, नतु न किंचिदस्तीति।

इयमेव व्यष्टिजीवविवक्षया नित्यप्रलय इति समष्टिजीवापेक्षया नैमित्तिकप्रलय इत्युच्यते। तथाच प्रलयस्त्रिविधः—आवरणशक्तिमदज्ञानात्मनाऽवस्थानं शक्तिद्वयवदज्ञानात्मनावस्थानं ब्रह्मात्मभावश्चेति। अत्र विभागे प्रथमस्य व्यष्टिसमष्टिजीवभेदेन द्वैविध्ये सति फलितस्य चातुर्विध्यस्यैवात्र निरूपणात् नित्यः प्राकृत इति क्रमः परिभाषाकृतामुपपन्न एव॥

**ननु**—सुषुप्तेरपि मूलाविद्यारूपत्वे का क्षतिरिति चेत्, सुप्तोत्थितस्य प्राचीनसुखदुःखाद्यनुभवानुपपत्तिरित्याह—**धर्माधर्मपूर्वेति॥** तथाच तेषां स्वरूपतोऽवस्थानस्य सत्त्वात् न सुप्तोत्थितस्य तन्निमित्तसुखाद्यनुपपत्तिः। प्राकृतप्रलयेऽपि यद्यपि धर्माधर्मपूर्वसंस्कारा वर्तन्ते, अन्यथा संसारानादितासिद्धान्तभङ्गापत्तेः;

नुभवानुपपत्तिः, नवा स्मरणानुपपत्तिः । न च सुषुप्तौ अन्तःकरणस्य विनाशे तदधीनप्राणादिक्रियानुपपत्तिः ; वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वम्, सुषुप्तशरीरोपलम्भवत् । न चैवं सुषुप्तस्य परेतादविशेषः ; सुषुप्तस्य हि लिङ्गशरीरं संस्कारात्मनाऽत्रैव वर्त्तते, परेतस्य तु लोकान्तर इति वैलक्षण्यात् ।

तथाऽपि स्वरूपेण न सन्ति, किन्तु प्रकृतिरूपेणेति विशेषः । "असदेवेदमग्र आसीत्" इत्यादिश्रुतीनामभिव्यक्तनामरूपात्मकप्रकृतिमात्रावस्थानबोधकानां प्राकृतप्रलये प्रमाणत्वात् तदा स्वरूपेण धर्माधर्माद्यभाव उपपद्यते ।

कारणात्मनाऽवस्थानम्—अज्ञानात्मना ज्ञानम् ; स्वरूपतो न ज्ञानमिति यावत् । प्राकृतप्रलय इव विक्षेपरूपतोऽपि विषयाणां सुषुप्तावभावे हि प्राचीनविषयादिप्रत्यभिज्ञानादिना तत्तद्विषयत्वभावनादिनिबन्धनतत्तत्सुखदुःखाद्यनुभवो नोपपद्येत, नवा स्मरणमुपपद्येतेति "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद"ेति श्रुतिरप्युपपद्यते । ननु सुषुप्तौ अन्तःकरणादीनां स्वरूपतोऽपि भानमस्तीति कथमज्ञानात्मनैव भानम् ? इत्याशङ्क्ते—नचेति ॥

अत्र प्राणादिक्रिया स्वरूपेण सुप्तपुरुषदृष्ट्या भाति इति विवक्षितम्, उत पुरुषान्तरदृष्ट्येति चेत्, नाद्यः ; न किञ्चिदवेदिषमिति अज्ञानरूपेणैव प्रतीतिः । न द्वितीयः ; पुरुषान्तरदृष्ट्या तत्प्रतीतेर्भ्रमरूपत्वादित्यतो न दोष इत्याह—वस्तुत इति ॥

श्वासाद्यभावेऽपि स्वरूपतश्श्वासादेः स्वदृष्ट्या भानाभावेऽपि । तदुपलब्धेः पुरुषान्तरीयश्वासादिज्ञानस्य । व्यष्टिजीवविषयोऽयं प्रलय इति जीवान्तरदृष्ट्या जीवान्तरसुषुप्तेर्न प्रलयत्वम् । नैमित्तिकप्रलये तु सर्वजीवदृष्ट्या श्वासाद्यभानं वर्तते इति विशेषः ॥ ननु सुषुप्तिरिव मरणमपि प्रलयो भवतु, इत्याशङ्क्य परिहरति—नचैवमिति ॥ उत्पत्तिर्नाम स्वरूपतः

यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति; तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः, न तु क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धम्। "यदा सुप्तः स्वप्नं न कञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति। अथैनं वाक् सर्वैर्नामभिः सहाप्येति। सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवती"त्यादिश्रुतिरुक्तसुषुप्तौ मानम्।

प्रादुर्भावः, तद्विरोधी स्वरूपतस्तिरोभावस्तु प्रलय इति, स्वरूपत आकाशादिप्रपञ्चानुपलम्भस्यैव तत्प्रलयरूपत्वात् मरणे स्वरूपतो लिङ्गशरीरस्य सत्त्वात् जाग्रदवस्थेव न मरणमपि प्रलयविशेष इत्याह—सुषुप्तस्य हीति॥

संस्कारात्मनाऽत्रैव वर्त्तते संस्कारात्मनैवात्र वर्तते इत्यर्थः; न किञ्चिदवेदिषमित्यनुभवादिति भावः। लोकान्तर इति। "स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरेति" इति श्रुतिरत्र प्रमाणम्। अत्र च स्वरूपेणैवेति शेषपूरणं कर्तव्यम्। तथाचैतस्मिन् शरीरे स्वरूपेण लिङ्गशरीरस्य वर्तमानत्वेऽपि जाग्रदवस्थायां यथा न प्रलयः, एवं मरणेऽपि लोकान्तरे स्वरूपेण लिङ्गशरीरावस्थानात् न प्रलय इति भावः॥ तथाच—सुषुप्तौ रूपान्तरेण प्राणो वर्तते, मरणे तु केनापि रूपेण शरीरे प्राणो नास्तीति वैषम्यम्॥

ननु—अन्तःकरणस्य सुषुप्तौ विलयः श्रुतौ यः प्रतिपादितः, स न सर्वशक्त्यपेक्षया, किन्तु ज्ञानशक्त्यपेक्षयैव, अतएव—"अज्ञानेनात्मना सम्परिष्वक्तो न वेदे"ति वेदनाभावमात्रामनानमुपपद्यते। अतएव "यदा सुप्त" इति श्रुतावपि मनः सर्वैर्ज्ञानैरित्येवोक्तम्। तथाच श्वासादीनां स्वरूपतोऽवस्थानेऽपि सुषुप्तौ न किञ्चन विरुद्धम्। न च सुप्तस्य तत्प्रतीत्यापत्तिः; चक्षुराद्युपरमात्। तथाच मरणदशायां शरीरवियोगनिमित्तेऽनुपलम्भेऽपि यथा लिङ्गशरीरस्य स्वरूपतोऽपि सत्त्वम्, एवं सुषुप्तावपीति न दोष इति पक्षान्तरमाह—यद्वेति॥

यत्तु—आशुबोधिन्याम्—यदि सुषुप्तस्य प्राणादिक्रियायाः परमार्थतो विलयेऽपिपुरुषान्तरस्य भ्रमात्मिका तदुपलब्धिर्घटते, तर्हि विलीनमपि कर्मेन्द्रियकार्यं

**प्राकृतप्रलयस्तु कार्यब्रह्मविनाशनिमित्तकः सकलकार्य-विनाशः।**

कथं पुरुषान्तरेण नोपलभ्यते इत्यस्वरसादाह—यद्देतीत्यवतारितम्, तदिदं नैमित्तिके सति निमित्तानुसरणम् नतु निमित्तमस्तीति नैमित्तिकारोप इति न्यायविरोधिनोक्तशङ्काया एवाप्रसरादकिञ्चित्करम्॥ प्राणाद्यवस्थानम् श्वासादिस्थानम्।

प्राकृतप्रलयं निरूपयति—प्राकृतेति॥ शक्तिद्वयविशिष्टाज्ञानं प्रकृतिरिति कथ्यते। तदात्मना कार्यप्रपञ्चावस्थानात्मकः प्रलयः प्राकृतः प्रलयः। अस्मिंश्च प्रलये "असदेवेदमग्र आसीदि"ति श्रुतिः प्रमाणम्। अत्र हि भूतभौतिकादिप्रपञ्चस्य सर्वस्य प्रकृत्यात्मकत्वं सृष्टेः पूर्वं प्रतिपाद्यानन्तरं हिरण्यगर्भादिसृष्टिरुपक्रान्तेति कार्यब्रह्महिरण्यगर्भविनाशानन्तरमेवोक्तप्रलय इति गम्यते। तथाच कार्यब्रह्मविनाशानन्तरं तदधिष्ठितब्रह्माण्डवर्तिनिखिलभूतभौतिकादीनां केवलप्रकृत्यात्मनैवावस्थानस्य प्राप्तत्वात् अयं प्राकृतप्रलय इत्युपपन्नम्। नित्यप्रलये सुषुप्तौ हि अवस्थाज्ञानात्मना ब्रह्मण्येवावस्थानमिति न स प्राकृतः। एतेन नैमित्तिकप्रलयोऽपि व्याख्यातः। आत्यन्तिकप्रलये तु सर्वस्य बाधितत्वात् ब्रह्मस्वरूपव्यतिरेकेणाभाव एवेति न सुषुप्त्यादिसाम्यं तस्य। यथाहि सुषुप्त्यनन्तरं सुप्तस्यैव पुनरुत्थानम्, नैवं कार्यब्रह्मविनाशानन्तरं ब्रह्मण उत्थानमस्ति। कार्यब्रह्मणो हि—"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमि"ति प्राकृतप्रलये ब्रह्मभाव उक्तः। तत्र च कृतात्मनामेव ब्रह्मभावस्योक्तत्वात् अकृतात्मदृष्ट्या प्रपञ्चस्य सर्वस्य सत्त्वमेवास्तीति नायमात्यन्तिको बाधः। कृतात्मदृष्ट्या तु सोऽयमात्यन्तिकबाधतामप्यर्हतीत्यन्यदेतत्। तदेतत् सर्वं मनसि निधायाह—प्राकृतप्रलयस्त्विति॥

कार्यब्रह्मविनाशनिमित्तक इत्यनेन सुषुप्तिनैमित्तिकात्यन्तिकप्रलयानां व्यावृत्तिः। प्रपञ्चप्राकृतप्रलयो न हिरण्यगर्भादिदृष्ट्या, किन्तु अज्ञानिदृष्ट्येति

यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परा मुक्तिः, तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यम् ।

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति श्रुतेः । एवं स्वलोकवासिभिः सह कार्य्ये ब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्वर्त्ति-निखिललोक-तदन्तर्वर्त्ति-स्थावरादीनां भौतिकानां भूतानाञ्च प्रकृतौ मायायां च लयः न तु ब्रह्मणि । बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वात्, अतः प्राकृत इति उच्यते ।

सूचनेन प्राकृतत्वेन व्यवहारे निमित्तमाह—यदात्विति ॥ यत्तु आशुबोधिन्यां तद्विनाशप्रकारमाहेत्यवतारितम्, परार्धद्वयकालानन्तरम् अन्येषामिव तस्यापि प्रारब्धसमाप्तेरेव नाशस्य शास्त्रसिद्धत्वात्, अतः प्राकृतो लय इत्येतदुपपादकत्वाभावाच्च नोपपादनमत्रापेक्षते । प्रागेव उत्पत्तिदशायामेव । कृतात्मान इति । एतेनाकृतात्मनामर्चिरादिमार्गेण ब्रह्मलोकमप्राप्तानां वा पुनरावृत्तिरस्त्येवेति सूचितम् ।

प्रविशन्ति परं पदम् परपदात्मकब्रह्मभावं प्राप्नुवन्ति । "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुतेः । मायायां लय इति । समष्टिजीवात्मकहिरण्यगर्भविमुक्तौ तदुपाधिभूतमायात्मनैवावस्थानं प्राप्तमिति भावः । नतु ब्रह्मणीति । प्रकृतिविनाशानन्तरकालिकत्वात् ब्रह्मभावस्येति भावः ॥

क्रमप्राप्तं नैमित्तिकप्रलयं निरूपयति—कार्यब्रह्मण इति ॥ यदा स्वपिति शान्तात्मा तदा सर्वं निमीलती"ति मनुना समष्टिजीवात्मकहिरण्यगर्भसुषुप्तेः

कार्य्यब्रह्मणो दिवसावसाननिमित्तकः त्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः। ब्रह्मणो दिवसः चतुर्युगसहस्रपरिमितः कालः; "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इति वचनात्। प्रलयकालोऽपि दिवसकालपरिमितः; रात्रिकालस्य दिवसकाल-तुल्यत्वात्। प्राकृतप्रलये नैमित्तिकप्रलये च पुराणवचनानि प्रमाणानि।

"द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः।
तत्र प्रकृतयः सप्त कल्पयन्ते प्रलयाय हि॥
एष प्राकृतिको राजन्! प्रलयो यत्र लीयते।"

इति वचनं प्राकृतप्रलये मानम्।

"एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्।
शेतेऽनन्तासने नित्यमात्मसात्कृत्य चात्मभूः॥"

इति वचनं नैमित्तिकप्रलये मानम्।

प्रलयत्वाभिधानात्। सत्त्वावरणशक्तिमदज्ञानात्मनैव सर्वस्य प्रपञ्चस्यावस्थानमिति यत्तिदं तदेवाह—दिवसावसाननिमित्तक इति। त्रैलोक्यमात्रस्येति मात्रपदं यावदर्थकम्। सर्वकार्यविनाशः नैमित्तिकः प्रलय इति भावः। ब्रह्मणो दिवसादिपरिमाणमाह—ब्रह्मण इति॥ तदुक्तम्—"कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्। प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिवसो मुने" इति। प्राकृतनैमित्तिकप्रलययोः प्रमाणमाह—द्विपरार्धे इति॥

आत्यन्तिकप्रलयमाह—तुरीयेति। यद्यपि प्राकृतप्रलयेऽपि ब्रह्म-दृष्ट्याऽत्यन्तिकः प्रलयो वर्तते; तथापि पारिभाषिको व्यवहारः सर्वमोक्ष-एवात्यन्तिकः प्रलय इतीत्यभिप्रेत्याह—सर्वेति॥ सर्वमोक्षप्रकारमाह—स चेति॥

तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः, स च एकजीववादे युगपदेव, नानाजीववादे तु क्रमेण ; "सर्व एकी-भवन्ति" इत्यादिश्रुतेः। तत्र आद्याः त्रयोऽपि लयाः कर्मो-परतिनिमित्ताः, तुरीयस्तु ज्ञानोदयनिमित्तो लयोऽज्ञानेन सहैव इति विशेषः।

एवं चतुर्विधः प्रलयो नि पितः।

एकजीववादे इति। समष्टिजीवातिरिक्तव्यष्टिजीवाः परमार्थतो न सन्ति, तत्कल्पिता एवेमे नानाजीवा इति मते तादृशकल्पितजीवेन वस्तुसदात्मनो ज्ञानादिना मोक्षे सर्वमुक्तिरेव। शुकादीनां केषामपि नात्र मते एतावताऽपि मुक्तिः। यथा चात्र शास्त्रोपदेशाद्युपपत्तिस्तथाऽद्वैतसिद्धौ व्यक्तम्॥ आत्यन्तिक-प्रलयस्य प्रलयत्रयाद्वैलक्षण्यमाह— तत्राद्या इति॥

कर्मोपरतिनिमित्ता इति॥ कर्मविशेषाधीनफलविशेषानुभवविनाशः फलान्तरानुभवप्रागभावकालिकः सुषुप्त्यादिरूपः प्रलयः। आत्यन्तिकप्रलयेतु न फलान्तरानुभवप्रागभावसत्त्वम् ; सर्वेषां कर्मणामुपरतत्वात्। "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति वचनात्। तत्र व्यष्टिजीवस्य समष्टि-जीवस्य वा जाग्रद्भोगप्रदकर्मोपरमो नित्यनैमित्तिकप्रलययोर्निमित्तम्, हिरण्यगर्भ-शरीरारम्भककर्मोपरमनिमित्तकः प्राकृतः प्रलय इति विशेषः।

यद्वा—अत्र चाज्ञानेन विनेति शेषपूरणम्, उत्तरवाक्येऽज्ञानेन सहैवेत्युक्त्या सूचितमिति कर्मोपरतिनिमित्ताः कार्यप्रपञ्चस्य स्वरूपेणानवस्थानात्मकोपर-मात्मका इति व्याख्येयम्। एवं च प्रकृत्यवस्थानानवस्थानाभ्यां प्रलयत्रिकात् तुरीप्रलयस्य वैलक्षण्यं सिद्धम्। अज्ञानेन सहैवेति॥

तत्र च कर्मोपरमनिमित्तत्व इत्यध्याहरणीयम्। तथाचाज्ञानस्य तत्कार्यस्य चोपरमात्तुरीयः प्रलयः। कर्मोपरममात्रे दण्डानुभवादिकं यथा निमित्तम्, एवं साज्ञानकर्मोपरमे निमित्तं ज्ञानमेवेति स्वरूपत इव निमित्ततोऽपि वैलक्षण्य-

तस्येदानीं क्रमो निरूप्यते। भूतानां भौतिकानाञ्च न कारणलयक्रमेण लयः; कारणलयसमये कार्य्याणामाश्रयान्तराभावेनावस्थानानुपपत्तेः, किन्तु सृष्टिक्रमविपरीतक्रमेण;

माह—ज्ञानोदयनिमित्त इति॥ कर्म्मोपरतिनिमित्ता इत्यत्र निमित्तपदं स्वरूपपरम्, अत्र तु हेतुपरम्। कर्म्मोपरमनिमित्तश्च इत्यस्याध्याहाराभावेतु सहैव तुरीयः प्रलय इत्यनेन तुरीयप्रलयकालेऽज्ञानसत्त्वमेवावगतं स्यादिति महान् विरोधस्समापद्येत॥

ननु—नित्यादिप्रलये प्रकृतेरवस्थानम्, मोक्षेतु तस्या अपि विनाश इति विशेषोक्तिरियं न संगच्छते; समवायिकारणनाशात् कार्य्यनाश इति नैयायिकसिद्धान्ते हि प्रकृतिविनाशमन्तरा तत्कार्य्यविनाश एव न संभवतीति खलु गम्यते। अतः यदि प्रकृतिविनाशं विना कार्य्यविनाशः साधनीयः, तर्हि प्रकृतिनित्यत्वं वाङ्गीकरणीयम्, स सिद्धान्तो वा निरसनीयः। तत्राद्येऽद्वैतासिद्धिः, द्वितीयस्तु उत्पत्तिक्रमविपरीतक्रम एव प्रलय इति साधनेनैव संभवतीत्यवसरप्राप्तमुत्पत्तिक्रमवैपरीत्येन प्रलयक्रमनिरूपणं प्रतिजानीते—तस्येदानीमिति॥

नैयायिका हि उपादानकारणे कार्य्यस्य समवायेन सत्त्वं कारणविनाशानन्तरं कार्य्यविनाशं चाङ्गीकुर्वन्तः कारणविनाशकालेऽनाश्रितानि कार्य्याणि कंचित् क्षणमवतिष्ठन्त इत्यूरीकुर्वन्ति, तदिदमनुभवविरुद्धमिति सृष्टिक्रम एव प्रलयस्यापि क्रम इति न युक्तम्। उपपादितमिदम्—"विपर्य्ययेण तु क्रमोऽत उपपद्यते च"ति सूत्रभाष्यादौ इति, तत एव द्रष्टव्यमिति न विरोध इत्याह—भूतानामिति॥

ननु कार्य्यनाशं प्रति कारणनाशः कारणमिति सिद्धान्तो भवन्मते कथमुपपद्यते? न च निमित्तकारणविनाशः कार्य्यनाशं प्रति कारणमिति तदर्थ इति वाच्यम्; दण्डादिनाशानन्तरमपि घटादीनामुपलम्भेन तदसंभवात्। एतेन तत्कार्य्यजनकादृष्टनाशस्यैव तत्प्रयोजकत्वमित्यपि प्रत्युक्तम्; अदृष्टशब्दवाच्यं हि परमापूर्व्वं कार्य्योत्पत्तिक्षणपूर्व्वक्षणं यावदेवास्ति, नतु कार्य्योत्पत्त्यनन्तरमपि। यागादीनां स्वर्गजनकत्वं स्वर्गोत्पत्त्यव्यवहितपूर्व्वक्षणे तदसत्त्वान्नोपपन्नमिति खलु अपूर्व्वं कल्प्यते, नतु स्वर्गनाशानुपपत्त्येति स्वर्गनाशाव्यवहितपूर्व्वक्षणं यावत् तज्जन-

तत्तत्कार्य्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतयोपादान-नाशस्याप्रयोजकत्वात्। अन्यथा न्यायमतेऽपि महाप्रलये पृथिवीपरमाणुगतरूपरसादेरविनाशापत्तेः।

तथाच पृथिव्या अप्सु, अपां तेजसि, तेजसो वायौ, वायोराकाशे आकाशस्य जीवाहङ्कारे, तस्य हिरण्यगर्भाहङ्कारे, तस्य चाविद्यायाम् इत्येवंरूप एव प्रलयः। तदुक्तं विष्णुपुराणे—

जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन्! निष्कले सम्प्रलीयते।
पुरुषान्न परं किञ्चिदात्मा काष्ठा परा गतिः॥

कस्याप्यदृष्टस्यैवाभावात् कथमिदमुपपद्यते तत्तत्कार्यविनाशे तत्तत्कार्यजनकादृष्ट-नाश एव निमित्तमिति? अन्यथा सर्वेषां कार्याणां क्षणिकत्वापत्तेरित्यत आह—तत्तत्कार्यनाशे इति॥

अयं भावः—यागः स्वर्गसाधनमित्यादिवाक्यस्य हि स्वर्गानुभवसाधनं याग इत्येवार्थः, सुखविशेषात्मकस्य च स्वर्गस्यास्मन्मते प्रातिभासिकत्वेन यावत्प्रतिभासमेव सत्त्वात् तदनुभवसाधनत्वं तत्साधनत्व एव पर्यवस्यति। तथाच प्रारब्धकर्मणामवस्थानस्य सिद्धत्वात् अदृष्टनाशो न फलोत्पादनमात्रेण, किन्तु तत्तत्सुखानुभवविरुद्धादृष्टान्तराधीनसुखान्तराद्यनुभवेनैव। अत एवात्मविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वमिति सिद्धान्तः। तथाच समष्टिजीवगतादृष्टाधीनत्वात् भौतिकसृष्ट्याः तदधीनसुखानुभवस्य चाऽऽप्रलय-मवस्थानं न विरुद्धम्, सुषुप्त्यादौ तु न धर्माधर्मयोरभाव इति पूर्वमेव निरूपित-मिति, अदृष्टनाशेन कार्यनाशपरत्वमिव कारणविनाशेनेति वाक्यस्याभिप्रेतमिति न दोषः॥

इति । एवंविधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थ-लक्षणम् ।

ननु वेदान्तैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपञ्चं ब्रह्म स्यात् ; अन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तिरिति चेत्, न ; न हि सृष्टिवाक्यानां सृष्टौ तात्पर्य्यम्, किन्त्वद्वितीये ब्रह्मण्येव ।

उत्पत्तिक्रमविपरीतक्रम एव प्रलयक्रम इत्यत्र विष्णुपुराणमपि प्रमाणयति— जगत्प्रतिष्ठेति ॥ अप्सु प्रलीयते अबात्मनाऽवतिष्ठते । तेजस्याप इत्यादावप्ययमेवार्थः । अव्यक्ते प्रकृतौ । अव्यक्तं पुरुषे प्रलीयते ब्रह्म-व्यतिरेकेण प्रकृतिर्नास्त्येव । तथाच साविद्यकस्य सर्वस्य प्रपञ्चस्य ब्रह्मव्यतिरिक्तस्य ब्रह्मभावात्मनावस्थानं श्रुतौ यत्प्रतिपादितम्, यच्च ब्रह्म जगतः कारणमितिनिरूपितम्, तदुभयं सृष्ट्यादिवाक्यैर्निर्गुणब्रह्मप्रतिपादन एवोपपद्यते । नह्यन्यथाऽव्यक्त-पर्य्यन्तस्य सर्वस्य प्रपञ्चस्य ब्रह्मणि लयप्रतिपादनमुपपद्यत इति तत्पदार्थस्य ब्रह्मणः सृष्टिवाक्यैरवगम उपपद्यत इति भावः । तदेतदाह—एवंविधेति ॥

ननु—सृष्ट्यादिवाक्यैर्ब्रह्मणः सप्रपञ्चत्वस्यावगतत्वात् प्रलयकारणत्वं ब्रह्मणि प्रतिपाद्यमानं गौणमेवेति सप्रपञ्चमेव ब्रह्माङ्गीकरणीयमित्याशङ्कते—नन्विति लक्षणं हि तदेव भवति, यल्लक्ष्ये वर्त्तते । जगत्कारणत्वेन च प्रतिपादनं ब्रह्मणो जगत्कारणत्वमन्तरा न सम्भवतीति भावः । अप्रामाण्यापत्तिरिति ॥ शुक्तौ अविद्यमानं रजतं शुक्ताविदं रजतमिति ज्ञायमानं यथा मिथ्या, यथा च तज्ज्ञानं भ्रमः, तदभिलापकश्च भ्रान्तः एवं ब्रह्मणो जगत्कारणत्वं मिथ्या, तत्र जगत्कारणत्वज्ञानं भ्रमः, श्रुतिर्भ्रान्तेति प्रसज्यत इति भावः ॥

ननु—"उपायाः शिक्ष्यमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इति न्यायेन प्रथमतो जगत्कारणत्वेनावगम्यमानमपि पश्चान्निष्प्रपञ्चतया ज्ञायमानं वस्तुसत् भवितुमर्हत्येवेति प्रलयकारणत्वं न

तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः ? इत्थम्—यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्येत, तदा ब्रह्मणि प्रतिषिद्धस्य प्रपञ्चस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशङ्कायां न निर्विचिकित्समद्वितीयत्वं प्रतिपादितं स्यात्। ततः सृष्टिवाक्यात् ब्रह्मोपादेयत्वज्ञाने सत्यु-

गौणमिति कल्पनीयम् । नेह नानास्तीत्यादिना ब्रह्मणि निषिध्यमानानां प्रपञ्चानामन्यत्रावस्थानशङ्कानिवृत्त्यर्थं प्रपञ्चस्य कुत्रापि न प्रमात्मकोऽनुभवः, किन्तु भ्रमात्मक एव, सोऽपि ब्रह्मण्येवेति, भ्रमपूर्वकस्य शुक्तौ रजतनिषेधस्य नीरजतशुक्तितत्त्वप्रतिपादन इव सृष्टिपूर्वकस्य ब्रह्मणि सप्रपञ्चत्वनिषेधस्य ब्रह्मनिष्प्रपञ्चत्वसमर्पण एव तात्पर्यमिति नोक्तशङ्काऽत्र समापततीत्याशयेन समाधत्ते—नेति ॥

ननु ब्रह्मणि सप्रपञ्चत्वम्, अबाधितम्, श्रुतिबोधितत्वात्, ब्रह्मवत्; इत्यनुमानं ब्रह्मसप्रपञ्चतायां प्रमाणमित्याशङ्कयाह—नहीति ॥ सृष्ट्यादिवाक्यानां महावाक्यदृष्ट्याऽवान्तरवाक्यत्वात् मुख्यतात्पर्यविषयत्वं ब्रह्मण एव, न सप्रपञ्चतायाः । तथाचोक्तानुमाने मुख्यतात्पर्यविषयत्वमुपाधिरिति भावः । प्रकृतोपाधेः साधनाव्यापकत्वं दर्शयति—किन्त्विति ॥

सृष्टिवाक्यानामद्वितीयब्रह्मप्रतिपत्तौ उपयोगं दर्शयति—यदीति ॥ ब्रह्मणोऽन्यत्रावस्थानेति । अप्रसिद्धप्रतियोगिनिषेधासम्भवात् भ्रान्तिप्रयुक्ता प्रसिद्धिर्ब्रह्मण्येवोपपादनीया ; अन्यथा शशशृङ्गादिवदत्यन्तासत्त्वं प्रपञ्चस्य स्यादिति भावः । न निर्विचिकित्समिति । ब्रह्मणि निषिद्धस्य प्रपञ्चस्यान्यत्र सत्त्वेन प्रपञ्चकारणमन्यत् स्वरूपं वर्तते सत्यमित्यापत्त्या ब्रह्मणस्तेन कारणेन सद्वितीयत्वं भवेदिति, कारणान्तरनिषेधेनाद्वितीयब्रह्मप्रतिपत्तौ सृष्टिवाक्यानामुपयोग इति भावः । तमिमं भावं विशदयति—ततः सृष्टिवाक्यादिति । ततः सृष्टिवाक्योपन्यासे इत्यर्थः ॥

पादानं विना कार्य्यस्यान्यत्र सद्भावशङ्कायां निरस्तायाम् "नेति नेति" इत्यादिना ब्रह्मण्यपि तस्यासत्त्वोपपादनेन प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रममखण्डं सच्चिदानन्दैकरसं

नन्वेवं सति सृष्टिवाक्यान्यपि वेदान्तवाक्यानि, अद्वितीयवाक्यमपि वेदान्तवाक्यमिति तुल्यबलत्वात् सृष्टिवाक्यप्रसक्तस्य प्रपञ्चस्य ब्रह्मणि निषेधो नोपपन्न इत्यत आह—नेति नेतीति। वेदान्तवाक्यत्वेन साम्येऽपि निषेधवाक्यानामपच्छेदन्यायेन प्राबल्यमिति तत्र तन्निषेध उपपद्यत इति भावः। असत्त्वोपपादनेन अभावोपपादनेन। तुच्छत्वावगमे मिथ्यात्वावगमे। स्वसमानाधिकरणात्यन्ताभावस्य मिथ्यात्वरूपत्वादिति भावः।

नन्वपच्छेदन्यायो न प्रामाण्याप्रामाण्यविषयः, किन्त्वनुष्ठानानुष्ठानविषय एव। एवं च—"अतिरात्रे षोड़शिनं गृह्णाति नातिरात्रे षोड़शिनं गृह्णाती"ति वाक्ययोरुभयोरपि बोधकत्वेनाबाधितार्थविषयत्वलक्षणप्रामाण्यीरीकारेणोपपत्तिर्भवतीति, तेन न्यायेन ब्रह्मणः सप्रपञ्चत्वं न बाधितम्, श्रुतिबोधितत्वादित्येवोरीकर्तव्यमित्याशङ्कायामाह—निरस्तेति। विभ्रममिति। तथाच सृष्टिवाक्यानां पारमार्थिकतत्त्वावेदकत्वलक्षणप्रामाण्यानङ्गीकारात् निष्प्रपञ्चब्रह्मबोधनमद्वितीयवाक्येन संभवत्येवेति न दोषः। अतिरात्रविधिनिषेधवाक्ययोरुभयोरपि व्यावहारिकतत्त्वावेदकत्वलक्षणं प्रामाण्यमेव स्वीक्रियत इति तु वैषम्यम्। ननु गृहाश्रितधान्यादिदाहे गृहदाहवत् ब्रह्माश्रितप्रपञ्चनाशे ब्रह्मणोऽपि नाशापत्तिरित्यत आह—अखण्डमिति। कूटस्थमित्यर्थः।

ननु सन् घटः, सन् पटः, इत्यादिस्थले सत्पदार्थस्य भानं कार्यघटादिव्यतिरेकेण व्यवहारदशायां कदाऽपि नास्तीति वेदान्तेनावगमदशायामपि सद्रूपं ब्रह्म यत्किञ्चित्कार्यतादात्म्येनैव प्रतीयते। नहि सत् इत्याकारमात्रं किञ्चित् ज्ञानं दृष्टम्। एतेन—चिद्रूपमपि—व्याख्यातम्; घटो भातीत्यादौ चिद्रूपस्यापि यत्किञ्चित्कार्यतादात्म्येनैव ज्ञायमानत्वात्। तथाच सच्चिद्रूपब्रह्मावगमो

ब्रह्म सिद्धप्रतीति, परम्परया सृष्टिवाक्यानामप्यद्वितीये ब्रह्मण्येव तात्पर्य्यम् ।

उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानां चोपासनाविध्य-

घटादिनाशं प्रति न प्रयोजक इति कथमद्वितीयब्रह्मस्वरूपसिद्धिरित्यत आह— सच्चिदानन्दैकरसमिति । सत्यं सदात्मना चिदात्मना च प्रतीतिर्न समूलकार्यविनाशप्रयोजिका, सच्चिदानन्दब्रह्मप्रतीतिस्तु तन्नाशप्रयोजिका भवेदेव ॥

अयं भावः—किञ्चिद्रूपेण ज्ञातं किञ्चिद्रूपेणाज्ञातं चाधिष्ठानं भवति । तन्नाधिष्ठानं येनात्मना ज्ञायते, तेनात्मना कल्पितमवभासते । यथा इदमात्मना रजतम् । एवं चानन्दरूपेणाज्ञातं सच्चिद्रूपेण ज्ञातं स्वरूपचैतन्यमेव सर्वप्रपञ्चाधिष्ठानमिति यावदानन्दांशस्फुरणमेव प्रपञ्चानुवृत्तिः, अनन्तरं तूक्तविधाधिष्ठानलक्षणासंभवात् न प्रपञ्चानुवृत्तिः, शुक्तित्वसाक्षात्कारानन्तरमिव न रजतानुवृत्तिः । एतेन— "सदेव सोम्येदमग्र आसीत्" "यस्सर्वज्ञस्सर्ववित्" इति वाक्यद्वयमपि—व्याख्यातम् । अतएव—भृगुवल्ल्याम् "आनन्दो ब्रह्मेति व्यजानादि"त्यानन्दरूपेणैव ज्ञेयं ब्रह्मान्ते समुपदिश्योपसंहृतम्—"सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिते"ति न कोऽपि दोष इति ।

परम्परया अन्नादिपरंपरया । सृष्टिवाक्यानाम्—कारणतापरवाक्यानाम् । "यतो वा इमानि भूतानि जायन्ते" इति प्रवृत्तं कारणवाक्यम्—"अन्नं ब्रह्मेति व्यजानात्" "प्राणो ब्रह्मेति व्यजानात्" "मनो ब्रह्मेति व्यजानात्" इति परंपरया यथाऽऽनन्दरूपाद्वितीयब्रह्मलक्षकं भवति तथा गुणोपसंहारन्यायेन सर्वाणि कारणवाक्यानि अद्वितीयब्रह्मस्वरूपप्रतिपादनार्थानीति भावः । तात्पर्यमिति । आनन्दस्वरूपस्यैव प्रमाणान्तराग्रहीतत्वादप्राप्ते शास्त्रमर्थवत् इति न्यायेन तत्रैव तात्पर्यमिति भावः ।

ननु भवतु सृष्टिवाक्यानां कथमपि निषेधशेषत्वेनाद्वितीयब्रह्मप्रतिपत्त्युपायत्वम्, हिरण्मयः, सत्यकामः, सत्यसंकल्पः, इत्यादिवाक्यानां तु स्वत एव सफलोपासनावाक्यगम्यानां न निषेधशेषत्वं संभवति । तथाच तैस्सद्वितीयत्वं ब्रह्मणः सिद्धमित्यत आह—उपासनेति । ननु—उपासना हि पुरुषकृतिसाध्य-

पेक्षितगुणारोपमात्रपरत्वात् न गुणपरत्वम्। निर्गुणप्रकरणपठितानां सगुणवाक्यानान्तु निषेधवाक्यापेक्षितनिषेध्यसम्पादकत्वेन विनियोग इति, न किञ्चिदपि वाक्यमद्वितीयब्रह्मप्रतिपादनेन विरुध्यते।

ज्ञानविशेषः फलजननार्थं स्वस्य अनुष्ठानमात्रमपेक्षते, नतु स्वविषयस्य सत्यत्वमपि। अतएव "वाचं धेनुमुपासीते"ति विहितोपासनाविषयस्य वागधिकरणकधेनुत्वस्य नाबाधितत्वम्। तथाच तेन न्यायेन हिरण्मयादिवाक्यस्याप्युपास्यसत्यताबोधने न तात्पर्यमिति कथमुपास्यगुणैर्ब्रह्मणस्सद्वितीयतापत्तिरित्यभिप्रायेणोक्ताशङ्कां समाधत्ते—विधीति। "क्रिया हि नाम सा, या वस्तुस्वरूपनिरपेक्षा पुरुषव्यापारतन्त्रा चे"ति भाष्येण हि समन्वयसूत्रगतेन भाष्यकाराः विधिविषयक्रियाया वस्तुतन्त्रत्वाभावनिरूपणद्वारेणेदं सूचयन्ति, यत् वस्त्वन्यथाभावेऽपि विधेयोपासनादिज्ञानसंभव इति। अधिकं भामत्यादौ व्यक्तम्।

नन्वेवं सति ज्ञेयब्रह्मस्वरूपनिरूपणप्रकरणस्थैः सगुणवाक्यैर्ब्रह्मणस्सद्वितीयत्वमपरिहरणीयमेव। आम्नायते हि बृहदारण्यकादौ मूर्तं चामूर्तं चेत्यादिना ज्ञेये ब्रह्मण्यपि कश्चन गुणसमुदाय इत्याशङ्कायामाह—निर्गुणेति। निषेधवाक्येति। "अथात आदेशो नेति नेती"ति वाक्येत्यर्थः। अत्र हीतिशब्दः सन्निहितवचनः सर्वेषामेतत्प्रकरणस्थानां बुद्धिस्थानां च प्रसक्तानां निषेध्यानां समर्पणार्थं इत्याद्याकर एव व्यक्तम्!

ननु भवतु कथमपि सृष्टिवाक्यानां सगुणवाक्यानामुपासनाप्रकरणस्थानां निर्गुणब्रह्मप्रकरणस्थानां च नाद्वितीयब्रह्मप्रतिपत्तिविरोधित्वम्, कर्मकाण्डस्थानां तु तद्विरोधित्वमपरिहरणीयमेव। तत्र "अपाम सोमममृता अभूम" "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती"ति नित्यं स्वर्गादिफलं बोध्यमानं ब्रह्मसाक्षात्कारानन्तरमपि स्थिरमेव स्थास्यतीति तेन सद्वितीयत्वं कथं परिहर्तव्यमित्याशङ्क्याह—न किञ्चिदिति। कर्मकाण्डादिगतवाक्यमित्यर्थः। "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते"इति न्यायानुगृहीतश्रुतिबलात् कर्मजन्यस्य फलमात्रस्यानित्यत्वनिश्चयादक्षय्यादिवाक्यं बहु-

तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यमीश्वरचैतन्यं मायाप्रतिबिम्बरूपमिति केचित् ।

कालस्थायित्वपरमेवेति न कोऽपि दोषः। तददिमुक्तम्—"सर्वे वेदा यत्पदमामनन्ती"ति ॥

ननु—ब्रह्मणोऽद्वितीयत्वबोधन एव सर्वेषां वेदान्तानां तात्पर्यं मुक्तिदशायां ब्रह्मणो न कारणत्वमपि वर्तत इति पर्यवस्यति, तच्च न युक्तम्; तथाहि—तत्त्वज्ञाननिवर्त्यमज्ञानमेकमुत नाना? आद्ये एकस्य तत्त्वज्ञानेन सर्वजीवाश्रिताज्ञाननाशादेकमुक्तौ सर्वमुक्त्यापत्तिः। द्वितीये तत्तदज्ञानावृतं ब्रह्मैकमुत नाना? तत्राद्ये तत्त्वज्ञानेन शुकादिसम्बन्धिना तादृशब्रह्मावारकाज्ञानानां सर्वेषां विनाश, उतैकस्यैव वा? तत्र यदि सर्वाज्ञानविनाशः, तर्हि एकमुक्तौ सर्वमुक्त्यापत्तिदोषस्तदवस्थः; एकस्यैवाज्ञानस्य नाशे तु शुकादीनामपि न मुक्त्यापत्तिरिति शङ्का स्यादेतिभिरेवमेव परिहरणीया, यत्—ईश्वरभावापत्तिरेव यावत्सर्वमुक्तौ मुक्तिर्नतु निर्गुणब्रह्मभावः। तदुक्तं सिद्धान्तलेशसंग्रहे—"तस्माद्यावत्सर्वमुक्ति परमेश्वरभावो मुक्तस्येति न कश्चिद्दोषः। अयमेव पक्षः श्रुतिसूत्रभाष्याद्यनुगुणः" इति। एवंच शुकादितत्त्वज्ञानेन मूलाज्ञानावस्थाविशेषाज्ञानस्यैव नाशात् न सर्वमुक्त्यापत्तिदोषोऽत्र भवति। अयं भावः—सगुणोपासनेन जगद्व्यापाररहितेश्वरभावः, ज्ञेयब्रह्मज्ञानेन तु तत्सहित ईश्वरभाव इति। व्यक्तं चैतत् सर्वं सिद्धान्तलेशसंग्रहे मुक्तात्मस्वरूपनिरूपणप्रकरणे। तथाच यावत्सर्वमुक्ति जगत्कारणत्वादिविशिष्टः परमेश्वर एव शास्त्रगम्य इति ब्रह्माद्वितीयतावादोऽयमसंभवदुक्तिकः। एतेन—कारणत्वस्य ब्रह्मतटस्थलक्षणतापि—परास्ता। मुक्तिकालावस्थायिन्याः तस्याः स्वरूपलक्षणत्वस्यैव युक्तत्वादित्याशङ्क्याह—एवमिति। मायाप्रतिबिम्बमिति।

सत्यमुक्तं सिद्धान्तलेशसंग्रहे ईश्वरभावापत्तिरेव मुक्तिरिति। परन्तु तत् ईश्वरो बिम्बचैतन्यम्, जीवस्तु प्रतिबिम्बचैतन्यमिति पक्षेणैवोक्तम्, नतु मायाप्रतिबिम्बचैतन्यमीश्वर इति पक्षेण। तदुक्तं सिद्धान्तलेशसंग्रहे तत्रैव प्रकरणे—जीव इवेश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य बिम्बभूतव्यक्तचैतन्यरूपे-

तेषामयमाशयः—जीवपरमेश्वरसाधारणं चैतन्यमात्रं बिम्बम्, तस्यैव बिम्बस्याविद्यात्मिकायां मायायां प्रतिबिम्बमीश्वरचैतन्यम्, अन्तःकरणेषु प्रतिबिम्बं जीवचैतन्यम्; "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेः। एतन्मते जलाशयगतशरावजलगतसूर्यप्रतिबिम्बयोरिव जीवपरमेश्वरयोर्भेदः। अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकस्येश्वरस्यापि व्यापकत्वम्,

णेवावस्थानम्, अनेकोपाधिष्वेकस्य प्रतिबिम्बे सत्येकोपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात्—इति। एवं च प्रतिबिम्बचैतन्यमीश्वर इति पक्षे कारणोपाधिप्रयुक्तस्य कारणत्वस्य चैतन्येऽसम्भवात्, मुक्तौ यादृशबिम्बचैतन्यरूपेणावस्थानम्, तादृशस्य बिम्बचैतन्यस्य कारणत्वं वस्तुगत्या नास्तीति तस्य तटस्थलक्षणत्वोपवर्णनं युक्तमेवेति भावः॥

केचिदिति। अनेन पूर्वोक्तमतेऽस्वारस्यं सूच्यते। तन्निमित्तं च मूल एव स्पष्टम्। कार्योपाधिः अन्तःकरणोपाधिः। कारणोपाधिः मायोपाधिः। ननु एतन्मतेऽपि जीवस्य कथं मुक्तावीश्वरभावापत्तिरेव न भवतीत्यत आह—एतन्मत इति। सूर्यप्रतिबिम्बयोरिवेति। प्रतिबिम्बद्वयस्यापि कार्यप्रतिबिम्बत्वेन रूपेणात्यन्तिकभेद एव वर्त्तते। तदुक्तं भामत्याम्—"कार्यात्मना तु नानात्वमभेदः कारणात्मने"ति। तथाच प्रतिबिम्बविशेषस्य प्रतिबिम्बान्तरतापत्तिर्बिम्बभावापत्तिरिव कुत्रापि न दृश्यत इति नोक्ताशङ्केति भावः॥

ननु लोके जलाशयादिगतानां प्रतिबिम्बानां तन्न्यूनपरिमाणत्वमेव दृश्यत इति, मायाप्रतिबिम्बस्येश्वरस्यापि ततो न्यूनपरिमाणत्वापत्तिरित्यत आह—अविद्यात्मकोपाधेर्व्यापकतयेति। अघटितघटनापटीयस्या मायाया उपाधिभूतायाः ब्रह्मणि स्वपरिमाणसमपरिमाणप्रयोजकत्वं हि न पर्यनुयोगार्हम्। जलाशयस्तु न तादृश इति न दोषः। यद्वा—ननु माया, ब्रह्मपरिमाणाधिकपरिमाणा, उपाधित्वात्, सूर्यादिप्रतिबिम्बोपाधिजलाशयवदित्याशङ्क्य परिमित-

अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम्।

एतन्मते अविद्याकृतदोषा जीवे इव परमेश्वरेऽपि स्युः; उपाधेः प्रतिबिम्बपक्षपातित्वादित्यस्वरसात् बिम्बात्मकमीश्वरचैतन्यमिति अपरे ।

तेषामयमाशयः—एकमेव चैतन्यं बिम्बत्वाक्रान्तमीश्वरचैतन्यं प्रतिबिम्बत्वाक्रान्तं जीवचैतन्यम् । बिम्बप्रतिबिम्बकल्पनोपाधिश्च एकजीववादेऽविद्या, अनेकजीववादे तु अन्तःकरणान्येव, अविद्यान्तःकरणरूपोपाधिप्रयुक्तो जीवपरभेदः । उपाधिकृतदोषाश्च प्रतिबिम्बे जीव एव वर्तन्ते, न तु बिम्बे परमेश्वरे ; उपाधेः प्रतिबिम्बपक्षपातित्वात् । एतन्मते च गगनसूर्यस्य जलादौ भासमानप्रतिबिम्बसूर्यस्य चैव जीवपरयोः भेदः ।

शक्तित्वरूपोपाधिग्रस्तत्वादुक्तानुमानाप्रवृत्तिं दर्शयति—अविद्यात्मकेति । दोषाः कारणत्वादयः । ईश्वरेऽपि स्युरिति । तदुक्तं वार्तिके—"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् । अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते"—इति । अत्र कारणत्वादय इत्यादिपदेन सुखदुःखभोगादिविवक्षणात् न जीवेश्वरवैषम्यापत्तिरित्यस्वरसाशयः । सर्वथा तु जगत्कारणत्वादितटस्थलक्षणतोक्तपक्षे स्वरसं भवतीति नायं पक्षोऽपि सर्वात्मना हेयः ।

अपरे इति । अस्मिन् मते तु शुकादिमुक्तिर्नाम कारणरूपेश्वरभावापत्तिरेवेति यद्यपि कारणत्वतटस्थलक्षणताव्यवहारः पूर्वोक्तरीत्याऽनुपपन्न इव भाति; तथाऽपि एतन्मतेऽपि एकजीववादेऽनेकजीववादेऽपि सर्वमुक्त्यनन्तरं निर्गुणब्रह्मभावो भवितेति नात्रापि कारणत्वतटस्थलक्षणताव्यवहारानुपपत्तिरिति मन्तव्यम् । तदिदं सर्वं सूचयन्नाह—तेषामयमाशय इति । एकजीववाद इति । अनेकजीववाद इति । गगनसूर्यस्येति । बिम्बभूतसूर्यस्येत्यर्थः । प्रतिबिम्बसूर्यस्येवेति । भेद इति । काल्पनिक

ननु ग्रीवास्थमुखदर्पणप्रदेश इव बिम्बचैतन्यस्य परमेश्वरस्य जीवप्रदेशेऽभावात् तस्य सर्वान्तर्यामित्वं न स्यादिति चेत्, न ; साभ्रनक्षत्रस्याकाशस्य जलादौ प्रतिबिम्बितत्वेऽपि बिम्बभूत-महाकाशस्यापि जलादिप्रदेशसम्बन्धदर्शनेन परिच्छिन्नबिम्बस्य प्रतिबिम्बदेशासम्बन्धित्वेऽप्यपरिच्छिन्नब्रह्मबिम्बस्य प्रतिबिम्ब-देशसम्बन्धाविरोधात् ।

न च—रूपहीनस्य ब्रह्मणो न प्रतिबिम्बसम्भवः, रूपवत एव तथात्वदर्शनादिति—वाच्यम् ; नीरूपस्यापि रूपस्य प्रतिबिम्ब-दर्शनात् । न च नीरूपस्य द्रव्यस्य प्रतिबिम्बाभावनियमः ; आत्मनो द्रव्यत्वाभावस्योक्तत्वात् ।

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

इति शेषः। यथाच बिम्बप्रतिबिम्बयोरैकता, तथाऽऽशुबोधिन्यां स्पष्टं विविचितम् ।

अत्र विवरणाभिमतबिम्बप्रतिबिम्बभावस्यैवानुसन्धानेन हि परिभाषा-काराः भामत्यभिमतेऽवच्छेदवादे स्वस्यासंमतिं सूचयन्ति। तन्निमित्तं तु अवच्छेदपक्षे ईश्वरस्य सर्वान्तर्यामित्वानुपपत्तिः। न हि जीवे मायावच्छिन्न-चैतन्यस्य प्रवेशः संभवतीति। नन्वेवं सति न जीव ईश्वरप्रतिबिम्बतामप्यर्हति ; अवच्छेदपक्ष इव प्रतिबिम्बपक्षेऽपि ईश्वरस्य सर्वान्तर्यामित्वासंभवादिति शङ्कते—**नन्विति।** ननु मुखरूपं बिम्बं परिच्छिन्नमतो न दर्पणदेशगं भवितुमर्हति, ब्रह्म तु व्यापकत्वात्प्रतिबिम्बदेशसम्बन्ध्यपि न कथं भविष्यतीत्याशयेन समाधत्ते—**साभ्रनक्षत्रस्येति। आकाशस्येति।** अन्यथा जलान्तर्वैशाल्याद्यनुभव-विरोध इति भावः। नीरूपत्वेऽपि ब्रह्मणस्तस्याद्रव्यत्वात् रूपस्येव प्रतिफलन-

यथा ह्ययं ज्योतिरात्मा विवस्वान्
अपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥"

इति वाक्येन ब्रह्मप्रतिबिम्बभावानुमानस्य बाधितत्वाच्च ।

तदेवं तत्पदार्थो निरूपितः ।

इदानीं त्वम्पदार्थो निरूप्यते ।

एकजीववादेऽविद्याप्रतिबिम्बो जीवः, अनेकजीववादे तु अन्तःकरणप्रतिबिम्बः । स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थावयवान् । तत्र जाग्रद्दशा नाम इन्द्रियजन्यज्ञानावस्था ;

संभव इत्याक्षेपसमाधानाभ्यामाह—न चेत्यादिना—उक्तत्वादित्यन्तेन ॥ जीवस्येश्वरप्रतिबिम्बत्वे श्रुतिमपि प्रमाणं दर्शयति—एकधेति ।

तत्पदार्थः शक्यो लक्ष्यश्च तत्पदार्थ इति भावः । शुद्धचैतन्यस्य तत्पदलक्ष्यार्थस्य परमेश्वरस्य तत्पदवाच्यार्थस्य च येन त्वंपदार्थेनाभेदो विवक्षितः, स जीवः क इत्यत आह—इदानीमिति । तत्त्वमसीत्यत्र त्वंपदार्थस्यैवोद्देश्यत्वेनार्थक्रमेण प्रथमत्वेऽपि पाठक्रमात् प्रथमस्य तत्पदार्थस्य निरूपणानन्तरमित्यर्थः ।

शुद्धचैतन्येनैकतारूपमुक्तियोग्यं जीवस्वरूपमाह—एकजीववादे इति । तदुक्तं सिद्धान्तलेशसंग्रहे—एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयात् निर्विशेषचैतन्यरूपेणावस्थानमिति ।

ईश्वरभावापत्तिरूपमुक्तियोग्यं जीवस्वरूपमाह—अनेकेति । अन्तःकरणेति । तथाचान्तःकरणसम्बन्धविलय एवानेकजीववादे मुक्तिरिति भावः । अस्मिन् मते च—"मायामेतां तरन्ति ते" इत्यत्र तरन्तिपदं यथाश्रुतार्थमपि न विरुद्धमिति भाति ।

अवस्थान्तर इन्द्रियाभावात् नातिव्याप्तिः। इन्द्रियजन्यज्ञानस्वा-न्तःकरणवृत्तिः; स्वरूपज्ञानस्यानादित्वात्।

सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम्।

तत्र तत्पदलक्ष्यार्थस्य कारणत्वं यथा तटस्थलक्षणम्, सत्यादिकं च स्वरूप-लक्षणमिवं जीवस्यापि तदुभयं वक्तव्यमित्याशयेन जीवं तटस्थलक्षणलक्षितमाह—सचेति। तथाच जाग्रद्दशादिकं जीवस्य तटस्थलक्षणमिति भावः। तत्र जाग्रदादिदशालक्षणमाह—तत्रेत्यादिना।

ननु सुप्तेऽपि इन्द्रियजन्यमेव ज्ञानं वर्तत इति तत्रातिव्याप्तिरित्यत आह—अवस्थान्तर इति। स्वप्ने इत्यर्थः। तत्राविद्यकवृत्तिरेव वर्तते, नेन्द्रियवृत्तिः येषां मते सुषुप्ताविवाविद्यकवृत्तिः, स्वप्ने तु मनोवृत्तिरेवेति मतम्, तेषामपि मते मनोऽनिन्द्रियत्वस्य व्यवस्थापनान्नातिव्याप्तिरिति भावः। तदेतदाह—इन्द्रियाभावादिति। ननु ज्ञानस्य ब्रह्मरूपत्वेन नित्यत्वात् कथं जन्यत्वमित्याशङ्कायामाह—इन्द्रियेति। अन्तःकरणवृत्तिः विषयदेश-संयुक्तान्तःकरणभागः। अत्रान्तःकरणपदेनाविद्याया व्यावृत्तिः। आविद्यक-वृत्तिर्हि न कदापीन्द्रियजन्या भवतीति तद्भावः। एतेन स्वप्नेऽप्यविद्यावृत्तिरेव, नान्तःकरणवृत्तिरिति मतमेव विवक्षितमिति न दोषः।

ननु अन्तःकरणवृत्तिः किमर्थमूरीक्रियते? यतः सर्वेषां पदार्थानां साक्षि-प्रकाशादेव प्रकाशः संभवति। घटादिविषयसंस्काराधानमनित्यवृत्तिं विना न संभवतीति चेत्, भवतु कथमपि वृत्त्यङ्गीकारः, तस्या बहिर्निर्गमवादोऽयमसङ्गत एव; परोक्षस्थल इव विनापि वृत्तिनिर्गमं प्रकाशसंभवात्। यथाहि शाब्द-परोक्षस्यानुमानिकपरोक्षस्य च भेदः करणभेदनिबन्धनः, एवं प्रत्यक्षपरोक्षभेदोऽपि तन्निबन्धनः सेत्स्यत्येवेत्यत आह—सा चेति। आवरणाभिभवार्थेति। शब्दानुमानावगतेभ्यः प्रत्यक्षावगते स्पष्टता तावदनुभूयते। सा च प्रत्यक्षग्राह्ये-ऽभिव्यक्तचैतन्यावगुण्ठनमन्यत्र परोक्षग्राह्ये न तदित्यत एव निर्वहणीया। चैतन्याभिव्यक्तिश्च चैतन्यावरणाभिभवमन्तरा न संभवति। स चावरणाभिभवः ज्ञानाज्ञानयोरुभयोरपि समानाश्रयत्वमन्तरा न संभवतीति तत्संपादनार्थं वृत्ति-

तथाहि—अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम् । एवं सति न सर्वदा घटादेर्भानप्रसङ्गः ; अनावृतचैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात् । तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रम् ;

निर्गमोऽपेक्ष्यते । सति हि तस्मिन् विषयान्तःकरणवृत्तीनामेकचैतन्यावच्छेदकत्वेन विषयचैतन्यं प्रमातृचैतन्यं चैकं भवतीति विषयाश्रितं ज्ञानं प्रमात्राश्रितमज्ञानं च समानाश्रयं भवति । अन्यथा भिन्नाश्रयत्वात् समानाश्रयत्वं कदापि प्रयोजकं न स्यात् । तथाच सति देवदत्तीयघटज्ञानात् यज्ञदत्तीयघटाज्ञानस्यापि निवृत्त्यापत्तिः, अधिकं सिद्धान्तलेशसंग्रहे व्यक्तम् । तथाच विना चैतन्याभिव्यञ्जनं स्पष्टतानिर्वाहो न भवतीति तदुपपत्त्यर्थं वृत्तिनिर्गमोऽपेक्ष्यत एवेति भावः । यत्तु सिद्धान्तलेशसंग्रहेऽभेदाभिव्यंजनार्था वृत्तिः, चिदुपरागार्था वृत्तिः, आवरणाभिभवार्था वृत्तिरिति मतत्रयमुपवर्णितम्, तत्र चिदुपरागार्थत्वपक्षो मूल एव स्पष्टीभविष्यति, अभेदाभिव्यक्त्यर्था वृत्तिरिति न मतान्तरम्, यतः—चिदुपरागार्थत्वपक्षस्यैव जीवपरिच्छिन्नत्वपक्षेऽभेदभिव्यक्त्यर्था वृत्तिरिति नामान्तरेण व्यपदेश इति जीवस्य सर्वगतत्वे प्रथमः, तत्परिच्छिन्नत्वे सति द्वितीयः इति स्पष्टं सिद्धान्तलेशसङ्ग्रह एवोपवर्णितमिति ।

ननु घटादिस्पष्टताप्रतीतिनिर्वाहार्थमावरणाभिभवार्था वृत्तिरिति न युक्तम् । तथाहि—आवरणाभिभवो नामाज्ञाननिवृत्तिः, सा च घटे घटावच्छिन्नचैतन्ये वाऽज्ञानस्य सत्त्व एव संभवति, नान्यथा ; तत्र घटस्य जडस्याज्ञानाश्रयत्वं न संभवति ; तदवच्छिन्नचैतन्यमपि नाज्ञानाश्रयः ; "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले"ति निर्विशेषचैतन्यस्यैव तदाश्रयत्वात् । यदि तु अज्ञानस्य ब्रह्म विषयः, जीवस्तु चाश्रयः, अहमज्ञ इत्याद्यनुभवात्, एवंचाविद्योपहितचैतन्यस्यैव जीवत्वमिति पक्षे जीवस्यैव मङ्गलश्लोकव्याख्यावसर उपपादितरीत्या घटादि-

तद्भासकस्य तदनिवर्त्तकत्वात्, नापि वृत्त्युपहितं चैतन्यम्; परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वाऽऽवरणभङ्गजनकत्वमिति, आवरणाभिभवार्था वृत्तिरित्युच्यते ।

विवर्तकारणत्वेन घटावच्छिन्नचैतन्यस्यैव जीवरूपतया जीवस्यैव घटादीनामप्यज्ञानाश्रयत्वं संभवतीत्युच्यते, तर्हि साधु समर्थितं वृत्तिनिर्गमस्य प्रयोजनम् । यतो हि उक्तपक्षे विनाऽपि वृत्तिनिर्गमं घटं जानामीति प्रत्ययो भवतीति सर्वदा घटादिभानप्रसङ्ग इत्याशङ्कामनुवदति—**अविद्येत्यादिना—प्रसक्ताविन्त्यन्तेन ।** **जीवरूपतयेति ।** जीवकारणतापक्षेऽभेदस्य स्वतः सिद्धत्वात् चिदुपरागो नापेक्षित इति तस्मिन्नेव पक्षे केवलावरणाभिभवार्था वृत्तिरिति फलितम् । सत्यसुकरीत्या घटादीनां सर्वदा भानप्रसङ्गः, अयं च प्रसङ्गो मतद्वयेऽपि वारणीय इति तदुपपत्त्यर्थं घटावच्छिन्नचैतन्यगतमवस्थाज्ञानमन्यदुभाभ्यामप्युरीकर्तव्यमिति तदावरणाभिभवार्था वृत्तिरिति नोक्ताशङ्कावसर इत्याह—**घटादीति ।** ननु—अवस्थाज्ञाननाशः केवलचैतन्येनैव भवतु, मुख्यज्ञानत्वेन तस्यैवाज्ञानविरोधित्वादित्याशङ्क्याह—**न चैतन्येति ।** मुख्यज्ञानमपि चैतन्यं नाज्ञानविरोधि; शुक्तिरजतादिस्थले हि अधिष्ठानातिरिक्तस्यैव ज्ञानस्याज्ञाननिवर्तकत्वं दृष्टम्, नतु अधिष्ठानस्येति तन्न्यायेन शुद्धचैतन्यमप्यधिष्ठानं न स्वतोऽज्ञाननिवर्तकम्, किन्तु वृत्त्यभिव्यक्तमेव। यथाहि केवलानां सूर्यकिरणानामदाहकत्वेऽपि सूर्यकान्तप्रतिफलितानां तेषां दाहकत्वम्, एवमत्रापि केवलचैतन्यस्याज्ञानानिवर्तकत्वेऽपि वृत्तिफलितस्य चैतन्यस्यैवाज्ञानविरोधित्वमिति वृत्तिनिर्गमोऽज्ञाननिवर्तनार्थमपेक्ष्यते; अन्यथा चैतन्यस्यैवाज्ञानविरोधित्वात् अज्ञानदारकब्रह्मकारणतैव न समर्थ्येतेति न चैतन्यमात्रमज्ञानविरोधि, प्रत्युत तद्भासकत्वात्तदनुगुणमेवेत्याह—**तद्भासकस्येति ।** चैतन्यावरकस्याप्यज्ञानस्य चैतन्यभास्यत्वं स्वावृतचन्द्रप्रकाश्यत्वमिव राहोः संभवतीति भावः । ननु भवतु वृत्त्युपहितचैतन्यमेवाज्ञानविरोधि, एवमपि तन्निर्गमवैयर्थ्यमित्याशङ्क्य समाधत्ते—**न च वृत्त्युपहितमिति ।** निर्गतवृत्त्युपहितमित्यर्थः । वृत्तिनिर्गमनाभावे दोषमाह—**परोक्षेति ।**

सम्बन्धार्था वृत्तिरित्यपरं मतम् । तत्राविद्योपाधिकोऽपरिच्छिन्नो जीवः, स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति ; घटादिना समं सम्बन्धाभावात्, तत्तदाकारवृत्तिदशायां तु भासयति ; तदा सम्बन्धसत्त्वात् ।

अत्र आवरणाभिभवार्थेत्यनेनावरणाभिभवमात्रार्थेत्यर्थ एव विवक्षणीयः, अन्यथा चिदुपरागार्था वृत्तिरिति पक्षेऽप्यावरणाभिभवार्थत्वस्य विद्यमानत्वात् विभजनमिदमसङ्गतं स्यात् । अत एवाविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यवच्छिन्नचैतन्यस्य जीवरूपतयेति मूलमुपपद्यते । अनेन घटादीनां साक्षिचैतन्यरूपजीवोपरागः स्वतः सिद्ध एव वर्तते इति वृत्तेश्चिदुपरागपर्यन्तं व्यापारो वितथ एवेति, आवरणाभिभवमात्रार्थत्वं वृत्तेरिति स्पष्टमेव सूच्यते इति निष्कर्षः ।

ननु अज्ञानस्य जीवाश्रयत्वपक्षे जीवविवर्तकारणताऽपि न सम्मता ; अज्ञानविषयस्यैव विवर्तकारणत्वात् । उपपादितं चेदं मङ्गलश्लोकव्याख्यावसरे कल्पतर्वाद्यवलम्बनेन विशदमिति नात्र पिष्टं पेषयामः । तथाचावरणाभिभवमात्रेण घटमहं जानामीत्यादिव्यपदेशो न भवतीति प्रमात्रुपरागार्था वृत्तिरित्येव युक्तम् । यथा चात्राप्यावरणाभिभवार्थत्वमपि वर्तते, तथा सिद्धान्तबिन्दुतट्टीकयोर्व्यक्तमित्यभिप्रायं मतान्तरं संगृह्णाति—**सम्बन्धार्थेति** । चिदुपरागार्थेत्यर्थः ।

ननु—अविद्यावच्छिन्नस्य जीवस्य ब्रह्मकारणतापक्षेऽपि घटादिना वृत्तिनिर्गमाभावेऽपि सम्बन्धो वर्तते इति किमर्थो वृत्तिनिर्गम इति—चेत्, चिदुपरागपदेन हि न जीवोपरागोऽत्र विवक्ष्यते, किन्तु प्रमातृचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदः, तत्रान्तःकरणावच्छिन्नचैतन्यस्यैव प्रमातृत्वात् विषयचैतन्यप्रमातृचैतन्ययोरभेदः कथं विना वृत्तिनिर्गमं भवतीति भावः । तमिममर्थं मनसि निधायाह—**स चेत्यादिना** । पूर्वोक्तमेवार्थमाक्षेपसमाधानाभ्यां विशदयति—**नन्विति** । **सम्बन्धविशेषमिति** । प्रकाशकविषयचैतन्याभिन्नप्रमातृचैतन्यवत्त्वमित्यर्थः । अविद्यावच्छिन्नचैतन्यं यथा व्यापकं न तथा प्रमातृचैतन्यमिति न दोषः ।

नन्वविद्योपाधिकस्यापरिच्छिन्नजीवस्य स्वत एव समस्तवस्तुसम्बद्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानमसङ्गतम्; असङ्गत्वदृष्ट्या च सम्बन्धाभावाभिधाने वृत्त्यनन्तरमपि सम्बन्धो न स्यादिति चेत्, उच्यते; न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः, किं तर्हि? घटादिभानप्रयोजकं सम्बन्धविशेषम्। स च सम्बन्धविशेषो विषयस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकभावलक्षणः कादाचित्कस्तदाकारवृत्तिनिबन्धनः।

तथाहि—तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव जीवचैतन्याभिव्यञ्जनसमर्थम्, घटादिकन्तु न तथा; अस्वच्छद्रव्यत्वात्। स्वाकारवृत्तिसंयोगदशायान्तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युपहितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति। तदुक्तं विवरणे—"अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयती"ति। दृष्टञ्चास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसम्बन्ध-

ननूक्तोपराग एव स्पष्टप्रतीतिप्रयोजक इति कुत इति चेत्, अन्वयव्यतिरेकाभ्यामिति गृहाण। अयोक्तविधोपरागसत्त्वे स्पष्टताप्रतीतिरन्यथा नेत्यन्वयव्यतिरेकौ सर्वविदितावेव। नन्वत्र वृत्तिनिर्गमस्य काऽपेक्षेत्यत आह—सचेति। उपपादयति—तथाहीति।

ननु चैतन्यं केवलघटाद्युपहितं न भासते, वृत्त्युपहितघटाद्युपहितं तु भासत इत्यत्र किं विनिगमकमित्यत आह—तैजसमिति। अन्तःकरणावच्छिन्नचैतन्यं हि विनाऽपि वृत्तिं सर्वदा भासते। अत एवान्तःकरणं प्रातिभासिक-

दशायां प्रतिबिम्बग्राहित्वम् । यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिबिम्बग्राहिता । घटादेरभिव्यञ्जकत्वञ्च तत्प्रतिबिम्बग्राहित्वम् । चैतन्याभिव्यक्तत्वञ्च तत्र प्रतिबिम्बितत्वम् । एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्निर्गमनाङ्गीकारः, परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्याभिव्यञ्जकतया नापरोक्षत्वम् । एतन्मते विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम् । एवं जीवस्यापरिच्छिन्नत्वेऽपि वृत्तेः सम्बन्धार्थत्वं निरूपितम् ।

इदानीं परिच्छिन्नत्वपक्षे सम्बन्धार्थत्वं निरूप्यते । तथाहि —अन्तःकरणोपाधिको जीवः । तस्य च न घटाद्युपादानता ;

मिति सिद्धान्तः । तथाच जल इव जलोपहितघटादावपि प्रतिफलनं सूर्य्यादेरिवान्तःकरणे तदुपहितघटादौ च चैतन्यप्रतिफलनं युक्तमेवेति भावः ।

अमुमेव भावं विशदयति—**स्वच्छेत्यादिना—प्रतिबिम्बग्राहित्वम्** इत्यन्तेन । **एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थम्** वृत्तिसम्बन्धप्रयुक्तचैतन्यप्रतिफलनार्थम् । एवं च दृष्टान्ते घटादावपि सूर्यादिप्रतिफलनमेव विवक्षितम्, दार्ष्टान्तिकेऽपि चैतन्यप्रतिफलनमेव विवक्षितमिति न दृष्टान्तदार्ष्टान्तिकयोरसाधर्म्यशङ्केति भावः । ननु परोक्षस्थलेऽपि वह्न्याकारवृत्त्यङ्गीकारात् कथं प्रत्यक्षपरोक्षविवेकः इत्याशङ्क्याह—**परोक्षस्थले त्विति** । विवेकहेतुमाह—**वृत्तिनिर्गमाभावेनेति । चैतन्यानभिव्यञ्जकतयेति** । यथा कुड्यासंयोगेऽपि देशान्तरे जलसत्त्वमात्रेण कुड्यादौ न सूर्यादिप्रतिफलनमेवमत्रापीति भावः । **विषयाणाम्** घटादीनाम् । **एतन्मते** अविद्योपहितचैतन्यस्य जीवत्वं वृत्तेश्चिदुपरागार्थत्वं चेति पक्षे इत्यर्थः । यत्तु प्रमातृचैतन्याभिन्नत्वं विषयप्रत्यक्षत्वप्रयोजकमिति प्रागुक्तम्, तत् घटावच्छिन्नादिचैतन्याभिप्रायमिति न विरोधः ।

घटादिदेशासम्बन्धात्, किन्तु ब्रह्मैव घटाद्युपादानम्; तस्य मायोपहितचैतन्यस्य सकलघटाद्यन्वयित्वात्। अत एव ब्रह्मणः सर्वज्ञता। तथाच जीवस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदमन्तरेण घटाद्यवभासासम्भवे प्राप्ते तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभेदसिद्ध्यर्थं घटाद्याकारवृत्तिरिष्यते। ननु वृत्त्यापि कथं प्रमातृविषयचैतन्ययोरभेदः सम्पाद्यते? घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्नचैतन्ययोरभेदासम्भवादिति चेन्न; वृत्तेर्बहिर्देशनिर्गमनाङ्गीकारेण वृत्त्यन्तःकरणविषयाणामेकदेशस्थत्वेनोपधेयभेदाभावस्योक्तत्वात्। एवमपरोक्षस्थले मतभेदेन वृत्तेर्विनियोग उपपादितः।

इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्ना-

यदाऽपरिच्छिन्नत्वपक्षे जीवस्य चिदुपरागार्थमस्ति वृत्तेरपेक्षा, तदा किमु वक्तव्यं जीवपरिच्छेदपक्षे? इत्यभिप्रायेणाह—इदानीमिति। अविद्यावच्छिन्नपक्षे जीवस्य विवर्त्तकारणतापक्ष एको यथा वर्त्तते, न तथा परिच्छेदपक्षे स वर्त्तते इति ब्रह्मैव घटाद्यवच्छिन्नचैतन्यमिति सर्वसम्मतमिति सूचयन्नाह—किन्तु ब्रह्मैवेति। सर्वज्ञता सर्वतादात्म्यापन्नचैतन्यरूपत्वम्। अस्मिन् मते जीवस्य सम्बन्धसामान्यमपि वृत्तिनिर्गमनिबन्धनमेवेति स्थिते कथं तद्विशेषसिद्ध्यर्थमपि न तदपेक्षेत्यभिप्रायेणाह—तथाचेति। ननु वृत्त्याऽपीत्यादि उपपादित इत्यन्तं स्पष्टार्थम्॥

अथ क्रमप्राप्तां स्वप्नावस्थां लक्षयति—इन्द्रियाजन्येति। इन्द्रियाजन्या इन्द्रियव्यापारोपरमकालीना, विषयगोचरा अधिष्ठानाकारा, अपरोक्षान्तःकरणवृत्तिः, नित्यापरोक्षान्तःकरणावस्थाविशेषः स्वप्नावस्थेत्यर्थः। अत्र सुखादिविषयकापरोक्षान्तःकरणवृत्तिर्जाग्रद्दशायामपि विद्यत इत्यतिव्याप्तिवारणार्थं-

वस्था । जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति । अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्तिवारणायान्तःकरणेति । सुषुप्तिर्नामाविद्यागोचरा-

मिन्द्रियाजन्येति । यत्तु अत्राशुबोधिन्याम्—विषयाकारेत्यस्य घटाद्याकारेति विवरणम्, तदिदं स्वप्ने कल्पितानां गजादीनामाविद्यकवृत्तिविषयत्वमेव स्वीक्रियतेऽद्वैतिभिः शुक्तिरजतादीनामिव प्रातिभासिकानामिति घटाद्याकारान्तःकरणवृत्तेः स्वप्नेऽभावात् चिन्त्योपपत्तिकम् ।

एतेन—स्वप्नस्थानोऽन्तःप्रज्ञः इति माण्डूक्यकारिकाभाष्यगतानि—"स्वप्नः स्थानमस्य तैजसस्य स स्वप्नस्थानः । जाग्रत्प्रज्ञानेकसाधना बहिर्विषयेवावभासमाना मनःस्पन्दनमात्रा सती तथाभूतं संस्कारं मनस्याधत्ते । तन्मनः तथा संस्कृतमविद्याकामकर्मभिः प्रेर्यमाणं जाग्रद्वदवभासते" इति वाक्यानि, प्रश्नोपनिषद्भाष्यगतानि—यस्मिन् पुत्रादि वा पूर्वं दृष्टं तद्वासनासहितः पुत्रमिव मित्रमिवाविद्यया पश्यती"ति—वाक्यानि च व्याख्यातानि; तत्र पूर्वतनभाष्येऽविद्यासहितमनःपरिणामत्वं स्वाप्निकप्रपञ्चस्य यत् बोधितम्, तदिदमुत्तरभाष्यैकरूप्यार्थम् मनःसहिताविद्यापरिणामत्वपरमित्येवोरीकर्तव्यम् ; अन्यथा स्वाप्निकानामसत्यत्वानापत्तेः । जाग्रद्दशायामपि यद्यपि अधिष्ठानगोचराऽपरोक्षान्तःकरणवृत्तिर्वर्तते, तथापि नेन्द्रियव्यापारोपरम इति नातिव्याप्तिः । अत्रान्तःकरणपदमविद्यावृत्तिरूपसुषुप्तावतिव्याप्तिवारणार्थम् ; तत्रापीन्द्रियव्यापारोपरमो हि वर्तत एव । तदिदमाह—अविद्येति । यद्यत्राशुबोधिनीरीत्या विषयपदस्य घटादिपरत्वं विवक्षितं स्यात्, तदा न केवलं पूर्वोक्तरीत्याऽसंभवः, किन्तु सुषुप्तौ विषयगोचराविद्यावृत्त्या अनङ्गीकारादुत्तरग्रन्थविरोधोऽपि । यदि तु अविद्याया अपि घटादीत्यादिपदार्थत्वेनोत्तरग्रन्थसमर्थनम्, तर्हि तु यद्यपि नोक्तं दूषणमन्तिमम्, प्रथमदूषणं त्वपरिहरणीयमेव । दृष्टो हि विषयपदस्याधिष्ठानमित्यस्मिन्नर्थे प्रयोगः । "समारोपस्य रूपेण विषयी न तु रूपवान् । विषयस्य तु रूपेण समारोपस्तु रूपवानि"ति भामत्यादाविति न दोषः ।

सुषुप्तिं लक्षयति—सुषुप्तिरिति । अविद्यागोचरा अविद्याविषयिणी अविद्यावृत्तिराविद्यकवृत्तिस्सुषुप्तिरिति वाक्यार्थः । अविद्यावृत्त्यवस्था सुषुप्ति-

विद्यावृत्त्यवस्था। जाग्रत्स्वप्नयोरविद्याकारवृत्तेरन्तःकरणवृत्तित्वान्न तत्रातिव्याप्तिः।

अत्र केचित् मरणमूर्च्छयोरवस्थान्तरत्वमाहुः। अपरे

रित्युक्ते स्वप्नजागरितयोरतिव्याप्तिः, उभयोरपि शुक्तिरजतस्वाप्निकगजादि-गोचराविद्यावृत्तेरभ्युपगमात्; अतोऽविद्यागोचरेत्युक्तम्। एवञ्च जाग्रत्स्वप्नयो-रविद्यागोचरा वृत्तिरन्तःकरणवृत्तिरेवेति नातिव्याप्तिरित्याह—जाग्रदिति। यद्यपि साक्षिभास्यत्वात् अविद्याया न वृत्त्यपेक्षा; तथापि नहि वृत्तिं विना साक्षि-भास्यत्वं साक्षिभास्यत्वम्, किन्तु प्रमाणव्यापारापेक्षां विनेति मूल एव प्रथममुक्तत्वात् न वृत्त्यङ्गीकारेऽपि क्षतिः। ननु—अविद्याकारान्तःकरणवृत्तिः किमर्था? अविद्यावृत्त्यैव भानसंभवात्। दृष्टं हि अन्तःकरणादीनां स्ववृत्त्यैव भानमित्यत आह—अन्तःकरणवृत्तित्वादिति। यत्रान्तःकरणपरिणामत्वस्य सुतरामसम्भवस्तत्रैवाविद्यावृत्तिरुरीकरणीया, प्रकृते तु अविद्याकारान्तःकरणपरि-णामोऽपि सम्भवतीति तदाकारत्वमेव जाग्रत्कालिकाविद्यावृत्तेरितीति भावः।

एतावता प्रपञ्चेन जाग्रदाद्यवस्थात्रयान्यतमवत्त्वं जीवस्य तटस्थलक्षणमिति सूचितम्। तथाच विश्वतैजसप्राज्ञानां त्रयाणामपि जीवत्वमेवेति विराट्-हिरण्यगर्भान्तर्यामिणां त्रयाणामिवैषामप्युपाधिविलये केवलचिद्रूपत्वमेव मुख्य-मिति सिद्धम्। एवञ्च ईश्वरे यथा सृष्टिस्थितिसंहारकारणत्वं त्रितयमपि एककार्यनिरूपितमेकदैव न सम्भवतीति त्रितयान्यतमवत्त्वमेवानतिप्रसक्तं लक्षणम्, एकैकलक्षणतायां तु स्थितिकारणतावसरे सृष्टिकारणत्वाभाव इति रीत्याऽसंभव एव स्यात्, एवमत्रापीति कादाचित्कं जाग्रदादिकमेकैकं तटस्थलक्षणमेवोरीकर्तव्यम्, न तु स्वरूपलक्षणम्। तदेव स्वरूपलक्षणं भवितुमर्हति, यत् कदापि स्वरूपं न व्यभिचरति। न च कारणत्वं जाग्रदादि वा न स्वरूपं व्यभिचरति; अतस्तेषां तटस्थलक्षणत्वमेव युक्तम्। ईश्वरस्य जीवस्य च लक्षणत्रयमभिधाय तत्त्वमसीति-महावाक्ये पदत्रयप्रयोगेण हीदमेवावगम्यते, यत् त्रिविधजीवेश्वरयोरौपाधिकावस्था-विनिर्मुक्तानाविकतैव सिद्धा भवतीत्यद्वैत एव परमं तात्पर्यं कारणवाक्यानाम्, किं बहुना सर्वासामुपनिषदामिति।

ननु जीवस्य नावस्थात्रयवत्त्वमात्रम्, मरणमूर्च्छयोरपि अवस्थयोस्तत्र

सुषुप्तावेव तयोरन्तर्भावमाहुः। तत्र तयोरवस्थात्रयान्तर्भाव-बहिर्भावयोस्त्वम्पदार्थनिरूपणे उपयोगाभावान्न तत्र यत्यते। तस्य मायोपाध्यपेक्षयैकत्वम्, अन्तःकरणोपाध्यपेक्षया नानात्वं

मस्त्वादिति केचन मन्यन्त इति नेदं पूर्वोक्तमुपपन्नमित्याशङ्कासूचनपूर्वकमाह—अत्रेति। अवस्थासु मध्ये इत्यर्थः। स्वाभिमतं मतमत्र निरूपयति—अपरे त्विति। ननु का वा विनिगमना भवतां मते, येनावस्थात्रय एवान्यासामन्तर्भावः कथ्यते? न कापि भवद्भिर्निरूपयितुं शक्यते इति चेत्, नेदमस्माकमिदानीं विचारणीयं का वा विनिगमना कुत्रेति, यतोहि पक्षद्वयेऽपि जाग्रदाद्यवस्थायास्तटस्थलक्षणत्वं सिद्धत्येवेति प्रकृतानुपयोगात्तत्र यत्नः क्रियत इत्याह—तत्रेति। अवस्थाभेदेन स्वरूपभेदं कृत्वाचिन्तया स्वीकृत्य पूर्वं चितयान्यतमस्य लक्षणत्वमुक्तम्, इदानीं तु नावस्थाभेदेन स्वरूपभेद इति परमार्थगतिमभिसन्धायोपयोगाभावो मन्यत इति न विरोधः। न यत्यत इति। यथाहीश्वर एक एव, न तथा जीवः, सत्यं जीवस्य मायोपाधिकत्वे एकत्वम्, एवमप्यन्तःकरणोपाधिकत्वे न तदित्याह—तस्य चेति। एतेन—नानात्वस्यौपाधिकत्वविवक्षणेन। अत्र नानात्वमित्युत्पत्त्यादेरप्युपलक्षणम्; तस्याप्यौपाधिकत्वात्। तदुक्तम्—"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वादि"ति। अनेन हि सूत्रेण जीव एकत्वश्रुतिरनेकत्वश्रुतिरुत्पत्तिश्रुतिर्नित्यत्वश्रुतिश्च परस्परविरोधे एकमौपाधिकम्, अपरं पारमार्थिकमिति निरूप्यते। अधिकमाकरे व्यक्तम्। अणुत्वं स्वाभाविकं परिच्छिन्नत्वम्। प्रत्युक्तम् निरस्तम्।

ननु जीवो हि ब्रह्माभिन्नः स्वत एको व्यापकश्चेति वदतामद्वैतिनामपि जाग्रदाद्यवस्थाविशिष्टो न विभुरिति सम्मतम्, तस्य ब्रह्माभेदाद्यभावात्, परिच्छिन्नत्वाच्चेति कथं जीवस्य नाणुत्वमिति चेदत्रेदं प्रष्टव्यम्—कथं परिच्छिन्नत्वाङ्गीकारमात्रेणाणुत्वं जीवस्य संभवति। न हि परिच्छिन्नं सर्वमणुपरिमाणं दृष्टम्; गगनो व्यभिचारात्। अतो मध्यमपरिमाणत्वं चोताणुपरिमाणत्वं वेति संशये स्वतो व्यापकस्य जीवस्यौपाधिकमेव परिमाणं यतोऽङ्गीकर्तव्यं ततो

व्यवह्रियते। एतेन जीवस्याणुत्वं प्रत्युक्तम्; "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्यादौ जीवस्य बुद्धिशब्द-वाच्यान्तःकरणपरिमाणोपाधिकस्य परमाणुत्वश्रवणात्। स च जीवः स्वयंप्रकाशः; स्वप्नावस्थामधिकृत्य "अत्रायं पुरुषः स्वयं ज्योतिरि" ति श्रुतेः। अनुभवरूपश्च; "प्रज्ञानघन एवे-" त्यादिश्रुतेः। अनुभवामीति व्यवहारस्तु वृत्तिप्रतिबिम्बित-चैतन्यमादायोपपद्यते। एवं त्वम्पदार्थो निरूपितः।

ज्ञायते मध्यमपरिमाणान्तःकरणोपाधिकत्वादेव जीवो मध्यमपरिमाण एव, न स्वतः, न वाणुपरिमाण इति। अत एव—"अङ्गुष्ठमात्रः पुरुष" इति श्रुतिरुप-पद्यते। आराग्रमात्र इति पदमपि "बुद्धेर्गुणेने" ति समभिव्याहारानुपपत्त्या अन्तः-करणपरिमाणबोधकमेव; सर्वथा परमाणुपरिमाणत्वरूपमणुत्वं जीवस्य न सम्भव-तीति सिद्धम्। तदेतदाह—बुद्धेरिति। श्रवणादिति। एतेन "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशे" ति श्रुतिरपि व्याख्याता; तस्या अपि चेतसाऽन्तःकरणेनाणुरिति योजनयोपाधिपरिमाणसमपरिमाणत्व-बोधन एव तात्पर्यात्। व्यक्तं चैतत् सर्वं—"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति सूत्रे आकरे॥

एतावता प्रपञ्चेन तटस्थलक्षणं त्वंपदवाच्यार्थं च निरूप्य तत्स्वरूपलक्षणं तत्पदलक्ष्यार्थस्वरूपञ्च निरूपयन्नाह—स चेति। स्वयंप्रकाशः प्रज्ञानघनः ज्ञानरूप इति यावत्। एवञ्च विज्ञानमेव जीवस्य स्वरूपलक्षणमिति भावः। ननु जीवो न ज्ञानरूपः जानामीत्यनुभवात्, किन्तु ज्ञानाश्रयोऽपीति श्रीभाष्य-कारादीनामनुसारेणाशङ्क्याह—अनुभवामीति। तथाच वृत्तिप्रतिफलित-चैतन्यविषयत्वादुक्तानुभवस्य नायमनुभवो जीवस्य केवलज्ञानरूपत्वविरोधीति भावः। व्यक्तं चैतत् सर्वं "ज्ञोत एवे" ति सूत्रे आकरादौ।

एवं प्रतिपादितयोस्तत्त्वंपदार्थयोर्वाच्यार्थमादाय सगुणवाक्यानां परिच्छिन्न-त्वानुभवादीनां चोपपत्तिः, तल्लक्ष्यार्थमादाय तु ऐक्यश्रुतेरुपपत्तिरिति

अधुना तत्त्वम्पदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभिधीयते। ननु नाहमीश्वर इत्यादिप्रत्यक्षेण, किञ्चिज्ज्ञत्वसर्वज्ञत्वरूपविरुद्धधर्माश्रयत्वादिलिङ्गेन, "द्वा सुपर्णे"त्यादिश्रुत्या, "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादिवाक्य"मादित्यो यूपो" "यजमानः प्रस्तरः" इत्यादिवाक्यवदुपचरितार्थमेवेति चेन्न; भेदप्रत्यक्षस्य सम्भावितकरणदोषस्यासम्भावितदोषवेदजन्यज्ञानेन बाध्यमानत्वात्, अन्यथा चन्द्रगताधिकपरिमाणग्राहिज्योतिःशास्त्रस्य चन्द्रप्रादेशग्राहिप्रत्यक्षेण बाधापत्तेः, पाकरक्ते घटे रक्तोऽयं न श्याम इति वत् सविशेषणे हीति न्यायेन जीवपरभेदग्राहिप्रत्यक्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च। अत एव नानुमानमपि प्रमाणम्; आगमविरोधात्, मेरुपाषाणमयत्वानुमानवत्। नाप्यागमान्तरविरोधः; तत्परातत्परवाक्ययोस्तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादिद्वासुपर्णादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैततात्पर्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात्। न च जीव-

जीवब्रह्मैक्यमेव तत्त्वमसीति महावाक्यार्थं इति न दोष इत्याह—अधुनेति। व्यक्तं चैतत् प्रत्यक्षपरिच्छेदेऽस्माभिर्विवेचितं तत एवावगन्तव्यम्। ननु नाहमित्यादि बाधापत्तेरित्यन्तं स्पष्टार्थम्; पूर्वमेवोपपादितत्वात्। ननु नाहमीश्वर इति प्रत्यक्षस्य का गतिरित्यत आह—पाकरक्ते इति। विशेषणीभूतेति। विशेषणीभूतयोर्जीवत्वेश्वरत्वरूपधर्मयोर्भेदस्यैव विषयत्वा-

परैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः ; शैत्यस्यैव जलस्यौपाधिकं प्याग्राश्रयत्ववत् स्वभावतो निर्गुणस्यैव तस्यान्तःकरणाद्युपाधिककर्त्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः। यदि च जलादावौष्ण्यमारोपितम्, तदा प्रकृतेऽपि तुल्यम्।

न च—सिद्धान्ते कर्तृत्वस्य क्वचिदप्यभावादारोप्यप्रमाहितसंस्काराभावे कथमारोप इति—वाच्यम् ; लाघवेनारोप्यविषयकसंस्कारत्वेनैव तत्र हेतुत्वात्। न च प्राथमिकारोपे का गतिः? कर्त्तृत्वाद्यध्यासप्रवाहस्यानादित्वात्।

तत्र तत्त्वम्पदवाच्ययोर्विशिष्टयोरैक्यायोग्यत्वेऽपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव। अत एव तत्प्रतिपादकतत्त्वमस्यादिवाक्यानामखण्डार्थत्वम् ; सोऽयमित्यादिवाक्यवत्। न च कार्य्यपराणामेव प्रामाण्यम् ; "चैत्र पुत्रस्ते जातः" इत्यादौ सिद्धेऽपि सङ्गतिग्रहात्। एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम्।

इति वेदान्तपरिभाषायां विषयपरिच्छेदः।

दित्यर्थः। व्यक्तं चैतत् मूल एव विवेचितं पूर्वम्। अवशिष्टं सर्वं च व्याख्यातप्रायमित्यत्रैवोपरमामः। विषयपरिच्छेद इति। वेदान्तशास्त्रतात्पर्यगम्यतत्त्वपरिच्छेद इत्यर्थः। यद्यपि ब्रह्म न विषयः, किन्तु विषय्येव ; तथापि "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्। ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते" इति वचनानुसारेण फलव्याप्यत्वाभावेऽपि वृत्तिविषयत्वं वर्तत इति सर्वं सुस्थम्।

इति वेदान्तपरिभाषाप्रकाशिकायां विषयपरिच्छेदः।

---

## अथ प्रयोजनपरिच्छेदः ।

इदानीं प्रयोजनं निरूप्यते। यदवगतं सत् स्ववृत्ति-

ब्रह्म "तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते" इति प्रतिज्ञातेषु ब्रह्म तत्प्रमाणं च सप्रपञ्चं निरूपितम्। इतः परमवशिष्यते एकमेव निरूपणीयम्—यत् ब्रह्मज्ञानं नाम। धर्मजिज्ञासायां हि धर्मज्ञानमनुष्ठानापेक्षमेव फलजनकमिति स्वत एव पुरुषार्थत्वं न ब्रह्मज्ञानस्येव तस्य समस्तीति धर्मजिज्ञासास्थले न धर्मज्ञानस्य पृथक् प्रतिज्ञा। ब्रह्मज्ञाने तूत्पत्तिमात्रेण निःश्रेयससाधनत्वात्सप्रपञ्चतद्विचारप्रतिज्ञा हि सुतरामुपपद्यते। धर्मज्ञानं हि कुतोऽनुष्ठानापेक्षमेव फलवत्? कुतश्च ब्रह्मज्ञानं तदनपेक्षं सदेव फलमिति केचनात्र प्रत्यवतिष्ठन्ते। अयमत्र परिहाराशयः—यत् धर्मः स्वयं न फलम्, ब्रह्म तु स्वयं फलमिति नास्य पर्यनुयोगस्यावसर इति।

अयमाशयः—विषयपरिच्छेदे ब्रह्मस्वरूपं व्यवस्थापितं चेदपि प्रमाणप्रवृत्तिदशायां विषयतादशायां वा न तस्य फलत्वम्, किन्तु वृत्तेरपि विनष्टावस्थाया विनाशानन्तरमेव; तथाच ब्रह्मसाक्षात्कारः सप्रपञ्चं यावन्न निरूप्यते, तावन्न शास्त्रार्थसमाप्तिर्भवतीति तं निरूपयिष्यन् धर्मज्ञानात् ब्रह्मज्ञानस्य पूर्वोक्तं विशेषं निरूपयितुं प्रयोजनं विभजिष्यन् प्रथमं प्रयोजनलक्षणमनुसन्धत्ते—यदवगतमिति। ज्ञानविषयभूतः सन् स्वसम्बन्धितयेच्छाविषयः पदार्थः प्रयोजनमित्यर्थः। सुखं मे भूयात् दुःखं मे मा भूदिति सुखत्वादिनाऽवगते स्वसम्बन्धितयेष्यमाणे च सुखादौ प्रयोजनलक्षणसमन्वयः। ज्ञानविषयत्वं च प्रयोजनतावच्छेदकसुखत्वाद्यवच्छिन्नमेव विवक्ष्यत इति विषभक्षणादौ नातिव्याप्तिः।

ननु—यदि सुखतत्साधनान्यतरत्वमेव प्रयोजनत्वम्, तर्हि स्वर्गस्यापि "यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमि"ति लक्षणलक्षितस्य सुखत्वाविशेषात् धर्मज्ञानाद्ब्रह्मज्ञानस्य न विशेष इति ब्रह्मप्रमाणादिनिरूपणेनैव कृतार्थत्वात् व्यर्थं ब्रह्मज्ञाननिरूपणम्।

तयेष्यते तत् प्रयोजनम्। तच्च द्विविधं मुख्यं गौणञ्चेति। तत्र सुखदुःखाभावो मुख्ये प्रयोजने। तदन्यतरसाधनं गौणं प्रयोजनम्। सुखञ्च द्विविधं सातिशयं निरतिशयञ्चेति। तत्र सातिशयं सुखं विषयानुषङ्गजनितान्तःकरणवृत्तितारतम्य-कृतानन्दलेशाविर्भावविशेषः, ; "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतेः। निरतिशयं सुखञ्च ब्रह्मैव ; "आनन्दो ब्रह्मेति व्यजानात्। विज्ञानमानन्दं ब्रह्म"त्यादि-

तथाच—ब्रह्मज्ञानमपि उपासनादिरूपमिव शास्त्रेण गम्यत इति लोकान्तर-प्राप्तिरिव मुक्तिः, न त्वात्मभावः। अत्रायमनुमानप्रयोगः—ब्रह्मज्ञानम्, न नित्यप्राप्तफलकम्, वेदमूलत्वात्, धर्मज्ञानवदित्यत आह—सुखं चेति। द्विविधमिति। सातिशयम्—उत्तरोत्तरतारतम्यवत्। तत एव विनश्वरम्। निरतिशयम् स्वोत्तरसुखान्तररहितम्, तत एवाविनाश्युत्कटेच्छाविषयश्चेत्यर्थः। तथाच—सातिशयनिरतिशयभेदेन सुखस्य द्विविधत्वात् सातिशयसुखजनक-धर्मज्ञानदृष्टान्तेन ब्रह्मज्ञानेऽपि स्वविषयफलकत्वनिराकरणं न योग्यम्। तथाच पूर्वोक्तानुमाने सातिशयसुखसाधनत्वमुपाधिरिति भावः।

ननु स्वर्गादिसुखानां कथं सातिशयत्वमित्यत आह—विषयेति। आनन्दलेशेति। तथाचाविर्भूतानन्दलेशविशेषस्यैव स्वर्गादिरूपत्वात् पूर्णानन्दापेक्षया निकृष्टत्वमर्थसिद्धमेवेति सातिशयत्वमेवेति भावः। ब्रह्मणि निरतिशयानन्दत्वे प्रमाणमाह—आनन्द इति।

ननु "विज्ञानमानन्दं ब्रह्मे"ति ब्रह्मणो ज्ञानरूपत्वमुक्तम्, एवं च स्वप्रकाशस्य ब्रह्मणः सर्वदा ज्ञातत्वात् ज्ञाननिरूपणमिदं सप्रपञ्चं व्यर्थम्। न हि स्वप्रकाशे ज्ञानेऽज्ञानस्य संभवः। तथाहि श्रीभाष्ये—अनुभवान्तराननुभाव्यत्वेन ह्यद्वैतमते ब्रह्मविषयं न ज्ञानान्तरमस्ति, येन ब्रह्मरूपं ज्ञानं नाज्ञानविरोधि, किन्तु तदतिरिक्तमेवेत्युच्येत, तेन च स्वप्रकाशे चैतन्ये नावरणसंभवः ; अन्यथा स्वरूपनाशापत्तेः। अविद्यया ब्रह्मणः तिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः,

श्रुतेः । आनन्दात्मकब्रह्मप्राप्तिश्च मोक्षः, शोकनिवृत्तिश्च ; "ब्रह्म-

विद्यमानस्य प्रकाशस्य नाशो वा । तत्र प्रकाशस्यानुत्पाद्यत्वात्प्रकाशनाश एव तत्परिशिष्यत इति नाज्ञानेन ब्रह्मणस्तिरोधानसंभवः । कतिपयांशविशेषा-प्रतीतिरूपमवैशद्यरूपं तु आवरणं निर्विशेषे ब्रह्मण्यसंभवदुक्तिकमेव । एतेन—आश्रयानुपपत्तिरपि व्याख्याता । नहि जीवोऽविद्यापरिकल्पितोऽविद्याश्रयता-मर्हति, नवा स्वप्रकाशस्वविरोधिज्ञानरूपं ब्रह्म । अविद्या हि ज्ञान-बाध्याभिमता ।

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् । अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने" इति नाथमुनिश्लोकोऽप्यत्रानुसन्धेयः । तथाच ब्रह्मण एव मोक्षत्वे तद्विषयस्य ज्ञानान्तरस्याद्वैतमतेऽनङ्गीकारात् ब्रह्मरूपं ज्ञानमित्येव ब्रह्मज्ञानपदस्यार्थो ग्रहीतव्य इति तस्य स्वप्रकाशस्य निरूपणं व्यर्थमित्यत आह—

आनन्दात्मकेति ।

सत्यं ज्ञानरूपमेव ब्रह्म ; एवमपि न तस्याज्ञानावभासकस्याज्ञानविरोधि-त्वम् । अज्ञानविरोधिज्ञानं हि गौणं वृत्त्यात्मकं ज्ञानं तत्प्रतिफलितचैतन्यं वा । तथाच वृत्तिप्रतिफलितचैतन्यरूपफलपदवाच्यानुभवविषयत्वाभावेऽपि वृत्तिविषयत्वस्य ब्रह्मणि स्वीकारादखण्डब्रह्माकारसाक्षात्कारपर्यन्तं ब्रह्मणो-ऽप्यज्ञानविषयत्वं तदाश्रयत्वं च संभवत्येव । निर्विशेषत्वं हि ब्रह्मणो वस्तुगत्येवेति आनन्दज्ञानसत्यरूपकल्पितांशविशेषवत्त्वात् न दोषः । तदुक्तम्—"आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति,

तथा—"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते" इति च ।

तत्र च व्यवहारदशायां ब्रह्मण्यभानापादकमसत्त्वापादकं चाज्ञानमवस्था-रूपं यथा नश्यति, न तथा तादृशमनानन्दतापादकमज्ञानमिति, अखण्डा-नन्दाकारवृत्तिपर्यन्तमेव संसारः, तदनन्तरं तु मुक्तिरेवेति घटाद्युपहितसच्चिदात्मक-ब्रह्मज्ञानस्य व्यवहारदशायां सत्त्वेऽपि केवलसच्चिदानन्दात्मकब्रह्मज्ञानस्याविद्य-मानत्वात् संसारः, आनन्दाकारवृत्तिनिर्गमानन्तरं तु अखण्डाकारसाक्षात्कारात्

मुक्तिरिति ह्यद्वैतप्रक्रियेति श्रीभाष्यकाराणां ब्रह्मस्वज्ञानानुपपत्त्यादिदूषणं नाद्वैत-प्रक्रियानुसारीति भावः।

ननु—आनन्दात्मकब्रह्मावाप्तिरपि भवन्मतरीत्याऽखिलबन्धनिवृत्ताविव संभवति, नान्यथा; बन्धानां हि पुण्यपापनिमित्तानां पारमार्थिकत्वमेवोरीकर्तव्यम्। नहि प्रतीतिसिद्धं काल्पनिकं कारणतामर्हतीति पुण्यपापे तत्कार्यं च पारमार्थिके इत्येव युक्तम्। अयं भावः—मुक्तिर्हि नाम लोकान्तरप्राप्तिरेव, तत्र च भक्तिपरवशभगवत्प्रसाद एव निमित्तम्, लोकान्तरगमनं च जीवस्योत्क्रमणं विना न संभवति। तच्चान्तःकरणादिमिथ्यात्वे व्यापकस्य जीवस्य न संभवतीति जीवोऽणुपरिमाणः, कर्ता भोक्तेत्यादिकमवश्यमुरीकर्तव्यम्। तथाच जीवब्रह्मभेदस्य सत्यत्वेन 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"ति भगवदुपासनमोक्षसाधनतैव युक्ता, नतु निर्विशेषब्रह्मज्ञानतत्साधनता; तथाचानन्दात्मकब्रह्मभावो न मुक्तिरिति धर्मज्ञानवत् ब्रह्मज्ञानमपि न स्वविषयफलकमित्याशङ्क्याह—शोकनिवृत्तिश्चेति।

अयं भावः—"ब्रह्मविद् ब्रह्मैव भवति" "तरति शोकमात्मवित्" इति च ब्रह्मज्ञानस्यात्मज्ञानस्य च ब्रह्मभावप्रयोजकत्वं शोकनिवृत्तिप्रयोजकत्वं च प्रतिपादयति, तत्रोभयत्र ज्ञेयं वस्तु फलं चैकमित्यवश्यमेवोरीकर्तव्यम्। संमतं चैतन्मतान्तरावलम्बिनामपि। एतेन—फलमपि—व्याख्यातम्। तदुक्तम्—निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति।

तथाच आत्मज्ञानस्य शोकनिवृत्त्यात्मकात्मभावप्रयोजकत्वं ब्रह्मज्ञानस्य ब्रह्मभावप्रयोजकत्वं च वाक्यद्वयेन यदवगम्यते, तदिदं जीवब्रह्मैक्यं विना नोपपद्यत इति अन्तःकरणादिमिथ्यात्वमर्थसिद्धमेव। तथाच व्यापकस्य जीवस्वरूपस्योत्क्रमणादिकमसंभवदुक्तिकमिति न लोकान्तरावाप्तिर्मुक्तिः, किन्तु ज्ञेयब्रह्मभाव एव। अतएव "न तस्य प्राणा उत्क्रामन्ति, अत्रैव समवनीयन्ते" "अत्र ब्रह्म समश्नुते" इति मुक्तौ नोत्क्रमणापेक्षेति प्रतिपादितमुपपद्यते, यथाचास्य वाक्यस्य प्राणोत्क्रमणं मुक्तविषयेऽपि वर्तते इत्येवंपरतया योजनं श्रीभाष्यकाराणां न ब्रह्मसूत्राक्षरानुगुणम्, तथैतद्भूमिकायां विस्तरेण प्रतिपादितम्। तथा चाज्ञानमूलत्वात् बन्धस्य तन्निवृत्तिरपि संभवत्येव। यथाच स्वाप्नानुभवस्थले

विद् ब्रह्मैव भवति" "तरति शोकमात्मविदि"त्यादिश्रुतेः, न तु लोकान्तरावाप्तिः, तज्जन्यवैषयिकानन्दो वा ; तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः ।

ज्ञानस्येव विषयस्यापि कल्पितस्य साधनत्वम्, तथा भामत्यद्वैतसिद्ध्यादौ व्यक्तमिति न बन्धपारमार्थिकता प्रामाणिकी । तथाच न कोऽपि दोष इति भावः । इदं च सर्वं "ब्रह्मवित् ब्रह्मैव भवति", "तरति शोकमात्मवित्" इति वाक्यसंग्रहणात् सूचितमित्यनुसन्धेयम् । व्यक्तीकरिष्यते चेदं मूल एवोपरिष्टात् ।

ब्रह्मैवेत्येवकारेण सायुज्य कारणात्मकेश्वरभाव एव मुक्तिरिति बोध्यते । एवं च कार्यब्रह्मोपासकानां जगद्व्यापारवर्जं यथा तद्भावः नैवं मुक्तानां साक्षात्कृतनिर्विशेषाणाम्, तेषां तु न जगद्व्यापारवर्जं तद्भाव इति सूचितम् । तदुक्तं सिद्धान्तलेशसंग्रहे—"न च "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथा यथोपास्ते" इत्यादिश्रुतिषु सगुणोपासकानामपीश्वरसायुज्यश्रवणात् मुक्तेः सगुणविद्याफलादविशेषः ; सगुणोपासकानामखण्डसाक्षात्काराभावात्राविद्यानिवृत्तिर्नवा तन्मूलाहंकारादेर्विलयः ; आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणम्, "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" इत्यादिसूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगसाम्येऽपि संकल्पमात्रात् स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसामर्थ्येऽपि सकलजगत्सृष्टिसंहारादिस्वातन्त्र्यलक्षणं न निरवग्रहमैश्वर्यम्, मुक्तानां तु निःसन्धिबन्धमीश्वरभावं प्राप्तानां तत्सर्वमिति महतो विशेषस्य सत्त्वात्—"इति । अस्मिन्नर्थे "उत्तराच्चेदाविर्भूतस्वरूपस्तु" "अंशो नानाव्यपदेशात्" "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" इति सूत्रतद्भाष्यादिकमप्यनुकूलमिति विस्तरेण सिद्धान्तलेशसंग्रहे मुक्तात्मस्वरूपनिरूपणावसरे विवेचितमित्यधिकं तत एवावगन्तव्यम् ।

तस्य कृतकत्वेनेति । लोकान्तरप्राप्तिसापेक्षवैषयिकानन्दो हि न ज्ञानसाध्यः, नवा ज्ञानमात्रसाध्यः, किन्त्वनुष्ठानसापेक्षज्ञानसाध्य इति क्रियाया एव पुरुषतन्त्राया अनुष्ठानयोग्यत्वात् क्रियाजन्यं धान्यादिकमिवानित्य एव

ननु त्वन्मतेऽप्यानन्दावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्यो दोषः, अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरिति चेत्, न; सिद्धस्यैव ब्रह्मरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने

स्यात्। अत एवोक्तम्—"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति भावः। मुक्तस्य पुनरावृत्त्यापत्तेरिति।

नश्वरसुखानुशयेन साकं जन्मान्तरग्रहणप्रसङ्गादिति भावः। एतेन—उपासनासाध्यो मोक्ष इति सिद्धान्तोऽपि—परास्तः, तदुक्तं भाष्ये:—"तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्; तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्येनावस्थितेषु कश्चिदतिशयो मोक्ष इति प्रसज्येत। नित्यश्च मोक्षः सर्वमोक्षवादिभिरभ्युपगम्यते। अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः"—इति। ननु यथा ब्रह्म नोपासनाजन्यम्, नवा विकार्यम्, नापि वा तत्संस्कार्यम्, तथा न ज्ञानेनापि जन्यं प्राप्यं विकार्यम् संस्कार्यं वा; समानत्वात्। यथाह्युपासनं क्रिया, एवं ज्ञानमपि मानसक्रियैव। तथाच न ज्ञानेनापि ब्रह्मरूपमोक्षसिद्धिरित्याशयेन शङ्कते—ननु त्वन्मतेऽपीति।

ज्ञानेन मोक्षसिद्धिरिति मतेऽपीत्यर्थः। मोक्षमुद्दिश्य मोक्षसाधनसाक्षात्कारमुद्दिश्य। श्रवणादौ श्रवणमनननिदिध्यासनेषु प्रवृत्त्यनुपपत्तिः। यद्यपि श्रवणादौ मोक्षनित्यतामते साक्षात्कारमुद्दिश्य प्रवृत्तिर्न विरुद्धा, साक्षात्कारस्य श्रवणादिजन्यत्वात्; तथापि साक्षात्कारस्य स्वतोऽपुरुषार्थत्वात् तत्फलद्वारैव पुरुषार्थत्वं वक्तव्यमिति मोक्षोद्देशेन तस्यापि विधेयत्वमूरीकर्तव्यमित्यभिमानेन मोक्षमुद्दिश्य प्रवृत्त्यनुपपत्तिरित्युक्तम्। यद्वा—ज्ञानमेवावगतिपर्यन्तं ब्रह्मस्वरूपत्वान्मुक्तिरिति यथाश्रुतमेव साधु। समाधत्ते—नेति।

अयं भावः—प्राप्यकर्म हि द्विविधम्, एकमप्राप्तं सत्प्राप्यम्, अपरं प्राप्तमप्यप्राप्ततया भ्रान्तं प्राप्यम्। तत्र प्रथमे यस्या यत् प्राप्यम्, तस्याः क्रियायाः विधिविषयत्वं पुरुषतन्त्रत्वं वा वर्तत इति तत्र साधनस्य साध्यस्य चोभयोरे-

प्रवृत्तेरुपपत्तेः। **अनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मस्वरूपतया**

चोद्देश्यविधेयभावः। द्वितीयेतु वस्तुतः प्राप्यार्थमेव प्रवृत्तिर्वर्त्तते चेदपि प्रवृत्तिविषयत्वमप्राप्तिभ्रमविरोधिसाक्षात्कारव्यापार एव, नतु साक्षात्कारे। साक्षात्कारो हि मानसक्रियात्वेन वस्तुतन्त्र एव, न पुरुषतन्त्र इति न विधेयतामर्हति। तथाच ज्ञानस्य क्रियात्वेऽपि पुरुषतन्त्रत्वाभावेनाविधिविषयत्वेन चोद्देश्यतयैवान्वयात् यत्र साक्षात्कारविषय एव फलम्, तत्र साक्षात्कारनिष्ठं साध्यत्वं विषयेऽप्यारोप्य फलत्वेनोपचारमात्रम्; अप्राप्तप्राप्तिज्ञानप्रयुक्तदुःखनिवृत्तेरनुभूयमानत्वात्। तथाच—ब्रह्मसाक्षात्कारमुद्दिश्य विहितेन श्रवणेन फलरूपब्रह्मसाक्षात्कारफलकेन साक्षात्कार इव ब्रह्मापि साध्यवद्‌व्यवह्रियत इति, धर्मज्ञानात् ब्रह्मज्ञानस्य विशेषस्तदवस्थ एव। इदं सर्वं मनसि निधायाह—**सिद्धस्येवेति**।

ननु—एवमपि "ब्रह्मविदाप्नोति परम्" "तरति शोकमात्मवित्" इति वाक्ययोरद्वैतमते गौणप्राप्तिपरत्वापत्तिः, मतान्तरेतूपासनस्य साक्षाच्छोकनिवृत्तिसाधनत्वादिकं संभवतीति मुख्यार्थपरत्वम्, "ब्रह्म वेद ब्रह्मैव भवति" इति वाक्येतु "इव वदेव" इति कोषात् "निरञ्जनः परमं साम्यमुपैती"ति श्रुत्यनुसारेणैवकारस्येवशब्दपर्यायत्वान्न दोषः। अद्वैतमतेऽपि शोकनिवृत्तेर्ध्वंसरूपाया जन्यत्वाङ्गीकारे बाधकाभाव इति शङ्कायामाह—**अनर्थेति**। तथाच "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित" इति वचनेनाद्वैतमते शोकनिवृत्तेरप्यात्मरूपत्वस्वीकरणेन कुत्रापि मुख्यं साध्यत्वं न संभवतीति शोकनिवृत्तिदृष्टान्तेन ब्रह्मणोऽपि मुख्यं प्राप्यत्वं विवक्षितुं न शक्यत इति "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुत्यनुसारेण कारणरूपब्रह्मभावस्यैव विवक्षणीयतया गत्यन्तराभावात् गौणार्थस्वीकरणेऽपि न दोषः। "निरञ्जनः परमं साम्यमुपैति" इति श्रुतिरपि ब्रह्मण इव यावत्सर्वमुक्ति जगद्‌व्यापारपर्य्यन्तस्य सर्वस्य धर्मस्य मुक्तात्मनि बोधन एव स्वरसा; अन्यथा परमपदवैयर्थ्यादिति भावः। ननु प्राप्तप्राप्तिस्थले प्रयोजनत्वव्यवहारो नास्तीत्यत आह—**लोकेऽपीति**। उक्तार्थे उदाहरणं निर्दिश्य तत्साम्येन प्रकृतेऽपि प्रयोजनत्वमुपपादयति—**यथेत्यादिना—प्रयोजनमित्यन्तेन**।

सिद्धैव । लोकेऽपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव । यथा हस्तगतविस्मृतसुवर्णमाप्तोपदेशादप्राप्तमिव प्राप्नोति, यथा वा वलयितचरणायां स्रजि सर्पत्वभ्रमवतः पुंसो नायं सर्प इत्याप्तवाक्यात् परिहृतस्यैव सर्पस्य परिहारः प्रसिद्धः ; एवं प्राप्तस्याप्यानन्दस्य प्राप्तिः, परिहृतस्याप्यनर्थस्य निवृत्तिर्मोक्षः प्रयोजनम् । स च ज्ञानैकसाध्यः ; "तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाये"ति श्रुतेः,

यथाहि अप्राप्तमवगतं सत् स्वसम्बन्धितयेष्यते, एवं नित्यप्राप्तमपि अप्राप्ततया ज्ञायमानं सुखदुःखाभावतत्साधनत्वादिनाऽवगतं सत् स्वसम्बन्धितयेष्यत इति प्रयोजनलक्षणसमन्वय इति भावः ।

ननु मोक्षोऽप्यप्राप्तप्राप्य एव ; कर्मणोऽपि तत्र साधनत्वात्, इत्यत आह—**स चेति । ज्ञानैकेति ।** ज्ञानमात्रेत्यर्थः । अत्र श्रुतिं प्रमाणयति—**तमेवेति । ननु**—"तमेव विदित्वे"त्यत्रैवकारस्य तं पदेनैवान्वयात् ज्ञान-पदेनानन्वयात् आत्मेतरविषयकत्वमेव निरस्यते ; अन्यथा अहं सुखी दुःखीत्यादि-ज्ञानानामप्यात्मविषयकत्वेन बन्धनिवर्तकत्वापत्तेर्महाननाश्वासः स्यात् । यदितु इतरविषयताऽनिरूपितात्मविषयताशालिज्ञानस्याज्ञाननिवर्तकत्वाचाहं सुखीत्यादिज्ञानस्याज्ञाननिवर्तकत्वप्रसङ्ग इति मन्यते, तर्हि अहं ब्रह्म घटो विनाशीति समूहालम्बनज्ञानस्यापि निवर्तकत्वापत्तिरित्येवकारस्य तं पदे-नैवान्वयस्य युक्तत्वात् ज्ञानमात्रनिवर्त्यत्वं नोक्तश्रुतिगम्यमित्यत आह—**नान्यः पन्था इति ।** वाक्यशेषे नान्यः पन्था इति मार्गान्तरस्यैव निषेधात् तदनुरोधार्थं ज्ञात्वैवेत्येवान्वयः स्वीकर्तव्य इति ज्ञानैकनिवर्त्यत्वमुक्तश्रुतिसिद्ध-मेवेति भावः । यथाच—अहं ब्रह्म घटो विनाशीति समूहालम्बनज्ञानमाहार्य-त्वान्न निवर्तकम्, तथा न्यायरत्नावल्यां व्यक्तम् । अयनाय मोक्षाय । अन्यः पन्था उपायो नास्तीत्यर्थः ।

अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमाच्च। तच्च ज्ञानं ब्रह्मात्मैक्य-

ननु—"हिरण्यदा अमृतत्वं भजन्ते" "अपाम सोममसृता अभूम" इत्यादिश्रुतौ कर्मसाध्यत्वममृतत्वस्यावगम्यते, "तमेव विदित्वे"ति तु ज्ञानेनामृतत्वापर्यायमोक्षसिद्धिः प्रतिपाद्यते। तत्र च श्रुतिद्वयविरोधेऽष्टदोषदुष्टत्वेन विकल्पायोगात् कर्मसमुच्चितज्ञानस्यैव मोक्षसाधनत्वमूरीकर्तव्यम्, नहि कर्मणा न मोक्षः, किन्तु ज्ञानेनैवेति क्वापि राजाज्ञाऽस्ति, येन "तमेवे"ति श्रुतेरेव मुख्यार्थत्वं कल्प्येतेत्यत आह—अज्ञानेति। नियमाच्चेति। तथैव दर्शनात्। नहि रज्जुसर्पादिभ्रमतत्प्रयुक्तभयकम्पज्वरादिनिवृत्तिः कर्मविशेषानुष्ठानादिना भवतीति सर्वानुभवसिद्धमिदम्। तथाचोक्तनियमोपोद्बलितत्वेन तमेवेति श्रुतिरेव प्रबलेति न दोष इति भावः।

ननु—एवमपि ज्ञानेनैवाज्ञाननिवृत्तिरिति स्वीकारेऽपि तज्ज्ञानं दर्शनसमानाकारध्रुवानुस्मृतिपदबोध्यनिदिध्यासनापरपर्यायं सविशेषविषयमेव युक्तम्, नतु निर्विशेषविषयम्। तदुक्तं श्रीभाष्ये:—यदुक्तमविद्यानिवृत्तिरेव मोक्षः, साच ब्रह्मज्ञानादेव भवतीति, तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ब्रह्मज्ञानं तु वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं विवक्षणीयम्। तच्च सविशेषविषयमेव, निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि इदं प्रमाणमिति न शक्यते वक्तुम्; सविशेषविषयत्वात्सर्वप्रमाणानाम्। निर्विकल्पकमपि सविशेषविषयमेव। निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम्, न सर्वविशेषविरहितस्य; तथाभूतस्य कदाचिदपि ग्रहणादर्शनादनुपपत्तेश्च। केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते; त्रिकोण(गोमुख)सास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्। अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्, द्वितीयादिपिण्डग्रहणं सविकल्पकमुच्यते इति, नाद्वैतमतसिद्धिरित्यत आह—तच्चेति। ब्रह्मात्मैक्येति। वेदान्तानां प्रामाण्यं हि नान्यत्र दृष्टं निदर्शनमपेक्षते। तथाचान्यत्र सविशेषविषयकत्वेऽपि तात्पर्यानुसारेण वेदान्तस्य निर्विशेषवस्तुविषयकत्वमेव युक्तम्;

गोचरम्; "अभयं वै जनक प्राप्तोऽसि" "तदात्मानमेवावेदहं ब्रह्मास्मीति श्रुतेः, "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमि"ति नारदीयवचनाच्च। तच्च ज्ञानमपरोक्षरूपम्; परोक्षत्वे अपरोक्षभ्रमनिवर्त्तकत्वानुपपत्तेः। तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित्। मनननिदिध्यासनसंस्कृतान्तःकरणादेवेत्यपरे।

अत एवाथात आदेशो नेति नेतीति प्रसक्तसर्वविशेषनिषेध उपपद्यते; अन्यथा—अहं ब्रह्मास्मीति सामानाधिकरण्यमनुपपन्नमेव स्यात्।

यत्तु श्रीभाष्ये:—तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्; तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात्, किन्तु जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयमित्यादि विवेचितम्, तत्र तत्त्वमसीति वाक्यगतमध्यमपुरुषप्रयोगोपपत्त्यर्थं त्वंपदार्थस्योद्देश्यत्वं विवक्षणीयमिति जीवशरीरकस्य परमात्मनोऽप्राप्तत्वेन, प्राप्तत्वे तत्पदवैयर्थ्यापत्त्या च बाधायां सामानाधिकरण्यमेव युक्तम्! एतेन—तत्त्वमसीत्यत्र नोद्देश्योपादेयविभागः इति श्रीभाष्योक्तिरपि—चिन्त्या; मध्यमपुरुषप्रयोगानिर्वाहात्; त्वंपदार्थस्योद्देश्यतायामेव मध्यमपुरुषप्रयोगदर्शनाच्च। अत एव—श्रुत्यन्तरे—अहंब्रह्मास्मीत्यस्य—आत्मानमेवावेदिति निर्विशेषात्ममात्रविषयत्वं प्रतिपादितमुपपद्यते। एतत्सर्वं मनसि निधायाह—अभयमिति।

ननु—तत्त्वमस्यादिवाक्यजन्यं ज्ञानं न मोक्षसाधनम्; तस्य विधानमन्तरापि वाक्यादेव सिद्धया तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्ध्या च तत्त्वायोगात्, अन्यथा मननादिवैयर्थ्यात्, इत्यत आह—तत्त्वमस्यादिवाक्योत्थमिति।

अयं भावः—नहि केवलं श्रवणं साक्षात्कारसाधनम्, किन्तु मनननिदिध्यासनाङ्गकमिति श्रुते मते निदिध्यासिते चात्मतत्त्वे वाक्यमात्रेणाप्यपरोक्षसाक्षात्कारो मोक्षसाधनमुदेतुमर्हति। यदि तु श्रवणमात्रं साक्षात्कारसाधन-

तत्र पूर्वाचार्याणामयमाशयः । संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनम्, किन्तु प्रमेयविशेषनिबन्धनमित्युपपादितम् । तथाच ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यज्ञानमप्यपरोक्षम् । अत एव प्रतर्दनाधिकरणे

मित्युच्येत, तर्हि मननादिवैयर्थ्यमापादयितुं शक्येत । अत एव वाक्यजन्यं ज्ञानमपरोक्षमिति ।

ननु—वाक्येन परोक्षमेव ज्ञानं जन्यताम्, किमपरोक्षज्ञानजननेनेत्यत आह—परोक्षत्व इति । इदं वाक्यादपरोक्षज्ञानोत्पत्तिरिति मतेनोक्तमिति सूचयन्नाह—तच्चेति ।

वस्तुतस्तु—वाक्यादेवापरोक्षज्ञानमिति नायमस्माकमाग्रहः, येन "न तावद्वाक्यजन्यं ज्ञानम्; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेरि"त्यादिश्रीभाष्यदूषणानामवसरः, किन्तु श्रवणमनननिदिध्यासनसंस्कृतान्तःकरणादेवेत्यपि पक्षो वर्तत इति न दोषलेशस्याप्यवकाश इत्याशयेनाह—मननेति । अपरे वाचस्पतिमिश्राः । केचित् पूर्वनिर्दिष्टा विवरणाचार्याः ।

वाक्यापरोक्ष्यमतानुयायिनां मत एवास्मन आदरातिशय इति सूचयन् सोपपत्तिकं तन्मतमुपपादयति—तत्रेति । पूर्वाचार्याणामिति । तत्रेति । केषांचनापरेषां च मध्ये इत्यर्थः । केचिच्छब्देन प्रायेणादरातिशयो न सूच्यत इति प्रकृतेऽपि तन्मा भूदित्यभिप्रायेणाह—पूर्वाचार्याणामिति । संविदिति । अत्र वक्तव्यं सर्वं प्रत्यक्षपरिच्छेद एवोक्तम् । करणविशेषेति । इन्द्रियाधीनोत्पत्तिप्रयुक्तमित्यर्थः । प्रमेयविशेषेति । वृत्त्यवच्छिन्नचैतन्याभिन्नविषयावच्छिन्नचैतन्यरूपप्रमेयविशेषेत्यर्थः । अनावृतविषयविशेषेत्यर्थः । ब्रह्मज्ञाने समन्वयीकरोति—तथाचेति । प्रमातृजीवाभिन्नतया प्रमातुर्जीवस्यैव ब्रह्मरूपतया ।

तद्गोचरं ब्रह्मगोचरम् । शब्दजन्यं ज्ञानं शब्दजन्याखण्डानन्दाकारवृत्त्य-

प्रतर्द्दनं प्रति "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे"तीन्द्र-वाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामुपास्वेत्य-स्मच्छब्दानुपपत्तिमाशङ्क्य तदुत्तरत्वेन प्रवृत्ते "शास्त्रदृष्ट्या तूपदेशो वामदेववदि"ति सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरिति तत्त्व-मस्यादिवाक्यजन्यमहं ब्रह्मास्मीति ज्ञानं शास्त्रदृष्टिशब्दे-नोक्तमिति।

अन्येषान्त्वेवमाशयः—करणविशेषनिबन्धनमेव ज्ञानानां

वच्छिन्नं चैतन्यम्। अपरोक्षं प्रत्यक्षम्। अयं भावः—विषयावच्छिन्न-चैतन्याभिन्नवृत्त्यवच्छिन्नं चैतन्यमपरोक्षज्ञानम्। विषयावच्छिन्नत्वं च विषय-तादात्म्यवत्त्वं ब्रह्मणि बाधितमिति तेन विषयतदवच्छिन्नान्यतरत्वमेव विवक्षितम्। तथाच—घटादिज्ञाने विषयावच्छिन्नचैतन्याभेद इव ब्रह्मणि विषयाभेद एव वृत्त्यवच्छिन्नचैतन्यस्यापरोक्षताप्रयोजक इति फलति। तत्त्वमसीति वाक्येन ब्रह्माकारवृत्तिजनने वृत्त्यवच्छिन्नत्वं जीवस्यैवैकदेशस्थत्वेनैव भवति चेदपि जीवस्यैव वस्तुगत्या ब्रह्मत्वात् वृत्त्यवच्छिन्नत्वमखण्डब्रह्मणोऽपि संवृत्तमिति लक्षणसमन्वय इति भावः।

ब्रह्मण एव जीवाभेदे शास्त्रजन्याहंप्रतीतिविषयत्वे च प्रतर्दनाधिकरणमपि प्रमाणयति—अत एवेति। अत्र श्रीभाष्यकारा अपि—"ब्रह्मणः स्वात्मत्वेनोप-देशोऽयं न प्रमाणान्तरप्राप्तस्वात्मालोकनकृतः, किन्तु शास्त्रेण स्वात्मदृष्टिकृतः" इति वदन्त इदमवश्यमूरीकर्तुमर्हन्ति, यत् शास्त्रेणापि स्वात्मसाक्षात्कारो भवितु-मर्हतीति। तथाच सत्यपि शरीरशरीरिभावनैयत्यतदभावाभ्यां विशेषे शास्त्रेण साक्षात्कारो भवितुमर्हतीति समानमेतदिति शाब्दापरोक्षवादे प्रतर्दनाधिकरणं प्रमाणमिति भावः॥

वाचस्पतिमिश्राणामाशयं निष्कृष्य प्रतिपादयति—अन्येषामिति। विषय-विशेषनिबन्धनं प्रत्यक्षत्वमिति मते दूषणवर्णनपूर्वकं "शास्त्रदृष्ट्या तु" इति सूत्रस्य शास्त्रप्रयोजकतापरतया योजनपूर्वकं च वाचस्पतिमतमुपपादयति—

प्रत्यक्षत्वम्, न विषयविशेषनिबन्धनम् । एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात् । तथाच संवित्साक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वम् । ब्रह्मसाक्षात्कारेऽपि मनननिदिध्यासनसंस्कृतं मन एव करणम् ; "मनसैवानुद्रष्टव्यमि"ति श्रुतेः । मनोऽजन्यत्वश्रुतिश्चासंस्कृतमनोविषया । न चैवं ब्रह्मण औपनिषदत्वानुपपत्तिः ; अस्मदुक्तमनसो वेदजन्यज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवित्वात्, वेदानुपजीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधात् । शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयकमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते । तदुक्तम्—"अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा । शास्त्रदृष्टिर्मता तान्तु वेत्ति वाचस्पतिः परमि"ति ।

करणेति । ज्ञानानां वृत्त्यवच्छिन्नचैतन्यानाम् । केवलचैतन्यपरत्वे हि न तस्य करणविशेषनिबन्धनं प्रत्यक्षत्वम्, नवा बहुवचननिर्देशश्चाहतेति च भावः । **सूक्ष्मवस्तुनि** त्र्यणुकादौ । **पटुकरणापटुकरणयोरिति** । चक्षुरादीन्द्रियं यदि वृत्तिनिर्गमनद्वारमात्रम्, न प्रत्यक्षत्वप्रयोजकमित्यूरीक्रियेत, तर्हि अपटुकरणत्वेऽपि तस्य द्वारत्वमनिवारणीयमिति त्र्यणुकादिकं सर्वं प्रत्यक्षं स्यात् । इन्द्रियकरणतामते तु शक्त्यनुसारेण व्यवस्था संभवतीति न विषयविशेषनिबन्धनं प्रत्यक्षत्वम्, किन्तु करणविशेषनिबन्धनमेवेति भावः । एतन्मते मनसोऽपीन्द्रियत्वात् सुखादिप्रत्यक्षत्वं न विरुद्धमिति बोध्यम् । ब्रह्मणः शाब्दापरोक्षवादे विरोधसूचनपूर्वकं ब्रह्मणोऽपि मानसप्रत्यक्षविषयत्वमेवेत्यत्र प्रमाणमाह—**मनसैवेति** । इयमेव श्रुतिः पक्षान्तरे विरुद्धं प्रमाणमिति भावः । **ननु**—ब्रह्मणो मानसप्रत्यक्षविषयत्वे "तं त्वौपनिषदं पुरुषं पृच्छामी"ति श्रुतिविरोध इत्याशङ्क्य परिहरति—**नचेति** । एवं मानसप्रत्यक्षविषयत्वे ।

# तच्च ज्ञानं पापक्षयात् भवति। स च कर्म्मानुष्ठानादिति

सूत्रविरोधमाशङ्क्य परिहरति—**शास्त्रेति**। शास्त्रदृष्टिसूत्रस्योक्तार्थपरतया योजने सूत्रान्तरं गमकं सूचयन्नुक्तार्थे कल्पतरुवाक्यमुपष्टम्भयति—**तदुक्तमिति**। शास्त्रार्थज्ञानजा शास्त्रदृष्टिः अपि संराधनसूत्रमिहेव ; तथाच संराधनसमनन्तरकालिकं साक्षात्कारमेव संराधने शास्त्रस्य प्रयोजकत्वं यत् वर्त्तते, तद्गृहीत्वा शास्त्रदृष्टिपदेन सूत्रभाष्यकारादयो मन्यन्त इति न दोष इति भावः।

तदयं संग्रहः—आनन्दरूपब्रह्मावाप्तिरेव मोक्षः, सच ज्ञानमात्रसाध्यः। ज्ञानं च जीवब्रह्मैक्यगोचरापरोक्षसाक्षात्काररूपमेव, तच्च तत्त्वमसीति महावाक्याधीनम्, अथवा श्रवणादिसंस्कृतमनोनिबन्धनम्। सर्वथा च नोपासनात्मकक्रियासाध्यो मोक्षः, नवा कर्मसाध्य इति सिद्धमिति।

ननु—एवं सति- "युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्। अयुक्तः कामकारेण फले सक्तो निबध्यते।" "प्रवृत्तं कर्म संसेव्य देवानामेति साष्टिताम्। निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै।" इति कर्मणामपि मोक्षे विनियोगः क्रियमाणः कथमुपपद्यते ? इत्यत आह—**तच्चेत्यादिना विनियोग** इत्यन्तेन। **पापक्षयात् भवतीति**। तदुक्तम्—"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इति। "अग्निहोत्रादितु तत्कार्यायैव तद्दर्शनादि"ति सूत्रकारोऽपि अमुमर्थं प्रतिपादयतीति भावः। **विनियोगः** उपकारकत्वम्, न त्वङ्गत्वम्। अत एव "अग्नीन्धनाद्यनपेक्षा" इति कर्मणां मोक्षानुपयोगः साक्षात्प्रतिपादितः संगच्छते। तथाच श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"—इति।

**ननु**—"अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति ज्ञानसाधनत्वमग्निहोत्रादीनां बोध्यत इति श्रीभाष्याद्वैतभाष्ययोरुभयोरपि समानम् ; इयान् विशेषः—यत् श्रीभाष्यमते ध्रुवानुस्मृतिरेव ज्ञानपदार्थः, अद्वैतमते तु श्रुतमतनिदिध्यासितवेदान्तजन्यसाक्षात्कारः स इति। तत्राद्वैतमते विदितपदतदर्थसङ्गतिकस्य विदितवाक्यार्थगतिगोचरन्यायस्य च पुंसः श्रवणमननयोः तन्मात्रनिबन्धननिदिध्यासने, तज्जिततथाधीनात्मसाक्षात्कारे च न कर्मापेक्षा। एतेन

परम्परया कर्मणां विनियोगः । अत एव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"त्यादि-श्रुतिः, "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादिस्मृतिश्च सङ्गच्छते ।

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति श्रुतिरपि—व्याख्याता ; अर्थवादत्वात्तस्याः । अतश्च परिशेषात् ध्रुवानुस्मृतिसाधनत्वमेव कर्मणां साक्षादिति न परंपरया कर्मणां ज्ञानोपयोगः प्रतिपादित उपपद्यते । अत्रहि—अश्वदृष्टान्तेनाश्वस्य स्वपरिकरबन्धाद्यपेक्षावत् नित्यनैमित्तिककर्मापेक्षा विद्यायाः प्रतिपाद्यत इति कर्मणां साक्षादेव ज्ञानसाधनत्वमित्येव युक्तमित्याशङ्क्याह—अत एवेति । परम्परया कर्मणां मोक्षोपयोगादेव ।

अयं भावः—"अग्नीन्धनाद्यनपेक्षा" इति अग्निहोत्राद्यनपेक्षामुक्त्वा प्रवृत्तेन "सर्वापेक्षा च" इति सूत्रेण यज्ञादीनामपेक्षा या प्रतिपाद्यते, सा हि सत्यं ज्ञाने कर्मापेक्षां गमयति । इदमेवात्रालोचनीयम्—यत् कथमियमिति । वयं तु पश्यामः—विविदिषन्तीति श्रुतेर्विविदिषोत्पादनद्वारैवेति । एवं च—तमेतमिति वाक्यस्य नार्थवादत्वमपि कल्पनीयम् । तथाच ज्ञाने साक्षादनपेक्षा, "अग्नीन्धनाद्यनपेक्षेति बोध्यते, परम्परयाऽपेक्षा सर्वापेक्षासूत्रेण बोध्यत इति सुश्लिष्टोऽयं सन्दर्भः । श्रीभाष्यमते तु—यज्ञादिश्रुतेरूर्ध्वरेतसामपि कर्मापेक्षा-प्रसङ्गात्, तत्राग्निहोत्रानपेक्षावर्णनं वितथमेव स्यादिति, अद्वैतभाष्यसम्मतमेव विवरणमत्र युक्तम् । एतेन—अश्वदृष्टान्तोऽपि—व्याख्यातः, कुत्रचनापेक्षा, कुत्रचन नापेक्षेति नेदं विरुद्धमिति बोधनार्थत्वात्तस्य । तथाच—विविदिषोत्पत्ति-द्वारा कर्मोपयोगसंभवात्—"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" इति वाक्यानुसारिण्येव व्यवस्था—"यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा समभ्यर्च्य सिद्धिं विन्दति मानवः ।" इत्यादिवाक्यानामूरीकर्तव्येति न ध्रुवानुस्मृतिसाधनत्वं यज्ञादेरित्येव युक्तमिति ।

**एवं श्रवणमनननिदिध्यासनान्यपि ज्ञानसाधनानि; मैत्रेयीब्राह्मणे "आत्मा वा अरे द्रष्टव्य" इति दर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रवणमनन-**

उक्तार्थे स्मृतिमपि प्रमाणयति—**कषाये इति** । अशुद्धौ कर्मभिर्विनष्टायाम् । **ततः** तदनन्तरम् । **ज्ञानं प्रवर्त्तते** उत्पद्यते इत्यर्थः ।

एतावता प्रपञ्चेन विविदिषाद्वारा ज्ञानसाधनं कर्मेति बहिरङ्गं साधनं विवेचितम् । इदानीमन्तरङ्गसाधनान्याह—**एवमिति** । कर्मवदित्यर्थः । अत्र साक्षाज्ज्ञानसाधनत्वमात्रेण, न तु परम्परया साधनत्वेनेति बोध्यम् । श्रवणादीनां ज्ञानसाधनत्वे प्रमाणमाह—**मैत्रेयीब्राह्मणे इति** । बृहदारण्यके मैत्रेयीं स्वपत्नीं प्रति याज्ञवल्क्योपदेशप्रकरणे इत्यर्थः । अरे मैत्रेयि आत्मा साक्षात्कर्तव्यः, निदिध्यासितव्यः, मन्तव्यः, श्रोतव्य इति वाक्यार्थः । **ननु** अस्मिन् वाक्ये ध्यानमेकमेव विधीयते, ध्यानं हि श्रवणमनने विना न संभवतीत्यर्थसिद्धानुवादावेव श्रोतव्यो मन्तव्य इति च । द्रष्टव्य इत्यपि ध्यानं दर्शनसमानाकारमेव मोक्षसाधनमिति बोधनार्थं तत्स्वरूपानुवादपरमेव । तथाचात्र वाक्ये साक्षात्कारं प्रति श्रवणादिविधानाभावात् कथमिदं वाक्यमुक्तार्थे प्रमाणमित्याशङ्क्याह—**दर्शनमनूद्येति** । सर्वत्रोपासनाविधिषु श्रवणमननयोरपि अन्तर्यामिब्राह्मणादिष्वनाम्नानात् निदिध्यासनस्य श्रवणमननपूर्वकत्वनैयत्येऽत्रापि तदाम्नानवैयर्थ्यापत्त्या च श्रवणमननयोः साक्षात्कारसाधनताविवक्षयैवास्य सन्दर्भस्य प्रवृत्तिरिति ते इव निदिध्यासनमपि साक्षात्कारसाधनमेवात्र विवक्षितमिति नात्र निदिध्यासनमेकमेव विधेयम्, तदेव मोक्षसाधनतया च विवक्षितमिति भावः । अत्र द्रष्टव्य इति तव्यप्रत्यये श्रूयमाणेऽपि 'द्रष्टव्य आत्मा' इति द्रष्टव्यपदस्यात्मविशेषणत्वेनान्वयेऽर्थज्ञानसाधनस्वाध्यायोद्देश्यतायाम् अपूर्वसाधनव्रीह्याद्युद्देश्यतायां चार्थज्ञानापूर्वादेरेवोद्देश्यतापर्यवसानवत् अत्रापि दर्शनस्यैवोद्देश्यतायाः पर्यवसानात् दर्शनमनूद्येत्युक्तमिति मन्तव्यम् ॥

श्रवणमननादिकं ज्ञानमेवेति न विधेयमिति मिश्रमतम्, विवरणमतं तु श्रवणादिकमपि विधेयक्रियाविशेष एवेति । तत्र द्वितीयमतानुसारेणैवोक्त-

निदिध्यासनानां विधानात् । तत्र श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्य्यावधारणानुकूला मानसी क्रिया । मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनकमानसव्यापारः । निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्य्यानुकूलो मानसव्यापारः । तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणम् ; "ते ध्यानयोगानुगता

ग्रन्थप्रवृत्त्या न विरोध इति सूचनपूर्वकं श्रवणादिकं लक्षयति—तत्रेति । क्रियेति च । श्रवणमनननिदिध्यासनघटकमित्यर्थः । "क्रिया हि नाम सा, या वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषव्यापारतन्त्रा चे"ति समन्वयाधिकरणभाष्यवाक्यं हि विधेयस्यैव क्रियात्वम्, नतु वस्तुतन्त्रस्येत्येवंपरतयैव पञ्चपादिकाविवरणे विवृतमिति क्रियापदेनात्र विधेयत्वं समर्प्यत इति भावः ।

श्रवणस्याद्वितीयब्रह्मणि तात्पर्यसंशयनिरासः फलमित्यभिप्रेत्याह—तात्पर्यावधारणेति । मननप्रयोजनं मानान्तरविरोधपरिहारोऽसंभावनाबुद्धिनिरास इति यावत् इति सूचयन् मननं लक्षयति—मननमिति । मानान्तरविरोधेति च । निदिध्यासनप्रयोजनं विपरीतभावनानिरासः, आत्मनि विषये मनसः स्थैर्यं चेत्यभिप्रेत्याह—निदिध्यासनमिति ।

ननु—श्रवणमनननिदिध्यासनानामपर्यायेणानुष्ठानासम्भवात् सर्वेषां त्रयाणां दर्शयागानामिव प्राधान्यमेवाङ्गीकर्तव्यम्, अथवा प्रयाजदर्शपूर्णमासानामिवाङ्गाङ्गिभावः । प्रथमे समुदायकरणतावोधकप्रमाणाभावात्प्रत्येकं करणत्वे मननादिवैयर्थ्यम् । द्वितीये किं श्रवणमङ्गि, उत मननम्, अथवा निदिध्यासनमित्यत्र न विनिगमना इत्याशङ्कां केषांचन पक्षेण परिहरति—तत्रेति । साक्षात्कारणम् प्रधानम् । ध्यानस्यैव प्रधानत्वे श्रुतिं प्रमाणयति—ते ध्यानयोगेति । उक्तवाक्ये ध्यानयोगानुगतशुद्धिम्य

अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढा"मित्यादिश्रुतेः। निदिध्यासने च मननं हेतुः; अकृतमननस्यार्थदार्ढ्याभावेन तद्विषयकनिदिध्यासनायोगात्। मनने च श्रवणं हेतुः; श्रवणाभावे तात्पर्य्यानिश्चयेन शाब्दज्ञानाभावेन श्रुतार्थविषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात्। एतानि त्रीण्यपि ज्ञानोत्पत्तौ कारणानीति केचिदाचार्य्या ऊचिरे।

अपरे तु श्रवणं प्रधानम्, मनननिदिध्यासनयोस्तु श्रवणात्

साक्षात्कारविधानात् धनवान् सुखीत्यादाविवोद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावावगमात् ध्यानयोगस्य साक्षात्कारसाधनत्वं विशदीक्रियत इति ध्यानमेव प्रधानमित्यत्रोक्तश्रुतिः प्रमाणमिति भावः। **आदीति।** आदिपदात् "ततस्तु तं पश्यती"त्यादिसंग्रहः। अथ मननस्य ध्यानाङ्गत्वं मननाङ्गत्वं च श्रवणस्येति सर्वेषां साक्षात्कारोपयोग इत्याह— **मनने चेति।** **अर्थदार्ढ्याभावेन**—वेदान्तार्थस्य ब्रह्मात्मैक्यस्याप्रामाण्यज्ञानानास्कन्दितज्ञानविषयत्वाभावेनेत्यर्थः। **तद्विषयकेति।** ब्रह्मात्मैक्यविषयकेत्यर्थः।

अस्मिन् मते अभिक्रमणाद्यङ्गकप्रयाजानां दर्शपूर्णमासयोरिवैकफलसाधनत्वेन त्रीणि न साक्षात्कारसाधनानि, किन्तु साङ्गं प्रधानमिति द्वितयमेवेति एकस्मिन् वाक्ये निर्देशान्यथानुपपत्त्या श्रवणमननोभयविशिष्टध्यानस्यैव फलसाधनत्वं युक्तमिति श्रवणमननयोरङ्गत्वम्, निदिध्यासनस्यैव प्रधानत्वमिति मिश्रमतमाह—**एतानीति।** **आचार्याः** वाचस्पतिमिश्रा इत्यर्थः। सूचितं चैतदनुपदमेव—"ते च चिन्तामयीं तृतीयां प्रतिपत्तिं प्रसुवाते" इति भामत्यर्थसंग्रहणेन।

श्रवणं प्रधानं मनननिदिध्यासने तदुत्तराङ्गे इति विवरणाचार्यमतमाह—**अपरे त्विति।** मिश्रमते हि मनस एव साक्षात्कारः, न तु शब्दादिति मनसा फले जननीये उपकारकं निदिध्यासनमेव, तदङ्गे एव श्रवणमनने इति तदुपपाद्यते, तदिदं शाब्दापरोक्षवादिभिरुरीकर्तुं न शक्यते। तन्मते हि प्रमाणस्य शब्दस्यैव

पराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्वर्तकतया आरादुपकारक-

तद्विशेषश्रवणपदवाच्यविचारविषयशब्दस्यापि प्रमेयावागमं प्रत्यव्यवधानात्, मनन-निदिध्यासनयोस्तु शब्दरूपप्रमाणितिकर्त्तव्यतारूपमनोगतसंस्कारविशेषाद्याधायकत्वेन व्यवधानाच्च श्रवणमेव प्रधानम्, तदङ्गे एव मनननिदिध्यासने इति श्रवणाङ्गितावाद एव युक्त इत्यभिप्रायेणाह—श्रवणं प्रधानमिति । तदुक्तं चित्सुखाचार्य्यैः—करणीभूतशब्दगतातिशयहेतुत्वात् श्रवणस्य करणत्वेनाङ्गित्वम्, मनननिदिध्यासनयोस्तु सहकारिभूतचित्तगतातिशयहेतुत्वात् फलोपकार्य्यङ्गता"—इति ।

तदयं तात्पर्यार्थः—यत् सन्निपत्योपकारकतया श्रवणमङ्गि, आरादुपकारकतया मनननिदिध्यासने अङ्गे इति । तदुक्तं लघुचन्द्रिकायाम्—"परमापूर्वप्रयोजकयोग्यताविशिष्टयागमुद्दिश्यैव प्रयाजादिकं विधेयम्; यागस्वरूपे तत्साधनत्वासंभवात् । तथाच यथोक्तयोग्यतया यागस्वरूपस्य चोद्देश्यत्वेनाङ्गित्वात् योग्यतोपधायकत्वोपहितेन रूपेण प्रोक्षणादेः यागस्वरूपोपहितहेतुत्वाद्युपहितरूपेणावघातादेश्चाङ्गित्वसंभवः, तद्वदवधृततात्पर्यकत्वरूपा या ब्रह्मानुभवयोग्यता तद्विशिष्टोद्देशेन मननादेर्विधानादुक्तयोग्यतया अपि उद्देश्यत्वेनाङ्गित्वात्तात्पर्यावधारणस्य मननाद्यङ्गिता" इति । तथाच सर्वेषां सन्निपत्योपकारकाणामुत्पत्त्यपूर्वजननानुकूलयोग्यतासंपादकत्वात् परमापूर्वजननानुकूलयोग्यताविशिष्टयागोद्देशेन विधीयमानप्रयाजादीनां विशिष्टयागप्रविष्टतयाऽवघाताङ्गत्वमपि यत् स्वीक्रियते, तेन न्यायेन अवधृततात्पर्यकशब्दाङ्गत्वेन विधीयमानमननादेरपि तात्पर्यावधारणरूपश्रवणाङ्गत्वमर्थसिद्धमेव । तथाच प्रयाजादीनामिव मननादेरप्यारादुपकारकत्वमेवेति ॥

तदिदं सर्वं मनसि निधायाह—श्रवणफलेति । दर्शननिर्वर्तकतया शब्देन दर्शने जननीये प्रतिबन्धकासंभावनाविपरीतभावनादिनिरसनद्वारा उपकारकत्वेन । आरादुपकारकतया करणगतातिशयाहेतुत्वेनात्मगतातिशयहेतुत्वेनेत्यर्थः ।

सन्निपत्योपकारकारादुपकारकयोरयमेव विशेषः—यत् करणगतातिशयहेतुः सन्निपत्योपकारकम्, भात्मगतातिशयहेतुरारादुपकारकमिति आरादुपकारकाणां

तयाऽङ्गत्वमित्याहुः। तदप्यङ्गत्वं न तार्त्तीयशेषत्वरूपम्; तस्य श्रुत्याद्यन्यतमगम्यस्य प्रकृते श्रुत्याद्यभावेऽसम्भवात्। तथाहि न "व्रीहिभिर्यजेते"ति "दध्ना जुहोती"त्यादाविव मनननिदिध्यासनयोरङ्गत्वे काचित् तृतीयाश्रुतिरस्ति। नापि "वर्हिर्देवसदनं दामी"त्यादिमन्त्राणां वर्हिःखण्डनप्रकाशनसामर्थ्यवत् किञ्चिल्लिङ्गमस्ति। नापि प्रदेशान्तरपठितस्य प्रवर्ग्यस्या"ग्निष्टोमे

करणोत्पत्त्यपूर्वार्थत्वात् सन्निपत्योपकारकाणां करणार्थत्वाच्च सन्निपत्योपकारकमिव करणविशेषणतयाऽऽरादुपकारकं नोद्देश्यतामर्हतीति नारादुपकारकं कदाप्यङ्गितामर्हतीति श्रवणमेवाङ्गि न निदिध्यासनम्। अत एव—"द्रष्टव्यः श्रोतव्य" इति श्रवणस्यैवाव्यवहितपाठ उपपद्यते। अस्मिन्मतेतु—"ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति वाक्ये ध्यायमानः ततस्तु तच्छ्रवणात् इत्येवार्थ इति मन्तव्यम्। ननु "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ। संशयं च निराकृत्य लभते ब्रह्मदर्शनमि"ति प्रथमं श्रवणादेरनुष्ठेयत्वेन श्रवणमेवाङ्गं प्रयाजादिकमिवेत्यत आह—श्रवणात्पराचीनयोरिति। नहि पूर्ववर्त्यैवाङ्गमिति नियमः, उत्तराङ्गानामपि बहूनां सर्वत्र ब्राह्मणतर्पणादीनां सत्त्वादिति न पराचीनत्वमङ्गत्वविरोधीति भावः। इदं सर्वं "शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्, मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुत्वं प्रतिपद्येते इति फलं प्रत्यव्यवहितकारणस्य शक्तितात्पर्यावधारणस्य व्यवहिते मनननिदिध्यासने अङ्गे इति विवरणवाक्यमनुसृत्योक्तम्।

अत्र चाङ्गपदमप्रधानपरम्, न तु शेषपरम्, शेषताग्राहकश्रुतिलिङ्गादीनामत्राभावादित्याह—तदपीति। तार्तीयशेषत्वरूपम् श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याप्रमाणसिद्धकारकविशेषत्वम्। अत्र श्रुतिलिङ्गादीनां स्वरूपमुदाहरणादिकं सर्वं पूर्वमेव विशदीकृतम्। तत्र श्रुतिप्रमाणाभावमाह—तस्येति। लिङ्गाभावमाह—नापीति। लिङ्गमस्तीति। नापि लिङ्ग-

प्रहणात्मौ"ति वाक्यवत् श्रवणानुवादेन मनननिदिध्यासनविनियाजकं किञ्चिद्वाक्यमस्ति । नापि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति वाक्यावगतफलसाधनताकदर्शपूर्णमासप्रकरणे प्रयाजादीनामिव फलसाधनत्वेनावगतस्य श्रवणस्य प्रकरणे मनननिदिध्यासनयोराम्नानम् । ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणे विहिते सति फलवत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोर्मनननिदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेवाङ्गतेति चेन्न; "ते ध्यानयोगानुगता अपश्यन्नि"त्यादिश्रुत्यन्तरे ध्यानस्य दर्शनसाधनत्वेनावगतस्याङ्गाकाङ्क्षायां प्रयाजन्यायेन श्रवणमननयोरेवाङ्गत्वापत्तेः । क्रमसमाख्ये दूरनिरस्ते । किञ्च प्रया-

सस्तीति सम्बन्धः । मननस्य निदिध्यासनस्य च पृथक् पृथक् फलान्तरसत्त्वेन परस्परं कार्यकारणभावाभावात् इस्तेनावद्यतीत्यादाविवार्थसामर्थ्यमत्र नास्त्येव । शब्दसामर्थ्यं तु विना प्रकरणादिकं न प्रसरतीति **नापि वर्हिर्देवेति** वर्णितम् । वाक्यप्रमाणाभावमाह—**नापीति** । अन्वयादिकं पूर्ववत् । वाक्यप्रमाणं हि श्रवणनिदिध्यासनयोरेकवाक्यगतत्व एव प्रसरति, यदि समभिव्याहारमात्रेणाङ्गत्वनिर्णयः; यथा—पर्णमयी जुहूरित्यादौ, अत्र तु श्रोतव्य इत्यादिकं भिन्नं वाक्यमिति न वाक्यैक्यमिति समभिव्याहारमात्रेण नाङ्गत्वम्, अतः प्रदेशान्तरपठितस्य प्रवर्ग्यस्येव निदिध्यासनमुद्दिश्य श्रवणविधायकं वाक्यान्तरमेव ब्राह्मणवाक्यरूपमत्र वक्तव्यम्, तदप्यत्र नास्तीति भावः । प्रकरणमपि नात्र प्रसरतीत्याह- **नापीति** । फलवत्सन्निधावफलं तदङ्गमिति न्यायो हि एकस्य फलवत्त्वेनाङ्गित्वे निश्चित एव भवति, अत्र तु न तन्निश्चितम्, वाक्यान्तरेण निदिध्यासनस्याप्यङ्गित्वसंभवात्, इत्यभिमानः । असुमेवाभिमानमाशङ्कोत्तराभ्यां विशदयति- **नन्विति** । क्रमसमाख्ययोरप्रवृत्तिमाह— **क्रमसमाख्ये इति** । क्रमप्रमाणं हि प्रकरणकल्पनं विना न प्रवर्तते । प्रकरणं तु नात्र पूर्वोक्तरीत्या विनिगमकाभावात् कल्पयितुं शक्यत इति भावः ।

जादिष्वङ्गत्वविचारः सप्रयोजनः—पूर्वपक्षे विकृतिषु न प्रयाजाद्यनुष्ठानम्, सिद्धान्ते तु तत्रापि तदनुष्ठानमिति । प्रकृते तु श्रवणं न कस्यचित् प्रकृतिः, येन मनननिदिध्यासनयोस्तत्रानुष्ठानमङ्गत्वविचारफलं भवेत् । तस्मान्न तार्त्तीयशेषत्वं मनननिदिध्यासनयोः, किन्तु यथा घटादिकार्य्ये मृत्पिण्डादीनां प्रधानकारणता, चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः, तथा श्रवणमनननिदिध्यासनानामपीति मन्तव्यम् । सूचितञ्चैतद्विवरणाचार्य्यैः—"शक्तितात्पर्य्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति ; प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्, मनननिदिध्यासने तु चित्तस्य प्रत्य-

ननु विवरणाचार्य्यैः श्रवणस्यैव प्रमेयावगमं प्रत्यव्यवधानादिनाङ्गित्वमिति व्यवस्थापनात्, "ते ध्यानयोगानुगता अपश्यन्" इत्यस्यापि ते श्रुत्वा ध्यानयोगादिति योजनस्यैव तत्संमतत्वात् प्रकरणं क्रमोऽपि च तार्तीयशेषताग्राहकमत्र प्रवर्त्तत एवेति नायमभिमानो युक्त इत्यस्वरसादाह—किञ्चेति । तथाच तार्तीयशेषताविचारफलमत्र न संभवतीति न तद्विवक्षितमिति भावः । इति शब्देशेषताविचारफलमत्र न संभवतीति न तद्विवक्षितमिति भावः । इति शब्दे-

नात्राप्यस्वारस्यं सूच्यते । तत्र च निदानमिदमेव—यत् सर्वत्र तार्तीयशेषताविचारस्य नोक्तं प्रयोजनं संभवति ; वैकृतधर्माणां विशिष्टानामन्यत्रानतिदेशादिति । सर्वथातु—प्राधान्याप्राधान्ये एवाङ्गित्वाङ्गत्वे इति स्वीकारेऽपि नात्र विरोध इति तु न विवादास्पदमिदमिति तत्परतयैवोक्तग्रन्थप्रवृत्तिरिति सदृष्टान्तमुपपादयति—किन्त्विति । पूर्वोक्तं विवरणवाक्यं निर्दिशति—शक्तीति । प्रमेयावगमं प्रति प्रमां प्रति । अव्यवधानेन कारणं अव्यवहितकारणम् । अव्यवधानात्. कारणत्वात् । तथाच शब्दस्य प्रमाकारणत्वात् शब्दविशेषणं विचारपदवाच्यं श्रवणमपि कारणमेव ; कारणतावच्छेदकस्यापि कारणत्वोपगमात् । प्रत्यगात्मप्रवणेति । ब्रह्मात्मैकमात्रगोचरेत्यर्थः ।

**गात्मप्रवणसंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति फलं प्रत्यव्यवहितकारणस्य शक्ति-**

**तदेकाग्रवृत्तिकार्यद्वारेण**—विपरीतभावनाशून्यब्रह्मात्मैक्याकारवृत्तिरूपकार्यद्वारेण। मननेनासंभावनारूपस्य चित्तविक्षेपहेतोर्निवृत्त्योपिचानात्मकब्रह्मात्मैक्याकारज्ञानेनोक्तसंस्कारः, निदिध्यासनेनतु तस्य दार्ढ्यं च संपाद्यते। ततश्च विपरीतसंस्कारनिवृत्त्योक्तैकाग्रवृत्तिरूपं कार्यं भवतीति भावः। **ब्रह्मानुभवहेतुताम्**—अविद्यानिवृत्त्युपधायकानुभवप्रयोजकताम्, अङ्गस्य प्रधानजन्यफलाहेतुत्वात्। अस्मिन् विवरणवाक्ये हि श्रवणमव्यवहितं मनननिदिध्यासने व्यवहिते इति बोधनात् सूच्यते—यत् न तार्तीयशेषत्वमत्र वर्तत इति मूलकृतां हृदयम्।

सर्वथातु श्रवणमनननिदिध्यासनान्यपि त्रीणि साक्षात्कारसाधनानीत्येव वक्तव्यमिति तेषामपि अन्तरङ्गसाधनऽमुपपद्यत एव। अत एव—"सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदि"ति श्रवणमननयोरपि विद्याङ्गता तृतीयतुरीयपादे प्रतिपादितोपपद्यते। श्रीभाष्यमते हि अत्र श्रोतव्यो मन्तव्य इति न विधिरिति जिज्ञासाधिकरणे विवेचितम्, तदुक्तं श्रीभाष्ये:—श्रोतव्य इति चानुवादः; स्वाध्यायस्यार्थवत्त्वे नाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्; श्रवणप्रतिष्ठार्थत्वान्मननस्य मन्तव्य इति चानुवादः—इति; तत्र सहकार्यन्तरविधिरिति सूत्रं तद्भाष्यं चानुपपन्नमेव स्यात्। इदमेव तत्सूत्रस्थं श्रीभाष्यम्—एवं प्राप्ते ब्रूमः—**सहकार्यन्तरविधिरिति**। **तद्वतः** विद्यावतः। **विध्यादिवत्** विधीयत इति यज्ञादिस्सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते। आदिशब्देन श्रवणमनने गृह्येते इति।

अत्र श्रवणमननयोरुभयोरपि अर्थप्राप्तयोरेव ग्रहणं श्रीभाष्यमते, एवं नियतपूर्वभावित्वं तु समानमिति श्रवणमननयोर्विद्योपकारकत्वे न विवादः; इयान् विशेषः—यत् अद्वैतमते निदिध्यासनमपि साक्षात्कारसाधनम्, श्रीभाष्यमते तु निदिध्यासनमेव साक्षात्कार इति। अत्र च "ते ध्यानयोगानुगता

## तात्पर्य्यविशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे अङ्गीक्रियेते" इति।

## श्रवणादिषु च मुमुक्षूणामधिकारः; काम्ये कर्मणि

अपश्यन्" इति ध्यानादर्थान्तरस्य साक्षात्कारस्य निर्देशोऽनुपपन्नः स्यादिति त्रितयमपि साधनमिति शांकरं मतम्, तदिदं सिद्धम्—साधनाध्यायचतुर्थपाद-प्रतिपादितं कर्म श्रवणादिकं च सर्वं साक्षात्कारसाधनमेव, इयान् विशेषः—यत् कर्म बहिरङ्गं साधनं श्रवणादिकमन्तरङ्गं साधनमिति। तथाचेदमत्र सिद्धं भवति—यत् श्रीभाष्यमते कर्मशमदमादिकं श्रवणमनने च सर्वमिदं मोक्ष-साधनध्रुवानुस्मृतिपदवोध्यदर्शनसमानाकारज्ञानसाधनम्, अद्वैतमते तु कर्म चित्तशुद्धिद्वारा, शमदमादिकं श्रवणद्वारा, श्रवणादिकं च साक्षात्साक्षात्कार-साधनमिति। तत्र मतद्वयेऽपि श्रवणविधिमूलके .रागप्राप्ते वा विचारे कर्मणां नोपयोगः। तदुक्तं श्रीभाष्ये सर्वापेक्षाधिकरणे—"अतो यज्ञादीनां ज्ञानसाधनत्व-मवगम्यते। ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्य-विशदतमप्रत्यक्षतापन्नस्मृतिरूपमिति। एवं चा"थातो ब्रह्मजिज्ञासे"त्यत्र प्रति-ज्ञातायां श्रीभाष्यमतरीत्या रागप्राप्तायां जिज्ञासायां वाक्यार्थज्ञानार्थविचार-रूपायां कर्मोपयोगः श्रीभाष्यमतेऽपि न संभवतीति कर्मविचारानन्तरं ब्रह्म-विचार इति विदितकर्मावबोध एव ब्रह्मविचाराधिकारीति वा कथमपि न संभवतीति संजातमोक्षाभिलाष एव ब्रह्मविचाराधिकारीत्येव स्वीकर्तव्यम्। संमतं चेतत् श्रीभाष्यकाराणामपि, यत् मुमुक्षाऽधिकारिविशेषणमिति। तदुक्तं श्रीभाष्ये—"संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा भवती"ति। मुमुक्षायां तु किं वा कारणमिति विचारे तु सत्यं कर्मविचार इति समस्ति मतभेदस्तेषाम्, तथापि विप्रतिपन्ने विषये विनिर्णयमनन्तरकर्तव्यं मन्वानो मतद्वयसंप्रतिपन्न-मधिकारिविशेषणं सूचयन् श्रवणाद्यधिकारिणं निर्दिशति—**श्रवणादिष्विति।**

**मुमुक्षूणामिति।** संजातमोक्षाभिलाषाणामित्यर्थः। एतेन मुमुक्षैव मुख्यमधिकारिविशेषणमिति सूचितम्। अत एव तृतीयचतुर्थपादे "एवं मुक्तिफलानियमस्तदवस्थावधृतेरि"ति मुक्तिरूपफलैकरूपतयैवोपसंहार उपपद्यते।

**फलकामस्याधिकारित्वात्। मुमुक्षायास्तु नित्यानित्यवस्तुविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधान-**

अत्र मुक्तौ फलत्वनिर्देशेनेष्यमाणत्वं तस्यैव योग्यमिति सूचनेन मुख्यमधिकारिविशेषणं मुमुक्षैवेति गम्यते। एवं व्यवस्थायां "सहकार्यन्तरविधिरि"ति श्रवणादिविवेचनानन्तरमेव मुक्तिफलविचारोऽपि गमक इति तृतीयाध्यायचतुर्थपादस्य विपरीतक्रमेण योजने मुक्तिः फलम् तत्साक्षात्साधनं श्रवणादिकम्, तत्साधनं शमदमादिकमित्येव सिध्यति। यत्तु—"शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वादि"ति सूत्रानन्तरं "विहितत्वाच्चाश्रमकर्मापी"ति सूत्रम्, तन्मतद्वयेऽपि कर्माण्यमुमुक्षूणामप्यनुष्ठेयानीति विवेचनार्थत्वात् न मुक्तिसाधनतामाश्रमकर्मणां निरूपयति। श्रीभाष्यकारा अपि—ये खलु शमदमाद्युपेतः स्यादित्यस्योर्ध्वरेतोविषयत्वं मन्यन्ते, तेऽपि सर्वसाधारणं शमदमादिकमिति मन्यन्त एवेति मुमुक्षायां शमदमादिकं साधनमित्यपि मतद्वयसंमतमिदम्। इतः परं तु शमदमादिसाधनं किमित्येव विचारः कर्तव्यः। तत्र चा"ग्नीन्धनाद्यनपेक्षे"ति कर्मणां मोक्षेऽनुपयोगवर्णनेन, शमदमादौ दृष्टविधया तदुपयोगस्य मतद्वयासंमतत्वेनेहामुत्रार्थफलभोगविरागस्यैव, तृतीयाध्यायद्वितीयपादेनैहिकानां मायामात्रत्वादिबोधनेन विरागयोग्यत्वम् तत्प्रथमपादेनामुष्मिकफलानामावृत्तिप्रयोजकतादिद्वारा विरागयोग्यत्वं च प्रतिपाद्यतेऽनुषक्तनय ब्रह्मेतरसर्वविनश्वरत्वं च वियत्पादव्यवस्थापितमनुक्रष्यत इति नित्यानित्यवस्तुविवेकसाध्यस्य साधनत्वं सूत्रकारसम्मतमिति स्वरसः पन्थाः। इममेव पन्थानं मनसि निधायाह—**मुमुक्षायां च नित्यानित्यवस्तुविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानां च विनियोग इति॥**

अत्र सर्वेषां साक्षाद्विनियोगो नाभिमतः, किन्तु क्रमेण इति संप्रदायः। अत्र नित्यानित्यवस्तुविवेकशब्देन सामान्यतः सत्यमस्तीतिज्ञानम्, विशेषतोऽसत्यमिति विज्ञानाभ्यासश्च विवक्ष्यत इति "मायामात्रं तु" इति मायामयत्वव्यवस्थापनानुसारेणावगम्यते।

**श्रद्धानां च विनियोगः । अन्तरिन्द्रियनिग्रहः शमः । बहिरिन्द्रियनिग्रहो दमः । विक्षेपाभाव उपरतिः । शीतोष्णादिद्वन्द्वसहनं**

यत्तु श्रीभाष्ये—अपि च नित्यानित्यवस्तुविवेकादयो मीमांसाश्रवणमन्तरा न संपत्स्यन्ते इति ब्रह्ममीमांसापूर्वतनत्वं नित्यानित्यवस्तुविवेकादीनां न संभवतीति निरूपितम्, तदिदं श्रीभाष्यमतेऽपि ब्रह्ममीमांसाद्वतीयाध्यायश्रवणमन्तरा कर्मफलानित्यत्वतद्विरागादेरपेक्षितस्यासंभवात् समानम् ।

वस्तुतस्तु—"जैमिनीयकर्मविचारस्त्वर्थक्रमात् ब्रह्ममीमांसाद्वतीयलक्षणचतुर्थपादेन सङ्गतः, प्रतिपत्तिलक्षणसौकर्यक्रमात्तु पूर्वं निर्दिष्ट" इति श्रुतप्रकाशिकोक्त्या जैमिनीयकर्मविचारोऽपि ब्रह्ममीमांसाद्वतीयाध्यायशेष इत्येव श्रीभाष्यसिद्धान्त इत्यूरीकर्तव्यमिति जैमिनीयकर्मविचारोऽपि ब्रह्मजिज्ञासामन्तरेण न संभवतीति कर्मस्वरूपविचारस्तत्फलानित्यत्वविचार उभयमपि न ब्रह्मविचारपूर्ववृत्ततामर्हति, किन्तु पूर्वोक्तरीत्या नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयमेव तामर्हति, यत् विनापि विचारमनुभवमूलकपरीक्षामात्रेण सामान्यतो वेदान्ताध्ययनेनापि च संभवति, कर्मविचारस्तु नैवमिति श्रीभाष्यमत एवान्योन्याश्रयदोषो नाद्वैतमते ।

अयं भावः—"अथातो ब्रह्मजिज्ञासे"त्यत्र यद्विषयवाक्यतया विवक्षितम्—"सोऽन्वेष्टव्यः" आत्मा वाऽरे द्रष्टव्यः," "आत्मन्येवात्मानं पश्येत्" तद्विजिज्ञासस्वेत्येतेषामन्यतमम्, गुणोपसंहारन्यायेनैकार्थत्वात्सर्वं वा, तत्रैकैकत्र "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा" "वरुणं पितरमुपससार" इति नित्यानित्यवस्तुविवेकादिकं यथा पूर्ववृत्ततया तत्तद्विषयवाक्यशेष एवाम्नायते, न तथा जैमिनीयकर्मविचारः तद्विशिष्टकर्मफलानित्यत्वमात्रं वेति विचारकर्तव्यतां प्रतिपादयतः सूत्रकारस्योक्तसाधनचतुष्टयसंपत्तिरिव गुणोपसंहारन्यायेन बुद्ध्युपारूढा, नान्यत्किमपीति युक्तमुक्तं नित्यानित्यवस्तुविवेकस्येत्यादि ॥

शमदमादीन् लक्षयति—**अन्तरिन्द्रियेति** । अन्तःकरणस्य बहिर्मुखतानिवर्तनम् । **बहिरिति** । चक्षुरादीनां स्वविषयान्निवर्तनम् ॥

तितिक्षा । चित्तैकाग्र्यं समाधानम् । गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा । अत्रोपरमशब्देन संन्यासोऽभिधीयते । तथाच संन्यासिनामेव श्रवणादावधिकार इति केचित् । अन्ये तूपरमशब्दस्य संन्यासवाचकत्वाभावात् विक्षेपाभावमात्रस्य गृहस्थेष्वपि सम्भवाज्जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् सर्वाश्रमसाधारणं श्रवणादिविधानमित्याहुः ।

विक्षेपाभाव इति । रजसो विषयेष्वेव वृत्तिमत्त्वं क्षेपः, विशिष्टः क्षेपः सत्त्वाधिक्येन समादधतोऽपि चित्तस्यान्तरान्तरा विषयान्तरवृत्तिमत्त्वमिति यावत् । व्यक्तं चैतत् योगवार्तिके । इयं चोपरतिर्गृहस्थसाधारणीति गृहस्थानामप्यधिकारः सिध्यति । अत एव "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्," "सर्वथापि त एवोभयलिङ्गात्" "कृत्स्नभावात्तु गृहिणोपसंहारः" इति साधनाध्यायगतानि सूत्राण्युपपद्यन्ते, अन्यथा गृहस्थतां विना यज्ञादीनामनुष्ठानासंभवात् सर्वापेक्षेत्यादिकमसङ्गतमेव स्यादिति निगूढाशयः । शमेत्यादि स्पष्टार्थम् । एकदेशिनां मतेनोपरतिशब्दार्थमाह—अत्रेति । केचिदिति । सर्वापेक्षासूत्रादिकं कर्मणां विविदिषोपयोगबोधनार्थमेव, नतु गृहस्थानामपि विचाराधिकारबोधनार्थमिति तदभिमानः । उक्तमतेऽस्वारस्यसूचनपूर्वकं स्वीयं निगूढमाशयं विशदयति—अन्ये त्विति । उपरतिशब्दस्य विक्षेपाभावपरतापक्षपातिन इत्यर्थः । तदिदमाह—विक्षेपाभावेति । सर्वाश्रमसाधारणमिति । अत एव—"जनको ह वै वैदेहो बहुदक्षिणेन यज्ञेनेजे । यक्ष्यमाणो वै भगवन्तोऽहमस्मी"त्येवमादीनि ब्रह्मविदामप्यन्यपरेषु वाक्येषु कर्मसम्बन्धदर्शनानि, तथोद्दालकादीनामपि पुत्रानुशासनं चोपपद्यते ।

वस्तुतस्तु—"जनको ह वैदेह" इत्यादिकं "शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिरि"ति पूर्वपक्षगुणसूत्रे "आचारदर्शनादि"तिसूत्रे एवोपक्षिप्तं भाष्यकृता, नतु सिद्धान्तगुणसूत्रे । तत्र तु "तुल्यं तु दर्शनमि"ति सूत्रे "यक्ष्यमाणो वै भगवन्तोऽहमस्मी"त्यादीनां वैश्वानरादिसगुणविद्याविषयत्वमेव वर्तते इति विवेचनपूर्वकं कर्मनिरपेक्षत्वमेव बोध्यत इति नायं सर्वाश्रमसाधारण्य-

**सगुणोपासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मसाक्षात्कारहेतुः। तदुक्तम्—**

**"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।**
**ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः।**
**वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।**

पक्ष आकरसम्मत इति गृहस्थानां सगुणोपासन एवाधिकारो नतु निर्गुणब्रह्मविचार इति परे मन्यन्ते।

सर्वथातु न कर्मावबोधस्य श्रवणाद्यधिकारप्रयोजकत्वम्। नहि कर्मणो वाक्यार्थज्ञानरूपब्रह्मसाक्षात्कारे मोक्षे वोपयोगः संभवति। तथाहि वाक्यादेवाकाङ्क्षादिविशिष्टात् वाक्यार्थज्ञानसंभवात् न तत्र कर्मण उपयोगः। द्वितीये तु क्रियाजन्यत्वेन मोक्षस्यानित्यत्वापत्तिः। अत एव—वेदान्तानामुपास्यसविशेषब्रह्मपरत्वमित्युपासनासाध्यो मोक्ष इति पक्षोऽपि—निरस्तः। उपासनासाध्यत्वे हि मोक्षः सातिशयः सशरीरोपभोग्यश्च स्यादिति "अशरीरं शरीरेषु" इत्यादिबहुश्रुतिविरोध इत्यादिकं समन्वयाधिकरण आकरे व्यक्तमिति न दोषः।

**ननु**—यदि न सविशेषोपासनस्य मोक्षसाधनत्वम्, तर्हि ब्रह्ममीमांसायां सगुणवाक्यानां बहूनां विचारो न संगच्छते; तस्य मोक्षानुपयोगात्, इत्यत आह—**सगुणोपासनमपीति।** ब्रह्ममीमांसायां प्रतीकोपासनानि कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानि स्वतन्त्रोपासनानि कानिचन दहरादिविषयाणि च यानि विचारितानि, तेषु केषांचन प्रसङ्गेन, केषांचन ब्रह्मलोकप्रापणद्वारा तत्र चित्तैकाग्र्यादिसाधनद्वारेण ब्रह्मणा सह मुक्तिप्रापकत्वेन मोक्षोपयोगेन च सम्बन्धो नानुपपन्नः। व्यक्तं चैतद्"प्रतीकालम्बनान् नयतीति बादरायण" इति सूत्रादौ। तथाचेह जन्मनि विनोत्क्रमणं निर्विशेषब्रह्मसाक्षात्कारे श्रवणस्यैव कारणत्वेऽपि ब्रह्मलोके विचारोपयोगिचित्तैकाग्र्यसंपादनद्वारेण सगुणोपासनान्यपि नासङ्गतानीति भावः।

**तदिदमाह—निर्विशेषेति।** अत्र प्रमाणमाह—**निर्विशेषमिति।** तथाचाशक्तविषयत्वं सगुणनिरूपणस्येति फलितम्। तदेव निर्विशेषं ब्रह्मैव।

तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनमिति । सगुणोपासकानाञ्च अर्चिरादिमार्गेण ब्रह्मलोकं गतानां तत्रैव श्रवणा-

अपेतोपाधिकल्पनं कल्पितोपाधिविगमद्वारा आविर्भवेत् ब्रह्मलोके श्रवणादिकालं विनापि सगुणनिदिध्यासनमुत्पद्येतेति भावः। ननु सगुणोपासकानां ब्रह्मलोक एव निर्विशेषसाक्षात्कार इति कुत इत्यत आह—सगुणोपासकानामिति । सत्यं सगुणोपासनस्य हि फलमुपास्यसगुणब्रह्मप्राप्तिरेव, न निर्गुणब्रह्मसाक्षात्कारः, प्रमाणाभावात् ; तथापि सगुणोपासकानामर्चिरादिमार्गेण ब्रह्मलोकं गतानां "न स पुनरावर्तते" इति श्रुत्याऽपुनरावर्तमानानां च "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।" इति वचनानुसारेण ब्रह्मणा सह साक्षात्कृतात्मनां ब्रह्मभावाख्या मुक्तिर्भवत्येवेति, तदभिप्रायेणैवोक्तम्—तदेवाविर्भवेदित्यादि ॥

अर्चिरिति । यद्यपि "तेऽर्चिषमभिसंविशन्त्यर्चिषोऽहः" "स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति" "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमभिगच्छति" "सूर्यद्वारेण ते विरजा भवन्ति" इति चार्चिरादिरिव देवयानादिर्वाय्वादिः सूर्यादिश्च मार्गः तत्तच्छ्रुतिष्वाम्नायते ; एवमपि कथंचन कथंचन सर्वेषामेतेषामर्चिरादौ संनिवेशसंभवात् अर्चिरादित्वमेव योग्यम् । भूयांस्यर्चिरादिस्तौ मार्गपर्वाणि, अल्पीयांसि त्वन्यत्रेति बहुबाधायोगात् । व्यक्तं चैतद"र्चिरादिना तत्प्रथितेः" इति सूत्रे आकरे ।

तदयं मार्गक्रमः—अर्चिः, अहः, आपूर्यमाणपक्षः, उत्तरायणम्, संवत्सरः, वायुः, आदित्यः, चन्द्रमाः, तडित्, वरुणः, इन्द्रः, प्रजापतिः । यद्यपि छान्दोग्ये—"तेऽर्चिषमेवेति वाक्ये वायुः वरुणेन्द्रादयश्च न श्रूयन्ते ; तथापि श्रुत्यन्तराम्नातानां तेषां—"वायुमब्दादविशेषविशेषाभ्याम्" तडितोऽधि वरुणः सम्बन्धात्" इति सूत्राभ्यामब्दाद्यनन्तरत्वं साधितमिति न विरोधः । इदं सर्वमभिप्रेत्योक्तमादीति ॥

अत्रार्चिरादिशब्देन तदभिमानिदेवताविशेषा नेतार एव विवक्षिताः, नतु

**व्युत्पन्नतत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः। कर्मवतां धूमादिमार्गेण पितृलोकं गतानामुपभोगेन कर्मक्षये सति**

मार्गचिह्नानि भोगभूमयो वेति—"आतिवाहिकास्तल्लिङ्गात्" इति सूत्रेण यत् विवेचितम्, तत्सूचनार्थमाह—**मार्गेणेति**। द्वारेणेत्यर्थः।

"स एनान् ब्रह्म गमयती"ति अर्चिरादिहिरण्यमानवपुरुषस्य ब्रह्मप्रापकत्वमवगम्यते। ब्रह्मशब्देन चात्र मुख्यत्वात् परमेव ब्रह्म विवक्षणीयमिति जैमिनिमतनिरासपूर्वकं "कार्यं बादरिरस्य गत्युपपत्तेरि"त्यत्र हिरण्यगर्भस्यैव विवक्षेति यत्साधितम्, तदिदं मनसि निधायाह—**ब्रह्मलोकमिति। गतानामिति।** नीतानामित्यर्थः। "स एनान् ब्रह्म गमयती"ति श्रुतेरिति भावः॥

एतेन—अविदुष इव अपरविद्यारूपसगुणोपासनापरस्यापि "वाङ् मनसि संपद्यते" इत्यादिवागादिवृत्तिलयमात्रम्, नतु स्वरूपलयः, एवमुत्क्रमणं च वर्तत एवेति चतुर्थाध्यायप्रथमपादगतानां चतुर्णामाद्यानामधिकरणानां सारः—संगृहीतः। अथ प्रसङ्गादविदुषां मध्ये केषांचन धूमादिमार्गेण केषांचन तृतीयस्थानेन याम्यमार्गेण पितृलोकादिकं गतानां पुनरावृत्तिर्वर्त्तत इति विशेषं निरूपयति—**कर्मवतामिति। धूमादिमार्गेणेति।**

स च मार्गश्छान्दोग्योपनिषदि—"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते धूमादात्रिं रात्रेरपरपक्षमपरपक्षात् यान् षड् दक्षिणेति मासाँस्तान् नैते संवत्सरमभिसंभवन्ति, मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्, एष सोमो राजे"ति वाक्येन समाम्नातः। भगवद्गीतायामपि मार्गद्वयमिदम्—"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। धूमो रात्रिरहः कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते। शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनः।" इति विशदीकृतम्। तत्र मार्गद्वयेऽर्चिरादिमार्गः फलकल्पः, धूमादिमार्गस्तु वैराग्यसाधनद्वारा साधनकल्प इति चतुर्थाध्यायेऽर्चिरादिस्तृतीयाध्याये धूममार्गश्च सूत्रकृता विचारितः। परिभाषाकारास्तु साधनपरिच्छेदस्य पृथगकरणेन प्रयोजनपरिच्छेद एव मार्गद्वयमपि निरूपयन्तीति मन्तव्यम्। तदेतन्मूल एवानुपदमेव सूचयिष्यन्ति प्रसङ्गागतेनेत्यादिना।

पूर्वकृतसुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरान्तेषु पुनरुत्पत्तिः। तथाच श्रुतिः—"रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमि"ति। प्रतिषिद्धानुष्ठायिनान्तु रौरवादिनरकविशेषेषु तत्तत्पापोचितं तीव्रदुःख-

पितृलोकं गतानां पितृलोकद्वारा चन्द्रलोकं गतानाम्। तथाच श्रुतिः—"स सोमलोके विभूतिमनुभूय पुनरावर्तते" इति। कर्मक्षये—स्वर्गादिलोकप्रापकस्य कर्मणः सर्वात्मना क्षये। तथाच श्रुतिः—"तस्मिन् यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्"—इति। अयं चार्थः—"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" इति सूत्रे आकरे विशदीकृतः। अत्र कर्मक्षयपदेन स्वकृतसर्वकर्मणामिव ग्रहणं भवति, उत स्वर्गादिप्रापककर्मविशेषस्यैवेति शङ्कावारणार्थं सूत्रेऽनुशयवानिति सूचितम्। तत्रचानुशयशब्देन भुक्तांशविशेषो विवक्षित इति मतनिरासपूर्वकं "सुकृतदुष्कृते एवेति बादरि"रिति सूत्रेणावशिष्टपूर्वकृतसुकृतदुष्कृतयोरेव ग्रहणमिति सूत्रकारेणैव विशदीकृतमिति सूचितम्। कर्मक्षयपदेनात्र न स्वीयकर्मसामान्यग्रहणम्, येनावरोहाप्रसङ्ग इष्टादिकारिणामपीति सूचयन्नवरोहनिमित्तमुपपादयति—पूर्वकृतेति। उक्तार्थे श्रुतिं प्रमाणयति—तथाचेति॥

ननु—इष्टादिकारिणामिवानिष्टादिकारिणामपि चन्द्रलोकगमनं समानमिति परलोकभोगसाम्यापत्तिरिति शङ्कां "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनादि"ति सूत्रसिद्धान्तं मनसि निधाय परिहरन्ननिष्टकारिणां तेभ्यो विशेषमाह—प्रतिषिद्धानुष्ठायिनामिति।

अत्र च प्रसङ्गे—"वायुर्भूत्वा धूमो भवती"ति बोध्यमानो वाय्वादिभावः किं तत्साद्रूप्यमुत तत्स्वरूपत्वम्, एवं कियत्कालं वाय्वादिभावः, एवमवरोहसमये "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते" इत्यादावाम्नायमानो व्रीह्यादिभावः किं जीवान्तराधिष्ठिततत्संसर्गमात्रमुत तद्भाव एव, इत्यादिविवेचनमपि नियतं प्रपञ्चनीयम्, एवमपि प्रयोजनपरिच्छेदातात्पर्यविषयत्वेन

मनुभूय श्वशूकरादिषु तिर्य्यग्योनिषु स्थावरादिषु चोत्पत्ति-रित्यलं प्रसङ्गागतप्रपञ्चेनेति ।

निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकान्तरगमनम् ; "न

प्रासङ्गिकत्वाच्चेष्टानिष्टकारिगमनागमनादिविचारस्य नात्र प्रपञ्चनं युक्तमिति तत्प्रपञ्चोऽत्र न संपादित इत्याह—इत्यलमिति । प्रसङ्गागतप्रपञ्चेनेति । सगुणोपासनस्य निर्गुणसाक्षात्कारहेतुत्वप्रसङ्गागतप्रकृतनिर्गुणसाक्षात्कारस्थलानुपयुक्तगत्यागत्यादिविचारगतविशेषविस्तारेणेत्यर्थः ॥

ननु—निर्गुणसाक्षात्कारेऽपि गतिनिरूपणं नानुपयुक्तम्, "समाना चासृत्युपक्रमादि"ति विद्वदविदुषोः समैव सृतिरिति यद्वर्णितं तत्र हि विद्वच्छब्देन मुख्य एव हि विद्वान् विवक्ष्यते। "न तस्मात् प्राणा उत्क्रामन्तीति"हि प्राधान्यादभ्युदयनिःश्रेयसाधिकृताज्जीवादेव प्राणवियोगं निषेधति, न शरीरात् इत्यत आह—निर्गुणेति । ननूक्तश्रुतिविरोधः कथं नेत्यत आह— "न तस्येति । श्रुतेरिति । तथाच बृहदारण्यके चतुर्थप्रपाठके "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" इत्युपक्रम्य "तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणा अनूत्क्रामन्ति" इत्यविदुष उत्क्रान्तिप्रकारमभिधाय "अन्यन्नवतरं कल्याणं रूपं प्रतिपद्यते"इति देहान्तरपरिग्रहं चाभिधाय "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे, इति तु कामयमान" इत्यविद्वद्विषयं समाप्य "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती"ति विदुषः स्पष्टं तस्येति षष्ठीनिर्देशेन शरीरादेवोत्क्रान्तिनिषेधस्य गम्यमानत्वात्, विद्वदविदुषोरुभयोरपि प्राणोत्क्रमणे समाने "अथाकामयमान"इति वैषम्येनोपक्रमायोगेन श्रुत्यन्तरगते "न तस्मात् प्राणा उत्क्रामन्ति"इति वाक्ये तदविरोधेन शरीरादुत्क्रमणनिषेधस्यैव स्वीकरणीयत्वेन च विदुषो न लोकान्तरगमनमिति भावः। तथाच स्मृतिः— "सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य

तस्य प्राणा उत्क्रामन्ती"ति श्रुतेः, किन्तु यावत् प्रारब्धक्षयं सुखदुःखे अनुभूय स पश्चादपवृज्यते। ननु "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुत्या "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुतेऽर्जुने"ति स्मृत्या च ज्ञानस्य सकलकर्मनाशहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेन्न; "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्यादिश्रुत्या "नाभुक्तं क्षीयते कर्म्मे"त्यादिस्मृत्या चोत्पादितकार्यकर्मव्यतिरिक्तानां सञ्चितक्रियमाणकर्म्मणामेव ज्ञानविनाश्यत्वावगमात्। सञ्चितं द्विविधं सुकृतं दुष्कृतञ्चेति। तथाच श्रुतिः—"तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति।

पदेशिषः" इति। तथाच श्रवणादिभिस्समुत्पन्नः साक्षात्कार आमरणमावर्त्तते चेत् "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावि"ति न्यायेन सर्वकर्माभावे सति निनैव लोकान्तरगमनं ब्रह्मभावमाप्नोति जीव इति सिद्धम्।

ननु सत्यपि श्रवणमनननिदिध्यासनजनिते आत्मसाक्षात्कारे वामदेवादीनां व्यवहारदर्शनात् साक्षात्कारमात्रेण प्राणादिविलयो न संभवति, किन्तु मुक्तस्य सप्राणस्यैव सर्वदाऽवस्थानम्, अन्यथा जीवदशैव मुक्तानां न स्यादित्याशङ्काह— किन्त्विति। यावत्प्रारब्धक्षयमिति। "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावि"त्यस्य हि प्रारब्धेतरविषयत्वमेव। अत एव सूत्रान्तरम्—"भोगेन त्वितरे क्षपयित्वा ततः संपद्यते" इति। तथाच यावत्प्रारब्धक्षयं दृश्यमानं जीवत्त्वं न मुक्तिकालेऽपि सप्राणत्वं गमयितुमर्हति; अन्यथा श्रीभाष्यादिमते भगवत्साक्षात्कारानन्तरमपि शुकादीनां प्राकृतशरीरवत्त्वस्यैवानुभवात् मुक्तावपि प्राकृतं शरीरमापद्येतेति न कोऽपि दोष इति भावः। अमुमेवार्थमाशङ्कापरिहाराभ्यां विशदयति—नन्वित्यादिना। ननु—प्रारब्धकर्मणोऽपि मूला-

ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्य्यप्रारब्धकर्मणोऽपि निवृत्तेः कथं ज्ञानिनो देहधारणमिति चेन्न; अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्त्तकतया प्रारब्धकर्मरूपप्रतिबन्धकदशायामज्ञाननिवृत्तेरनङ्गीकारात्। नन्वेवमपि तत्त्वज्ञानेनैकस्य मुक्तौ

ज्ञानकार्यत्वात् ब्रह्मज्ञानेनाज्ञाननिवृत्तिरेव न्यायसिद्धेति कथं प्रारब्धकर्मेतरस्यैव ज्ञाननाश्यत्वमिति सौत्रसिद्धान्तोऽपि न्यायविरुद्ध उपपद्यत इति शङ्कते—नन्विति। ज्ञानस्याज्ञानतत्प्रयुक्तोभयविरोधित्वं ह्यवश्यमेवोरीकरणीयम्, अन्यथा ब्रह्मज्ञानानन्तरमपि वियदादिसत्त्वप्रसङ्गादिति शङ्काहृदयम्। अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसहितभ्रमव्याप्यभुज्यमानादृष्टाभावसहितज्ञानस्यैवाज्ञानतत्प्रयुक्तोभयनाशकत्वम्। तथाच भुज्यमानादृष्टगतप्रारब्धत्वस्य तन्नाशप्रतिबन्धकत्वात् न दोष इति शङ्कामेतां समाधत्ते—अप्रतिबद्धज्ञानस्यैवेति।

तदिदं सिद्धम्—यत् ज्ञानेनाज्ञाननिवृत्तौ अन्तःकरणतादात्म्याद्यादिप्रयुक्तस्य सर्वस्य बन्धस्य निवृत्त्या जीवस्य जीवताऽपैतीति ब्रह्मभाव एव मुक्तिः, सा च ज्ञानैकनिबन्धना, नोपासनासाध्येति, तत्र श्रवणादीनि, तत्र नित्यानित्यवस्तुविवेकादिकं च साधनमिति निर्विशेषब्रह्मतावाद एव युक्त इति।

ननु निर्विशेषब्रह्मभावो न मुक्तिः, ब्रह्मणो निर्विशेषता हि अविद्यादिद्वितीयपदार्थशून्यत्वमेव; तच्च शुकादीनां ब्रह्मज्ञानेन संपन्नं वा न वा? आद्ये अस्मदादीनां संसारानुपलब्धिप्रसङ्गः। तथाहि—ब्रह्मावरकमज्ञानमेकं वाऽनेकं वा? आद्ये एकमुक्तौ सर्वमुक्त्यापत्तिः। द्वितीये अनेकैरज्ञानैरावृतं ब्रह्मैकमित्येवोरीकर्तव्यम्। तत्र च शुकादितत्त्वज्ञानेन सर्वाज्ञानविनाशे सर्वमुक्त्यापत्तिः। तत्तदज्ञानमात्रविनाशे तु शुकादिभिरन्याविद्यासहितब्रह्मभाव एव प्राप्तः, नतु सर्वाज्ञानशून्यतद्भाव इति न निर्विशेषब्रह्मभावसिद्धिः। यदि तु शुकादीनां न संपन्नम्, तर्हि तु बहुप्रमाणविरोध इत्यभिप्रायेण शङ्कते—नन्विति। तत्त्वज्ञानेन निर्विशेषाखण्डसाक्षात्कारेण। एकस्य शुकादेः। मुक्तौ ब्रह्मावरका-

**सर्वमुक्तिः स्यात्, अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादिति चेन्न; इष्टत्वात् इत्येके ।**

ज्ञाननाशप्रयुक्तानर्थनिवृत्त्युपलक्षितब्रह्मभावे । **सर्वमुक्तिः** अतत्त्वज्ञानिनामन्येषामपि मुक्त्यापत्तिः । कथमित्यत आह—**अविद्याया एकत्वेनेति ।** "मायामेतां तरन्ति" इत्येकवचनश्रवणात् मूलाविद्यैकैवोरीकर्तव्येति शुकादितत्त्वज्ञानेन मूलाज्ञानविनाशे तत्प्रयुक्तसर्वसंसारनिवृत्तिरिति भावः ।

**नन्वियमाशङ्का** एकजीववादेन वा अनेकजीववादेन वा ? द्वितीये जीव इवेश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य बिम्बभूतचैतन्यभाव एव न निर्विशेषब्रह्मभावः । यत्र ह्येकस्यानेकोपाधिषु प्रतिफलनम्, तत्रैकोपाधिविलये सति प्रतिबिम्बस्य बिम्बभाव एव हि दृश्यते । प्रतिबिम्बो जीव ईश्वरो बिम्बस्थानीय इति पक्षेऽपि तु यावत्सर्वमुक्ति सर्वज्ञत्वसत्यसंकल्पत्वसर्वकर्तृत्वसर्वेश्वरत्वादिगुणकपरमेश्वरभावापत्तिरेव मुक्तिः, नतु निर्विशेषब्रह्मभावः । तथा चानेकजीववादे मूलाविद्याया अवस्थाविशेषरूपा मूलाविद्यारूपा वा अनेका एवाविद्या उरीक्रियन्त इति यावत्सर्वमुक्ति तस्मिन् पक्षेऽभिमतेश्वरभावापत्तिरूपा मुक्तिरेकमुक्तौ सर्वस्य न प्रसरति । अधिकं चात्रापेक्षितं सिद्धान्तलेशसंग्रहतोऽवगन्तव्यम् । एकजीववादे तु यत्र—जीव एकस्तेन चैकमेव शरीरं सजीवम्, स च हिरण्यगर्भ एव, अन्यानि स्वप्नदृष्टशरीराणीव निर्जीवानि, तदज्ञानकल्पितं सर्वं जगत्, तस्य स्वप्नदर्शनवत् यावदविद्यं सर्वो व्यवहारः । बद्धमुक्तव्यवस्थापि नास्ति; जीवस्यैकत्वात् । शुकमुक्त्यादिकमपि स्वप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम्—इत्यादिदृष्टिसृष्टिवादमवलम्ब्य प्रक्रियाव्यवस्था, तत्र हि एकमुक्तौ सर्वमुक्तिर्या खलु शुद्धचैतन्यभाव एव विवक्ष्यते, सा नासम्मतेति श्रुद्वैतिनां प्रक्रिया । तत्रानेकजीववादमवलम्ब्योक्तायाः शङ्कायाः परिहारं "इतरे तु" इत्यादिना निरूपयिष्यन् एकजीववादेन स्वाभिमतं परिहारमाह—**इष्टत्वादिति ।** एके एकजीववादपक्षपातिनः । अत्रैकजीववादे एको जीवो हिरण्यगर्भ इत्येकं मतम्, अपरं तु तस्यापि प्रतिकल्पं भेदेनास्मदादिजीवतुल्यत्वमेवेति समष्ट्यज्ञानोपहितमन्यदेव चैतन्यमिति मतमित्यन्यदेतत् ।

अपरे तु एतद्दोषपरिहारार्थैवेन्द्रो मायाभिरिति बहुवचनश्रुत्यनुगृहीतमविद्याया नानात्वमङ्गीकर्त्तव्यमित्याहुः।

अन्ये तु एकैवाविद्या। तस्या एवाविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना। तथाच यस्य ब्रह्मज्ञानं तस्यैव ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशो न त्वन्यं प्रति ब्रह्म-

अनेकजीववादेनोक्ताशङ्कां परिहरन्नाह—**अपरे इति**। अनेकजीववादे हि मतभेदो वर्त्तते। यथा—प्रतिजीवमविद्याभेदेनाविद्यानानात्वमतम्, एकस्या एवाविद्याया अनेकांशत्वमतमिति। तत्र प्रथममते—कस्याविद्यया प्रपञ्चः कृतः इति प्रश्नेऽस्ति तत्रापि प्रकारद्वयं समाधानस्य। तत्रैकः—विनिगमका-भावात्सर्वाविद्याकृतोऽनेकतन्त्वारब्धपटतुल्यः—इति। तत्रैकस्य मुक्तौ तदविद्या-विनाशे एकतन्तुनाशे पटस्येव तत्साधारणप्रपञ्चस्य नाशः, तदानीमेव विद्यमान-तन्तुभिः पटान्तरस्येवेतराविद्याभिः सकलेतरसाधारणप्रपञ्चान्तरस्योत्पत्तिरिति। द्वितीयस्तु—तत्तत्पुरुषस्याज्ञानकृतरजतवच्चायमते तत्तदपेक्षाबुद्धिजन्यद्वित्ववच्च तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्नोऽपि भ्रमादेकवद्भासते इति। अत्र प्रकारद्वयेऽप्येकमुक्तौ न सर्वमुक्तिरिति प्रथमं प्रथममतानुसारेण समाधान-माह—**एतद्दोषेति। बहुवचनेति।** मायामेतामिति एकवचनं जात्यभिप्रायमिति भावः।

अस्मिन् मते हि—खण्डपटादिवत् खण्डप्रपञ्चोत्पत्त्यादिकल्पनं सर्वानुभवा-सिद्धमिति अविद्याया अनेकांशत्वमिति वादानुसारेणोक्ताशङ्कां परिहरति—**अन्ये त्विति।** एकस्या एवाविद्याया अंशभेदवादिन इत्यर्थः। अपर-पक्षे तु—"इन्द्रो मायाभिरि"ति बहुवचनं शक्तिभेदाभिप्रायमेवेति मूल एव व्यक्तम्। अनेकजीववादेनोक्ताशङ्कापरिहारं सूचितं विशदयति—**तथाचेति।** अविद्याया अनेकांशकत्वे चेत्यर्थः। **शक्तिविशिष्टाविद्यानाश इति।** विशिष्टं शुद्धादतिरिच्यत इत्यस्माकं सिद्धान्तात् एकस्य तत्त्वज्ञाने यावत्सर्वमुक्ति नाविद्यायाः स्वरूपतो विनाश इति सूचनादीश्वरभाव एवानेकजीववादे मुक्ति-

स्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमान्नैकमुक्तौ सर्वमुक्तिः। अत एव च "यावदधिकारमवस्थितिराधिकारिकाणा" मित्यस्मिन्नधिकरणे अधिकारिपुरुषाणामुत्पन्न-

रित्यनुपदमुपपादितः सिद्धान्त एव स्वाभिमत इति सूचयति। **एकमुक्तौ** एकस्येश्वरभावे। ईश्वरभावो हि जीवोपाध्यन्तःकरणविलयाधीन इति तत्त्वज्ञानिनाऽज्ञानांशनाशे तत्प्रयुक्तान्तःकरणस्यापि नाशः तत्त्वज्ञानिनो यथा भवति, न तथाऽन्यस्य। अत्राज्ञानांशपदेन तत्तदन्तःकरणमेव विवक्षित इत्येकं मतमपरं तु तस्यापि प्रयोजकमवस्थाज्ञानमिति त्वन्यदेतत्। सर्वथातु अनेकजीववादे ईश्वरभाव एव मुक्तिरित्येव सिद्धान्तः॥

**ननु** सत्यपि जीवैकत्वानेकत्वविषये मतभेदेऽनेकजीववाद ईश्वरभाव एव मुक्तिरिति सिद्धान्त एव च श्रुतिसूत्रभाष्यानुगुणः। अत एव समन्वयाध्याये—सत्यकामत्वसत्यसंकल्पत्वादीनां जीवलिङ्गत्वमाशङ्क्य तेषां मुक्तजीवलिङ्गत्वमेव, न बद्धजीवलिङ्गत्वमिति—"उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रे यत् विवेचितम्, यच्च साधनाध्याये—जीवस्येश्वरत्वात्सदपि सत्यसंकल्पत्वादिकमविद्यादोषात्तिरोहितमिति जीवावस्थायां तन्नष्टत्वमिति—"पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति सूत्रे विशदीकृतम्, यदपि च फलाध्याये "ब्राह्मेण जैमिनिरुपन्यासादिभ्य" "एवमप्यविरोधादुपन्यासादिभ्य" इति सूत्रयोर्वस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि सत्यकामत्वादिगुणकलापस्य बद्धपुरुषव्यवहारदृष्ट्या संभवात् न श्रुतिद्वयविरोध इति प्रतिपादितम्, तत्सर्वं मुक्तस्येश्वरभावाङ्गीकार एवोपपद्यते। यत्तु कल्पतरौ—न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यतेति वर्णितम्, तदिदं ईश्वरप्रतिबिम्बवादनिरासपरमेव, नतु मुक्तेरीश्वरभावत्वनिरासपरम्। तदिदं सिद्धमनेकजीववादादिकमेव श्रुतिसूत्राद्यनुगुणमित्यभिप्रेत्याह—**अत एवेति**। अनेकजीववादाभ्युपगमादेव॥

सूत्रान्तरमपि प्रकृतानुगुणमिति विशदयन्नाह—**यावदधिकारमिति**। अस्यार्थः—जन्मान्तरमनुत्पाद्यानिवर्तितकर्मबलात् परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्तानां सत्यपि मोक्षहेतौ तत्त्वसाक्षात्कारे तत्तदधिकारभोगं यावत् अवस्थितिः

ब्रह्मज्ञानानामिन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्य अधिकारापादकप्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धान्तितम्। तदुक्तमाचार्य्यवाचस्पतिमिश्रैः—

"उपासनादिसंसिद्धितोषितेश्वरचोदितम्।
अधिकारं समाप्यैते प्रविशन्ति परं पदमि"ति।

एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षे नोपपद्यते। तस्मादेकाजीवतेति। इदं हि सूत्रं तत्त्वज्ञानेन प्रारब्धकर्मानिवृत्तौ एकमुक्तौ सर्वामुक्तौ च प्रमाणम्; अन्यथाऽधिकारापादककर्मसमाप्त्यनन्तरमिन्द्रादीनां विदेहकैवल्यप्रतिपादनमत्रासङ्गतं स्यात्। **विदेहकैवल्यम्** स्थूलसूक्ष्मशरीरद्वयविलयाख्या मुक्तिरीश्वरभाव इति यावत्॥

**ननु**—"यथाक्रतुरस्मिन् पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथा यथोपास्ते" इत्यादिश्रुतिषु सगुणोपासकानामपीश्वरसायुज्यश्रवणान्मुक्तेः सगुणविद्याफलाविशेषापत्तिरित्याशङ्काम्—सगुणोपासकानामखण्डसाक्षात्काराभावान्नाविद्यानिवृत्तिर्न वाहंकारादेर्विलयः, "नाधि त्वा जगद्व्यापारवर्जम्" भोगमात्रसाम्यलिङ्गाच्च" इत्यादिसूत्रोक्तन्यायेन भोगमात्रसाम्येऽपि संकल्पमात्रात्स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसामर्थ्येऽपि च सकलजगत्सृष्टिस्थितिसंहारस्वातन्त्र्यलक्षणं निरवग्रहमैश्वर्यम्, मुक्तानां तु परमेश्वरभावं प्राप्तानां तत्सर्वमिति विशेष इत्यादिबोधनेन परिहार्यां मन्वानः—"यावदधिकारमि"ति सूत्रगतं भामतीश्लोकं प्रकृतार्थोपष्टम्भकतयाऽनुसन्धत्ते—**तदुक्तमिति**। **उपासनेति**। अत्रोपासनासंसिद्धितोषितस्येश्वरत्ववर्णनेन, तस्यैव प्रेरकत्ववर्णनेन चोपासकानां न निरवग्रहं स्वातन्त्र्यलक्षणमैश्वर्यमिति सगुणविद्याफलमीश्वरभाव इति च सूचयतीति नोक्तशङ्कावसर इति भावः। विद्याकर्मस्वनुष्ठानेति भामत्याः पाठान्तरम्, यत् खलु प्रायेण सर्वेषु मुद्रितपुस्तकेषूपलभ्यते। फलतस्तु नात्र भेदः। यावदधिकारमिति सूत्रभाष्यादीनामेकमुक्तौ सर्वमुक्त्यभावे प्रमाणतामुपपादयति—**एतच्चेति**। उपासनादीति वाक्यमित्यर्थः। **नोपपद्यते**। सर्वमुक्तौ आधिकारिकाणामिति विशेषनिर्देशायोगादिति भावः।

विद्यापक्षेऽपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया। तदेवं ब्रह्मज्ञानान्मोक्षः। स चानर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम्।

इति वेदान्तपरिभाषायां प्रयोजनपरिच्छेदः।

एवमेकजीववादेनानेकजीववादेन चैकमुक्तौ सर्वमुक्त्ययोग इति निरूपितेऽपि अनेकजीववादेन तत्परिहारानुसन्धानमेव सर्वादरपात्रं भवितुमर्हति; दृष्टिसृष्टिवादाधिकारिणस्तु विरलविरला इति सूचयन्ननेकजीववादमात्रानुसन्धानेनोक्तशङ्कापरिहारसंपादितं प्रयोजनपरिच्छेदमुपसंहरिष्यन्ननुवदति—तस्मादिति। प्रकृतं प्रयोजनस्वरूपं निष्कृष्य प्रदर्शयन् "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानी"ति महाभाष्यानुसारेण मङ्गलानां मङ्गलं प्रयोजनमेव स्वशब्दतो मङ्गलार्थं निर्दिशति—प्रयोजनमिति।

तदयं संग्रहः—एकजीववादेन निर्विशेषब्रह्मभावः, अनेकजीववादेनेश्वरभावो वा मुक्तिः। तत्र प्रथममते एकमुक्तौ सर्वमुक्तिरिष्टैव, सर्वस्यापरस्य कल्पितत्वात्। द्वितीयमते त्वविद्याभेदात् तच्छक्तिभेदात् अन्तःकरणभेदाद्वा नैकमुक्तौ सर्वमुक्तिः। इयं च प्रारब्धकर्मणां सर्वेषां भोगेन नाशानन्तरं विदेहकैवल्यमिति, ततः पूर्वं तु तत्त्वसाक्षात्कारे जीवन्मुक्तिरिति च व्यपदिश्यते। एतदर्थं च जीवस्य नोत्क्रमणापेक्षा, सगुणोपासनमपि ब्रह्मलोकद्वारा निर्विशेषसाक्षात्कारहेतुरेव। सगुणोपासनफलं तूत्क्रमणापेक्षम्। इह जन्मनि तु नित्यानित्यवस्तुविवेकादिषु सत्स्वेव निर्विशेषसाक्षात्कारः। तत्र श्रवणमङ्गीति विवरणमतम्, निदिध्यासनमङ्गीति वाचस्पतिमिश्रमतम्। सर्वाणि श्रवणमनननिदिध्यासनानि साक्षात्कारहेतुरिति मतद्वयसम्मतमिदम्। श्रवणोपयोगिविविदिषोपयोगः पापक्षयद्वारा नित्यकर्मणाम्, नतु साक्षात् साक्षात्कारोपयोगो मोक्षोपयोगो वा। साक्षात्कारोऽयं भामतीकारमते मानस एव, विवरणमते तु शाब्दः। स चानन्दाकारवृत्तित्वादखण्डाकारवृत्तिपदेन व्यपदिश्यते। यदज्ञानेन यत्र दुःखं तत्र तज्ज्ञानेन तत्प्राप्तिरेव फलमिति आनन्दावाप्तिरेव मोक्षः। स च निरतिशयप्रयोजनरूपः। स्वर्गादिकं तु सातिशयं प्रयोजनम्;

पुरुषतन्त्रक्रियासाध्यत्वात् । एवं ब्रह्मज्ञानं निरूपितम् । ब्रह्म तु प्रतिपाद्यं साक्षात्कर्तव्यं प्राप्यं चैकजीववादे निर्विशेषम्, अनेकजीववादे तु श्रीभाष्यमत इव प्राप्यं परं सविशेषेश्वरस्वरूपमेव । इयान् विशेषः—यत् श्रीभाष्यमते—जीवस्य मुक्त्यवस्थायामपि शरीरतया स्वरूपतोऽवस्थितिर्जगद्व्यापारवर्जं तत्सारूप्यादिकमिति पदार्थत्रयसत्यता, अद्वैतमते तु जीवस्येश्वरभाव एवेति न पृथक्स्वरूपमिति पदार्थद्वयसत्यता । अत एव जगत्कारणत्वस्य तटस्थलक्षणतया निर्देशः, सर्वमुक्तौ निर्विशेषब्रह्मभावेऽपि स सम्भवीति सत्यं ज्ञानमित्यादिस्वरूपलक्षणनिर्देशश्चोपपद्यत इति वादद्वयेऽपि ज्ञेयस्य ब्रह्मणो निर्विशेषत्वं समानमेव, प्राप्यस्वरूप एव परं पक्षभेद इति फलितम् । निर्विशेषत्वं चाविद्याद्युपाधिधर्मापरवशत्वमविद्योपहित वृत्त्युपहितशुद्धादिसाधारणमेव । उपहितमेव वेदान्तगम्यं नतु शुद्धमिति भामतीसिद्धान्तोऽप्यनेकजीववादप्रतिकर्मव्यवस्थाद्यभिप्राय एव, नैकजीववादाद्यभिप्रायः । तत्र हि मुख्यजीवसाक्षात्कारानन्तरं मूलाज्ञानविनाशात् न शुद्धस्वरूपविघात इत्यादिकमन्यत्र व्यक्तम् ।

अत्राद्वैतमतसाधकतया आकरसम्मतानि वेदान्तवाक्यादीनीमान्येव—(१) "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" (२) अथ परा यया तदक्षरमधिगम्यते तत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" (५) यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्" (६) "न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः" (७) "आनन्दो ब्रह्म" (८) "इदं सर्वं यदयमात्मा" (८) "नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (१०) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ? केन कं विजानीयात्" (११) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (१२) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" (१३) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (१४) मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादीनि ।

यत्तु-श्रीभाष्ये—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुखेन—सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्य-

संकल्पत्वमित्यादिगुणविशिष्टताप्रतिपादनेन प्रवृत्तत्वात् "सदेवे"ति वाक्यं न निर्विशेषपरम्, एवम्—"अथ परा, यया तदक्षरमि"त्यत्रापि प्राकृतहेयगुणप्रतिषेधपूर्वकं नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वादिकल्याणगुणयोगप्रतिपादनात् न निर्विशेषपरत्वम्। एतेन—"सत्यं ज्ञानमि"ति वाक्यमपि व्याख्यातम्; एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात्सामानाधिकरण्यस्य। तथाचैकमेवाद्वितीयमिति वाक्यस्य ब्रह्मणो जगदुपादानस्य स्वव्यतिरिक्ताधिष्ठात्रन्तरनिषेध एव तात्पर्यात् सविशेषपरत्वमेव सर्वेषां वेदान्तानामिति निर्गुणश्रुतीनां हेयगुणराहित्य एव तात्पर्यम्। ज्ञानस्वरूपस्यापि ब्रह्मणो ज्ञातृत्वमपि न विरुद्धं धर्मभूतज्ञानाश्रयत्वेनेति न ज्ञानमात्रत्वबोधकान्यपि वचनानि सविशेषवादविरुद्धानि। सन्ति हि ब्रह्मणो ज्ञातृत्वप्रतिपादनपरा बह्व एव श्रुतयः—यस्सर्वज्ञः सर्वविदित्याद्याः। "यस्यामतं तस्य मतमि"ति वाक्यं तु ब्रह्मणः परिच्छेदज्ञानमेव निन्दति, नतु ज्ञानविषयत्वम्। अन्यथा हि—"ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" "अस्ति ब्रह्मेति चेद्वेद" इत्यादिवाक्यासाङ्गत्यापत्तिः। एतेन—"न दृष्टेर्द्रष्टारं पश्येरि"ति वाक्यमपि—व्याख्यातम्; इदं हि आगन्तुकगुणयोगितया ज्ञातुर्ज्ञानरूपतेति मतनिरासपरमेव, नतु ज्ञानस्वरूपज्ञातृत्वनिषेधपरम्। नहि वयं ज्ञानस्वरूपस्य ब्रह्मणो ज्ञानाश्रयत्वमागन्तुकचैतन्ययोगेन वदामः, किन्तु धर्मभूतज्ञानाश्रयत्वेनेति "आनन्दो ब्रह्मे"ति वाक्यमपि ज्ञानाश्रयस्यैव ब्रह्मणः आनन्दरूपज्ञानरूपतामपि बोधयतीति न कोऽपि विरोधः। एतेन—विज्ञानमानन्दं ब्रह्मेति वाक्यमपि—व्याख्यातम्। यत्तु—"यत्र हि द्वैतमिव भवति" "नेह नानास्ति किंचने"ति भेदनिन्दाम्नानम्, तदिदं ब्रह्मणः प्रपञ्चस्य च पृथक्सिद्धियोग्यताया एव निषेधपरम्। एतेन—"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति" इति वाक्यमपि—व्याख्यातम्; अस्यापि—"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" इत्यभयप्राप्तिहेतुत्वेनाम्नातप्रतिष्ठाविच्छेदनिन्दापरत्वात्। "न स्थानतोऽपी"ति सूत्रं हि ब्रह्मणः पृथिव्यादिसम्बन्धप्रयुक्तापुरुषार्थगन्धनिषेधस्यैव प्रतिपादकम्, नतु सर्वगुणराहित्यस्य। "मायामात्रं तु" इति सूत्रं तु स्वाप्नानामर्थानामपीश्वरसृष्टत्वेन पारमार्थिकताया एव गमकमिति एकमपि

सूत्रं न प्रपञ्चमिथ्यात्वस्य ब्रह्मनिर्विशेषतायाश्च गमकं वेदान्तवाक्यं वा समस्तीति विवेचितम् ।

तत्रेयमद्वैतिनां प्रक्रिया । तथाहि—अशुद्धत्वादिनाऽत्यन्तविलक्षणप्रपञ्चोपादानत्वस्य विवर्तोपादानत्वं विना परिणाम्युपादनत्वादिरूपेण स्वीकर्तुमशक्यत्वात् कारणव्यतिरेकेण कार्याभाव एव तत्संभवेन ब्रह्मव्यतिरिक्तस्य सर्वस्य वाचारम्भणमिति श्रुत्यनुसारेण मिथ्यात्व एवैकमेवाद्वितीयमित्युपक्रमतात्पर्येण च "सदेवे"ति वाक्यं तात्पर्यानुसारेण निर्विशेषपरमेव । अन्यथा मृदाद्यचेतनेऽधिष्ठात्रन्तरं यथा प्रसक्तं न तथा चेतने कुत्रापीति नाधिष्ठात्रन्तरनिषेधस्योपयोग इति, एकमेवेति सजातीयविजातीयस्वगतभेदराहित्यप्रतिपादनमसङ्गतमेव स्यात् । अत एवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः । इयं हि ब्रह्मतद्व्यतिरिक्तयोः कार्यकारणभावेनैवोपक्रान्तेति प्रकृतिपदबोध्याविद्यादिकं सर्वमपि ब्रह्मप्रयुक्तमित्येव स्वीकार उपपद्यते । श्रीभाष्यमते तु—सा प्रकृतिजीवयोः किं बहुना ब्रह्मण एवावस्थाभेदेन कार्यकारणभावात् केवलस्य प्रपञ्चस्यापि ब्रह्माकार्यत्वात् कथमपि नोपपद्यते । सत्यसंकल्पत्वादिकं सर्वान्तर्यामित्वादिकं च कल्पितधर्म एव कारणस्वरूपस्येति न किमपि प्रकरणमद्वैतविरुद्धम् । एतेन—"अथ परा यया तदक्षरमि"ति वाक्यमपि—व्याख्यातम्; अत्र गुणनिषेधानामर्थान्तरपरताकल्पनायां हि नैकमपि सूत्रं प्रमाणं वा वर्तते । अद्वैतमते हि—निर्विशेषस्यैव कल्पितं रूपान्तरं सविशेषमिति सगुणवाक्यानां निर्गुणवाक्यानां च यथाश्रवणमेवाविरोधो यथा भवति, न तथा श्रीभाष्यमते । अतो ब्रह्मणि नित्यत्वादिधर्माम्नानं न कथमपि विरुद्धम् । अत एव—"सत्यं ज्ञानमि"ति सामानाधिकरण्यनिर्देश उपपद्यते; सत्यं सामानाधिकरण्यं प्रवृत्तिनिमित्तभेदनिर्वाह्यम्; प्रवृत्तिनिमित्तं तु शक्यतावच्छेदकमेव, नतु पदतात्पर्यविषयतावच्छेदकमिति प्रकृतेऽपि वाच्यतावच्छेदकभेदसत्त्वेऽपि लक्ष्याभेदस्यैव स्वीकारात् नानुपपत्तिः । अन्यथा वाच्यार्थविवक्षायामनन्तपदार्थस्य त्रिविधपरिच्छेदराहित्यस्यानन्वयः स्यादिति सत्यं ज्ञानमिति वाक्यमपि निर्विशेषब्रह्मण एव गमकम् । नहि ज्ञानस्वरूपं ब्रह्म ज्ञानाश्रयं भवितुमर्हति ।

यत्तु श्रीभाष्यकाराणामागन्तुकचैतन्यगुणायोगेऽपि धर्मभूतज्ञानाश्रयत्वादिकं न विरुद्धमिति कल्पनम्, तदिदं स्वकपोलकल्पनम् । यथा हि श्रीभाष्यमते

धर्मभूतज्ञानसंकोचविकासोत्पत्त्यादिकमेव ज्ञानोत्पत्त्यादिकमेवमद्वैतमतेऽपि वृत्तिगुणजन्यताद्यभिप्रायमेव ज्ञानानित्यताव्यवहरणमपीति ज्ञानाश्रयत्वमात्मनः ब्रह्मणो वाऽन्तःकरणवृत्त्याद्युपाधिसम्बन्धाधीनमेव, न स्वतः। अत एव—आनन्दो ब्रह्मेति श्रुत्या आनन्दादिविशिष्टत्वं यदभिमन्यते, तदिदं—"प्रज्ञानमानन्दं ब्रह्मेति वाक्ये प्रज्ञानपदवैयर्थ्यात् न स्वरसम्। अत एव—"न दृष्टेर्द्रष्टारं पश्येरि"ति दृष्ट्यतिरिक्तद्रष्टृनिषेध उपपद्यते। श्रीभाष्यमते हि—यत्रागन्तुकचैतन्ययोगनिषेध उक्तवाक्यार्थः, तत्र लक्षणाध्याहारक्लेशस्सर्वविदित एव। तथाच ब्रह्मेतरसर्वपदार्थमिथ्यात्वे एव वेदान्तानां तात्पर्यम्। अत एव हि—"नेह नानास्ति किंचने"ति भेदनिषेध उपपद्यते। शरीरशरीरित्वेतु तत्र भेदव्यपदेशोऽप्रसक्त एव। कल्पिताधिष्ठानयोस्तु अधिष्ठान आरोप्यभेदस्य प्रतीत्या स प्रसक्त इति तन्निषेधस्सुतरां सार्थक इत्यद्वैतमत एव भेदनिन्दाश्रुतीनां सार्थक्यम्। अत एव—"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते" इति वाक्यम्—व्याख्यातम्; अस्यापि ब्रह्मणि एतस्मिञ्छब्दपरामृष्टे भेदनिन्दापरत्वात्। श्रीभाष्यमतरीत्या पूर्ववाक्यप्रस्तुतप्रतिष्ठाविच्छेदनिन्दापरत्वे तु "यदाह्येवैषेति वाक्ये एतस्मिन्निति स्थाने एतस्यामिति स्त्रीलिङ्गनिर्देशस्समापद्येत। अत एव—मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति स्वाप्नप्रपञ्चस्य मायामयत्वं प्रतिपादितमुपपद्यते। अधिकं चात्र वक्तव्यं भूमिकायां व्यक्तम्। एतेन—न स्थानतोऽपीति सूत्रमपि—व्याख्यातम्। तदपि हि भूमिकायां सम्यगेव समालोचितम्। अपराण्यपि—दूषणानि श्रीभाष्यकारैरद्वैतसिद्धान्ते संपादितानि भूमिकायां सम्यगेव समालोचितानीति प्रत्यग्ब्रह्मैक्यमेव शास्त्रार्थः। तदुपपादनार्थमेव सर्वेषां वेदान्तानां प्रवृत्तिः। तत्र निर्गुणवाक्यानां साक्षात् सगुणकर्मवाक्यानां तु परम्परयोपयोगः। तादृशं च ब्रह्म प्रपञ्चाभावोपलक्षितमेवौपनिषदमिति प्रपञ्चाभावज्ञानजननार्थमनुपलब्धिपरिच्छेदस्यार्थापत्तिपरिच्छेदस्यानुमानपरिच्छेदस्य चोपयोगः। आगमपरिच्छेदस्य तु साक्षात् ब्रह्मप्रतिपादनेनोपयोग इति ब्रह्मैव तत्प्रमाणान्यपि प्रत्यक्षानुमानोपमानार्थापत्त्यागमानुपलब्धिरूपाणि सम्यगत्र समालोचितानि। तथाच तत्र "प्रत्यक्षप्रमा तु चैतन्यमेवे"ति उपक्रमे चैतन्यरूपेणोपसंहारे अखण्डानन्दरूपेण च विवेचितं ब्रह्मैकं चेदपि यावदखण्डानन्दात्मस्फुरणं चैतन्यरूपेण सद्रूपेण च ब्रह्मज्ञानदशायामेव प्रत्यक्षादिप्रमाणप्रवृत्तिः; अखण्डा-

नन्दस्फुरणानन्तरं तु न शास्त्रं न वा प्रमाणानीति सिद्धम्। तदुक्तम्—"इममेवाध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः; सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षप्रतिपादनपराणि।" तथा—

गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात्।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत्? (१)
अन्वेष्टव्यात्मविज्ञानात्प्राक् प्रमातृत्वमात्मनः।
अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः।
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्॥

इति

महामहोपाध्याय सर्वतन्त्रस्वतन्त्रश्रीपञ्चापगेशशास्त्रिचरणानामन्तेवासिनो
महामहोपाध्याय वेदान्तविशारदादिश्रीयुक्तानन्तकृष्णशास्त्रिणः कृतिषु
वेदान्तपरिभाषाप्रकाशिकायां प्रयोजनपरिच्छेदः।

ओम् शान्तिः शान्तिः शान्तिः।

॥ परदेवतार्पणमस्तु॥

---

(१) श्लोकत्रयमिदं पञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्याम्, सूतसंहिताव्याख्यायां माधवाचार्यकृतौ च आचार्यसुन्दरपाण्ड्यकारिकात्वेन निर्दिष्टमिति निरूपणपूर्वकमाचार्यसुन्दरपाण्ड्या इमे केचन शैवाचार्या एव भवितुमर्हन्ति इति प्राच्यविद्यातुरीयाधिवेशने Prof. श्रीकुप्पुस्वामिशास्त्रिपादा निरूपयन्ति। परंतु शैवमते यत्र शरीरात्मवादस्य गौणात्मवादत्वमेव न मिथ्यात्मवादत्वम्, तन्मते केऽप्याचार्याः इदं श्लोकत्रयं विरचयितुं नार्हन्तीति अद्वैतसंप्रदायप्रवर्तका एव केचनाचार्यास्ते भवितुमर्हन्ति इति मन्यन्ते। Prof. श्रीकुप्पुस्वामिशास्त्रिपादा अप्यन्ततः केचनान्येऽपि सुन्दरपाण्ड्या भवितुमर्हन्ति, न नेडुमारन् नायनारः ज्ञानसम्बन्धमूर्तेय एवेति वाक्याकमायक इति यद्यपि निरूपयन्ति, तथापि एतेषां सुन्दरपाण्ड्यपूर्वतनानां शैवसुन्दरपाण्ड्यकालीनत्वेन शैवमताचार्यत्वं नानभिमतं मन्यन्ते इति शैवसिद्धान्तस्य श्लोकत्रयस्यास्य च न सम्बन्धलेशोऽपीति तदाशयः। सर्वथा तु श्लोकत्रयस्यास्य सुन्दरपाण्ड्यकारिकात्वे प्रमाणद्वयं पूर्वोक्तं निराबाधमेवेति।

# मूलशुद्धाशुद्धि पत्रिका

| पृष्ठं | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४१ | २ | यत्न | यत्ने |
| ४८ | १ | वच्छिना | वच्छिन्ना |
| ५७ | २ | कृष्ण | कृष्णपक्ष |
| ६६ | १ | स्वाय | स्वाव |
| १०० | ६ | सुपपद्यते | सुपपद्यते |
| १११ | ४ | सत्री | सध्री |
| १२२ | १ | मिथ्या | मिथ्या |
| १२४ | १ | सत्त्व | सत्त्वे |
| १५० | २ | स्मरणं | स्मरणं |
| १६७ | ५ | मिथ्या | मिथ्या |
| १६८ | २ | मिंथ्या | मिथ्या |
| १६८ | २ | अधिष्टा | अधिष्ठा |
| १७१ | १ | येति | चेति |
| १७२ | १ | तयोच | तथाच |
| १९३ | १ | वाजितनोऽन्य | वाजिनान्य |
| २०८ | ६ | भिभता | भिन्नता |
| २२४ | ३ | भितिसजातीय | भिति न सजातीय |
| २२५ | २ | द्विविध | द्विविध |
| २९१ | १ | इत्यम् | इत्थम् |

# व्याख्याशुद्धाशुद्धि पत्रिका

| पृष्ठं | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ११ | ६ | तथापि | यद्यपि |
| ४४ | २४ | य: | यं: |
| ४६ | ६ | पवत | पर्वत |
| ४८ | १८ | सुवै | सर्वै |
| ५१ | १७ | स्मरण | स्मरण |
| ५१ | २७ | मनकरण | मन:करण |
| ५२ | १८ | वैयर्थ्य | वैयर्थ्य |
| ५२ | ६ | करणर्ध | करणधर्म |
| ५२ | १५ | नैय्याकि | नैय्यायिक |
| ५९ | २५ | विवचम् | विवचणम् |
| ६६ | २७ | विवक्षिनम् | विवक्षितम् |
| ७५ | १६ | कृष्टत्व | कृष्टत्वे |
| ७८ | १६ | पर्व | एवं |
| ८० | १५ | येध: | येध: |
| ८१ | १८ | निहत | नि:हत |
| ८७ | २ | तात्त्विकाभेद | तात्त्विकभेद |
| ८७ | २० | सर्द्वेमेति | सर्द्वेदमिति |
| ९६ | २ | चेतर्ष्व | चेतैष्व |
| ९६ | १० | पक्ष | पक्षे |
| १०४ | ५ | गृर्त्यंश | गृतांश |
| ११० | ४ | मूलविद्या | मूलाविद्या |
| १२६ | २२ | विवचियिषि | विवचयिषि |
| १४५ | १६ | कर्तव्यां | कर्तव्या |
| १४५ | २६ | व्याभिचार | व्यभिचार |

# शुद्धाशुद्धिपत्रिका

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १४९ | १५ | सस्कार | संस्कार |
| १५१ | २४ | दशनं | दर्शनं |
| १५४ | १८ | निर्षेध | निषेध |
| १५८ | ५ | सद्द | सद |
| १५९ | २१ | थिथ्या | मिथ्या |
| १६१ | १ | तै | त्वे |
| १६१ | १६ | तुमा | तुमावि |
| १६३ | २० | ध्यं | ध्र्यं |
| १६५ | २० | दादा | तादा |
| १६६ | १२ | एतद्रुपा | एतद्रूपा |
| १६६ | १७ | मिथ्यात्द | मिथ्यात्व |
| १६७ | २० | न्स | क्त |
| १६८ | ६ | राजत् | राजन् |
| १६८ | १० | माव | भाव |
| १६८ | १६ | प्रत्युम् | प्रत्युतम् |
| १६८ | १९ | रूतम् | रूपम् |
| १६८ | २० | भावी | भावो |
| १७० | १२ | ग्रुंकायैकार्य | ग्रुंकार्य |
| १९१ | १७ | उपजीवकयो: | उपजीव्योपजीवकयो: |
| १७१ | २३ | सत्वें | सत्वे |
| १७१ | २२ | सत्वनिवय | सत्वविषय |
| १७२ | २० | बहिर्मुत | बहिर्भूत |
| १७३ | ८ | लोर | लोप |
| १७४ | २१ | व्यति | व्यति |
| १७६ | ७ | र्श | र्स |
| १७६ | १८ | रूप | रूप |
| १७९ | १२ | धर्म | धर्मः |
| १८३ | ८ | प्रमाणान्तरवा | प्रमाणान्तराचा |
| २०४ | २२ | चेचि | चेति |
| २०८ | १७ | तीनि | तीति |
| २२७ | ११ | स्वातन्त्य | स्वातन्त्र्य |
| २२८ | १९ | स्वतन्त्रं | न स्वतन्त्रं |
| २२९ | २१ | काम्यां | काम्यां |
| २३४ | ७ | दापी | दर्पी |
| २४५ | ३ | संबन्धा | सबन्धाप्रत्यचत्वे |